आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३७

कृष्णयजुर्वेदीयं

# तैत्तिरीयब्राह्मणम् ।

श्रीमत्सायणाचार्यविरचितभाष्यसमेतम् ।

( तत्राऽऽदिमकाण्डं द्वितीयकाण्डस्य प्रथम–द्वितीय–तृतीय–चतुर्थ–पञ्चम-प्रपाठकाश्चेत्येतत्परिमितः प्रथमो भागः ( १ ) ।

एतत्पुस्तकं

पुण्यपत्तननिवासिभिः ' गोडबोले ' इत्युपाह्वैः वे० शा० सं० नारायणशास्त्रिभिः संशोधितम् ।

तच्च

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-महाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

द्वितीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८५६ ।

खिस्ताब्दाः १९३४ ।



मूल्यं रूपकषट्कम् ( रु० ६ ) ।

ॐ तत्सद्ब्रह्मणे नमः ।

कृष्णयजुर्वेदीयं

# तैत्तिरीयब्राह्मणम् ।

## श्रीमत्सायणाचार्यविरचितभाष्यसमेतम् ।

---

### आदिमं काण्डम् ।

(तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः) ।

---

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः ।
आदिशन्माधवाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुर्माधवाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥
व्याख्याता सुखबोधाय तैत्तिरीयकसंहिता ।
तद्ब्राह्मणं व्याकरिष्ये सुखेनार्थविबुद्धये ॥ ५ ॥

यद्यपि संहितायां ‘ इषे त्वोर्जे त्वा ’ इत्यादीनां दर्शपूर्णमासमन्त्राणामादौ समाम्नातत्वात्तद्व्याख्यानरूपे ब्राह्मणे पौरोडाशिककाण्डमादौ पठितव्यं तथाऽपि दर्शपूर्णमासयोराहवनीयाद्यग्निसापेक्षत्वादग्नीनां चाऽऽधानसाध्यत्वात्प्रथमकाण्डस्याऽऽद्ये प्रपाठकेऽग्न्याधानविधिरुच्यते । यद्यपि ‘ कृत्तिकास्वग्निमादधीत ’ इत्ययमेवाऽऽधानब्राह्मणस्योपक्रमस्तथाऽपि संहितायां ग्रहकाण्डे शुक्रामन्थिग्रहप्रचारार्थानां मन्त्राणामनुक्तत्वेनात्र वक्तव्यत्वात्तेषां चाऽऽशासनीयफलप्रतिपादकत्वेन मङ्गलरूपत्वादाद्येऽनुवाके तान्परिशिष्टान्मन्त्रानभिदधानोऽर्थान्मङ्गलाचरणं संपादयति—

---

१ क. °दधान° ।

ब्रह्म संधत्तं तन्मे जिन्वतम् । क्षत्रꣳ संधत्तं तन्मे जिन्वतम् । इषꣳ संधत्तं तां मे जिन्वतम् । ऊर्जꣳ संधत्तं तां मे जिन्वतम् । रयिꣳ संधत्तं तां मे जिन्वतम् । पुष्टिꣳ संधत्तं तां मे जिन्वतम् । प्रजाꣳ संधत्तं तां मे जिन्वतम् । पशून्संधत्तं तान्मे जिन्वतम् ।

ब्रह्म संधत्तमित्यादिना । ब्रह्मशब्दो जगत्कारणे परमात्मनि मुख्यतया वेदे प्रयुज्यते । तथा चैतरेयिणः स्वकीयोपनिषदि समामनन्ति—'प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ' इति । तैत्तिरीयाश्च—'सत्यं ज्ञानमनन्तं ब्रह्म' इति । वाजसनेयिनश्च—' विज्ञानमानन्दं ब्रह्म ' इति । एवं सति ब्रह्मशब्दस्य तत्प्रतिपादकवर्णमात्रपरत्वेऽपि परब्रह्मणः सहसा बुद्धिस्थत्वादर्थान्मङ्गलाचरणं संपद्यते । तस्य ब्रह्मणः प्रतिपादकत्वेन वेदोऽपि ब्रह्मशब्दस्यार्थः । ततो ग्रन्थादौ वेदपुरुषोऽप्यनुस्मृतो भवति । तादृशवेदाध्ययनाध्यापनयोर्मुख्याधिकारसंपादिका ब्राह्मणजातिरपि[1] ब्रह्मशब्दस्यार्थः । सोऽयमत्र मन्त्रे विवक्षितः । उत्तरवाक्यगतक्षत्रशब्दसाहचर्यात् । एवं सत्यत्र प्रतिपाद्यत्वेनाविवक्षितोऽपि परमात्मा सहसा प्रतीयमानो विघ्नपरिहारादिरूपं माङ्गल्यं संपादयति । यथा ब्राह्मणभोजनार्थमानीयमानस्य दधिकुम्भस्य दर्शनेन ग्रामान्तरे जिगमिषूणां माङ्गल्यं तद्वत् । तस्मादाद्यानुवाके 'ब्रह्म संधत्तम्' इत्यादि मन्त्राणामाम्नानं युक्ततरम् । मन्त्रविनियोगं चाऽऽपस्तम्बो दर्शयति—"अपरेणोत्तरवेदिं ग्रहावरत्नी वा संधत्तः—ब्रह्म संधत्तं तन्मे जिन्वतं क्षत्रꣳ संधत्तं तन्मे जिन्वतमिषꣳ संधत्तं तां मे जिन्वतमूर्जꣳ संधत्तं तां मे जिन्वतं रयिꣳ संधत्तं तां मे जिन्वतं पुष्टिꣳ संधत्तं तां मे जिन्वतं प्रजाꣳ संधत्तं तां मे जिन्वतं पशून्संधत्तं तान्मे जिन्वतम् " इति । अथाध्वर्युः[3] शुक्रामन्थिनौ प्रतिप्रस्थाता मन्थिपात्रं चाऽऽदायोत्तरवेदेः पश्चाद्भागेऽवस्थाय स्वहस्तस्थिते पात्रे परस्परसंसृष्टे कुरुतः । यद्वा स्वकीयावरत्नी परस्परसंसृष्टे कुरुतः । हे ग्रहौ युवां ब्रह्म यजमानसंबन्धिनीं ब्राह्मणजातिं संधत्तं स्वोचितधर्मराहित्यं यथा न भवति तथा संपादयतम् । किंच मे तद्ब्रह्म मदीयां ब्राह्मणजातिं जिन्वतं प्रीणयतम् । एवमग्रेऽपि सर्वत्र

१ क. ख. 'शास्य मे' । २ ग. 'तिर्भवा' । ३ ग. आचार्यर्युः ।

भोज्यम् । क्षत्रं देशाधिपतिस्वामिगता क्षत्रियजातिः । इडित्यन्नम् । ऊर्जक्षीरादिरसः । रयिर्धनम् । पुष्टिः शरीरपोषः । प्रजा पुत्रपौत्रादिः । पशवो गवादयः ।

स्तुतोऽसि जनधाः । देवास्त्वा शुक्रपाः प्रणयन्तु (१)

कल्पः—"स्तुतोऽसि जनधा देवास्त्वा शुक्रपाः प्रणयन्त्विति शुक्रमध्वर्युरादत्ते" इति । पूर्वोक्तग्रहसंधानात्प्रागेवेदमुपादानम् । पाठक्रमादर्थक्रमस्य बलवत्त्वात् । हे शुक्रग्रह त्वमस्माभिः स्तुतोऽसि । हे जनधा जनानां धारयितः शुक्रग्रहा(पा) ये देवाः शुक्रपात्रस्थस्य सोमस्य पातारस्ते त्वां प्रकर्षेणाऽऽहवनीयसमीपे नयन्तु ।

सुवीराः प्रजाः प्रजनयन्परीहि । शुक्रः शुक्रशोचिषा ।

कल्पः—"सुवीराः प्रजाः प्रजनयन्परीहि शुक्रः शुक्रशोचिषा, इति दक्षिणेनाध्वर्युः प्रतिपद्यते" इति । पात्रं हस्ते गृहीत्वा हविर्धानस्य पूर्वद्वारि निर्गत्योत्तरवेदेर्दक्षिणेन मार्गेण पूर्वस्यां दिश्यध्वर्युर्गच्छति । हे शुक्रग्रह शुक्रशोचिषा भास्वरदीप्त्या युक्तः सुवीराः शोभनवीरभृत्ययुक्ताः प्रजाः पुत्रपौत्रादिकाः प्रजनयन्नुत्पादयन्नुत्तरवेदेः परितो गच्छ ।

स्तुतोऽसि जनधाः । देवास्त्वा मन्थिपाः प्रणयन्तु ।

कल्पः—"स्तुतोऽसि जनधा देवास्त्वा मन्थिपाः प्रणयन्तु, इति मन्थिनं प्रतिप्रस्थाता" इति । आदत्त इत्यनुवर्तते । हे मन्थिग्रह त्वमस्माभिः स्तुतोऽसि । हे जनधा जनानां धारयितर्मन्थिपात्रस्थस्य सोमस्य पातारो ये देवास्ते त्वां प्रकर्षेणाऽऽहवनीयसमीपे नयन्तु ।

सुप्रजाः प्रजाः प्रजनयन्परी-

हि । मन्थी मन्थिशोचिषा ।

कल्पः—"सुप्रजाः प्रजाः प्रजनयन्परीहि मन्थी मन्थिशोचिषा, इत्युत्तरेण प्रतिप्रस्थाता" इति । प्रतिपद्यत इत्यनुवर्तते । हे ग्रह त्वं मन्थी मन्थिनामको ग्रहो भूत्वा मन्थिशोचिषा मन्थ्याख्यस्य तव तेजसा युक्तः सुप्रजाः शोभनापत्योपेताः प्रजा भ्रातृबन्धवादिकाः प्रजनयन्नुत्पादयन्परीहि, उत्तरवेदेरुत्तरभागे परीत्य पूर्वस्यां दिशि गच्छ ।

---

१ ख. ग. पुत्रा° । २ क. ख. °दियुक्ताः प्र° ।

संजग्मानौ दिव आ पृथिव्याऽऽयुः। संधत्तं तन्मे जिन्वतम्। प्राणꣳ संधत्तं तं मे जिन्वतम्। अपानꣳ संधत्तं तं मे जिन्वतम् (२) व्यानꣳ संधत्तं तं मे जिन्वतम्। चक्षुः संधत्तं तन्मे जिन्वतम्। श्रोत्रꣳ संधत्तं तन्मे जिन्वतम्। मनः संधत्तं तन्मे जिन्वतम्। वाचꣳ संधत्तं तां मे जिन्वतम्।

कल्पः—" अग्रेणोत्तरवेदिं ग्रहावरत्नी वा संधत्तः—संजग्मानौ दिव आ पृथिव्याऽऽयुः संधत्तं तन्मे जिन्वतं प्राणꣳ संधत्तं तं मे जिन्वतमपानꣳ संधत्तं तं मे जिन्वतं व्यानꣳ संधत्तं तं मे जिन्वतं चक्षुः संधत्तं तन्मे जिन्वतं श्रोत्रꣳ संधत्तं तन्मे जिन्वतं मनः संधत्तं तन्मे जिन्वतं वाचꣳ संधत्तं तां मे जिन्वतम्, इति। हे शुक्रामान्थिनौ युवां संजग्मानौ परस्परं संगतावेकमत्यं गतावा दिवो द्युलोकसहितया पृथिव्या च संगतावस्मदीयमायुः संधत्तं सम्यग्धारयतमभिवर्धयतमित्यर्थः। प्राण ऊर्ध्वगामी वायुः। अपानोऽधोगामी वायुः। व्यानो मध्यवायुः। चक्षुःश्रोत्रे मनो वाक्चेत्येतानीन्द्रियाणि। एतेषु सर्वेषु पूर्ववद्व्याख्येयम्। ब्रह्म संधत्तमित्यत्रोत्तरवेदेः पश्चात्संधानम्। इह तु पुरस्तादिति विशेषः।

आयुः स्थ आयुर्मे धत्तम्। आयुर्यज्ञाय धत्तम्। आयुर्यज्ञपतये धत्तम्। प्राणः स्थः प्राणं मे धत्तम्। प्राणं यज्ञाय धत्तम्( ३ ) प्राणं यज्ञपतये धत्तम्। चक्षुः स्थश्चक्षुर्मे धत्तम्। चक्षुर्यज्ञाय धत्तम्। चक्षुर्यज्ञपतये धत्तम्। श्रोत्रꣳ स्थः श्रोत्रं मे धत्तम्। श्रोत्रं यज्ञाय धत्तम्। श्रोत्रं यज्ञपतये धत्तम्। तौ देवौ

शुक्रामन्थिनौ । कल्पयतं दैवीर्विशः । कल्प-
यतं मानुषीः (४) इषमूर्जमस्मासु धत्तम् ।
प्राणान्पशुषु । प्रजां मयि च यजमाने च ।

कल्पः—"अथैनावध्वर्युरभिमन्त्रयते—आयुः स्थ आयुर्मे धत्तमायुर्यज्ञाय धत्तमायुर्यज्ञपतये धत्तं प्राणः स्थः प्राणं मे धत्तं प्राणं यज्ञाय धत्तं प्राणं यज्ञपतये धत्तं चक्षुः स्थश्चक्षुर्मे धत्तं चक्षुर्यज्ञाय धत्तं चक्षुर्यज्ञपतये धत्तं श्रोत्रꣳ स्थः श्रोत्रं मे धत्तं श्रोत्रं यज्ञाय धत्तं श्रोत्रं यज्ञपतये धत्तं तौ देवौ शुक्रामन्थिनौ कल्पयतं दैवीर्विशः कल्पयतं मानुषीरिषमूर्जमस्मासु धत्तं प्राणान्पशुषु प्रजां मयि च यजमाने च" इति। हे शुक्रामन्थिनौ युवामायुःस्थ आयुषः स्वामिनौ भवथः। अतो मे ममाध्वर्योरायुर्धत्तमभिवर्धयतम्। तथा यज्ञस्याप्यायुर्धत्तम्। समाप्तिरेव यज्ञस्याऽऽयुः। तथा यज्ञपतये यजमानस्याप्यायुरभिवर्धयतम्। एवं प्राणादिषु योज्यम्। तौ युवां प्राणादिस्वामिनौ शुक्रामन्थिनौ ग्रहद्वयाधिपती देवौ दैवीर्विशो देवसंबन्धिनीः प्रजाः कल्पयतमस्मदनुकूलाः कुरुतम्। तथा मनुष्यजातियुक्ताः प्रजाश्चास्मदनुकूलाः कुरुतम्। किंचेषं व्रीह्याद्यन्नमूर्जं क्षीरादिरसं चास्मासु स्थापयतम्। पशुषु गवादिषु चिरजीवनहेतून्प्राणान्स्थापयतम्। मय्यध्वर्यौ चास्मिन्यजमाने च प्रजां पुत्रपौत्रादिरूपां स्थापयतम्।

निरस्तः शण्डः । निरस्तो मर्कः ।

कल्पः—"अप्रोक्षितौ शकलौ बहिर्वेदि निरस्यतो निरस्तौ शण्डामर्कौ सहामुनेति निरस्तः शण्ड इति वाऽध्वर्युर्द्वेष्यं मनसा ध्यायन्निरस्तो मर्क इति प्रतिप्रस्थाता" इति। अत्र द्विवचनान्तो मन्त्रः शाखान्तरगतः। योऽयं शण्डाख्योऽसुरपुरोहितः सोऽयं यज्ञभूमेर्वेदेर्बहिर्निष्कासितः। यश्च मर्काख्योऽसुरपुरोहितः सोऽपि बहिर्निष्कासित इत्याभ्यां मन्त्राभ्यामुभावप्रोक्षितौ काष्ठशकलौ बहिर्निरस्यतः।

अपनुत्तौ शण्डामर्कौ सहामुना ।

कल्पः—"तौ प्रोक्षिताभ्यां शकलाभ्यामपिधायाप्रोक्षिताभ्यामधस्तात्पांसूनपध्वंसयत। अपनुत्तौ शण्डामर्कौ सहामुना" इति। अयं च मन्त्रोऽर्थक्रमानुसारेण शकलनिरसनमन्त्रात्प्रागेव द्रष्टव्यः। पात्रयोरधस्तनपांसुरूपेणावस्थितौ शण्डामर्कावसुरावमुनाऽस्मद्द्वेष्येण सहापनुत्तौ निराकृतौ।

शुक्रस्य समिदसि । मन्थिनः समिदसि ।

कल्पः—"प्रोक्षितावाधत्तः । शुक्रस्य समिदसीत्यध्वर्युर्मन्थिनः समिदसीति प्रतिप्रस्थातेत्यप्रोक्षितौ शकलौ बहिर्निरस्य प्रोक्षितौ शकलावग्नावाधत्तः" [इति] । हे शकल त्वं शुक्रग्रहस्य समिन्धनहेतुरसि । तथा हे शकल त्वं मन्थिग्रहस्य समिन्धनहेतुरसि ।

स प्रथमः संकृतिर्विश्वकर्मा । स प्रथमो मित्रो वरुणो अग्निः । स प्रथमो बृहस्पतिश्चिकित्वान् । तस्मा इन्द्राय सुतमाजुहोमि (५)

नयन्त्वपानट् संधत्तं तं मे जिन्वतं प्राणं यज्ञार्थं धत्तं मानुषीरग्निर्द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

कल्पः—"शुक्रामन्थिनोः प्रतिनिगद्य होमः—स प्रथमः संकृतिर्विश्वकर्मा स प्रथमो मित्रो वरुणो अग्निः स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोमि" इति । इतरग्रहेषु होतृप्रयुक्तवषट्कारेणैव होमः । न त्वध्वर्योर्मन्त्रपाठोऽस्ति । इह त्वेनं मन्त्रं प्रतिनिगद्य होमः कर्तव्यः । स इन्द्रः प्रथमो देवानां मध्ये मुख्यः । संकृतिः समीचीना कृतिर्जगद्रक्षणरूपव्यापारो यस्यासौ संकृतिः । विश्वानि कर्माणि जगद्रक्षणहेतुभूतान्यसुरयुद्धादीनि यस्यासौ विश्वकर्मा । स एव मुख्य इन्द्रो मूर्तिविशेषान्धृत्वा मित्रादिरूपः संपन्नः । स एवेन्द्रश्चिकित्वान्सर्वज्ञानकुशलो बृहस्पतिरपि संपन्नः । तस्मै तादृशायेन्द्राय सुतमभिषुतमिमं सोममा सर्वतो जुहोमि ।

अत्र विनियोगसंग्रहः—

अध्वर्युश्च प्रतिप्रस्थाता चाऽऽदाय ग्रहावुभौ ।
ब्रह्म शुक्रामन्थिपात्रं संधत्ते वेदिपश्चिमे ॥
स्तुतौ ग्रहावाददीत सुवीर्यातो दिशोर्द्वयोः ।
संजग्म वेदेः पुरतः संधत्तः पूर्ववद्ग्रहौ ॥
आयुर्मन्त्रयतेऽध्वर्युर्निरस्तः शकलौ त्यजेत् ।
अथ पांसुमपध्वस्य शुक्रामन्थिद्वयादुभौ ॥
प्रोक्षितौ शकलौ क्षिप्त्वा स प्रोति ग्रहयोर्हुतिः ।

स्तुतः स्तुतो निरस्तेति द्वयं द्वयमुदीरितम् ।
आद्यानुवाके कथिता मन्त्रा एते त्रयोदश ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ द्वितीयोऽनुवाकः ।

प्रथमानुवाके सोमयागशेषभूताः शुक्रामन्थिग्रहप्रचारमन्त्रा उक्ताः । अथाऽऽधानप्रकरणमारभ्यते । तत्राऽस्मिन्ननुवाके कालविशेषं विधत्ते—

कृत्तिकास्वग्निमादधीत । एतद्वा अग्नेर्न-
क्षत्रम् । यत्कृत्तिकाः । स्वायामेवैनं देव-
तायामाधाय । ब्रह्मवर्चसी भवति, इति ।

अग्निचयनकाण्डेऽम्बाहुला नितत्निरित्याद्याः कृत्तिकास्ता यस्मिन्दिने चन्द्रेण संयुज्यन्ते तस्मिन्दिने तासु कृत्तिकासु चन्द्रयोगं प्राप्तास्वग्न्याधानं कुर्यात् । यदेतत्कृत्तिकासंघातरूपं तदेतदग्निसंबन्धि नक्षत्रम् । अत एवान्यत्राऽऽम्नातम्—"कृत्तिका नक्षत्रमग्निर्देवता" इति । अत आधेयस्याग्नेः कृत्तिकास्वाधाने सति स्वरूपभूतायामेव देवतायामाधानं कृतं भवति । अग्नेर्ब्राह्मणाभिमानित्वात्तत्प्रसादेनाधीतश्रुताध्ययनरूपब्रह्मवर्चससंपन्नो भवति ।

प्रकारान्तरेण प्रशंसति—

मुखं वा एतन्नक्षत्राणाम् । यत्कृत्तिकाः । यः
कृत्तिकास्वग्निमाधत्ते । मुख्य एव भवति, इति ।

कृत्तिका इति यत्तदेतन्नक्षत्राणां मध्ये मुखं प्रथमं नक्षत्रम् । अत एव नक्षत्रप्रतिपादकेऽप्यनुवाक आदौ पठ्यते "कृत्तिका नक्षत्रमग्निर्देवता" इत्येकत्र । "अग्नेः कृत्तिकाः शुक्रं परस्तात्" इत्यन्यत्र । "अग्निर्नः पातु कृत्तिकाः । नक्षत्रं देवमिन्द्रियम्" इत्यन्यत्र । तदेतत्सर्वं मन्त्रानुवाकेष्विष्टिविधायकेऽप्यनुवाक एतदीयेष्टिरादावाम्नाता "अग्निर्वा अकामयत । अन्नादो देवानां

स्यामिति । स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत् " इति । अतो मुखभूतासु कृत्तिकास्वादधानः पुमान्सर्वेषु स्वयं मुख्यो भवति ।

अस्मिन्पक्षे गुणमुक्त्वा दोषमपि कंचिद्दर्शयति—

अथो खलु ( १ ) अग्निनक्षत्रमित्यपचायन्ति । गृहान्ह दाहुको भवति, इति ।

पूर्वोक्तगुणवैलक्षण्यद्योतनायाथोशब्दः । अभिज्ञाः खल्वग्निदेवताकमिदं नक्षत्रमित्येवं निन्दन्ति । तस्मिन्नक्षत्र आदधानस्य यजमानस्य गृहान्सोऽग्निर्दाहुको दहनशीलो भवति ।

अथ निर्दोषं नक्षत्रं विधत्ते—

प्रजापती रोहिण्यामग्निमसृजत । तं देवा रोहिण्यामादधत । ततो वै ते सर्वान्रोहानरोहन् । तद्रोहिण्यै रोहिणित्वम् । यो रोहिण्यामग्निमाधत्ते । ऋध्नोत्येव । सर्वान्रोहान्रोहति, इति ।

रुह्यन्ते प्राप्यन्त इति रोहाः कामास्ते च यस्यां रुह्यन्ते सा रोहिणी । ऋध्नोत्येव समृद्धो भवत्येव । समृद्धिरेव सर्वानित्यनेन विशदीकृता ।

नक्षत्रान्तरं विधत्ते—

देवा वै भद्राः सन्तोऽग्निमाधित्सन्त ( २ ) तेषामनाहितोऽग्निरासीत् । अथैभ्यो वामं वस्वपाक्रामत् । ते पुनर्वस्वोरादधत । ततो वै तान्वामं वसूपावर्तत । यः पुरा भद्रः सन्पापीयान्त्स्यात् । स पुनर्वस्वोरग्निमादधीत । पुनरेवैनं वामं वसूपावर्तते । भद्रो भवति, इति ।

भद्रा धनसंपन्ना आधित्सन्ताऽऽधातुमैच्छन् । तेषां धनगर्वेण श्रद्धाराहित्या-द्ग्निः सम्यगाहितो नाऽऽसीत् । अनन्तरं तेन विकलानुष्ठानेन तदीयं वामं वननीयं मणिमुक्तादिकं धनं तेभ्योऽपगतम् । ततस्ते देवाः श्रद्धालवो भूत्वा पुनर्वसू नक्षत्रावयवौ तारकाविशेषौ यस्मिन्दिने चन्द्रेण युक्तौ तस्मि-न्दिनेऽग्निं सम्यगाधाय तद्धनं पुनर्लब्धवन्तः । ततोऽप्यन्योऽपि पूर्वं धनिकः सन्केनापि निमित्तेन पश्चात्पापीयान्स्याद्त्यन्तनिर्धनो भवेत् । स पुनर्वस्वो-रग्निमाधाय पूर्ववद्धनं प्राप्य सर्वेषां मध्ये भद्रः पूज्यो भवति । पुनरपि वसु लभ्यते ययोस्तौ पुनर्वसू ।

अथ नक्षत्रान्तरं विधत्ते—

य꣡ः का꣡मये꣡त दा꣡न꣡कामा मे प्र꣡जाः स्यु꣡रिति꣡ ।
स पू꣡र्व꣡योः फल्गु꣡न्योर꣡ग्निमा꣡द꣡धीत (३) ।
अ꣡र्य꣡म्णो वा ए꣡तन्न꣡क्ष꣡त्रम् । यत्पूर्वे꣡ फल्गु꣡नी ।
अ꣡र्य꣡मे꣡ति तमा꣡हुर्यो꣡ दद꣡ाति । दा꣡न꣡कामा अ꣡स्मै
प्र꣡जा भ꣡वन्ति, इति ।

सर्वाः प्रजा मे मह्यं धनं दातुमिच्छन्त्विति यो यजमानः कामयेत सोऽयं पूर्वयोः फल्गुन्योराधाय प्रजाभिर्दत्तं धनं लभते । एतच्च नक्षत्रमर्यमदेवता-कम् । "फल्गुनी नक्षत्रमर्यमा देवता" इत्यन्यत्राऽऽम्नानात् । अरीन्यमयति धनदानेन वशी करोतीत्यर्यमा धनस्य दाता ।

नक्षत्रान्तरं विधत्ते—

य꣡ः का꣡मये꣡त भ꣡गी स्या꣡मिति꣡ । स उ꣡त्त꣡रयोः
फल्गु꣡न्योर꣡ग्निमा꣡द꣡धीत । भग꣡स्य वा ए꣡तन्न꣡क्ष꣡-
त्रम् । यदु꣡त्त꣡रे फल्गु꣡नी । भग्ये꣡व भवति, इति ।

भगी, ऐश्वर्यादिगुणषट्ककामः । तथा च स्मर्यते—

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ इति ।

---

१ क. म. °मादधीत पू° ।

तत्काम उत्तरयोः फल्गुन्योराधाय तत्फलं प्राप्नोति । उत्तरयोः फल्गुन्यो-र्भगदेवताकत्वमन्यत्राऽऽम्नातम् । "फल्गुनी नक्षत्रं भगो देवता" इति ।

अथ नक्षत्रान्तरं विधत्ते—

कालकञ्जा वै नामासुरा आसन् (४)। ते
सुवर्गाय लोकायाग्निमचिन्वन्त । पुरुष इष्ट-
कामुपादधात्पुरुष इष्टकाम् । स इन्द्रो ब्राह्मणो
ब्रुवाण इष्टकामुपाधत्त । एषा मे चित्रा नामेति ।
ते सुवर्गँल्लोकमाप्रारोहन् । स इन्द्र इष्टकामावृ-
हत् । तेऽवाकीर्यन्त । येऽवाकीर्यन्त । त ऊर्णा-
वभयोऽभवन् । द्वावुदपतताम् (५)। तौ दिव्यौ
श्वानावभवताम् । यो भ्रातृव्यवान्त्स्यात् । स
चित्रायामग्निमादधीत । अवकीर्यैव भ्रातृव्यान् ।
ओजो बलमिन्द्रियं वीर्यमात्मन्धत्ते, इति ।

कालकञ्जशब्दोऽसुरविशेषनामधेयम् । ते चासुरा यदा स्वर्गार्थमग्निं चेतुं प्रारभन्त तदानीमेकैकोऽसुर एकैकामिष्टकामुपादधात् । तानसुराञ्जेतुकाम इन्द्रो वेषान्तरं कृत्वा ब्राह्मणोऽहमिति ब्रुवाणस्तन्मध्ये प्रविश्य कांचिदिष्टका-मुपाधत्त । तदानीं मनस्येषा मे मदीयेष्टका चित्रेति नामधेयेन युक्ताऽपेक्षितविचित्रफलप्रदातृत्वादित्यमन्यत । तेन चाग्निचयनेनासुराः स्वर्गमारोढुं प्रारभन्त । तदानीं स इन्द्रः स्वकीयां तामिष्टकां चितेरुद्धृतवान् । चितिभ्रंशेन मार्गमध्य एवासुराः प्रभ्रष्टाः । ते चोर्णनाभिनामका लूताः कीटा अभवन् । तेन कीटेन संसृष्टं तन्तुजालमूर्णशब्देनोच्यते । ऊर्णे तस्मिन्नूर्णे सूत्रजाले स्थित्वा अभयो भीतिरहिता आसते । ते ह्याधारयोः काष्ठयोर्मध्य आकाशे तन्तुजालं सृष्ट्वा तत्र निर्भयास्तिष्ठन्तीत्येतत्सर्वं लोकप्रसिद्धम् । ऊर्णावभय इति पदद्वयं मिलित्वैकं नामधेयम् । अपांनपादिति पदद्वयं यथैकस्याग्नेर्नाम तद्वत् । तेषामसुराणां मध्ये द्वावसुरौ श्रद्धातिशयात्स्वर्गं

१ ग. तनूनपादिति ।

प्राप्य चितिभ्रंशात्तत्र देवलोके स्थानावभूताम् । यस्मादग्नेन्द्राग्निश्चित्रेष्टकापातेन तानसुरान्विनाशितवांस्तस्माद्यजमानश्चित्रानक्षत्रेऽग्निमाधाय भ्रातृव्यान्विनाश्य स्वस्मिन्नोज आदिकं स्थापयति । ओजो बलहेतुरष्टमो धातुः । बलं प्रसिद्धम् । इन्द्रियं चक्षुरादिकम् । वीर्यं तदीयव्यवहारपाटवम् ।

इत्थं नक्षत्राणि विधायाधिकारिविशेषादृतून्विधत्ते—

वसन्ता ब्राह्मणोऽग्निमादधीत । वसन्तो वै ब्राह्मणस्यर्तुः । स्व एवैनमृतावाधाय । ब्रह्मवर्चसी भवति । मुखं वा एतदृतूनाम्(६) । यद्वसन्तः । यो वसन्ताऽग्निमाधत्ते । मुख्य एव भवति । अथो योनिमन्तमेवैनं प्रजातमाधत्ते । ग्रीष्मे राजन्य आदधीत । ग्रीष्मो वै राजन्यस्यर्तुः । स्व एवैनमृतावाधाय । इन्द्रियावी भवति । शरदि वैश्य आदधीत । शरद्वै वैश्यस्यर्तुः (७) । स्व एवैनमृतावाधाय । पशुमान्भवति, इति ।

वसन्तो वसन्तर्तुस्तस्य च ब्राह्मणस्य च प्राथम्यसाम्यात्स्वस्वामिभावात्स्वकीयऋतावादधानस्य ब्राह्मणस्य स्वोचितं ब्रह्मवर्चसमेव फलम् । किंच 'मधुश्च माधवश्च वासन्तिकावृतू' इत्याम्नानान्मुखत्वं प्राथम्यं वसन्तस्याप्यवगन्तव्यम् । अपि च यथा स्त्रीणामृतुविशेषे प्रवृत्तः पुरुषः प्रजननसमर्थो भवति तथर्तुविशेषे योनिमन्तं प्रजननसामर्थ्यवन्तं प्रादुर्भूतं प्रजातं चाग्निमाधत्ते । एवं ग्रीष्मशरद्वाक्ययोरपि व्याख्येयम् ।

पूर्वं काम्य आधाने पूर्वोत्तरफल्गुनीनक्षत्रद्वयं विहितम् । इदानीं तु नित्य आधाने नक्षत्रमेकं निषिध्येतरद्विधत्ते—

न पूर्वयोः फल्गुन्योरग्निमादधीत । एषा वै जघन्या रात्रिः संवत्सरस्य । यत्पूर्वे फल्गुनी ।

१ ग. 'सन्तो ब्रा' ।

पूर्ष्ठित एव संवत्सरस्याग्निमाधार्य । पापीया-
न्भवति । उत्तरयोरादधीत । एषा वै प्रथमा
रात्रिः संवत्सरस्य । यदुत्तरे फल्गुनी । मुखत
एव संवत्सरस्याग्निमाधार्य । वसीयान्भवति, इति ।

फाल्गुनमासे येयं पूर्णिमा तत्र प्राप्तं यत्पूर्वफल्गुनीनक्षत्रं तद्युक्ता रात्रिः पूर्वसंवत्सरस्य समाप्तिस्थानीया । अतस्तत्राऽऽदधानः संवत्सरस्य पृष्ठितः पृष्ठभागेऽनुष्ठानाद्दरिद्रो भवति । उत्तरफल्गुनीनक्षत्रे भाविसंवत्सरादित्वात्त-त्राऽऽदधानः संवत्सरप्रारम्भ एवाऽऽधायात्यन्तधनिको भवति ।

पक्षान्तरं विधत्ते—

अथो खलु । यदेवैनं यज्ञ उपनमेत् ।
अथाऽऽदधीत । सैवास्यर्धिः ( ८ ), इति ।

खल्वाधित्सन्त फल्गुन्योरग्निमादधीतासन्नपततामृतूनां वैश्यस्युर्दुरुत्तरे
फल्गुनी षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्र-
पाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

अन्येऽभिज्ञा एवमाहुः खलु यस्मिन्नेव काल एनं पुरुषं सोमयज्ञः प्रा-प्नुयात्सोमयागं करिष्याम्यहमिति बुद्धिरुदियात्तदानीमेवाऽऽदधीत । न तु नक्षत्रादिकं परीक्षितव्यम् । सैव सोमयागबुद्धिरेवास्य पुरुषस्य नक्षत्रादि-कृत्स्नविहितकालसमृद्धिः । अत एव सूत्रकारेणोक्तम्—“ सोमेन यक्ष्य-माणो नर्तुं सूर्क्षेत नक्षत्रम् ” इति । अत्र मीमांसा । तृतीयाध्यायस्य षष्ठ-पादे चिन्तितम्—

आधानं किं प्रक्रत्वर्थं वह्निमात्रेण वा युतम् ।
संस्कृताग्निर्मनाढ्यै तत्पर्णवत्प्रकृतौ स्थितम् ॥
लौकिकाकारमात्रत्वे विफलत्वात्क्रतौ युतिः ।
पर्णस्याऽऽहवनीयादौ शास्त्रीयेऽस्तु स्वतन्त्रता ॥

---

१ ग. पृष्ठित । २ ग. पृष्ठितः । ३ क. 'त्सन्तं ध' । ४ क. ख. 'प्रणाढ्यै त' ।

अनारभ्याधीतं पर्णमयीत्वं यथा जुहूपना(णा)ड्या प्रकृतौ निविष्टं तथैवाग्नि-प्रना(णा)ड्या तत्संस्काररूपमाधानं प्रकृतौ निविशत इति चेत्। मैवम् ।वैष-म्यात् । द्विविधो हि जुह्वा आकारः । लौकिकः शास्त्रीयश्च । अरत्निमात्रदै-र्घ्यहंसमुखत्वाद्याग्विलत्वादिरूपो दृश्यमानो लौकिकः । अपूर्वीयत्वाकारस्तु शास्त्रीयः । तयोरपूर्वीयत्वं क्रतुप्रवेशमन्तरेण नास्ति । तच्च यदि लौकिका-कारमात्रे पर्यवस्येत्तदा पर्णमयीत्वं विफलं भवेत् । काष्ठान्तरेणापि तदा-कारस्य सुसंपादकत्वात् [१]। अतोऽपूर्वीयत्वाय पर्णता क्रतौ प्रविष्टा । आह-वनीयादीनां त्वेक एव शास्त्रीयाकारः । स च विधिबलादाधानेनैव जन्यते नान्यथा । तस्मादाधानस्य क्रतुप्रवेशं विनैव शास्त्रीयाहवनीयाद्याकारसंपा-दनसमर्थत्वादग्निमात्रेण तत्संयुज्यते । तथा सति पर्णवैषम्यात्प्रकृतावप्रवि-श्याग्नीनुत्पाद्य क्रतुवत्स्वातन्त्र्येणावतिष्ठते । ततो लौकिकोपायसंपादितसुव-र्णव्रीह्यादिवदाधानसंपादितानां स्वतन्त्राणामेवाऽऽहवनीयाद्यग्नीनां पश्चाद्वाक्यैः क्रतुषु विनियोगोऽस्तु । तत्रैवान्यच्चिन्तितम्—

आधानं पवमानादेरिष्टेरङ्गं न वा भवेत् ।
अग्नीनामिष्टिशेषत्वात्तद्द्वाराऽस्य तदङ्गता ॥
अनारभ्य विधानात्तु नाङ्गं कस्यचिदाहितिः ।
अग्न्यर्थत्वात्तत्समेष्टिरग्नयस्त्वग्निहोत्रगाः ॥

इदमाम्नायते—“ अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पा-वकायाग्नये शुचये ” इति । “ वसन्ता ब्राह्मणोऽग्निमादधीत ” इति च । तत्राऽऽधानं पवमानादीनामिष्टीनामङ्गं भवेत् । कुतः । दर्शपूर्णमासविकृतिषु पवमानादीष्टिषु चोदकप्राप्तानामाहवनीयाद्यग्नीनामिष्ट्यङ्गत्वे सत्यग्निद्वारा तत्संस्काररूपस्याऽऽधानस्यापि तदङ्गताया अनिवार्यत्वादिति चेत् । मैवम् [२]। न ह्येतदाधानं कस्यचित्क्रतोः प्रकरणे पठितं किंत्वनारभ्याधीतम् । अतो न कस्याप्यङ्गम् । किंत्वाधानवदिष्टीनामप्यग्निसंस्कारार्थत्वात्परस्परं नास्त्यङ्गा-ङ्गिभावशङ्का । ननु पवमानेष्ट्यङ्गत्वाभावेऽग्निसंस्कारवैयर्थ्यादग्निद्वारा तदङ्ग-त्वं युक्तमिति चेत् । न । संस्कृतानामग्नीनामग्निहोत्राद्युत्तरक्रतुषु तत्तद्वाक्यैर्विनि-योगावगमात् । तस्मान्नाऽऽधानमङ्गम् । द्वितीयाध्यायस्य तृतीयपादे चिन्तितम्—

वसन्ते विप्र आदध्यात्तत्रैवोपनयीत तम् ।
अनुवादः प्रापणं वाऽनुवादः कालसिद्धये ॥

१ ख. °त्वमविल° । २ क. °स्याप्येतदङ्ग° ।

अन्तरेणाग्निविद्याभ्यां कर्मानुष्ठित्यसंभवात् ।
क्लृप्ते आधानोपनीती प्राप्ता विप्रादयस्ततः ।
लौकिकाग्नेः पुस्तकाच्च तत्सिद्धेर्नास्ति कल्पनम् ।
कालविप्रादिसंयुक्तमतोऽप्राप्तं विधीयते ॥

"वसन्ते ब्राह्मणोऽग्निमादधीत । ग्रीष्मे राजन्यः । शरदि वैश्यः" इति श्रूयते । "वसन्ते ब्राह्मणमुपनयीत । ग्रीष्मे राजन्यम् । शरदि वैश्यम्" इति च । तत्र वसन्तादिकालविशेषं विधातुं ब्राह्मणादयोऽनूद्यन्ते । न च तेषां प्राप्त्यभावः । क्रत्वनुष्ठानान्यथानुपपत्त्या क्लृप्तत्वात् । न ह्याहुत्याधारभूतमग्निमनुष्ठानप्रकारज्ञापिकां विद्यां च विना कर्मानुष्ठानं संभवति । अग्निश्च नाऽऽधानमन्तरेणास्तीति ब्राह्मणादिकर्तृकमाधानं कल्पयति । विद्या चोपनयनपूर्वकाध्ययनमन्तरेण न संभवतीति ब्राह्मणाद्युपनयनं कल्पयतीति तत्प्राप्तिरिति चेत् । मैवम् । लौकिकाग्नौ होतुं पुस्तकपाठेनाधिगन्तुं च शक्यत्वेनाऽऽधानोपनयनयोरकल्पने ब्राह्मणादीनामप्राप्तेः । तस्माद्वसन्तादिकालविशिष्टे ब्राह्मणादिकर्तृके आधानोपनयने अत्र विधीयेते ।

षष्ठाध्यायस्य प्रथमपादे चिन्तितम्—

पुंसोरेकस्य वाऽऽधानं वसानावित्यतो द्वयोः ।
एष क्षौमविधिर्द्वित्वं दंपत्योरेकता ततः ॥

आधाने श्रूयते—"क्षौमे वसानावग्निमादधीयाताम्" इति । तत्र वसानाविति पुंलिङ्गद्विवचनादुभयोः पुंसोराधानेऽधिकार इति चेत् । मैवम् । क्षौमस्याप्राप्तस्य विधेयतया पुंद्वित्वस्यापि विधाने वाक्यभेदात्स तद्विधीयते । किंतु दंपत्योः सहाधिकारेण प्राप्तं द्वित्वमनूद्यते । पतिश्च पत्नी चेति विगृह्य पतिशब्दस्यैकशेषात्पुंलिङ्गद्विवचनमविरुद्धम् । तस्मादाधानेऽधिकारिणः पुंस एकत्वमेव ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

१ क. °सन्ता ब्राह्मण आदधीत । ग्रीष्मे राजन्य आदधीत । शरदि वैश्य आदधीत" इ° ।
२ क. °द्नपनीयमिति ।

अथ तृतीयोऽनुवाकः ।

---

द्वितीयानुवाक आधानार्थे नक्षत्रादिकालोऽभिहितः । तृतीये देवयजनार्थाः संभारा उच्यन्ते । यदुक्तं सूत्रकारेण—' प्राचीनप्रवणं देवयजनमुद्धत्य ' इति । तदिदं विधत्ते—

उद्धन्ति । यदेवास्या अमेध्यम् । तदपहन्ति, इति ।

भूमेरूर्ध्वभागं खनित्रादिना खनेत् । तेन निष्ठीवनादिनिमित्तं यदमेध्यं तदपहतं भवति । उद्धननमन्त्रस्तु—"उद्धन्यमानम्" इत्यादि । स चोपरितनप्रपाठकादावाम्नातत्वात्तत्रैव व्याख्यास्यते । एवमुत्तरेष्वपि विधिषु द्रष्टव्यम् ।

अथ विधत्ते—

अपो वोक्षति शान्त्यै, इति ।

उद्धननकृता भूमेर्वेदना जलेन शाम्यति । ' आपो वै शान्ताः ' इत्यन्यत्रोपशमहेतुत्वश्रवणात् ।

विधत्ते—

सिकता निवपति । एतद्वा अग्नेर्वैश्वानरस्य रूपम् । रूपेणैव वैश्वानरमवरुन्द्धे, इति ।

सिकतानां तद्रूपत्वं ' वैश्वानरस्य रूपम् ' इति मन्त्रादवगन्तव्यम् । सिकतादयो द्रव्यविशेषा देवयजनभूमौ प्रक्षेपणीयाः संभाराः । अत एव सूत्रकारेणोक्तम्—' सप्त पार्थिवान्संभारानाहरत्येवं वानस्पत्यान् ' इति । तत्र पार्थिवेषु सिकतारूप एकः संभार उक्तः ।

द्वितीयं संभारं विधत्ते—

ऊषान्निवपति । पुष्टिर्वा एषा प्रजननम् । यदूषाः (१) । पुष्ट्यामेव प्रजननेऽग्निमाधत्ते । अथो संज्ञान एव । संज्ञानꣳ ह्येतत्पशूनाम् । यदूषाः, इति ।

पशवो ह्यूषरक्षेत्रोत्पन्नं तृणादिकं रसान्तरयुक्तत्वादादरेण भक्षयित्वा पुष्टाः सन्तोऽपत्यानुत्पादयन्ति । तस्मादूषा लवणाम्भसा मिश्रिता भूम्यवयवा इति यावत् । सैषा पुष्टिः प्रजननं च तस्मादूषनिवापेन तदुभयप्राप्तिः ।

अपि च संज्ञाने प्रदेश एवाग्निराहितो भवति । एतच्चोषरक्षेत्रं पशूनां संज्ञानम् । पशवो ह्याघ्राणेन तत्संस्थानं जानन्ति । तस्मादूषा आधानस्य स्थाने निवपनीयाः ।

एतन्निवपनकाले ध्यानविशेषं विधत्ते—

द्यावापृथिवी सहाऽऽस्ताम् । ते वियती अब्रूताम् । अस्त्वेव नौ सह यज्ञियमिति । यदमुष्या यज्ञियमासीत् । तदस्यामदधात् । त ऊषा अभवन् (२)। यदस्या यज्ञियमासीत् । तदमुष्यामदधात् । तददश्चन्द्रमसि कृष्णम् । ऊषान्निवपन्नदो ध्यायेत् । द्यावापृथिव्योरेव यज्ञियेऽग्निमाधत्ते, इति ।

सृष्टिकाले द्यावापृथिव्यौ मध्यगतान्तरिक्षव्यवधानरहिते अभूतां तदा प्राणिनामवकाशार्थमीश्वरानुज्ञया परस्परवियोगं गते वियोगकाले च स्नेहातिशयात्परस्परमेवमब्रूतामावयोर्यज्ञयोग्यं यत्सारमस्ति तत्सहैव तिष्ठतु । भूसारस्य दिवो वियोगो मा भूद्द्युसारस्य च भूमेर्वियोगो मा भूदिति । ततोऽमुष्या दिवः संबन्धि यद्यज्ञियं सारं तदस्यां पृथिव्यां सा द्यौरस्थापयत् । ते च द्युलोकसारांशा एते दृश्यमाना भूम्यवयवा ऊषरूपा अभवन् । तस्यां पृथिव्यां यद्यज्ञियं सारमासीत्तदमुष्यां दिवि भूमिरस्थापयत् । तच्च स्थापितं भूसारमदो दृश्यमानं चन्द्रमसि कलङ्करूपं कृष्णम् । तस्माद्भूसारत्वादूषाणां निवपनकाले तत्कृष्णरूपमत्र तिष्ठतीति ध्यायेत् । तथा सति द्युलोकसंबन्धिन्यूषे भूलोकसंबन्धिनि कृष्णे चाग्निराहितो भवति ।

अथ तृतीयं संभारं विधत्ते—

अग्निर्देवेभ्यो निलायत । आखुरूपं कृत्वा । स पृथिवीं प्राविशत् । स ऊतीः कुर्वाणः पृथिवीमनुसमचरत् । तदाखुकरीषमभवत् (३) ।

---

१ ग. °स्परं वि° ।

यदा॑खुकरी॒षꣳ सं॑भा॒रो भव॑ति । यदे॒वास्य॒

तत्र॒ न्य॑क्तम् । तदे॒वाव॑रुन्द्धे, इति ।

अग्निः कदाचित्केनापि निमित्तेन देवेभ्योऽपरक्तः सन्मूषको भूत्वा तदीयं रूपं च संपूर्णं कृत्वा निलीनो देवैरदृश्यो भूत्वा स च पृथिवीं प्रविष्टो बिलानि कुर्वाणोऽनुक्रमेण भूमेरन्तरेव समचरत् । यद्बिलनिर्माणे निःसारितं पांसुरूपं तदेतदाखुकरीषं तस्मिन्संभृते सति तत्र निगूढं यदग्नेस्तेजस्तत्सर्वं प्राप्नोति ।

अथ चतुर्थं संभारं विधत्ते—

ऊर्जं॒ वा ए॒तꣳ रसं॑ पृथि॒व्या उ॑प॒दीका॒

उद्दि॑हन्ति । य॒द्वल्मीक॑म् । यद्व॑ल्मीकव॒पा

सं॑भा॒रो भव॑ति । ऊर्ज॑मे॒व रसं॑ पृथि॒व्या

अव॑रुन्द्धे । अथो॒ श्रोत्र॑मे॒व । श्रोत्रꣳ ह्ये॑त-

त्पृ॑थि॒व्याः । य॒द्वल्मीकः॑ (४), इति ।

उपदीकाः पिपीलिकासमाना आर्द्रीकृतमृत्तिकोपचयक्षमा जन्तवस्ते हि पृथिव्याः संबन्धिनमूर्क्[1]शब्दाभिधेयं रसं पृथिव्याः सकाशादूर्ध्वमानीयोपचिन्वन्ति । तत्संभारेण भूसारं प्राप्नोति । अपि च श्रोत्रेन्द्रियसामर्थ्यमपि प्राप्नोति । वल्मीकस्य पृथिवीश्रोत्रत्वात् ।

एतद्वेदनं प्रशंसति—

अब॑धिरो भवति । य ए॒वं वेद॑, इति॒।

अथ पञ्चमं संभारं विधत्ते—

प्र॒जाप॑तिः प्र॒जा अ॑सृजत । ता॒साम॒न्नमुपा॑-

क्षीयत । ता॒भ्यः॒ सू॒दमु॒पप्राभि॑नत् । त॒तो वै

ता॒साम॒न्नं॒ नाक्षी॑यत । य॒स्य सू॒दः सं॑भा॒रो

भव॑ति । नास्य॑ गृ॒हेऽन्नं॑ क्षीयते, इति ।

---

१ क, ख, °मूर्क्श° ।

पुरा कदाचित्प्रजापतिः सृष्टानां प्रजानां यदन्नं तद्भुज्यमानमुपक्षीणमभूत्। ततः प्रजार्थं सूदमशोष्यजलप्रदेशावस्थितं कर्दममुपानीय प्राभिनत्। तेषु तेषु पृथिवीप्रदेशेषु पृथक्पृथक्प्रसारितवान्। ततस्तत्र तत्र तस्योत्पत्तौ सत्यां तासां प्रजानामन्नमक्षीणमभूत्। अतस्तत्संभारेण गृहेऽन्नमक्षयं भवति।

अथ षष्ठं संभारं विधत्ते—

आपो वा इदमग्रे सलिलमासीत्। तेन प्रजापतिरश्राम्यत् (५)। कथमिदꣳ स्यादिति। सोऽपश्यत्पुष्करपर्णं तिष्ठत्। सोऽमन्यत। अस्ति वै तत्। यस्मिन्निदमधितिष्ठतीति। स वराहो रूपं कृत्वोपन्यमज्जत्। स पृथिवीमध आर्च्छत्। तस्या उपहत्योदमज्जत्। तत्पुष्करपर्णेऽप्रथयत्। यदप्रथयत् (६)। तत्पृथिव्यै पृथिवित्वम्। अभूद्वा इदमिति। तद्भूम्यै भूमित्वम्। तां दिशोऽनु वातः समवहत्। ताꣳ शर्कराभिरदृꣳहत्। शं वै नोऽभूदिति। तच्छर्कराणाꣳ शर्करत्वम्। यद्वराहविहतꣳ संभारो भवति। अस्यामेवाछम्बट्कारमग्निमाधत्ते। शर्करा भवन्ति धृत्यै (७)। अथो शंत्वाय, इति।

इदमिदानीं दृश्यमानं गिरिनदीसमुद्रादिकं स्थावरं मनुष्यगवादिकं जंगमं च सृष्टेः पूर्वमीदृशं नाऽऽसीत्। किंतु सलिलरूपमासीत्। 'षल गतौ' औणादिक इलच्। इदं दृश्यमानं जगत्सलिलं कारणेन संगतमविभागापन्नम्। यद्वा "इमे वै लोकाः सरिरम्" इति श्रुतेः सरिरशब्देन लोका उच्यन्ते। रल-

१ ग. °लिलं प°।

घोरभेदात्सलिलरूपमासीत्तत्राप्याप एव न तु भूमिस्वरूपम् । तदानीं प्रजापतिस्तेन सिसृक्षितजगन्निमित्तेनाश्राम्यत् । पर्यालोचनरूपं तपोऽकुरुत । कथं नामेदं सर्वं जगद्भवेदिति विचार्य तस्य सलिलस्य मध्ये दीर्घनालाग्रेऽवस्थितमेकं पद्मपत्रमपश्यत् । तच्च दृष्ट्वा मनस्येवमतर्कयत् । यस्मिन्नाधार इदं सनालं पद्मपत्रमधिश्रित्य तिष्ठति तद्वस्तु किंचिदधस्तादस्त्यवेति तर्कयित्वा स प्रजापतिर्वराहो भूत्वा तदीयं रूपं च सम्यक्कृत्वा तस्य पद्मपत्रनालस्य समीपे जलमध्ये निमग्नोऽभूत् । मग्नश्चासावधस्ताद्भूमिं प्राप्तवान् । तस्या भूमेः सकाशात्कियतीमप्यार्द्रां मृदं स्वदंष्ट्रया पृथक्कृत्य सलिलस्योपर्युन्मज्जनं कृतवान् । तच्च मृद्रूपं तस्मिन्पुष्करपर्णे प्रसारितवान् । यस्मादियं मृत्तिका प्रथिता तस्मात्पृथिवीनाम संपन्नम् । ततः संतुष्ट इदं स्थावरजंगमाधारभूतं वस्त्वभूदित्युवाच । ततो भवतीति व्युत्पत्त्या भूमिनाम संपन्नम् । तामार्द्रां भूमिमनुलक्ष्य शोषयितुं चतस्रो दिशोऽप्यनु प्रजापतिसंकल्पाद्वायुः स(सं)प्रवृत्तः । शुष्यन्तीं तां भूमिं स प्रजापतिः शर्कराभिः क्षुद्रपाषाणैर्दृढी चकार । कृत्वा च नोऽस्माकं शं सुखमभूदित्युवाच । तस्मात्कारणाच्छं सुखं कृतमाभिरिति व्युत्पत्त्या शर्करेति नाम संपन्नम् । यस्माद्वराहेणाऽऽनीताया मृद ईदृशो महिमा तस्माद्वराहेण भूमौ विहतं खनितमस्यां मृत्स्वरूपं संभरणीयम् । तथा सत्यस्यां भूम्यामेव वैयर्थ्यं[1] यथा न भवति तथाऽग्निमाधत्ते । यस्माच्छर्कराभिर्भूमिर्दृढीकृता तस्मादत्रापि धृत्यै दार्ढ्याय शर्कराः प्रक्षेप्तव्याः । अथो अपि च शंत्वाय सुखसिद्धये शर्कराः कार्याः ।

अथ सप्तमं संभारं विधत्ते—

सरे॑ता अ॒ग्निरा॒धेय॒ इत्या॑हुः । आपो॒ वरु॑णस्य॒ पत्नी॑य आसन् । ता अ॒ग्निर॒भ्य॑ध्यायत् । ताः सम॑भवन् । तस्य॒ रेतः॒ परा॑ऽपतत् । तद्धिर॑ण्यमभवत् । यद्धिर॑ण्यमु॒पास्य॑ति । सरे॑तसमेवाग्निमाध॑त्ते, इति ।

या अब्देवता वरुणस्य भार्यास्ताः कामुकोऽग्निर्ध्यात्वा संभोगं कृतवान् । तदानीं व्यग्रस्य तस्य रेतो भूमौ पतित्वा हिरण्यमभून् । अतोऽत्र हिरण्ये प्रक्षिप्ते सति सरेतस्कोऽग्निराहितो भवति ।

---

1 ग. °त्वाऽस्य ।

एतस्य हिरण्यस्य प्रक्षेपस्थानं विधत्ते—

पुरुष इन्न्वै स्वाद्रेतसो बीभत्सत इत्याहुः

(८)। उत्तरत उपास्यत्यबीभत्सायै, इति।

इन्न्वा इति निपातत्रयं मिलित्वा प्रसिद्धिमाचष्टे। लोके सर्वोऽपि पुरुषः स्वकीयं रेतो हस्तेन स्प्रष्टुं जुगुप्सते। तदेतत्प्रसिद्धमित्यभिज्ञा आहुः। तस्मादत्राग्निस्थापनप्रदेशं विहायोत्तरस्मिन्पार्श्वे हिरण्यं प्रक्षिपेत्। तच्चाबीभत्सायै संपद्यते।

यदुक्तं सूत्रकारेण—"द्वेष्याय रजतं प्रयच्छति" इति। तदिदं विधत्ते—

अति प्रयच्छति। आर्तिमेवातिप्रयच्छति, इति।

देवयजने प्रक्षिप्तं सुवर्णमतिक्रम्यान्यद्रजतं प्रयच्छेत्। तथा सति स्वात्मानमतिक्रम्यान्यस्मै द्वेष्याय स्वकीयामार्तिं दत्तवान्भवति।

तदेवं पार्थिवाः संभारा विहिताः। अथ वानस्पत्येषु सप्तसु संभारेषु प्रथमं संभारं विधत्ते—

अग्निर्देवेभ्यो निलायत। अश्वो रूपं कृत्वा। सोऽश्वत्थे संवत्सरमतिष्ठत्। तदश्वत्थस्याश्वत्थत्वम्। यदाश्वत्थः संभारो भवति। यदेवास्य तत्र न्यक्तम्। तदेवावरुन्द्धे (९), इति।

कदाचिदग्निर्देवेभ्योऽपक्रम्याश्वो भूत्वा तदीयं रूपं[1] स्वस्य कृत्वाऽश्वत्थवृक्षे निरूढः[2] संवत्सरमात्रमतिष्ठत्। अश्वस्तिष्ठत्यस्मिन्निति व्युत्पत्त्या तस्य वृक्षस्याश्वत्थनाम संपन्नम्। तस्मादश्वत्थसंभारेण तत्र निरूढमग्नेस्तेजः प्राप्नोति।

द्वितीयं संभारं विधत्ते—

देवा वा ऊर्जं व्यभजन्त। तत उदुम्बर उदतिष्ठत्। ऊर्ग्वा उदुम्बरः। यदौदुम्बरः संभारो भवति। ऊर्जमेवावरुन्द्धे, इति।

१ क. °पं सम्यक्कृत्वा। २ ख. ग. निगूढ°।

देवाः सर्वे कदाचिदेकत्रोपविश्यान्नरसं विभक्तवन्तस्तदा तस्मिन्स्थाने पतितादन्नरसादुदुम्बरवृक्ष उदतिष्ठत् । तस्मादन्नरसरूपत्वादुदुम्बरत्वात्तत्संभारेणान्नरसं प्राप्नोत्येव ।

अथ तृतीयं संभारं विधत्ते—

तृतीयस्यामितो दिवि सोम आसीत् । तं गायत्र्या-
हरत् । तस्य पर्णमच्छिद्यत । तत्पर्णोऽभवत् ।
तत्पर्णस्य पर्णत्वम् । ( १० ) । यस्य पर्णमयः
संभारो भवति । सोमपीथमेवावरुन्द्धे, इति ।

इतो भूलोकादारभ्य गणनायामन्तरिक्षमतिक्रम्य परतो वर्तमाना या द्यौस्तृतीया तस्यां सोमवल्ली स्थिता । तं च सोमं गायत्री देवता तत्रत्यैः सोमरक्षकैः सह युद्धं कृत्वा समाहरत् । अयं च वृत्तान्तः "कद्रूश्च वै सुपर्णी च" इत्यनुवाके प्रपञ्चितः । सहसा समानीयमानस्य तस्य सोमस्यैकं पर्णं छिन्नं सद्भूमौ पतित्वा पलाशवृक्षोऽभवत् । पर्णजन्यत्वात्तस्य वृक्षस्य पर्णनाम संपन्नम् । सोमजन्यस्य तस्य संभरणेन सोमपानमेव प्राप्नोति ।

पुनरपि तमेव संभारं प्रशंसति—

देवा वै ब्रह्मन्नवदन्त । तत्पर्ण उपाशृणोत् ।
सुश्रवा वै नाम । यत्पर्णमयः संभारो
भवति । ब्रह्मवर्चसमेवावरुन्द्धे, इति ।

देवाः कदाचिदेकान्ते पलाशवृक्षच्छायायामुपविश्य परस्मिन्ब्रह्मणि संवादं कृतवन्तः । तत्सर्वं समीपे स्थितः पलाशवृक्षोऽशृणोत् । शोभनं वस्तु श्रुतवानिति व्युत्पत्त्या सुश्रवा इति नाम संपन्नम् । तस्मात्परं ब्रह्म श्रुतवतो वृक्षस्य संभरणेन ब्रह्मवर्चसमेव प्राप्नोति ।

अथ चतुर्थं संभारं विधत्ते—

प्रजापतिरग्निमसृजत । सोऽबिभेत्प्र मा धक्ष्य-
तीति । तꣳ शम्याऽशमयत् ( ११ ) ।

तच्छम्यै शमित्वम् । तच्छमीमयः संभारो भवति । शान्त्या अप्रदाहाय, इति ।

प्रजापतिरग्निं सृष्ट्वा मामयमग्निः प्रधक्ष्यतीति भीतः शमीशाखया ज्वालामशमयत् । शमयत्यनेनेति व्युत्पत्त्या शमीति नाम संपन्नम् । अतस्तत्संभारः पूर्वं विद्यमानस्य दाहस्योपशान्त्यै, इतः परमदाहाय च संपद्यते ।

अथ पञ्चमं संभारं विधत्ते—

अग्नेः सृष्टस्य यतः । विकंङ्कतं भा आर्च्छत् । यद्वैकंङ्कतः संभारो भवति । भा एवावरुन्द्धे, इति ।

प्रजापतिना सृष्टोऽग्निस्त्वरया गच्छन्विकङ्कतवृक्षमपश्यत् । तदा तदीयं तेजो वृक्षं प्राप्नोत् । अतस्तत्संभारे सति भा एव दीप्तिमेवावरुन्धे ।

अथ षष्ठं संभारं विधत्ते—

सहृदयोऽग्निराधेय इत्याहुः । मरुतोऽद्भिरग्निमतमयन् । तस्य तान्तस्य हृदयमाच्छिन्दन् । साऽशनिरभवत् । यदशनिहतस्य वृक्षस्य संभारो भवति । सहृदयमेवाग्निमाधत्ते ( १२ ), इति ।

उपा अभवन्नभवद्वल्मीकोऽश्राम्यदप्रथयद्भूत्यै बीभत्सत इत्याहू रुन्द्धे पर्णत्वमशमयदच्छिन्दंस्त्रीणि च ॥ ३ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

मरुतः कदाचिदग्निना सह विरोधे सति तमग्निमद्भिस्तमयन्ग्लानिं प्रापयन् । ततो निष्क्रिन्नस्याग्नेर्हृदयमाच्छिन्दन्[1] । तस्य हृदयमशनिरूपेणोदभूत् । तस्मादशनिहतस्य वृक्षस्य संभारेण सहृदयोऽग्निराहितो भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

१ क. ख. °तो निःशक्तस्या°.।

अथ चतुर्थोऽनुवाकः ।

तृतीये देवयजनदेशे प्रक्षेप्तव्याः संभारा उक्ताः । अथ चतुर्थे तैः संभारैर्युक्तेष्वायतनेषु वह्न्याधानमभिधीयते । यदुक्तं सूत्रकारेण—"प्राचीनप्रवणं देवयजनमुद्धृत्य तस्मिन्नुदीचीनवꣳशꣳ शरणं करोति । तस्याग्रेण मध्यमं वꣳशं गार्हपत्यायतनं भवति । तस्मात्प्राचीनमष्टासु प्रक्रमेषु ब्राह्मणस्याऽऽहवनीयायतनमेकादशसु राजन्यस्य द्वादशसु वैश्यस्य चतुर्विꣳशत्यामपरिमिते वा यावता वा चक्षुषा मन्यते तस्मान्नातिदूरमाधेय इति सर्वेषामविशेषेण श्रूयते" इति । तत्रैकं पक्षं विधत्ते—

द्वादशसु विक्रामेष्वग्निमादधीत । द्वादश मासाः संवत्सरः । संवत्सरादेवैनमवरुध्याऽऽधत्ते, इति ।

विक्रामः प्रक्रमः । स च द्विपदः । तथा चोक्तम्—"प्रक्रमो द्विपदस्त्रिपदो वा" इति । गार्हपत्याद्द्वादशसु विक्रामेषु समाप्तेष्वाहवनीयायतनं कृत्वा तत्राऽग्निमादध्यात् । संख्यासाम्येन मासद्वारा संवत्सरबलादेनमग्निमवरुध्याऽऽधानं कृतवान् ।

पक्षान्तरं विधत्ते—

यद्द्वादशसु विक्रामेष्वादधीत । परिमितमवरुन्धीत । चक्षुर्निमित आदधीत । इयद्द्वादशविक्रामा३ इति । परिमितं चैवापरिमितं चावरुन्द्धे, इति ।

द्वादशसु विक्रामेष्वाधाने सति देशस्य पादेन परिमितत्वात्फलमपि परिमितमेव भवति । तस्माद्देशो न पादेन परिमातव्यः । किंतु चक्षुषा दृष्ट्वा प्रायेणैतावान्देशो द्वादशविक्रामः संभवतीति निश्चित्य तत्राऽऽदधीत । एवं सति पादेन परिमितत्वाभावात्परिमितदोषोऽपि न भविष्यति । चक्षुषा परिमितत्वात्तदीयगुणश्च भविष्यति । चाक्षुषनिश्चयद्योतनार्था प्लुतिः ।

इममेव पक्षं पुनः प्रशंसति—

अनृतं वै वाचा वदति । अनृतं मनसा ध्यायति (१) । चक्षुर्वै सत्यम् । अद्धा३ इत्याह । अद-

१ क. ग. भवति ।

शमिति । तत्सत्यम् । यश्चक्षुर्निमित्तेऽ-

ग्निमाधत्ते । सत्य एवैनमाधत्ते, इति ।

वाङ्मनसयोरनृतविषयत्वमपि क्वचिद्दृष्टम् । चक्षुस्तु पुरोवर्तिवस्तुनो याथात्म्यमेव पश्यतीति तत्सत्यस्वरूपम् । अत एव लोकेऽपि दूरदेशवृत्तान्तं पुरुषमुखादाकर्ण्य किं त्वमेव दृष्टवानुत श्रुतवानसीत्येवं सत्यत्वनिश्चयाय पृच्छन्ति । विचारार्था प्लुतिः । सोऽप्यहमेव दृष्टवानस्मीति यदा ब्रूते तदा तत्सत्यमिति निश्चिन्वन्ति । तस्माच्चक्षुर्निमित्तस्य सत्यत्वात्सत्यदेशेऽग्निराहितो भवति । यत्तु लोके शुक्तिरजतादिदर्शनं तच्च काचकामलादिदोषकृतमिति न कदाचिदपि चक्षुः सत्यं व्यभिचरति ।

इदानीं प्रसङ्गादाहिताग्नेः कंचिद्धर्मं दर्शयति—

तस्मादाहिताग्निर्नानृतं वदेत् । नास्य ब्राह्मणोऽ-

नाश्वान्गृहे वसेत् । सत्ये ह्यस्याग्निराहितः, इति ।

यस्माच्चक्षुर्निमित्तत्वेन सत्यभूते देशेऽयमग्निराहितस्तस्मादाहिताग्निः सत्यमेव वदेत् । न त्वनृतम् । सत्यानृतयोरेकत्र विरोधात् । गृहस्थस्य गृहे ब्राह्मणस्यानश्नतो यो निवासः सोऽप्यनृतसमानः । तस्मात्तं ब्राह्मणं भोजयेदेव ।

देशविशेषं विधाय कालविशेषं विधत्ते—

आग्नेयी वै रात्रिः ( २ ) । आग्नेयाः पशवः । ऐन्द्र-

महः । नक्तं गार्हपत्यमादधाति । पशूनेवाव-

रुन्द्धे । दिवाऽऽहवनीयम् । इन्द्रियमेवावरुन्द्धे, इति ।

रात्रावग्नेः प्रकाशाधिक्याद्रात्रिराग्नेयी । एतच्चाग्निहोत्रब्राह्मण एवोपपादितम्—“ अग्निं वावाऽऽदित्यः सायं प्रविशति । तस्मादग्निर्दूरान्नक्तं ददृशे ” इति । अग्नेः पशुप्रदत्वात्पशूनामाग्नेयत्वम् । एतच्चाग्न्युपस्थानब्राह्मणे देवैरभिहितम्—“ इममेवाग्निꣳ स्तवाम स नः स्तुतः पशून्पुनर्दास्यतीति । तेऽग्निमस्तुवन्स एभ्यः स्तुतो रात्रिया अध्यहरभिपशून्निरार्जत् ” इति । एवमिन्द्रस्याहःसंबन्धो ब्राह्मणान्तराद्द्रष्टव्यः । तस्माद्रात्रौ गार्हपत्याधानेन पशून्प्राप्नोति । अहन्याहवनीयाधानेनेन्द्रियं प्राप्नोति ।

---

१ ग. °थार्थमे° । २ क. °मेवं द्र° । ३ ख. °न्तरे द्रष्ट° ।

अहन्यपि विशेषं विधत्ते—

अर्धोदिते सूर्य आहवनीयमादधाति । एतस्मिन्वै लोके प्रजापतिः प्रजा असृजत । प्रजा एव तद्यजमानः सृजते । अथो भूतं चैव भविष्यच्चावरुन्द्धे (३), इति ।

लोक्यतेऽवगम्यत इति व्युत्पत्त्या लोकशब्दः कालपरः । अर्धोदयकाले प्रजानां सृष्टत्वात्तत्राऽऽधानं प्रजार्थं भवति । अपि चोदयस्याऽसंपूर्णत्वाद्भूतमतीतं रात्रिरूपं च भविष्यदागाम्यहश्चेत्युभयं प्राप्तं भवति ।

अथाऽऽधातव्यानामग्नीनां क्रमं निर्णेतुमाहवनीयस्य प्राथम्यं निराचष्टे—

इडा वै मानवी यज्ञानूकाशिन्यासीत् । साऽशृणोत् । असुरा अग्निमादधत इति । तदगच्छत् । त आहवनीयमग्र आदधत । अथ गार्हपत्यम् । अथान्वाहार्यपचनम् । साऽब्रवीत् । प्रतीच्येषाꣳ श्रीरगात् । भद्रा भूत्वा पराभविष्यन्तीति (४) । यस्यैवमग्निराधीयते । प्रतीच्यस्य श्रीरेति । भद्रो भूत्वा पराभवति, इति ।

इडा नाम गोरूपा काचिद्देवता । सा च मनुसंबन्धिनी । तत्संबन्धश्च मानवी घृतपदी मैत्रावरुणीतीडोपाह्वानस्य ब्राह्मणे स्पष्टमाम्नातः—"मानवीत्याह मनुर्ह्येतामग्रेऽपश्यत्" इति । सा चेडा यज्ञानूकाशिनी यज्ञतत्त्वप्रकाशनसमर्थाऽऽसीत् । सा कदाचिदसुराणामग्न्याधानवार्तां श्रुत्वा द्रष्टुं गता । दृष्ट्वा मनोः पार्श्वे समागत्यैवमुवाच—'असुराः प्रथमं पूर्वदिगवस्थितमाहवनीयमाधाय ततः पश्चिमदिगवस्थितं गार्हपत्यमाधाय दक्षिणदिगवस्थितमन्वाहार्यपचनं चाऽऽहितवन्तः[1] । तथा चाऽऽधानमुक्तेन कंचित्कालं धनिका भूत्वा पश्चाद्विनाशं प्राप्स्यन्ति । एतेषां पश्चिमाभिमुखत्वेन प्रवृत्तत्वादेषां श्रीरपि प्रतीची प्रतिकूलगमना सती तेभ्योऽसुरेभ्यो निवर्तिष्यते' इति । अतोऽसुरवदिदानींतनस्याऽऽहिताग्नेरप्यन्ते पराभवो भवति ।

---

१ ख. ग. °माहितवन्तः । अनन्तरं दक्षिणाग्निम् । तथा ।

अथान्वाहार्यपचनस्य प्राथम्यं निराचष्टे—

साऽशृणोत् । देवा अग्निमादधत इति । तदगच्छत् । तेऽन्वाहार्यपचनमग्न आदधत । अथ गार्हपत्यम् । अथाऽऽहवनीयम् । साऽब्रवीत् (५) । प्राच्येषाꣳ श्रीरगात् । भद्रा भूत्वा सुवर्गं लोकमेष्यन्ति । प्रजां तु न वेत्स्यन्त इति । यस्यैवमग्निराधीयते । प्राच्यस्य श्रीरेति । भद्रो भूत्वा सुवर्गं लोकमेति । प्रजां तु न विन्दत इति ।

पूर्ववद्व्याख्येयम् । अत्र गार्हपत्यादूर्ध्वं प्राङ्मुखप्रवृत्तेर्देवानां श्रीरपि प्राची प्रवृत्ता । प्रकृष्टं पूर्वदिगवस्थितं स्वर्गमञ्चति गच्छतीति प्राची । तस्माद्देवानां स्वर्गप्राप्तिर्भविष्यति, किंतु प्रजाहेतोर्गार्हपत्यस्य पूर्वमाधानाभावात्प्रजां न लप्स्यन्ते । एवं तादृगाधानकर्तरि यजमानेऽपि द्रष्टव्यम् ।

अथ गार्हपत्यस्य प्राथम्यं विधत्ते—

साऽब्रवीदिडा मनुम् । तथा वा अहं तवाग्निमाधास्यामि । यथा प्र प्रजया पशुभिर्मिथुनैर्जनिष्यसे (६) । प्रत्यस्मिँल्लोके स्थास्यसि । अभि सुवर्गं लोकं जेष्यसीति । गार्हपत्यमग्र आदधात् । गार्हपत्यं वा अनु प्रजाः पशवः प्रजायन्ते । गार्हपत्येनैवास्मै प्रजां पशून्प्राजनयत् । अथान्वाहार्यपचनम् । तिर्यङ्ङिव वा अयं लोकः । अस्मिन्नेव तेन लोके प्रत्यतिष्ठत् । अथाऽऽहवनीयम् । तेनैव सुवर्गं लोकमभ्यज-

यत् (७)। यस्यैवमग्निराधीयते । प्र प्रजया पशुभिर्मिथुनैर्जायते । प्रत्यस्मिँल्लोके तिष्ठति । अभि सुवर्गं लोकं जयति, इति ।

गार्हपत्यस्य प्रजापशुस्वामित्वात्तस्य प्रथमाधानेन तत्प्राप्तिः । गार्हपत्यस्य दक्षिणभागे स्थितो योऽयमन्वाहार्यपचनस्तस्य तिर्यक्त्वेन वर्तमानस्योर्ध्वगमनाभावेन मनुष्यलोकसदृशत्वात्तदाधानेन मनुष्यलोके प्रतिष्ठा । तत ऊर्ध्वमाहवनीयाधानाय प्राङ्मुखप्रवृत्तेः स्वर्गस्य च प्राग्वर्तित्वात्तत्प्राप्तिः ।

अथाधिकारिभेदेनाऽऽधानमन्त्रविशेषान्विधत्ते—

यस्य वा अयथादेवतमग्निराधीयते । आ देवताभ्यो वृश्च्यते । पापीयान्भवति । यस्य यथादेवतम् । न देवताभ्य आ वृश्च्यते । वसीयान्भवति । भृगूणां त्वाऽङ्गिरसां व्रतपते व्रतेनाऽऽदधामीति । भृग्वङ्गिरसामादध्यात् । आदित्यानां त्वा देवानां व्रतपते व्रतेनाऽऽदधामीत्यन्यासां ब्राह्मणीनां प्रजानाम् । वरुणस्य त्वा राज्ञो व्रतपते व्रतेनाऽऽदधामीति राज्ञः । इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनाऽऽदधामीति राजन्यस्य । मनोस्त्वा ग्रामण्यो व्रतपते व्रतेनाऽऽदधामीति वैश्यस्य । ऋभूणां त्वा देवानां व्रतपते व्रतेनाऽऽदधामीति रथकारस्य । यथादेवतमग्निराधीयते । न दे-

---

१ क. °तितिष्ठति । व° ।

वतांऽस्य आवृश्च्यते । वसीयान्भवति ( ८ ), इति ।

ध्यायति रात्रिश्चावरुन्द्धे भविष्यन्तीत्यब्रवीज्जनिष्यसेऽजयद्वसीयान्भवति नवं च ।

## इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

यस्य पुरुषस्य याऽभिमानिनी देवता तामनतिक्रम्याऽऽधानं तस्य पुरुषस्य यथादेवतमित्युच्यते । तदतिक्रमे सति देवताद्रोहो दारिद्र्यं च भवति । अनतिक्रमे तु देवताप्रसादो धनसंपत्तिश्च भवति । ये मनुष्या भृगुगोत्रोत्पन्ना ये चाङ्गिरोगोत्रोत्पन्नास्तेषामुभयेषां तत्प्रतिपादकेन भृगूणामिति मन्त्रेणाऽऽधानम् । हे व्रतपते कर्मस्वामिन्नग्ने(ग्ने) भृगूणामङ्गिरसां च संबन्धिना व्रतेन कर्मविशेषेण निमित्तभूतेन त्वामादधामीहाऽऽयतने स्थापयामीति मन्त्रार्थः । एवमुत्तरत्रापि योज्यम् । गोत्रान्तरवर्तिनां ब्राह्मणानामादित्या एव देवताः । अभिषिक्तस्य राज्ञो वरुणो देवता । इतरस्य क्षत्रियस्येन्द्रो देवता । इन्द्रियेण व्रतेनेन्द्रियाभिवृद्धिहेतुना कर्मणेत्यर्थः । वैश्यस्य ग्रामनिर्वाहको मनुर्देवता । रथकारोऽनुलोमजः संकीर्णजातिः । तस्य ऋभवो देवता । एतैर्मन्त्रैर्यथादेवतमाधानं संपद्यते ।

अत्र मीमांसा । षष्ठाध्यायस्य प्रथमपादे चिन्तितम्—

विप्रादिरेव रथकृदन्यो वाऽऽद्योऽस्तु योगतः ।
रूढेस्त्रवर्णान्तरं स्यादाऽऽधाने वर्षर्तुरुच्यते ॥ [ इति ] ।

आधाने श्रूयते—" वर्षासु रथकार आदधीत " इति । तत्र रथं करोतीति व्युत्पत्त्या त्रैवर्णिको रथकार इति चेत् । मैवम् । संकीर्णजातिविशेषे रूढत्वात् । वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः । शूद्रायां वैश्यादुत्पन्ना करिणी । तस्यां करिण्यां माहिष्यादुत्पन्नो रथकारः । तथा च याज्ञवल्क्यः—

माहिष्येण करिण्यां तु रथकारः प्रजायते । इति ।

तस्य च रथकारस्याऽऽधानकालो वर्षर्तुः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ पञ्चमोऽनुवाकः ।

चतुर्थे त्रयाणामाहवनीयादीनामाधानमुक्तम् । पञ्चमे तत्रैव कंचिद्विशेषं पवमानहवींषि चाभिदधाति । तत्राऽऽदौ व्याहृतिमन्त्रान्विधत्ते—

प्रजापतिर्वाचः सत्यमपश्यत् । तेनाग्निमाधत्त । तेन वै स आर्ध्नोत् । भूर्भुवः सुवरित्याह । एतद्वै वाचः सत्यम् । य एतेनाग्निमाधत्ते । ऋध्नोत्येव । अथो सत्यप्राशूरेव भवति । अथो य एवं विद्वानभिचरति । स्तृणुत एवैनम् (१), इति ।

वाचः संबन्धि यत्सत्यमवश्यंभाविफलसाधनं मन्त्ररूपं तच्छास्त्रमुखेन(ण) दृष्ट्वा प्रजापतिस्तेनाग्निमाधाय समृद्धोऽभूत् । किं तत्सत्यमिति पृच्छद्भ्यः शिष्येभ्यो भूर्भुवः सुवरिति मन्त्रस्वरूपं प्राह । एतस्य वाक्संबन्धिसत्यत्वादे-तेनाग्निमादधानः समृद्धो भवति । अपि चासौ सत्यप्राशूर्भवत्येव । प्रकर्षे-णाश्यते व्याप्यतेऽभिमतमनेनेति प्राशूः पराक्रमः । सत्यः कदाचिदप्यविसं-वादी प्राशूः । अपि चैवं व्याहृतिमहिमानं विद्वाञ्शत्रुं मारयितुमभिचरन्नेनं हिनस्त्येव ।

सामर्थ्यप्रदर्शनेन व्याहृतित्रयं प्रशंसति—

भूरित्याह । प्रजा एव तद्यजमानः सृजते । भुव इ-त्याह । अस्मिन्नेव लोके प्रतितिष्ठति । सुवरित्याह । सुवर्ग एव लोके प्रतितिष्ठति, इति ।

योऽयं भूरिति मन्त्रमुच्चारयत्यसौ तन्मन्त्रसामर्थ्येन प्रजाः पुत्रपौत्रादिका[1] उत्पादयति । एवमुत्तरयोरपि योज्यम् ।

सामान्येन विहितं व्याहृतित्रयं पुनर्विशेषाकारेण विधत्ते—

त्रिभिरक्षरैर्गार्हपत्यमादधाति । त्रयं इमे लोकाः । एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते । सर्वैः पञ्चभिरा-

---

१ क. पुत्रादिकामुत्पा° ।

हवनीयम् ( २ ) । सुवर्गाय वा एष लोकायाऽऽधीयते । यदाहवनीयः । सुवर्ग एवास्मै लोके वाचः सत्यꣳ सर्वमाप्नोति, इति ।

भूर्भुव इत्येतानि त्रीण्यक्षराणि तैराधीयमानास्त्रित्वसाम्याल्लोकत्रये प्रतिष्ठितोऽग्निराहितो भवति । भूर्भुवः सुवरिति पञ्चाक्षराणि तैराधीयमानस्याऽऽहवनीयस्य स्वर्गाश्रयत्वात्स्वर्गे वाक्संबधि कृत्स्नं सत्यमस्मै प्राप्नोति ।

अथ तत्त्रयं पञ्चकं च मिलित्वा प्रशंसति—

त्रिभिर्गार्हपत्यमादधाति । पञ्चभिराहवनीयम् । अष्टौ संपद्यन्ते । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । यावानेवाग्निः । तमाधत्ते (३), इति ।

अग्नेर्मुखजत्वेन गायत्रीसंबन्धित्वम् ।

यदुक्तं सूत्रकारेण—"गार्हपत्ये प्रणयनीयमाश्वत्थमिध्ममादीपयति । सिकतास्वोपयमनीरुपकल्पयते तमुद्यच्छति" इति । तदेतद्विधत्ते—

प्रजापतिः प्रजा असृजत । ता अस्मात्सृष्टाः पराचीरायन् । ताभ्यो ज्योतिरुदगृह्णात् । तं ज्योतिः पश्यन्तीः प्रजा अभिसमावर्तन्त । उपरीवाग्निमुद्गृह्णीयादुद्धरन् । ज्योतिरेव पश्यन्तीः प्रजा यजमानमभिसमावर्तन्ते, इति ।

प्रजापतिना सृष्टाः प्रजाः पराच्यः पुनरावृत्तिरहिता यदा गतास्तदा प्रजापतिस्ताभ्यो ज्योतिरुदगृह्णात् । अन्धकारे पलायमानानां प्रजानां दर्शनार्थं कंचिद्दीपमूर्ध्वं धृतवान् । ताश्च प्रजा ज्योतिर्दृष्ट्वा तं प्रजापतिमभिलक्ष्य समावृत्ताः । अतो गार्हपत्यादाहवनीयं प्रत्याग्निमुद्धरन्नूर्ध्वमेव गृह्णीयान्न त्वधो धारयेत् । तेन सर्वाः प्रजा ज्योतिः पश्यन्त्यो यजमानं प्रत्यावर्तन्ते ।

---

१ ख. ग. °र्गार्थत्वा° । २ क. प्रत्यावृत्ताः ।

यदुक्तं सूत्रकारेण—"प्राञ्चोऽश्वप्रथमा अभिप्रव्रजन्ति" इति । तदेतद्विधत्ते—

प्रजापतेरक्ष्यश्वयत् । तत्परापतत् । तदश्वोऽभवत् । तदश्वस्याश्वत्वम् (४) । एष वै प्रजापतिः । यदग्निः । प्राजापत्योऽश्वः । यदश्वं पुरस्तान्नयति । स्वमेव चक्षुः पश्यन्प्रजापतिरनूदेति, इति ।

पुरा कदाचित्प्रजापतेरक्षिगोलकं केनापि व्याधिनोच्छूनं भूत्वा भूमौ पतितं सदश्वरूपेणोदभूत् । अश्वयदयमिति व्युत्पत्त्या तस्याश्वनाम संपन्नम् । अग्निश्च प्रजापतिसृष्टत्वात्प्रजापतिरेव । अश्वश्चोक्तरीत्या प्राजापत्यः । तस्मादाहवनीयं प्रति गच्छन्नश्वं पुरस्तान्नयेत् । तथा सति स्वकीयमेव चक्षुः पश्यन्प्रजापतिरूपोऽग्निरनुगच्छति ।

एतदेवाश्वस्य पुरोगमनं पुनः प्रशंसति—

वज्री वा एषः । यदश्वः । यदश्वं पुरस्तान्नयति । जातानेव भ्रातृव्यान्प्रणुदते, इति ।

वज्रिवद्युद्धे शत्रुविनाशहेतुत्वादश्वो वज्री । स च पुरस्तान्नीयमानो यजमानस्य पूर्वमुत्पन्नान्भ्रातृव्यान्विनाशयति । वज्रसमानदन्तोपेतत्वाद्वाऽस्य वज्रित्वम् । एतदेवाभिप्रेत्याग्निब्राह्मणे समाम्नातम्—" वज्री वा एष यदश्वो दद्भिरन्यतो दद्भ्यो भूयान् " इति ।

आहवनीयपर्यन्तं नीतस्याश्वस्य तेनैव पथा पुनरावृत्तिं विधत्ते—

पुनरावर्तयति (५) । जनिष्यमाणानेव प्रतिनुदते, इति ।

आहवनीयात्पुनरावृत्त्या भविष्यतः शत्रून्प्रतिबध्नाति ।

यदुक्तं सूत्रकारेण—" पूर्ववाडश्वो भवति " इति । तदिदं विधत्ते—

न्याहवनीयो गार्हपत्यमकामयत । नि गार्हपत्य आहवनीयम् । तौ विभाजं नाशक्नोत् । सोऽश्वः पूर्ववाड् भूत्वा । प्राञ्चं पूर्वमुदवहत् । तत्पूर्ववाहः पूर्ववाट्-

त्वम् । यदश्वं पुरस्तान्नयति । विभक्तिरेवैनयोः सा ।

अथो नानावीर्यावेवैनौ कुरुते (६), इति ।

पुरा कदाचिदाहवनीयो गार्हपत्यं नितरामकामयत । गार्हपत्यधर्मं धृतवानित्यर्थः । गार्हपत्यश्च नितरामाहवनीयधर्मं धृतवान् । ततस्तावुभावग्नी संकीर्णधर्मतया प्रजापतिर्विभाजं विभक्तुं नाशक्नोत् । ततस्तद्विभागाय स्वयं पूर्ववाडश्वो भूत्वा धर्मसांकर्यं परिहृत्य प्राञ्चं प्राग्देशनिवासयोग्यमाहवनीयं पूर्वमुदवहत् । पूर्वदेशं प्रत्युद्धृत्य नीतवान् । पूर्ववाडित्यश्वविशेषः । सेनामध्य इतरेभ्योऽश्वेभ्यः पूर्वं वहतीति वा पूर्वस्मिन्वयस्यत्यन्तबाल्य एव वहतीति वा पूर्ववाट् । अतस्तादृशमश्वमत्र पुरस्तान्नयेत् । तस्यं च विभागक्षमत्वादेनयोरग्न्योः सैव विभक्तिर्विभागः संपद्यते । पूर्वदेशेऽवस्थित आहवनीयः पश्चिमदेशेऽवस्थितो गार्हपत्य इति विभागः । अपि च धर्मसांकर्यपरिहारादेनावुभावग्नी भिन्नवीर्याविव करोति । पत्नीसंयाजहोमाधारस्वलक्षणं वीर्यं गार्हपत्यस्यैव । आग्नेयादिहविराधारत्वलक्षणमाहवनीयस्यैव ।

यदुक्तं सूत्रकारेण—"न कर्णदघ्नमत्युदूगृह्णाति" इति । तदिदं विधत्ते—

यदुपर्युपरि शिरो हरेत् । प्राणान्विच्छिन्द्यात् । अधोऽधः शिरो हरति । प्राणानां गोपीथाय, इति ।

हस्तेनोद्धृत्याऽऽहवनीयं प्रति नीयमानमग्निं शिर उपर्युपरि शिरःसमीपवर्तिन्यूर्ध्वभागे धृत्वा यदि हरेत्तदा प्राणा विच्छिद्येरन् । अतः प्राणरक्षणाय शिरसः समीपवर्तिन्यधःप्रदेशे धृत्वा नयेत् ।

यदुक्तं सूत्रकारेण—" जानुदघ्ने धारयमाणस्तृतीयमध्वनोऽग्निं हरति नाभिदघ्ने तृतीयमास्यदघ्ने तृतीयम् " इति । तदेतदङ्गुल्याऽभिनयन्विधत्ते—

इयत्यग्रे हरति । अथेयत्यथेयति । त्रय इमे लोकाः ।

एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते, इति ।

इयति जानुदघ्ने । एवं नाभिदघ्नास्यदघ्नयोरपि ।

---

१ क. °स्य वि° । २ क. देशावस्थित आहवनीयः पश्चिमदेशाव° ।

एतस्मादाग्निप्रणयनात्पूर्वमग्नेर्विभागं विधत्ते —

प्रजापतिरग्निमसृजत । सोऽबिभेत्प्र मा धक्ष्यतीति (७) । तस्य त्रेधा महिमानं व्यौहत् । शान्त्या अप्रदाहाय । यत्त्रेधाऽग्निराधीयते । महिमानमेवास्य तद्व्यूहति । शान्त्या अप्रदाहाय, इति ।

अग्निं सृष्ट्वा तदीयदाहाद्बिभ्यत्प्रजापतिस्तदीयसामर्थ्यं त्रेधा व्यभजत् । सोऽयं विभागो ज्वालायाः शान्त्यै स्वविषये दाहाभावाय च संपन्नः । एवमत्राऽऽधित्सुरपि गार्हपत्यादग्नेरेकं भागमाहवनीयार्थमपरं भागं दक्षिणाग्न्यर्थं च विभज्य शान्त्यर्थमप्रदाहार्थं च त्रेधा कुर्यात् ।

तत्राऽऽहवनीयार्थस्याग्नेराहवनीयायतनं प्रति नयनं विधत्ते —

पुनरावर्तयति । महिमानमेवास्य संदधाति, इति ।

विभागेन योऽग्नेर्महिमा शान्तस्तं महिमानं पुनः संधातुं विभक्तमग्निमाहवनीयायतने स्थापयेत् ।

तत्र स्थापने कंचिद्विशेषं विधत्ते —

पशुर्वा एषः । यदश्वः । एष रुद्रः (८) । यदग्निः । यदश्वस्य पदेऽग्निमादध्यात् । रुद्राय पशूनपिदध्यात् । अपशुर्यजमानः स्यात् । यन्नाऽऽक्रमयेत् । अनवरुद्धा अस्य पशवः स्युः । पार्श्वत आक्रमयेत् । यथाऽऽहितस्याग्नेरङ्गारा अभ्यववर्तेरन् । अवरुद्धा अस्य पशवो भवन्ति । न रुद्रायापिदधाति (९), इति ।

अत्रेदं चिन्त्यते । पुरस्तादानीतमश्वं किमाहवनीयायतनमाक्रमयेन्न वेति । उभयमप्येतदनुपपन्नम् । अश्वस्य पशुत्वात् । अग्नेः क्रूर[1]देवतात्वाच्च । अश्वपद-

---

१ ग, °त्वा° ।

लाञ्छिते प्रदेशेऽग्निस्थापने सति क्रूरदेवाय पशून्समर्पयेत् । ततो यजमानः पशुरहितः स्यात् । अनाक्रमणे तु यजमानस्य पशवो न संभवेयुः । अत उभयदोषपरिहारार्थमायतनस्य कस्मिंश्चित्पार्श्वे तमश्वमाक्रमयेत् । स्वायतने स्थापितस्य प्रज्वाल्यमानस्याग्नेरङ्गारा येन प्रकारेण तदश्वपदमभिलक्ष्य स्वत एव प्रवृत्ता भवन्ति तथा समीपवर्तिप्रदेशमाक्रमयेत् । एवं सत्यङ्गाराणामश्वपदे प्रविष्टत्वात्पशवोऽपि लभ्यन्ते । स्वयं बुद्धिपूर्वकमश्वपदेऽग्नेरप्रतिष्ठापनादुग्रदेवाय पशवोऽपि न समर्पिता भवेयुः ।

इत्थमाधानगतो विशेषो निरूपितः । अथ पवमानहवींषि विधत्ते—

त्रीणि हवीꣳषि निर्वपति । विराज एव विक्रान्तं यजमानोऽनुविक्रमते, इति ।

विशेषेण राजत इति विराडग्निस्तस्य विक्रान्तं सामर्थ्यमनु यजमानोऽपि विक्रमते समर्थो भवति ।

सामान्येन विहितानां हविषां देवताविशेषान्विधत्ते—

अग्नये पवमानाय । अग्नये पावकाय । अग्नये शुचये । यदग्नये पवमानाय निर्वपति । पुनात्येवैनम् । यदग्नये पावकाय । पूत एवास्मिन्नन्नाद्यं दधाति । यदग्नये शुचये । ब्रह्मवर्चसमेवास्मिन्नुपरिष्टाद्दधाति ( १० ), इति ।

एनमाहवनीयं धत्तेऽश्वत्वं वर्तयति कुरुत इति रुद्रो दधाति यदग्नये शुचय एकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

पवमानः स्वयं शुद्धः । पावकोऽन्यस्य शोधकः । शुचिर्दीप्यमानः । तत्र प्रथमेन यजमानशुद्धिः । द्वितीयेनान्नप्राप्तिः । तृतीयेन फलद्वयस्योपरिष्टाद्ब्रह्मवर्चसप्राप्तिः । अत्र मीमांसा । तृतीयाध्यायस्य षष्ठपादे चिन्तितम्—

---

१ क. ख. °नो वि° । २ ग. °नस्य शु° ।

संस्कृते पवमानेष्ट्या वह्नौ सेष्टिर्न वेष्टयः ।
वह्नौ तत्संस्कृते कार्या[1]श्चोदकस्यानुरोधतः ॥
चोदकः पवमानेष्टौ न ता प्रापयितुं प्रभुः ।
अनङ्गत्वेष्ट्यसिद्धिभ्यामिष्टयस्तदसंस्कृते ॥ [इति] ।

पवमानादीष्टिभिराहवनीयाद्यग्नयः संस्क्रियन्ते । संस्कृतेष्वग्निहोत्रदर्शपूर्णमासादिक्रतवः प्रवर्तन्ते । तथा सति विमताः पवमानेष्टयस्ताभिरिष्टिभिः संस्कृते वह्नौ कर्तव्या इष्टित्वादितरेष्टिवत् । चोदकोऽप्येवं सत्यनुगृहीतो भवति । एताभिरिष्टिभिः संस्कृते वह्नौ प्रकृत्यनुष्ठानादिति प्राप्ते ब्रूमः । यद्यपि पवमानेष्टिर्विकृतिस्तथाऽपि चोदको न तस्यां पवमानेष्टौ तां पवमानेष्टिमतिदेष्टुं प्रभवति । प्रकृतौ प्रयाजादिवत्पवमानेष्टेरङ्गत्वाभावात् । किंचैतस्याः पवमानेष्टेः संस्कृताग्निसिद्ध्यर्थं पवमानेष्ट्यन्तराङ्गीकारे तत्रापि तथेत्यनवस्थायामिष्टिरेव न सिध्येत् । तस्मात्ताभिरिष्टिभिरसंस्कृते वह्नौ पवमानेष्टयः कर्तव्याः । दशमाध्यायस्य द्वितीयपादे चिन्तितम्—

लुप्यते पवमानेष्टौ निर्वापः क्रियतेऽथवा ।
लुप्यते साधनाभावात्तेन मुख्यो न लुप्यते ॥ [ इति ] ।

आधानप्रकरणाम्नातायां पवमानेष्टौ निर्वापसाधनं नास्ति । अग्निहोत्रहवणी हि प्रकृतौ निर्वापसाधनं सा चाऽऽधानकाले न संभवति । अग्निहोत्रस्याऽऽधानोत्तरकालीनत्वेन तद्धोमसाधनभूतायास्तस्या अपि तथात्वादिति प्राप्ते ब्रूमः । मुख्यो निर्वापस्तं प्रति गुणभूताऽग्निहोत्रहवणी । न हि गुणलोपेन मुख्यो लोप्तुमर्हति । किंचाऽऽधानकाले स्वरूपेणैवाविद्यमानाया अग्निहोत्रहवण्याः साधनत्वं दूरापेतम् । ततः साधनाभावादित्यनुपन्यासः । तस्मान्निर्वापो न लुप्यते । पञ्चमाध्यायस्य तृतीयपादे चिन्तितम्—

आहिते पवमानेष्टिसंस्कृते वाऽग्निहोत्रकम् ।
आधानेनाग्निनिष्पत्तेस्तन्मात्रे कर्म संभवेत् ॥
आधानस्यानपेक्षस्य नाग्न्युत्पादकता मता ।
समुच्चितस्य हेतुत्वात्कर्म स्यादिष्टिसंस्कृते ॥ [ इति ] ।

अग्न्याधानादूर्ध्वं विलम्ब्य पवमानेष्टयः क्रियन्ते । द्वादशसु रात्रीष्वनुनिर्वपेदितीष्टिकालविधानात् । ताभ्यः पुरा द्वादशसु दिनेष्वग्निहोत्रमनुष्ठेयम् । आधानमात्रेणाऽऽहवनीयाद्यग्नेर्निष्पन्नत्वादिति प्राप्ते ब्रूमः । आधानेन पवमानेष्टिनिरपेक्षेण नाऽऽहवनीयाद्यग्निरुत्पद्यते । अन्यथा पवमानेष्टिवैयर्थ्य-

---

१ ग. कार्या ।

प्रसङ्गात् । न च विकल्पः । आधानमुपजीव्य तस्मादुत्तरकाले विधानात् । तत इष्टिभिः समुच्चित्यैवाऽऽधानमग्न्युत्पादकमितीष्टिभिः संस्कृते वह्नौ पश्चादग्निहोत्रानुष्ठानम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ षष्ठोऽनुवाकः ।

पञ्चमे पवमानहवींषि संक्षिप्योक्तानि[1] । अथ षष्ठे तद्विस्तारो हविरन्तराणि दक्षिणाश्चोच्यन्ते[2] । तत्र प्रथमं तावत्पवमानहविषां देवताविशेषस्य पूर्वमुक्तत्वात्तदनुवादेन हविर्विशेषं विधत्ते—

देवासुराः संयत्ता आसन् । ते देवा विजयमुपयन्तः । अग्नौ वामं वसु संन्यदधत । इदमु नो भविष्यति । यदि नो जेष्यन्तीति । तदग्निर्न्यो-त्सहमशक्नोत् । तत्त्रेधा विन्यदधात् । पशुषु तृतीयम् । अप्सु तृतीयम् । आदित्ये तृतीयम् । (१) । तद्देवा विजित्य । पुनरवारुरुत्सन्त । तेऽग्नये पवमानाय पुरोडाशमष्टाकपालं निरवपन् । पशवो वा अग्निः पवमानः । यदेव पशुष्वासीत् । तत्तेनावारुन्धत । तेऽग्नये पावकाय । आपो वा अग्निः पावकः । यदेवाप्स्वासीत् । तत्तेनावारुन्धत (२) । तेऽग्नये शुचये । असौ वा आदित्योऽग्निः शुचिः । यदेवाऽऽदित्य आसीत् । तत्तेनावारुन्धत, इति ।

---

१ क. ख. संक्षेपेणोक्ता° । २ क. ख. °न्ते । प्र° ।

यदा देवासुराः परस्परं युद्धोद्युक्तास्तदानीं विजयमपेक्षमाणा देवाः स्वकीयं वामं वमनीयं वसु धनमग्नौ सम्यक्स्थापितवन्तः। तेषामयमभिप्रायः। यद्यस्मानसुरा जेष्यन्ति तदानीमापत्कालेऽस्माकमिदमेव धनं जीवनाय भविष्यतीति । अग्निस्तद्भाराधिक्येन तद्धनमुद्धृत्य सोढुं नाशक्नोत् । त्रेधा विभज्य पश्वादिषु स्थापितवान् । तदानीं देवाश्चासुरान्विजित्य पुनः स्वकीयं धनं प्राप्तुमैच्छन्। तदा पश्वाद्यभिमानिदेवतासु स्थापितं धनं बलादवरोद्धुमशक्ताः सन्तस्तदुत्कोचार्थं पवमानगुणकायाग्नये पुरोडाशं निरवपन्। पशवश्च पवमानाग्न्यधीनत्वात्तत्स्वरूपाः । तेन च हविषा पवमानमग्निं तर्पयित्वा पशुष्ववस्थितं धनं स्वीकृतवन्तः। एवं ते देवाः पावकगुणकायाग्नये पुरोडाशं निरवपन्नित्यनुवर्तते। अपां पावकाग्न्यधीनत्वात्तन्मुखेनाप्सु स्थितं धनं प्राप्नुवन् । तथा शुचिगुणकायाग्नये पुरोडाशं निरुप्य तस्याग्नेरादित्यरूपत्वादादित्ये स्थापितं धनमवाप्नुवन् । तस्मादेताभ्यो देवताभ्यः प्रत्येकमष्टाकपालं पुरोडाशं निर्वपेदिति द्रव्यविधिरुन्नेयः ।

अथैतेषां हविषामाग्नेयेन हविरन्तरेण सह निर्वापं विधत्ते—

ब्रह्मवादिनो वदन्ति । तनुवो वावैता अग्न्याधेयस्य । आग्नेयो वा अष्टाकपालोऽग्न्याधेयमिति । यत्तं निर्वपेत् । नैतानि । यथाऽऽत्मा स्यात् (३) । नाङ्गानि । तादृगेव तत् । यदेतानि निर्वपेत् । न तम् । यथाऽङ्गानि स्युः । नाऽऽत्मा । तादृगेव तत् । उभयानि सह निरुप्याणि । यज्ञस्य सात्मत्वाय, इति ।

याः पूर्वोक्ताः पवमानाग्न्यादिदेवतास्तिस्रस्ता अग्न्याधेयरूपस्य देवविशेषस्य शरीराणि। यस्तु ताभ्योऽतिरिक्तोऽष्टाकपाल आग्नेयः सोऽग्न्याधेयस्य स्वरूपभूतः पूर्वोक्तशरीरत्रयस्वामी । एवं सत्याग्नेयं निरुप्य पव-

१ क. ख. °रं समुद्यतास्त° । २ क. ख. ततस्त्रेधा । ३ क. तदा ।

मानहविषामनिर्वापेऽवयवत्वराहितः केवल आत्मैव स्यात् । अथ तानि हवींषि निरुप्याऽऽग्नेयस्य निर्वापो न क्रियेत तदानीमात्मराहिताः केवला अवयवा एव स्युः । तस्मादाग्नेयेन सह पूर्वाणि त्रीणि हवींषि निरुप्याणि । तथा सति यज्ञस्य सावयवत्वं सात्मत्वं च संपद्यते ।

अथानुनिर्वाप्यहविर्द्वयं विधत्ते—

उभयं वा एतस्येन्द्रियं वीर्यमाप्यते (४) । योऽग्निमाधत्ते । ऐन्द्राग्नमेकादशकपालमनुनिर्वपेत् । आदित्यं चरुम् । इन्द्राग्नी वै देवानामयातयामानौ । ये एव देवते अयातयाम्नी । ताभ्यामेवास्मा इन्द्रियं वीर्यमवरुन्द्धे । आदित्यो भवति । इयं वा अदितिः । अस्यामेव प्रतितिष्ठति, इति ।

अग्निमादधानस्येन्द्रियवीर्यस्य प्राप्त्या भवितव्यम् । अतस्तत्सिद्ध्यर्थमिन्द्राग्निदेवताकं पुरोडाशमनुनिर्वपेत् । देवानां मध्य इन्द्राग्न्योरगतसारत्वात्तत्प्रसादेनेन्द्रियवीर्यप्राप्तिर्भवति । अगतसारत्वं चानयोर्जेतृत्वादवगन्तव्यम् । जयश्च राजसूयप्रकरणे पठ्यते—"देवा वा ओषधीष्वाजिमयुः । ता इन्द्राग्नी उदजयताम्" इति । आदित्यचरुनिर्वापेण भूम्यां प्रतितिष्ठति । भूमेरखण्डनीयत्वेनादितित्वात् ।

अस्य चरोः सहकारि द्रव्यं घृतं विधत्ते—

धेन्वै वा एतद्रेतः (५) । यदाज्यम् । अनडुहस्तण्डुलाः । मिथुनमेवावरुन्द्धे । घृते भवति । यज्ञस्यालूक्षान्तत्वाय, इति ।

आज्यस्य धेनुनिष्पाद्यत्वात्तद्रेतस्त्वम् । तण्डुलानां चानडुहाकृष्टायां भूमौ निष्पाद्यत्वात्तद्रेतस्त्वम् । अत उभयमेलने सति मिथुनं संपद्यते । तस्माच्चरुनिष्पत्तये घृते तण्डुलाः प्रक्षेप्तव्याः । एतेन घृतेन यज्ञस्यालूक्षान्तत्वं संपद्यते । लूक्षो रूक्षः स्नेहरहितः परुषः । तद्विपरीतयाऽलूक्षः । तादृशोऽन्तः समीपवर्ती द्रव्यविशेषो यज्ञस्य सोऽयमलूक्षान्तस्तस्य भावोऽलूक्षान्तत्वं तत्सिद्ध्यै घृतस्वीकारः ।

यदुक्तं सूत्रेण—( सूत्रकारेण ) " चतुर्धाकरणकाल आदित्यं ब्रह्मणे परिहराति । तं चत्वार आर्षेयाः प्राश्नन्ति " इति । तदिदं विधत्ते—

चत्वार आर्षेयाः प्राश्नन्ति । दिशामेव ज्योतिषि जुहोति, इति ।

योऽयमादित्यश्चरुस्तस्यैतद्धविषश्चतुर्धाकरणं नास्ति, किंतु ब्रह्मणो हस्ते सर्वं दत्त्वा चत्वार ऋत्विजः प्राश्नीयुः । तेषां श्रुताध्ययनसंपन्नत्वादार्षेयत्वम् । अत एवान्यत्राऽऽम्नातम्—" आर्षेयो यः शुश्रुवान् " इति । चतुःसंख्यासाम्येन दिशां चतसृणां संबन्धीनि ज्योतींषि हुतं भवति ।

उक्तानां हविषां कालविशेषं विधत्ते—

पशवो वा एतानि हवीꣳषि । एष रुद्रः । यदग्निः (६)। यत्सद्य एतानि हवीꣳषि निर्वपेत् । रुद्राय पशूनपि दध्यात् । अपशुर्यजमानः स्यात् । यन्नानुनिर्वपेत् । अनवरुद्धा अस्य पशवः स्युः । द्वादशसु रात्रीष्वनुनिर्वपेत् । संवत्सरप्रतिमा वै द्वादश रात्रयः । संवत्सरेणैवास्मै रुद्रꣳ शमयित्वा । पशूनवरुन्द्धे, इति ।

अत्रेदं[1] विचिन्त्यते—यस्मिन्दिनेऽग्नय आहितास्तस्मिन्दिने किमेतानि हवींषि निर्वपेत्किंवा नेति । तत्र निर्वापो न युक्तः । एतेषां हविषां पशुसाधनत्वेन पशुरूपत्वात् । आहितस्य चाग्नेः क्रूरदेवत्वात्तस्मै क्रूराय पशुसमर्पणप्रसङ्गाद्यजमानोऽप्यपशुः स्यात् । अनिर्वापपक्षे तु पशवो न संपादिताः स्युः । अतो दोषद्वयपरिहारायाऽऽधानादूर्ध्वं द्वादशसु रात्रीषु गतासु पश्चाद्धवींषि निर्वपेत् । द्वादशसंख्याया मासद्वारेण तासां संवत्सरसदृशत्वादेतद्यजमानार्थं संवत्सरेणैवाग्निं शान्तं कृत्वा पशून्प्राप्नोति ।

---

१ ख. °पेत् । त° । २ क. °वाऽन्यदेति ।

तन्निर्वापे कंचिद्विशेषं विधत्ते—

यदेकमेकमेतानि हवीꣳषि निर्वपेत् (७)। यथा त्रीण्यावपनानि पूरयेत्। तादृक्तत्। न प्रजननमुच्छिꣳषेत्। एकं निरुप्य। उत्तरे समस्येत्। तृतीयमेवास्मै लोकमुच्छिꣳषति प्रजननाय। तं प्रजया पशुभिरनुप्रजायते। अथो यज्ञस्यैवैषाऽभिक्रान्तिः, इति।

एतानि त्रीणि पवमानहवींषि पृथक्पृथगेव निर्वपेदिति केषांचिन्मन्दानां पक्षः। तस्मिन्पक्षे यथा लोके त्रीणि बीजावापस्थानानि क्षेत्राणि बीजैः पूरितानि भवन्ति तथा लोकत्रयस्यापि त्रिभिर्हविर्भिः पूरितत्वाद्यजमानस्य स्वातन्त्र्येण प्रजोत्पत्तिस्थानं किमपि नावशिष्येत। तस्मात्प्रथममेकं हविः पृथङ्निरुप्य द्वितीयतृतीये हविषी संभूय निर्वपेत्। तथा सति निर्वापद्वयेन लोकद्वयस्यैव पूरितत्वात्तृतीयो लोको यजमानस्य प्रजोत्पादनायावशेषितो भवति। तत्रस्तं लोकमनु यजमानः प्रजापशुसमृद्धो भवति। अपि च यत्तृतीयलोकावशेषणमेषा यज्ञस्यैवाभिक्रान्तिरभितो व्याप्तिः। प्रजापशुरूपस्य तत्फलस्य निष्पन्नत्वात्।

यदुक्तं सूत्रकारेण—"प्राञ्चोऽश्वप्रथमा अभिप्रव्रजन्ति दक्षिणतो ब्रह्मा रथं रथचक्रं वा प्रवर्तयति यावच्चक्रं त्रिः परिवर्तते" इति। तदेतद्विधत्ते—

रथचक्रं प्रवर्तयति। मनुष्यरथेनैव देवरथं प्रत्यवरोहति (८), इति।

गार्हपत्यादाहवनीयं प्रत्यग्नेः प्रणयनकाले रथचक्रस्य प्रवर्तनम्। अनेन मनुष्यरथप्रवर्तनेन नीयमानाग्न्यर्थं देवरथ एव प्रवर्तितो भवति।

अथ मीमांसामुखेन होमनिर्णयं करोति—

ब्रह्मवादिनो वदन्ति। होतव्यमग्निहोत्रा३ं न होतव्या३मिति। यद्यजुषा जुहुयात्। अयथापूर्वमाहुतीजु(तीर्जु)हुयात्। यन्न जुहुयात्। अग्निः

---

१ ख. °मेता°। २ ख. ग. निरूप्य। ३ क. ख. °ग्निमि°।

परा॑भवेत् । तू॒ष्णीमे॒व हो॑त॒व्य॑म् । य॒था॒पू॒र्वमाहु॑ती जु(तीर्जु)होति । नाग्निः परा॑भवति, इति ।

नेयं नित्याग्निहोत्रविषया मीमांसा । तस्य पवमानेष्टिभ्य ऊर्ध्वं प्रवर्तिष्यमाणत्वात् । किंत्वाधानाङ्गमेतत्किंचित्कर्म । पूर्णाहुतेः प्राक्प्रवर्तमानत्वात् । "पूर्णाहुत्यन्तमग्न्याधेयम्" इत्याश्वलायनेनोक्तम् । अस्य चाऽऽधानाङ्गस्याग्निहोत्रस्य मन्त्रेण होमे सत्ययथापूर्वत्वं प्रसज्येत । तथा हि । अग्निहोत्रशब्दोऽत्र नित्याग्निहोत्रधर्मानतिदिशति । नित्याग्निहोत्रे च—"सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा" इति । अयमहनि पठितो होममन्त्रः सोऽत्र प्रसक्तः । अहन्येव हूयमानत्वात् । प्रकृतिभूते त्वग्निहोत्रे रात्रावेवोपक्रमात् । "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा" इति मन्त्रस्य रात्रिहोमाङ्गत्वात्तेन मन्त्रेण प्रथममनुष्ठाय पश्चात्प्रातःकाले "सूर्यो ज्योतिः" इति मन्त्रेणानुष्ठानमित्येष क्रमः । इह त्वादावेव "सूर्यो ज्योतिः" इति मन्त्रेणानुष्ठाने प्रकृतिवैलक्षण्यादयथापूर्वत्वम् । अहोमपक्षे त्वाधानेनोत्पन्नोऽग्निराहाराभावात्पराभूतो भवेत् । अतो दोषद्वयं परिहर्तुं मन्त्रं परित्यज्य तूष्णीमेव होतव्यम् । तथा सति मन्त्रवैपरीत्याभावादयथापूर्वत्वदोषो न भवति । होमस्यानुष्ठितत्वादग्नेः पराभवोऽपि न भवति ।

यदुक्तं सूत्रकारेण—"आग्नेयस्य दक्षिणाकाले दक्षिणां ददात्यजं पूर्णपात्रमुपबर्हणꣳ सार्वसूत्रमित्यग्नीध उपबर्हणं ददात्यश्वं ब्रह्मणेऽध्वर्यवे वाऽऽहवनीयदेशेऽनड्वाहमध्वर्यवेऽपरेण गार्हपत्यं धेनुꣳ होत्रे वासो गावौ मिथुनौ गावौ नवं च रथं ददाति तानि साधारणानि सर्वेषामा द्वादशभ्यो ददातीत्युक्त्वाऽऽह काममूर्ध्वं देयमपरिमितस्यावरुद्ध्या इति विज्ञायते । ऊर्ध्वमादिष्टदक्षिणाभ्यो ददाति षड् देया द्वादश देयाश्चतुर्विंशतिर्देया इति ता विकल्प्यन्ते" इति । तदेतत्सर्वं क्रमेण विधत्ते—

अ॒ग्नीधे॑ ददाति (१) । अ॒ग्निमु॑खाने॒वर्तू॒न्प्री॑णाति । उ॒प॒ब॒र्हणं॑ ददाति । रू॒पाणा॒मव॑रुद्ध्यै । अश्वं॑ ब्र॒ह्मणे॑ । इ॒न्द्रि॒यमे॒वाव॑रुन्द्धे । धे॒नुꣳ होत्रे॑ । आ॒शिष॑ ए॒वाव॑रुन्द्धे । अ॒न॒ड्वाह॑मध्व॒र्यवे॑ । वह्नि॒र्वा अ॑न॒ड्वान् ।

१ क. प्राग्ब्रुमा° ।

वह्निरध्वर्युः ( १० ) । वह्निनैव वह्नियज्ञस्याव-
रुन्द्धे । मिथुनौ गावौ ददाति । मिथुनस्यावरुन्द्ध्यै ।
वासो ददाति । सर्वदेवत्यं वै वासः । सर्वा एव दे-
वताः प्रीणाति । आ द्वादशभ्यो ददाति । द्वादश
मासाः संवत्सरः । संवत्सर एव प्रतितिष्ठति ।
काममूर्ध्वं देयम् । अपरिमितस्यावरुद्ध्यै ( ११ ).

इति ।

आदित्ये तृतीयमप्स्वासीत्तेनावारुन्धत स्यादाप्यते रेतोऽग्निरेकमेकमेतानि हवींषि निर्वपेत्प्रत्यवरोहति ददात्यध्वर्युर्देयमेकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

आग्नीध्रेण तत्तद्दतावग्नेरिध्यमानत्वात्तस्मै दत्तेन द्रव्येणाग्निसहितानामृतूनां प्रीतिः । तस्मै यद्देयमुपबर्हणं शिरसः पृष्ठस्य वाऽऽधारभूतं तस्य कार्पासशा-णोर्णादिमयैः शुक्लनीलपीतादिवर्णैः सर्वैः सूत्रैर्निष्पन्नत्वात्तेन रूपाणां प्राप्तिः । अश्वस्य प्रजापतिचक्षुर्जन्यत्वात्तेनेन्द्रियप्राप्तिः । दातव्याया धेनोः कामधेनु-रूपत्वादाशिषां प्राप्तिः । अनड्वाञ्शकटं वहति । अग्निश्च द्रव्यं वहति । अध्व-र्युरप्यनुष्ठानं वहति । ततः समानत्वाद्बलीवर्दरूपेणाध्वर्युरूपेण च वह्निनैव यज्ञस्य वह्नियज्ञसंबन्धिहविर्वाहनमग्निं प्राप्नोति । गोमिथुनेन मनुष्यमिथुन-प्राप्तिः । वाससः सर्वदेवत्यत्वं दीक्षाप्रकरणे—"अग्नेस्तूषाधानं वायोर्वात-पानम्" इत्यादिवाक्येन प्रतिपादितम् । आ द्वादशभ्यो गोभ्य इति शेषः । उक्तदक्षिणाभ्य ऊर्ध्वं—"षड् देया द्वादश देयाः" इत्यादिशाखान्तरोक्तं बहुपक्षानुसारेण स्वाभिमतं यावत्तावद्देयम् । तेनापरिमितफलप्राप्तिः । अत्र मीमांसा । एकादशाध्यायस्य चतुर्थपादे चिन्तितम्—

पवमानेष्टिहविषां तन्त्रं भेदोऽथ वाऽग्रिमः ।
साध्यदेशाद्यभेदान्नो काम्ये भेदोक्तितोऽन्तिमः ॥ इति ।

आधानप्रकरणे पठ्यते—"अग्नये पवमानायाष्टाकपालं निर्वपेदग्नये पावका-

थाग्नये शुचये" इति । तैरेतैर्हविर्भिः साध्यस्याग्नेरेकत्वादेशाद्यभेदाच्चाङ्गानां तन्त्रमिति प्राप्ते ब्रूमः—"यः कामयेतोत्तरं वसीयान्त्स्यामिति तस्या-ग्नये पवमानाय निरुप्याथ पावकाय शुचये चोत्तरे हविषी समानबर्हिषि निर्वपेत्" इति वचनात्काम्यप्रयोगे प्रथमस्य हविषोऽङ्गभेदः । उत्तरयोस्त-न्त्रम् । नित्यप्रयोगे तु त्रयाणां तन्त्रम् । द्वादशाध्यायस्य चतुर्थपादे चिन्तितम्—

एका देया समुच्चेयं विकल्प्यं वाऽऽद्य आनतेः ।
सौलभ्यादन्तिमो नैरपेक्ष्यात्संख्यान्तरादपि ॥ इति ।

आधाने श्रूयते—"एका देया षड् देया द्वादश देयाः" इत्यादि । तत्र सोमक्रयन्यायेनाऽऽनतेः सौलभ्यात्समुच्चय इति चेत् । मैवम् । संख्यानां व्रीह्यादिवत्परस्परनैरपेक्ष्यावगमात् । समुच्चये तु श्रूयमाणाभिः संख्याभिः संख्यान्तरस्य दुर्वारत्वाच्च । तस्माद्विकल्पः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ सप्तमोऽनुवाकः ।

षष्ठे हविर्विशेषा दक्षिणाश्चोक्ताः । अथ सप्तम आधानमन्त्रा उच्यन्ते । तत्राऽऽदौ गार्हपत्यविषयं मन्त्रमाह—

घर्मः शिरस्तदयमग्निः । संप्रियः पशुभिर्भुवत् । छर्दिस्तोकाय तनयाय यच्छ, इति ।

घर्मो दीप्तिर्ज्वाला स च घर्मोऽग्निशरीरस्य शिरःस्थानीयः । तच्च शिरोऽयं पुरोवर्ती गार्हपत्योऽग्निः । तादृश हे गार्हपत्याग्ने त्वमस्मदीयैः पशुभिः सह संप्रियो भुवत्सम्यक्प्रीतियुक्तो भव । ततोऽस्मदपत्याय तदीयापत्याय च च्छर्दिर्यच्छ तेजो देहि ।

अथान्वाहार्यपचनविषयं मन्त्रमाह—

वातः प्राणस्तदयमग्निः । संप्रियः पशुभिर्भुवत् । स्वदितं तोकाय तनयाय पितुं पच, इति ।

योऽयमग्निसखो वायुः सोऽग्नेः प्राणस्तत्प्राणरूपमयमाध्रीयमानोऽन्वाहा-र्यपचनोऽग्निः । हेऽन्वाहार्यपचन त्वमस्मदीयैः पशुभिः सह संप्रियो भव । अस्म-त्पुत्राय तत्पुत्राय च स्वदितं स्वादुयुक्तं पितुमन्नं पच पक्वं कुरु ।

अथाऽऽहवनीयदेशं प्रति गमनमन्त्रमाह—

प्राचीमनुप्रदिशं प्रेहि विद्वान् । अग्नेरग्ने पुरो अग्नि-
र्भवेह । विश्वा आशा दीद्यानो विभाहि । ऊर्जं नो
धेहि द्विपदे चतुष्पदे ( १ ), इति ।

हेऽग्ने त्वं विद्वान्मार्गं जानन्प्राचीं प्रदिशमनु प्रागाख्यां प्रकृष्टां दिशमनुलक्ष्य प्रेहि प्रकर्षेण गच्छ । गत्वा चेहाऽऽयतने प्रथममाहितस्य गार्हपत्यस्याग्नेः पुरोऽग्निः पूर्वदिग्वर्ती वाह्निर्भव । ततो दीद्यानः प्रकाशमानो विश्वा आशाः सर्वा दिशो विभाहि विशेषेण प्रकाशय । नोऽस्मदीयाय द्विपदे मनुष्याय चतुष्पदे पशवे चोर्जं धेहि देह्यन्नरसं संपादय ।

अथाऽऽहवनीयविषयं मन्त्रमाह—

अर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निः । संप्रियः पशु-
भिर्भुवत् । यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः । शुक्रं
ज्योतिरजस्रम् । तेन मे दीदिहि तेन त्वाऽऽदधे ।
अग्निनाऽग्ने ब्रह्मणा, इति ।

अर्कोऽर्च्यमानो मण्डलात्मा वह्निशरीरस्य चक्षुःस्थानीयस्तच्चक्षुःस्वरूपमसौ दिवि दृश्यमानः सूर्यरूपः स सूर्योऽयमाधीयमान आहवनीयोऽग्निः । हे आहवनीयास्मदीयैः पशुभिः संप्रियो भव । हे शुक्र दीप्यमानाऽऽहवनीय ते त्वदीयं यच्छुक्रं वर्चो बहिः प्रसृतं दीप्तिरूपं तेजो या च शुक्रा तनूर्ज्वालारूपं शरीरं यदप्यजस्रं शुक्रं ज्योतिः सर्वदा वर्तमानो भास्वरशरीरगतप्रकाशस्तेन सर्वेण मे दीदिहि मां प्रकाशय । हेऽग्ने ब्रह्मणा परिवृढेन—"अर्कश्चक्षुः" इति मन्त्रेण तेन पूर्वोक्तगुणयुक्तेनाग्निनाऽऽहवनीयरूपेण त्वामिहाऽऽदधे ।

अथाऽऽहितस्याग्नेरभिमन्त्रणमन्त्रमाह—

आनशे व्यानशे सर्वमायुर्व्यानशे, इति ।

अयमग्निरानशे जाठराग्निरूपेण भोक्तृशरीरं व्याप्तवान् । तथा व्यानशे विविधं भोग्यजातं व्याप्तवान् । तथा सर्वमायुर्व्यानशेऽपमृत्युपरिहारेण संपूर्णमायुः संपादितवान् ।

ये ते अग्ने शिवे तनुवौ । विराट् च स्वराट् च । ते मा विशतां ते मा जिन्वताम् ( २ ) । ये ते अग्ने शिवे तनुवौ । सम्राट् चाभिभूश्च । ते मा-विशतां ते मा जिन्वताम् । ये ते अग्ने शिवे तनु-वौ । विभूश्च परिभूश्च । ते मा विशतां ते मा जिन्व-ताम् । ये ते अग्ने शिवे तनुवौ । प्रभ्वी च प्रभू-तिश्च । ते मा विशतां ते मा जिन्वताम् । यास्ते अग्ने शिवास्तनुवः । ताभिस्त्वाऽऽदधे, [ इति ] ।

कल्पः—" अथ यजमानः शिवा जपति—ये ते अग्ने शिवे तनुवौ विराट् च स्वराट् च ते मा विशतां ते मा जिन्वतां ये ते अग्ने शिवे तनुवौ सम्राट् चाभिभूश्च ते मा विशतां ते मा जिन्वतां ये ते अग्ने शिवे तनुवौ विभूश्च परिभूश्च ते मा विशतां ते मा जिन्वतां ये ते अग्ने शिवे तनुवौ प्रभ्वी च प्रभूतिश्च ते मा विशतां ते मा जिन्वतां यास्ते अग्ने शिवास्तनुवस्ताभि-स्त्वाऽऽदधे " इति । विराडादिभिः प्रभूतिपर्यन्तैरष्टाभिः शब्दैरुक्ता अग्नेः शिवाः शान्तास्तनुवः । हेऽग्ने ते त्वदीये विराट्स्वराडाख्ये ये शान्ते तनू ते उभे मां प्रविश्य प्रीणयताम् । एवमुत्तरत्रापि । विविधं राजत इति विराट् । स्वयमेव राजत इति स्वराट् । सम्यग्राजत इति सम्राट् । वैरिणोऽ-भिभवतीत्यभिभूः । विशिष्टेन रूपेण भवतीति विभूः । परितो भवतीति परिभूः । आज्ञालक्षणेन प्रभुत्वेन युक्ता प्रभ्वी । प्रकृष्टैनैश्वर्येणोपेता प्रभूतिः । हेऽग्ने या एतास्ते त्वदीयाः शिवास्तनुवस्ताभिर्युक्तं त्वामिहाऽऽदधे ।

यास्ते अग्ने घोरास्तनुवः । ताभिरमुं गच्छ (३), [इति] ।

चतुष्पदे जिन्वतां तनुवस्त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे * प्रथमाष्टके प्रथमाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

* भाष्यानुरोधेनात्र—" प्रथमकाण्डे प्रथमप्रपाठके " इति जानीयात्, एवमेव पुरतोऽपि प्रागपि च ज्ञातव्यम् ।

कल्पः—"यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छ इति यजमानो द्वेष्याय प्रहिणोति" इति । घोरतनवः क्षुत्तृष्णादिरूपाः । तथा चाऽऽरण्यककाण्डे समाम्नातम् "यास्ते अग्ने घोरास्तनुवः क्षुच्च तृष्णा च" इत्यादि । ताभिर्घोराभिस्तनुभिरमुं शत्रुं गच्छ प्राप्नुहि ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथाष्टमोऽनुवाकः ।

---

अधानमन्त्राः सप्तमेऽभिहिताः । अष्टमे तद्ब्राह्मणमुच्यते । तत्र त्रीनाधानमन्त्रान्विनियुङ्क्ते—

इमे वा एते लोका अग्नयः । ते यदव्यावृत्ता आधीयेरन् । शोचेयुर्यजमानम् । घर्मः शिर इति गार्हपत्यमादधाति । वातः प्राण इत्यन्वाहार्यपचनम् । अर्कश्चक्षुरित्याहवनीयम् । तेनैवैनान्व्यावर्तयति । तथा न शोचयन्ति यजमानम्, इति ।

एते त्रयोऽग्नयस्त्रित्वसाम्यादिमे त्रयो लोका भवन्ति । ते यदि परस्परमव्यावृत्ताः समुदिता आधीयेरंस्तदा दाहाधिक्येन यजमानं संतापयेयुः । अतस्त्रिभिर्मन्त्रैः पृथगादध्यात् । तेन व्यावृत्ताः सन्तस्तापाधिक्याभावाद्यजमानं नैव संतापयन्ति ।

अथाऽऽधानकाले सामगानं विधत्ते—

रथंतरमभिगायते गार्हपत्य आधीयमाने । राथन्तरो वा अयं लोकः (१) । अस्मिन्नेवैनं लोके प्रतिष्ठितमाधत्ते । वामदेव्यमभिगायत उ[द्]ध्रियमाणे । अन्तरिक्षं वै वामदेव्यम् । अन्तरिक्ष

एवैनं प्रतिष्ठितमाधत्ते । अथो शान्तिर्वै वामदेव्यम् । शान्तमेवैनं पशव्यमुद्धरते । बृहदभिगायत आहवनीय आधीयमाने । बार्हतो वा असौ लोकः । अमुष्मिन्नेवैनं लोके प्रतिष्ठितमाधत्ते, इति ।

"अभि त्वा शूर नोनुमः" इत्यस्यामृच्युत्पन्नं रथंतरम् । "कया नश्चित्र आभुवत्" इत्यस्यामृच्युत्पन्नं वामदेव्यम् । "त्वामिद्धि हवामहे" इत्यस्यामृच्युत्पन्नं बृहत् । रथंतरादीनां भूरादिलोकभोगहेतुत्वात्तल्लोकरूपत्वम् । अत एतेषां गाने सति तत्तल्लोकेऽग्निः प्रतिष्ठितो भवति । अपि च वामदेव्यस्योपद्रवशान्तिकरत्वात्पशुप्राप्तिहेतुत्वाच्चैनमुद्ध्रियमाणमग्निं शान्तं पशुसाधनं च कृत्वोद्धरति ।

पुनरपि सामद्वयं विधत्ते—

प्रजापतिरग्निमसृजत ( २ ) । सोऽश्वो वारो भूत्वा पराङैत् । तं वारवन्तीयेनावारयत । तद्वारवन्तीयस्य वारवन्तीयत्वम् । श्यैतेन श्येती अकुरुत । तच्छ्यैतस्य श्यैतत्वम् । यद्वारवन्तीयमभिगायते । वारयित्वैवैनं प्रतिष्ठितमाधत्ते । श्यैतेन श्येती कुरुते, इति ।

यः प्रजापतिना सृष्टोऽग्निः स वारोऽश्वो भूत्वा पुनरावृत्तिरहितः पलायनमकरोत् । यो हस्तद्वयेन खलिनं गृहीत्वा बलान्निवारणीयः स वारः । तं वारमश्वं पलायमानं वारवन्तीयेन साम्ना प्रजापतिर्निवारयामास । "अश्वं नत्वा वारवन्तम्" इत्यस्यामृच्युत्पन्नं वारवन्तीयम् । निवारणहेतुत्वात्तस्य वारवन्तीयं नाम संपन्नम् । निवारितमश्वं श्यैतसाम्ना श्येतीकृतवान्स्वाधीनीकृतवानित्यर्थः । "अभि प्रवः सुराधसम्" इत्यस्यामृच्युत्पन्नं श्यैतम् । स्वाधीनकरणहेतुत्वात्तस्य श्यैतनाम संपन्नम् । अतो वारवन्तीयसाम्ना पलायनं निवार्य प्रतिष्ठितमग्निमाधाय श्यैतगानेनाग्निं स्वाधीनं करोति ।

आधानमन्त्रे शिरःशब्दतात्पर्यं दर्शयति—

घर्मः शिर इति गार्हपत्यमादधाति । सशीर्षाणमेवैनमाधत्ते ( ३ )। उपैनमुत्तरो यज्ञो नमति, इति ।

अग्नेः शिरःसहितत्वे सति न्यूनत्वाभावादुत्तरो दर्शपूर्णमाससोमादिरेनं प्राप्नोति ।

संप्रियशब्दतात्पर्यं दर्शयति—

रुद्रो वा एषः । यदग्निः । स आधीयमान ईश्वरो यजमानस्य पशून्हिꣳसितोः । संप्रियः पशुभिर्भुवदित्याह । पशुभिरेवैनꣳ संप्रियं करोति । पशूनामहिꣳसायै, इति ।

आधीयमानस्याग्नेः क्रूरत्वेन पशून्हिंसितुं समर्थत्वादहिंसार्थं पशुभिः सह संप्रीतिं मन्त्रेण करोति ।

यच्छेति पदस्याऽऽशीरर्थं दर्शयति—

छर्दिस्तोकाय तनयाय यच्छेत्याह । आशिषमेवैतामाशास्ते, इति ।

प्राणशब्दस्य तात्पर्यं दर्शयति—

वातः प्राण इत्यन्वाहार्यपचनम् (४)। सप्राणमेवैनमाधत्ते, इति ।

स्वदितपितुशब्दयोस्तात्पर्यं दर्शयति—

स्वदितं तोकाय तनयाय पितुं पचेत्याह । अन्नमेवास्मै स्वदयति, इति ।

प्राचीं प्रेहीति पदद्वयस्य तात्पर्यं दर्शयति ।

प्राचीमनु प्रदिशं प्रेहि विद्वानित्याह । विभक्तिरेवै-

नयोः सा । अथो नानावीर्यावेवैनौ कुरुते, इति ।

येयं प्राच्यां दिशि गतिरयमेवैनयोराहवनीयगार्हपत्ययोर्विभागः । अपि च विभागे सति पूर्वोक्तरीत्या द्वयोः पृथक्सामर्थ्यं भवति ।

धेहीति पदस्याऽऽशीरर्थत्वं दर्शयति—

ऊर्जं नो धेहि द्विपदे चतुष्पद इत्याह ।

आशिषमेवैतामाशास्ते, इति ।

अर्कशब्दस्य तात्पर्यं दर्शयति—

अर्कश्चक्षरित्याहवनीयम् । अर्को वै देवानामन्नम्

(५) । अन्नमेवावरुन्द्धे, इति ।

अर्चनीयत्वव्युत्पत्त्या देवानामन्नकारित्वादन्नप्राप्तिः ।

दीदिहिशब्दस्य समिन्धनार्थत्वं दर्शयति—

तेन मे दीदिहीत्याह । समिन्ध एवैनम्, इति ।

पूर्वपक्षहेतुत्वेन मन्त्रस्य कंचिद्विनियोगं दर्शयति—

आनशे व्यानश इति त्रिरुदिङ्गयति । त्रय इमे

लोकाः । एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते, इति ।

हस्ते धृतस्याग्नेस्त्रिवारमूर्ध्वचलनेन लोकत्रयप्रतिष्ठा ।

तमेतं दूषयित्वा विनियोगान्तरं दर्शयति—

तत्तथा न कार्यम् । वीङ्गितमप्रतिष्ठितमा-

दधीत । उद्धृत्यैवाऽऽधायाभिमन्त्र्यः ।

अवीङ्गितमेवैनं प्रतिष्ठितमाधत्ते, इति ।

त्रिरूर्ध्वचलनेन वीङ्गितं विविधं चालितमप्रतिष्ठितमग्निमाहितवान्भवेत् । तस्मात्त्रयोर्ध्वचलनं न कार्यम् । किंतु हस्ते सकृदुद्धृत्यैवाऽऽयतने तमग्निमाधाय पश्चात्सोऽग्निरनेन मन्त्रेण मन्त्रणीयः । तथा सति विविधचलनरहितं स्थिरत्वेन प्रतिष्ठितमग्निमाहितवान्भवति ।

५

विराडादिशब्दानां तात्पर्यं दर्शयति—

विराट् चं स्वराट् च यास्तें अग्ने शिवास्तनुव-
स्ताभिस्त्वाऽऽदंध इत्याह । एता वा अग्नेः
शिवास्तनुवंः । ताभिरेवैनः समर्धयति, इति ।

मन्त्रान्तरं विनियुङ्क्ते—

यास्तें अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति ब्रूयाद्यं
द्विष्यात् । ताभिरेवैनं पराभावयति ( ६ ), इति ।

लोकोऽसृजत्तेनमाधत्तेऽन्वाहार्यपचनं देवानामन्नमेनं प्रतिष्ठितमाधत्ते पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके प्रथमा-
ध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

यं पुरुषमसौ यजमानो द्विष्यात्तं प्रत्येतं मन्त्रं ब्रूयात् । तथा सति ताभिरेव घोराभिस्तनुभिरेनं द्वेष्यं विनाशयति । अथ मीमांसा । दशमाध्यायस्याष्टमपादे चिन्तितम्—

उन्नेयो ब्रह्मगानस्य निषेधो विहितस्तुतिः ।
विकल्पितो वा शून्योऽपि वपोत्खेद इव स्तुतिः ॥
विध्यनन्वयतोऽस्तोत्रं ब्रह्मोद्गाता तथा सति ।
विषयैक्याद्विकल्पोऽत्र षोडशिग्रहवन्मतः ॥ [इति ] ।

आधाने वामदेव्यादिसाम्नां गानानि विहितानि । आधान एवेदमपरमाम्नायते—"उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि गायति" इति । उपशब्दः सामीप्यं ब्रूते । वीता विगताः कालविलम्बमन्तरेण परित्यक्ता इत्यर्थः । अनया निन्दया ब्रह्मणः सामगाननिषेध उन्नीयते । स निषेध उद्गातृविहितं वामदेव्यादिसामगानं स्तौति । ननु ब्रह्मणः सामगानमप्रसक्तम् । अतस्तन्निषेधोऽत्यन्तमसंभावितत्वाच्छशविषाणवच्छून्यः । न हि वन्ध्यापुत्रो वा तद्वधो वा संभावयितुं शक्यते । तथा सति तादृशेन निषेधेन कथं स्तुतिरिति चेत् । वपोत्खेदवदिति ब्रूमः । स आत्मनो वपामुदक्खिददित्यनेनात्यन्तासंभावितार्थेन यथा प्राजापत्यस्य तूपरस्याजस्य विधिः स्तूयते तद्वदिति प्राप्ते ब्रूमः । नेदं वामदेव्यादि साम विधीनां स्तोत्रं भवितुमर्हति ।

विधीनामनेकत्वेन स्वस्वसंनिधिपठितैरर्थवादैर्निराकाङ्क्षत्वेन च तदन्वयायोगात् । का तर्ह्यस्य वाक्यस्य गतिरिति चेत् । उच्यते । ब्रह्मशब्दोऽत्र विप्रत्वजातिद्वारेणोद्गातारं ब्रूते । यस्य च गानं प्रसक्तं तस्मिन्निषेधे सति विधिनिषेधाभ्यामेकविषयाभ्यामुद्गातुर्गानं विकल्प्यते । [अथ] मीमांसा । एकादशाध्यायस्य तृतीयपादे चिन्तितम्—

प्रतिकर्म पृथक्कार्यमाधानं यदि वा सकृत् ।
अन्याङ्गवत्पृथक्नैवं स्वकालत्वसमत्वतः ॥

वसन्ते ब्राह्मणोऽग्निमादधीतेति विहितमाधानं प्रयाजाद्यङ्गवत्प्रतिकर्म पृथक्कार्यमिति चेत् । मैवम् । आधानस्य स्वातन्त्र्येण वसन्तादिकाले विहिते तत्तत्कर्मकालेषु पृथगनुष्ठानायोगात् । स्वकालेऽनुष्ठितस्य सर्वैः कर्मभिः संबन्धः समानः । न च प्रकरणेन विशेषो नियन्तुं शक्यः । आधानस्यानारभ्याधीतत्वात् । "आहवनीये जुहोति" इत्यादिवाक्येन त्वैष्टिकपाशुकसौमिकदार्विकहोमेषु संबन्धः साधारणः प्रतिपाद्यते । तस्मात्तन्त्रेणानुष्ठेयम् । यद्यप्याधानं नेष्ट्यादिकर्मणां साक्षादङ्गं तथाऽपि पृथक्करणाभावादाहवनीयादिद्वारा कर्मोपकारित्वाच्चाङ्गत्वमभ्युपेत्येयं चिन्ता ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ नवमोऽनुवाकः ।

---

अष्टम आधानमन्त्रव्याख्यानमुक्तम् । अथ नवमे ब्रह्मौदनमुच्यते । तत्राऽऽदौ तावद्ब्रह्मौदनात्पराचीनमाधानात्प्राचीनमग्निमन्थनमुच्यते । यदुक्तं सूत्रकारेण—"ब्राह्मौदनिकाङ्गसमापोह्य तस्मिञ्छमीगर्भादग्निं मन्थति" इति । तदिदं विधत्ते—

शमीगर्भादग्निं मन्थति । एषा वा अग्नेर्यज्ञिया तनूः । तामेवास्मै जनयति, इति ।

आधानदिनात्पूर्वेद्युर्ब्रह्मौदनं पक्त्वाऽपरेद्युरुदयात्पूर्वं तस्माद्ब्रह्मौदनिकादग्नेर्भस्मापोह्य तस्मिन्स्थाने शमीवृक्षस्य गर्भगतेनाश्वत्थेन निष्पादितामरणि-

---

१ ख. प्रतीयते ।

मवस्थाप्याग्निं मन्थेत् । तस्माच्छमीगर्भादुत्पन्ना याऽग्नेस्तनूरेषा यज्ञार्हाऽस्त-स्तामेव जनयति ।

अथ ब्रह्मौदनं विधत्ते—

अदितिः पुत्रकामा । साध्येभ्यो देवेभ्यो ब्रह्मौदन-
मपचत् । तस्या उच्छेषणमददुः । तत्प्राऽऽश्नात् ।
सा रेतोऽधत्त । तस्यै धाता चार्यमा चाजायेताम् ।
सा द्वितीयमपचत् (१)। तस्या उच्छेषणमददुः ।
तत्प्राऽऽश्नात् । सा रेतोऽधत्त । तस्यै मित्रश्च वरु-
णश्चाजायेताम् । सा तृतीयमपचत् । तस्या उच्छे-
षणमददुः । तत्प्राऽऽश्नात् । सा रेतोऽधत्त । तस्या
अꣳशश्च भगश्चाजायेताम् । सा चतुर्थमपचत्
(२)। तस्या उच्छेषणमददुः । तत्प्राऽऽश्नात् ।
सा रेतोऽधत्त । तस्या इन्द्रश्च विवस्वाꣳश्चाजाये-
ताम् । ब्रह्मौदनं पचति । रेत एव तद्दधाति, इति ।

ब्रह्माणं देवमुद्दिश्य होमार्थं ब्राह्मणानामृत्विजां प्राशनार्थं च पच्यमान ओदनो ब्रह्मौदनः । तं कदाचिददितिर्देवी पुत्रकामा सती साध्येभ्यो देवेभ्य उत्पादनीयधात्रादिदेवार्थमपचत् । तदानीमृत्विजो होमं प्राशनं च कृत्वा शिष्टमोदनं तस्या अदितये प्रायच्छन् । सा च यदुच्छेषणं प्राश्य गर्भमाधत्त । तस्य गर्भाद्द्वादशादित्यानामादिभूतौ धाता चार्यमा चेत्युभावजायेताम् । एवमुत्तरेषु त्रिष्वपि पर्यायेषु योज्यम् । तस्मादाहिताग्निर्ब्रह्मौदनं पचेत् । तेन पुत्रोत्पादकं रेत एव तद्दधाति ।

ऋत्विजां प्राशनं विधत्ते—

प्राश्नन्ति ब्राह्मणा ओदनम्, इति ।

तस्मात्प्राशनात्पूर्वं समिदाधानं विधत्ते—

यदाज्यमुच्छिष्यते । तेन समिधोऽभ्यज्याऽऽदधाति । उच्छेषणाद्वा अदितो रेतोऽधत्त (३) । उच्छेषणादेव तद्रेतो धत्ते, इति ।

होमोच्छिष्टं समिदञ्जनसाधनमाज्यं प्रशस्य तेनाभ्यक्ताः समिधः प्रशंसति—

अस्थि वा एतत् । यत्समिधः । एतद्रेतः । यदाज्यम् । यदाज्येन समिधोऽभ्यज्याऽऽदधाति । अस्थ्येव तद्रेतसि दधाति, इति ।

काठिन्यसाम्यात्समिधामस्थित्वम् ।

समित्संख्यां विधत्ते—

तिस्र आदधाति मिथुनत्वाय, इति ।

सपुत्रयोर्मातापित्रोर्मिथुनरूपयोस्त्रित्वसाम्यम् । अत एवान्यत्राऽऽम्नातम्—"माता पिता पुत्रस्तदेव तन्मिथुनम्" इति ।

प्रादेशाभिनयेन समिधां परिमाणं विधत्ते—

इयतीर्भवन्ति । प्रजापतिना यज्ञमुखेन संमिताः (४) । इयतीर्भवन्ति । यज्ञपरुषा संमिताः । इयतीर्भवन्ति । एतावद्वै पुरुषे वीर्यम् । वीर्यसंमिताः, इति ।

इयत्यः प्रादेशपरिमिताः । प्रजापत्यवतारस्य यज्ञपुरुषस्य मुखं मूर्धानमारभ्य चुबुकपर्यन्तं प्रादेशपरिमितं भवति । अतस्तत्तुल्यत्वम् । यज्ञस्य परुः पर्वावयवविशेषः पवित्ररूपः । तस्य च प्रादेशप्रमाणं तन्मन्त्रे समाम्नातम्—"त्रिवृत्पलाशे दर्भ इयान्प्रादेशसंमितः" इति । अतो यज्ञपर्वणा तुल्यत्वम् । किंच पुरुषविशेषे चक्षुःश्रोत्रादिज्ञानेन्द्रियसामर्थ्यं प्रादेशपरिमिते मुखे वर्तते । अतस्तेन वीर्येण तुल्यत्वम् ।

तासां समिधां शुष्कत्वं वारयितुं विधत्ते—

आर्द्रा भवन्ति । आर्द्रमिव हि रेतः सिच्यते, इति ।

इवशब्द एवकारार्थः ।

समिधां वृक्षविशेषं विधत्ते—

चित्रियस्याश्वत्थस्याऽऽदधाति । चित्रमेव भवति, इति ।

अश्वत्थग्रामोऽश्वत्थैश्चित्रक इत्युच्यते । योऽश्वत्थो ग्रामादेश्चिह्नीभूतस्त- दीयाः समिध आदध्यात् । तेन विचित्रमेवैश्वर्यं भवति ।

समिदाधानार्थानृग्विशेषान्विधत्ते—

घृतवतीभिरादधाति ( ५ ) । एतद्वा अग्नेः प्रियं धाम । यद्घृतम् । प्रियेणैवैनं धाम्ना समर्धयति । अथो तेजसा, इति ।

घृतशब्दो यास्वृक्षु स्थितस्ता घृतवत्यः । घृतैर्बोधयतातिथिमित्येवं घृत- शब्दस्तत्र श्रूयते । घृतेन ज्वालाभिवृद्धेरग्नेर्घृतप्रियत्वम् । अतस्तेन घृतयु- क्तेन मन्त्रेण समिध आदधानः प्रियेण स्थानेन समृद्धो भवति । अपि च तेजसा समृद्धो भवति ।

अधिकारिभेदादृग्व्यवस्थां विधत्ते—

गायत्रीभिर्ब्राह्मणस्याऽऽदध्यात् । गायत्रच्छन्दा वै ब्राह्मणः । स्वस्य च्छन्दसः प्रत्ययनस्त्वाय । त्रिष्टुभी राजन्यस्य । त्रिष्टुप्छन्दा वै राजन्यः । स्वस्य छन्दसः प्रत्ययनस्त्वाय ( ६ ) । जगती- भिर्वैश्यस्य । जगतीछन्दा वै वैश्यः । स्वस्य छन्दसः प्रत्ययनस्त्वाय, इति ।

“ समिधाऽग्निं दुवस्यत ” इत्याद्या गायत्र्यः । “समिध्यमानः प्रथमोऽनु धर्मः ” इत्याद्यास्त्रिष्टुभः । “ त्वामग्ने समिधानम् ” इत्याद्या जगत्यः । एताश्चोपरितनप्रपाठक आम्नास्यन्ते । गायत्रीब्राह्मणयोरेकमुखत्वं संबन्धः ।

---

१ ख. °त्यश्चित्र° । २ क. °चिच्छत्र° । ३ क. ख. इत्युक्तम् । ४ क. ख. °मानः ” इ° । ५ क. °स्वजन्यस्वं ।

अतः स्वकीयस्यैव गायत्रीछन्दसः प्रत्ययनस्त्वाय पुनःप्राप्तये गायत्रीभि-ब्राह्मणस्याऽऽदध्यात् । एवमुत्तरयोर्वाक्ययोर्योज्यम् ।

समिद्धस्य ब्राह्मौदनिकाग्नेश्चिरावस्थानं विधत्ते--

तꣳ संवत्सरं गोपायेत् । संव-त्सरꣳ हि रेतो हितं वर्धते, इति ।

यस्माल्लोके गर्भाशये स्थापितं रेतः संवत्सरं वर्धते तस्मादग्निरूपस्य गर्भस्य वृद्धये संवत्सरमभिरक्षेत् ।

यदुक्तं सूत्रकारेण--" यद्येनꣳ संवत्सरेऽग्न्याधेयं नोपनमेद्ब्रह्मौदनं पक्त्वा समिध आधाय यदैवैनमुपनमेदथाऽऽदधीत " इति । तदिदं विधत्ते--

यद्येनꣳ संवत्सरे नोपनमेत् । समिधः पुनराद-ध्यात् । रेत एव तद्धितं वर्धमानमेति, इति ।

केनापि द्रव्यराहित्यादिना निमित्तेनास्य यजमानस्याग्न्याधेयप्राप्तिर्यदि न स्यात्तदा संवत्सरगोपिते तस्मिन्ब्राह्मौदनिकेऽग्नौ समिध आधाय तत्सिं-द्धिपर्यन्तं गोपायेत् । तेन गर्भाशये स्थापितं रेतः संवत्सरं वर्धते । तस्माद-ग्निरूपस्य गर्भस्य वृद्धये संवत्सरमभिरक्षेत् । तेन गर्भाशये स्थापितं वर्धमानं रेतः प्राप्नोति ।

ब्राह्मौदनिकस्य रक्षणकर्तुर्नियमविशेषं विधत्ते—

न माꣳसमश्नीयात् । न स्त्रियमुपेयात् (७), इति ।

व्यतिरेकमुखेण नियमं प्रशंसति—

यन्माꣳसमश्नीयात् । यत्स्त्रियमुपेयात् । निर्वीर्यः स्यात् । नैनमग्निरुपनमेत्, इति ।

अग्न्याधेयं न प्राप्नुयादित्यर्थः ।

आधानदिनात्पूर्वदिने पुनर्ब्रह्मौदनं विधत्ते—

श्व आधास्यमानो ब्रह्मौदनं पचति । आ-दित्या वा इत उत्तमाः सुवर्गं लोकमायन् ।

ते वा इतो यन्तं प्रतिनुदन्ते। एते खलु वावाऽऽदित्याः। यद्ब्राह्मणाः। तैरेव सन्त्वं गच्छति (८)। नैनं प्रतिनुदन्ते, इति।

पुरा कदाचिदादित्या इतो भूलोकादुद्गच्छन्तमाः स्वर्गं प्राप्ताः। ते चान्यं पुरुषमितः स्वर्गं गच्छन्तं प्रतिबध्नन्ति। भूलोकवर्तित्वात्। ब्राह्मणा एवाऽदितिसंबन्धादादित्याः। अनेन ब्रह्मौदनेन तुष्टैस्तैर्ब्राह्मणैरादित्यैः सह स्वर्गप्राप्तौ संमतत्वं गच्छाति। तत एनं न प्रतिबध्नन्ति।

तस्य ब्राह्मौदनिकाग्नेः समिन्धनं तस्मिन्नरणिप्रतापनं च विधत्ते—

ब्रह्मवादिनो वदन्ति। क्व सः। अग्निः कार्यः। योऽस्मै प्रजां पशून्प्रजनयतीति। शल्कैस्तार्ँ रात्रिमग्निमिन्धीत। तस्मिन्नुपव्युषमरणी निष्टपेत्। यथर्षभाय वाशितान्यावि‌च्छायति। तादृगेव तत्, इति।

आधातव्यो योऽग्निरस्मा आहिताग्नये प्रजां पशूंश्च संपादयति सोऽग्निः क्व कार्यः कुत्र संपादनीय इति ब्रह्मवादिनां प्रश्नः। तस्यैतदुत्तरम्। तस्यां रात्रौ निरन्तरं तस्मिन्काष्ठलेशैरग्निं समिध्य तस्मिन्समिद्धेऽग्नावुषःकालसमीपे मन्थनसाधनमरणिद्वयं निष्टपेन्निःशेषेण तपेत्। तेन स ब्राह्मौदनिकोऽग्निररण्योः प्रविशति। यथा लोके कस्मैचिदृषभाय प्रियाणि वाशितानि किकिटादिशब्दजातानि तदागमनाय विशेषेण संपादयति। तदरणिप्रतापनं तादृगेवेति द्रष्टव्यम्।

अथ देशविशेषे मन्थनं विधत्ते—

अपोद्य भस्माग्निं मन्थति (९)। सैव साऽग्नेः संततिः, इति।

ब्राह्मौदनिकाग्निसंबन्धिभस्मान्यपोद्य निःसार्य तस्मिन्स्थाने तप्ताभ्यामरणीभ्यामग्निं मन्थेत्। तस्मिन्स्थाने येयं मन्थनक्रिया सैव ब्राह्मौदनिकस्याग्नेरुत्पत्स्यमानेनाग्निना सह सा संततिः। तथाविधो विच्छेदाभावः।

१ क. ख. °च्छतीति। पु°।

मथितस्याग्नेर्गार्हपत्याधानार्थमुद्धरणं विधत्ते—

तं मन्थित्वा प्राञ्चमुद्धरति । संवत्स-
रमेव तद्रेतो हितं प्रजनयति, इति ।

अरणावुत्पन्नं मथितमग्निं कस्मिंश्चित्पात्रे प्राञ्चमुद्धरति, न तु प्रत्यञ्चम् । यथा लोके संवत्सरं गर्भे धत्ते रेतोऽन्ते प्रजनयति तद्वदेतद्भवति ।

ब्राह्मौदनिकेऽग्नौ गायत्र्यादिभिर्यः समिदाधानविधौ विधिरुक्तस्तमेव पक्षान्तरविधानाय पुनः परामृशति—

अनाहितस्तस्याग्निरित्याहुः । यः समिधोऽनाधायाग्निमाधत्त इति । ताः संवत्सरे पुरस्तादादध्यात् । संवत्सरादेवैनमवरुध्याऽऽधत्ते, इति ।

समिदाधानाभावे कृतमप्याधानमकृतमेव स्यादित्यभिज्ञा आहुः । तस्मादाधानात्पुरस्तात्संवत्सरपरिमिते काले समिदाधानं मुख्यः पक्षः ।

तमेतं मुख्यं पक्षमनूद्य तदसंभवेऽनुकल्पं विधत्ते—

यदि संवत्सरे नाऽऽदध्यात् । द्वादश्यां पुरस्तादादध्यात् । संवत्सरप्रतिमा वै द्वादश रात्रयः । संवत्सरमेवाऽऽस्याहिता भवन्ति, इति ।

आधानदिनमारभ्याधस्तनतिथिगणनायां या द्वादशसंख्यापूरणी तिथिस्तस्यां ताः समिध आदध्यात् । द्वादशानां रात्रीणां मासस्थानीयत्वेन मिलित्वा संवत्सरसादृश्यम् ।

पुनरप्यसंभवेऽनुकल्पान्तरं विधत्ते—

यदि द्वादश्यां नाऽऽदध्यात् । त्र्यहे पुरस्तादादध्यात् । आहिता एवास्य भवन्ति (१०), इति ।

द्वितीयमपचच्चतुर्थमपचददितीरेतोऽभत्त संमिताघृतवतीभिरादधाति राजन्यः

---

१ क. ख. मथित्वा ।

स्वस्य छन्दसः प्रत्ययनस्त्वायैयाद्गच्छति मन्थति राश्रेयश्चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके प्रथमाध्याये नवमोऽनुवाकः ॥ ९ ॥

पूर्ववद्व्याख्येयम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

अथ दशमोऽनुवाकः ।

नवमे ब्रह्मौदनोऽभिहितः । अथ दशमे पञ्चाग्न्याधानमभिधीयते । पूर्वं पञ्चमेऽनुवाके यत्रैधाऽग्निराधीयत इत्यग्नित्रयाधानपक्ष एवाभिहितः । इह तु पञ्चाग्न्याधानं विधातुमाख्यायिकामाह—

प्रजापतिः प्रजा असृजत । स रिरिचानोऽमन्यत । स तपोऽतप्यत । स आत्मन्वीर्यमपश्यत् । तदवर्धत । तदस्मात्सहसोर्ध्वमसृज्यत । सा विराडभवत् । तां देवासुरा ×व्यगृह्णत । सोऽब्रवीत्प्रजापतिः । मम वा एषा (१) । दोहा एव युष्माकमिति, इति ।

प्रजापतिः प्रजाः सृष्ट्वा स्वकीयस्य वीर्यस्योपक्षयेण रिक्तोऽहमिति मत्वा वीर्यलाभाय स तपस्तप्त्वा स्वात्मनि किंचिद्वीर्यमपश्यत् । तच्च वीर्यं कालेनावर्धत । तत्प्रवृद्धं वीर्यं धारयितुमशक्यं सच्छीघ्रमेवास्मात्प्रजापतेरूर्ध्वं निर्गत्य केनचिद्रूपेण सृष्टमभूत् । सा सृष्टा निष्पन्ना विविधं राजमाना काचिद्गौरभवत् । तामुद्दिश्य देवाश्चासुराश्च वयमेवैतां गृह्णीम इत्येवं परस्परं विग्रहमकुर्वन् । तदा विग्रहशान्तये प्रजापतिरेवमब्रवीत् । एषा गौर्ममैवेति । युष्माकं तु दोहा एव क्षीराण्येवेति ।

अथ पञ्चाग्न्युत्पत्तिप्रकारं दर्शयति—

सा ततः प्राच्युदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् ।

---

× व्यगृह्णन्तेत्यपि पाठः ।

अथर्वं पितुं मे गोपायेति । सा द्वितीयमुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । नर्यं प्रजां मे गोपायेति । सा तृतीयमुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । शꣳस्य पशून्मे गोपायेति (२) । सा चतुर्थमुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । सप्रथ सभां मे गोपायेति । सा पञ्चममुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । अहे बुध्निय मन्त्रं मे गोपायेति । अग्नीन्वाव सा तान्व्यक्रमत । तान्प्रजापतिः पर्यगृह्णात् । अथो पङ्क्तिमेव, इति ।

येयं गौः प्रजापतिना स्वार्थमेव स्वीकृता विराट् सा प्रजापतेः सकाशात्पराङ्मुखी सत्युदक्रामत् । तदा प्रजापतिरथर्वेति मन्त्रेण तां विराजं परितो निरुद्धवान् । हेऽथर्व चतुर्थवेदप्रवर्तकाचार्यरूप दक्षिणाग्ने, यद्वा हिंसारहित मे पितुं मदीयमन्नं गोपाय । एवमुत्तरेषु चतुर्षु पर्यायेषु योज्यम् । नरेभ्यो मनुष्येभ्यो हितो नर्यो गार्हपत्यः । ऋत्विग्भिः प्रशंसनीयरूपत्वाच्छंस्य आहवनीयः । प्रथया कीर्त्या सह वर्तमानत्वात्सप्रथः सभ्यः । अहिंसकत्वादबुध्ने मूले जगदादावुत्पन्नत्वाच्चाहिर्बुध्निय आवसथ्यः । ऋगादिर्मन्त्रः । इत्थं सैव विराट् तानग्नीन्पञ्चधा विवेक्तुं पञ्च वारं व्यक्रामत् । तान्पञ्चाग्नीन्प्रजापतिः परितः स्वीकृतवान् । अपि च क्रमेणावस्थानात्पञ्चसंख्यान्वयाद्वा पङ्क्तिमेवैतावदग्निविषयां गृहीतवान् ।

इदानीं विधत्ते—

पङ्क्तिर्वा एषा ब्राह्मणे प्रविष्टा (३) । तामात्मनोऽधि निर्मिमीते । यदग्निराधीयते । तस्मा-

1 क. त्यातस्माद्वा ।

देतावन्तोऽग्नय आधीयन्ते। पाङ्क्तं वा इदꣳ सर्वम्।
पाङ्क्तेनैव पाङ्क्तꣳ स्पृणोति, इति।

पूर्वोक्तानामथर्वेत्यादीनां मन्त्राणां ब्राह्मणेनाधीतत्वात्प्रजापतिप्रतिपाद्यत्वाद्वा पङ्क्तिर्विमे प्रविष्टा। तथा सत्यग्न्याधानेन तां पङ्क्तिं तस्मादुत्पादयति। तस्मादेतावन्तः पञ्चाग्नय आधातव्याः। यदिदं मनुष्यपश्वादिरूपं जगत्सर्वं पञ्चसंख्योपेतत्वात्पाङ्क्तम्। शिरो हस्तौ पादौ चेत्येवं मनुष्याणां पञ्चावयवाः। शिरसा पुच्छेन वा सह चत्वारः पादाः पशूनां पञ्चावयवाः। अतः पञ्चसंख्यायुक्तेनैवाग्निना पञ्चसंख्यायुक्तं जगत्प्रीणयति।

अथ मन्त्राणां तात्पर्यं क्रमेण दर्शयति—

अथर्व पितुं मे गोपायेत्याह। अन्नमेवैतेन स्पृणोति। नर्य प्रजां मे गोपायेत्याह। प्रजामेवैतेन स्पृणोति। शꣳस्य पशून्मे गोपायेत्याह (४)। पशूनेवैतेन स्पृणोति। सप्रथ सभां मे गोपायेत्याह। सभामेवैतेनेन्द्रियꣳ स्पृणोति। अहे बुध्निय मन्त्रं मे गोपायेत्याह। मन्त्रमेवैतेन श्रियꣳ स्पृणोति, इति।

मन्त्रे तानिन्द्रियावत इत्यभिधानादिन्द्रियप्रीतिः। सा हि श्रीरित्यभिधानाच्छ्रियः प्रीतिः।

पञ्चानामग्नीनां पृथगुपयोगं दर्शयन्प्रशंसति—

यदन्वाहार्यपचनेऽन्वाहार्यं पचन्ति। तेन सोऽस्याभीष्टः प्रीतः। यद्गार्हपत्य आज्यमधिश्रयन्ति संपत्नीर्याजयन्ति। तेन सोऽस्याभीष्टः प्रीतः। यदाहवनीये जुह्वति (५)। तेन सोऽस्याभीष्टः प्रीतः।

यत्सभायां विजयन्ते। तेन सोऽस्याभीष्टः प्रीतः।
यदावसथेऽन्नꣳ हरन्ति। तेन सोऽस्याभीष्टः प्रीतः।
तथाऽस्य सर्वे प्रीता अभीष्टा आधीयन्ते, इति।

दर्शपूर्णमासकर्मणि ऋत्विजामनु दक्षिणार्थं आह्रियत इत्योदनोऽन्वाहार्यः। स च पच्यते यस्मिन्दक्षिणाग्नौ सोऽयमन्वाहार्यपचनः। तेनौदनपाकेनोपयुक्तत्वात्स दक्षिणाग्निरस्य यजमानस्याभीष्टोऽपि भवति। एतदीयपरिचर्यया प्रीतश्च भवति। एवमुत्तरत्रापि। गार्हपत्ये ह्याज्यं विलापयन्ति। देवपत्नीश्च संयाजयन्ति। अतः पत्नीसंबन्धाद्गृहपतिना संयुक्त इति गार्हपत्यः। प्रधानाहुतिं जुहोत्यस्मिन्नित्याहवनीयः। अथ सभाया मध्येऽधिदेवनमुद्धत्येत्यादिना द्यूतविजयः सूत्रेऽभिहितः। तां द्यूतसभामर्हतीति सभ्यः। "तदन्नं संस्कृत्य सभासद्भ्य उपहरन्त्यावसथे भुञ्जते" इति सूत्रेऽन्नहरणमुक्तम्। तद्गृहमावसथः। तमर्हतीत्यावसथ्यः। तेनोक्तप्रकारेण सर्वेऽप्यग्नयोऽस्य यजमानस्य प्रीतिपूर्वकमभीष्टं संपादयन्त आहिता भवन्ति।

पूर्वोक्तैरथर्व पितुमित्यादिमन्त्रैरुपस्थानं विधत्ते—

प्रवसथमेष्यन्नेवमुपतिष्ठेतैकमेकम्। यथा ब्राह्मणाय गृहेवासिने परिदाय गृहानेति। तादृगेव तत्, इति।

आहिताग्निर्यदा देशान्तरं गमिष्यति तदा पूर्ववदुपतिष्ठेत। पूर्वत्र प्रजापतिर्विराजः क्रमेणाथर्व पितुमित्यादिमन्त्रैर्विराजं परिगृहीतवानित्यर्थवाद उक्तः। तेनार्थवादेनाऽऽधानकालीनस्योपस्थानस्य विधिः ज्ञेयः। अत एव सूत्रकार आधानादूर्ध्वं पवमानेष्टिभ्यः पूर्वमेतदुवाच—"॥ विराट्क्रमैर्यजमान उपतिष्ठते, अथर्व पितुं मे गोपाय" इत्यादि। [1] प्रआधानकालीनमुपस्थानं दृष्टान्तीकर्तुमेवमित्युक्तम्। यथा लोके गृहस्वामी कश्चिदन्यं कंचिद्ब्राह्मणं गृहरक्षार्थं वासयित्वा तस्मै ब्राह्मणाय गृहान्परिदाय त्वमेवमेवं रक्षेति बुद्धिप्रदानं कृत्वा ग्रामान्तरे [2] गच्छति तादृगेव तदुपस्थानं द्रष्टव्यम्।

उपस्थानानन्तरं विधत्ते—

पुनरागत्योपतिष्ठते। साऽभागेयमेवैषां तत्। सा तत

१ ग. तत्स्थानमा०। २ क. ख. ग्रामान्वरं।

ऊर्ध्वाऽऽरोहत् । सा रोहिण्यभवत् । तद्रोहिण्यै रोहिणित्वम् । रोहिण्यामग्निमादधीत । स्व एवैनं योनौ प्रतिष्ठितमाधत्ते । ऋध्नोत्येनेन (६), इति ।

एषा पशून्मे गोपायेति प्रविष्टा पशून्मे गोपायेत्याह जुहोति तिष्ठते सप्त च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

ग्रामान्तरादागत्य पुनरप्याहितानग्नीनथर्वं पितुमित्यादिमन्त्रैरुपतिष्ठेत । ते च प्रत्येकमुपस्थानमन्त्राः । संध्योपस्थानमन्त्रस्तु पञ्चधाऽग्नीन्व्यक्रामदित्यादिः । स चैवमुत्तरप्रपाठके पठिष्यते—" पञ्चधाऽग्नीन्व्यक्रामत् । विराट् सृष्टा प्रजापतेः । ऊर्ध्वाऽऽरोहद्रोहिणी । योनिरग्नेः प्रतिष्ठितिः " इति । एतन्मन्त्रतात्पर्यस्य प्राजापत्योपाख्यानरूपार्थवादे पूर्वमनुक्तत्वादिदानीं साऽभागेयमित्यादिना तदीयतात्पर्यमुच्यते । येयं प्रजापतिसृष्टा विराट् सेयं तदानीमेषामग्नीनां भागरहिताऽभूत् । अन्वाहार्यं पचन्त्याज्यमधिश्रयन्तीत्याद्युपयोगो यथाऽग्नीनामभिहितो न तथा विराजः कश्चिदुपयोग उक्तः । तस्मादभागत्वम् । सा च भागरहिता ततो देशादूर्ध्वा भूत्वा दिवमारोहत् । आरुह्य च रोहिणीनक्षत्ररूपाऽभूत् । रोहतीति व्युत्पत्त्या रोहिणी नाम संपन्नम् । एवं च सति रोहिण्यामग्न्याधानेन स्वकारण एवाग्निः प्रतिष्ठित आहितो भवति । रोहिण्या विराड्रूपेणाग्निकारणत्वात् । तथा च सत्युपयुक्तत्वाद्विराट् सभागा संपद्यते । आधाता च समृद्धिं प्राप्नोति । अत एव पूर्वत्र—' यो रोहिण्यामग्निमाधत्ते । ऋध्नोत्येव ' इति विहितम् । अत्र तु तद्विध्यनुवादेन विराण्मन्त्रः प्रशस्यते ॥

इति श्रीमत्सायणाचा[र्यविर]चिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये [प्रथम]काण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

ब्रह्म संधत्तं कृत्तिकासूद्धन्ति द्वादशसु प्रजापतिर्वाचो देवासुरा घर्मः शिर इमे वै शमीगर्भात्प्रजापतिः स रिरिचानः स तपः स आत्मन्वीर्यं दश ॥

ब्रह्म संधत्तं तौ दिव्यावथो शन्त्वाय प्राच्येषां यदुपर्युपरि यत्सद्यः सोऽश्वो वारो भूत्वा जगतीभिरशीतिः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके प्रथमोऽध्यायः ॥ १ ॥

अस्य प्रपाठकस्य विनियोगसंग्रहः—

अनुवाका दश प्रोक्ताः प्रथमेऽस्मिन्प्रपाठके ।
शुक्रामन्थिगता मन्त्रा आधाने कालनिर्णयः ॥ १ ॥
संभारविधिराधानं तत्प्रकारस्तथेष्टयः ॥
आधानमन्त्रव्याख्यानं ब्रह्मौदनविधिस्तथा ।
पञ्चाग्निपक्ष इत्येवमनुवाका उदीरिताः ॥ २ ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ३ ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे प्रथमः प्रपाठकः समाप्तः ॥ १ ॥

( मूलक्रमेण—अष्ट० १ अध्या० १ अनु० १० )

[ भाष्यक्रमेण—का० १ प्रपा० १ अनु० १० ]।

अथ द्वितीयप्रपाठकारम्भः ।

तत्र प्रथमोऽनुवाकः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
आद्ये प्रपाठके प्रोक्तो विधिराधानगोऽखिलः ।
गवामयनशेषोऽयं द्वितीयेऽस्मिन्नुदीर्यते ॥ २ ॥
आद्यानुवाक आधाने ये मन्त्रा नोदिताः पुरा ।
ते सर्वेऽप्यभिधीयन्ते पूर्वशेषो भवेत्ततः ॥ ३ ॥

उद्धन्यमानमस्या अमेध्यम् । अप पाप्मानं यजमानस्य हन्तु । शिवा नः सन्तु प्रदिशश्चतस्रः । शं नो माता पृथिवी तोकसाता ।

कल्पः—" उद्धन्यमानमस्याः अमेध्यमप पाप्मानं यजमानस्य हन्तु शिवा नः सन्तु प्रदिशश्चतस्रः शं नो माता पृथिवी तोकसाता, इति प्राचीनप्रवणं देवयजनमुद्धत्य " इति । अस्याः पृथिव्याः संबन्धि यत्स्थानं निष्ठी-

खनादिभिरुपहतत्वादमेध्यं यज्ञायोग्यं तदिदानीमुद्धन्यमानं सद्यजमानस्य पाप्मानमपहन्तु। प्राच्यादिचतस्रः प्रकृष्टा दिशो नोऽस्मान्प्रति शिवाः सुखप्रदाः सन्तु। तोकसाता तोकसातयेऽपत्यलाभाय पृथिवी माता नोऽस्माकं शं सुखं करोतु।

शं नो॑ दे॒वीर॒भिष्ट॑ये। आपो॑ भवन्तु पी॒तये॑। शं योर॒भिस्र॑वन्तु नः।

कल्पः—"शं नो देवीरभिष्टय आपो भवन्तु पीतये शं योरभिस्रवन्तु नः, इत्यद्भिरवोक्ष्य" इति। आपो देवीरिमा जलदेवता नोऽस्माकमभिष्टयेऽभीष्टप्राप्त्यर्थं पीतये पानाय शं भवन्तु सुखप्रदा भवन्तु। किंच नोऽस्माकं शं सुखं संपादयितुं योर्दुःखं पृथक्कर्तुं चाभिस्रवन्तु सर्वतः प्रवर्तन्ताम्।

वै॒श्वा॒न॒रस्य॑ रू॒पम्। पृ॒थि॒व्यां परि॑स्र॒सा। स्यो॒नमाविश॑न्तु नः (१)।

कल्पः—"सप्त पार्थिवान्संभारानाहरत्येवं वानस्पत्यान्पञ्च पञ्च वा भूयसो वा पार्थिवान्संभारानाहरेदिति वाजसनेयकम्। वैश्वानरस्य रूपं पृथिव्यां परिस्रसा स्योनमाविशन्तु नः, इति सिकताः" इति। विश्वेषां नराणां हितकारी वैश्वानरोऽग्निस्तस्याग्नेः स्वरूपं पृथिव्यां परिस्रसा परितः पारयन्त्यः सिकताः स्योनं सुखं यथा भवति तथा नोऽस्माकं देवयजनमाविशन्तु।

यदि॒दं दि॒वो यद॒दः पृ॑थि॒व्याः। सं॒ज॒ज्ञा॒ने रोद॑सी संब॒भूव॒तुः। ऊषान्कृ॒ष्णम॑वतु कृष्णमूषाः। इ॒होभ॒योर्य॒ज्ञिय॒माग॑मिष्ठाः।

कल्पः—"यदिदं दिवो यददः पृथिव्याः संजज्ञाने रोदसी संबभूवतुरूषान्कृष्णमवतु कृष्णमूषा इहोभयोर्यज्ञियमागमिष्ठा इत्यूषान्" इति। आहरतीत्येवं सर्वत्रानुवर्तते। दिवः संबन्धि यदिदमूषररूपं पृथिव्यां स्थापितं पृथिव्याः संबन्धि यददः कृष्णरूपं चन्द्रमसि स्थापितं तत्र यद्रूपद्वयं संजज्ञाने सम्यगवगच्छन्त्यौ रोदसी द्यावापृथिव्यौ संबभूवतुः परस्परसंगते अभूताम्। तत्र यत्कृष्णरूपं द्यावापृथिवीरूपमस्ति तदेतदूषान्दिवःस्वरूपभूतानवतु रक्षतु।

१ क. 'रान्संभरे'।

ते चोषास्तत्कृष्णमभवन्तु । उभयोर्द्यावापृथिव्योः संबन्धि यज्ञियं यज्ञयोग्यमंशद्वयमिह देवजन आगमिष्ठा आगच्छतु ।

ऊतीः कुर्वाणो यत्पृथिवीमचरः । गुहाकारमाखुरूपं प्रतीत्य । तत्ते न्यक्तमिह संभरन्तः । शतं जीवेम शरदः सवीराः ।

कल्पः—"ऊतीः कुर्वाणो यत्पृथिवीमचरो गुहाकारमाखुरूपं प्रतीत्य तत्ते न्यक्तमिह संभरन्तः शतं जीवेम शरदः सवीरा इत्याखुकरीषम्" इति । हेऽग्ने त्वमाखुरूपं मूषकरूपं स्वीकृत्य गुहाकारं पर्वतगुहाया आकारो यथा भवति तथोतीर्बिलानि कुर्वाणः पृथिवीमचरो भूम्यां चरितवानसीति यत्तत्र न्यक्तं निगूढं ते त्वदीयं सारमिह देवयजने संभरन्तः संपादयन्तो वयं सवीराः पुत्रभृत्यसहिताः शरदः शतं शतसंख्याकान्संवत्सराञ्जीवेम ।

ऊर्जं पृथिव्या रसमाभरन्तः । शतं जीवेम शरदः पुरूचीः (२) । वम्रीभिरनुवित्तं गुहासु । श्रोत्रं त उर्व्यबधिरा भवामः ।

कल्पः—"ऊर्जं पृथिव्या रसमाभरन्तः शतं जीवेम शरदः पुरूचीर्वम्रीभिरनुवित्तं गुहासु श्रोत्रं त उर्व्यबधिरा भवाम इति वल्मीकवपाम्" इति । पृथिव्या रसः सारमूर्जं क्षीरादिवत्समानं वल्मीकवपारूपं संभरन्तो वयं शतं शरदो जीवेम । कीदृशीः शरदः पुरूचीः पुरूणि बहूनि भोग्यान्यञ्चन्ति संपादयन्तीति पुरूच्यस्तादृशीः । कीदृशं रसं गुहासु भूच्छिद्रेषु वम्रीभिः पिपीलिकासदृशीभिरनुवित्तमनुक्रमेण लब्धम् । हे उर्वि तच्छ्रोत्रं त्वदीयश्रोत्रस्थानीयां वल्मीकवपामाहृत्य वयमबधिरा अनुपहतश्रोत्रेन्द्रिया भूयास्म ।

प्रजापतिसृष्टानां प्रजानाम् । क्षुधोपहत्यै सुवितं नो अस्तु । उपप्रभिन्नमिषमूर्जं प्रजाभ्यः । सूदं गृहेभ्यो रसमाभरामि ।

कल्पः—"प्रजापतिसृष्टानां प्रजानां क्षुधोपहत्यै सुवितं नो अस्तु, उपप्रभि-

१ ग. °द्वितास्ताञ्शर° ।

ममिषमूर्जं प्रजाभ्यः सूदं गृहेभ्यो रसमाभरामि, इति सूदम्" इति । याः प्रजापतिसृष्टाः प्रजास्तासां क्षुन्निवारणाय नोऽस्मत्संबन्धीदं कर्दमरूपं सुवितं सुष्ठु प्राप्तमस्तु । येयमिडन्नं या चोर्गसः, उभयं प्रजाभ्यः प्रजार्थमुपप्रभिन्नमत्यन्तसामीप्यं यथा भवति तथैकीभूतं तादृशं सूदरसं पङ्करूपं गृहेभ्यो वह्नीनामायतनार्थमाहरामीहाऽऽनयामि ।

यस्य॑ रू॒पं बि॒भ्रदि॒माम॑वि॑न्दत् । गुहा॒ प्रवि॑-

ष्टा॑ꣳ स॑रि॒रस्य॒ मध्ये॑ । तस्ये॒दं विह॑तमा॒भ-

र॑न्तः । अच्छं॑बट्का॒रम॒स्यां वि॑धेम (३) ।

कल्पः—"यस्य रूपं बिभ्रदिमामविन्दद्गुहा प्रविष्टाꣳ सरिरस्य मध्ये तस्येदं विहतमाभरन्तोऽच्छंबटकारमस्यां विधेम, इति वराहविहतम्" इति । पुरा प्रजापतिर्यस्य वराहस्य रूपं बिभ्रद्धार्यमाण इमां पृथिवीमविन्ददलभत । कीदृशीं सरिरस्य मध्ये प्रलयकालीनजलस्यान्तर्गुहा गोप्यं स्थानं पातालरूपं प्रविष्टाम् । अयमर्थस्त्रिरात्रब्राह्मणे स्पष्टमाम्नातः—"आपो वा इदमग्रे सलिलमासीत्तस्मिन्प्रजापतिर्वायुर्भूत्वाऽचरत्स इमामपश्यत्तां वराहो भूत्वाऽहरत्" इति । तस्य वराहस्य विहतं पोत्रोत्खातमिदं मृद्द्रव्यमाभरन्त आनयन्तो वयमस्यां पृथिव्यामच्छंबट्कारं वैयर्थ्यं यथा न भवति तथा विधेम कर्माण्यनुतिष्ठेम ।

यत्पर्यप॑श्यत्सरि॒रस्य॒ मध्ये॑ । उ॒र्वीमप॑श्य॒ज्जग॑तः प्रति॒-

ष्ठाम् । तत्पुष्क॑रस्या॒ऽऽयत॑नाद्धि॒ जा॒तम् । प॒र्णं

पृ॑थि॒व्याः प्रथ॑नꣳ हरामि ।

कल्पः—" यत्पर्यपश्यत्सरिरस्य मध्य उर्वीमपश्यज्जगतः प्रतिष्ठाम्, तत्पुष्करस्याऽऽयतनाद्धि जातं पर्णं पृथिव्याः प्रथनꣳ हरामीति पर्णम्" [ इति ] । जगतः स्थावरजङ्गमरूपस्य प्रतिष्ठामाधारभूतामुर्वीं लब्धुकामः प्रजापतिः सरिरस्य मध्ये प्रलयकालीनजलस्यान्तर्यत्पुष्करपर्णमपश्यत् । तथा च पूर्वमाम्नातम्—"सोऽपश्यत्पुष्करपर्णं तिष्ठत्" इति । तत्पुष्करस्य पर्णं हरामि । देवयजनभूमौ नयामि । कीदृशम् । आयतनाद्धि जलमध्ये निमग्नादाधारादुत्पन्नम् । हि शब्दो ब्राह्मणप्रसिद्धिं सूचयति । तच्च ब्राह्मणं पूर्वमेवोक्तम्—" सोऽमन्यत । अस्ति वै तत् । यस्मिन्निदमधितिष्ठति " इति ।

तादृशाधारादिदमुत्पन्नम् । तथा पृथिव्याः प्रथमभूमेर्विस्तारस्थानम् । एतदपि पूर्वत्राऽऽम्नातम्—"तत्पुष्करपर्णे प्रथयत्" इति ।

याभिरदृꣳहज्जगतः प्रतिष्ठाम् । उर्वीमिमां विश्वज-
नस्य भर्त्रीम् । ता नः शिवाः शर्कराः सन्तु सर्वाः ।

कल्पः—"याभिरदृꣳहज्जगतः प्रतिष्ठामुर्वीमिमां विश्वजनस्य भर्त्रीम्, ता नः शिवाः शर्कराः सन्तु सर्वा [ इति शर्कराः ]" इति । जगतः स्थावरादेः प्रतिष्ठामाश्रयभूतां विश्वजनस्य भर्त्रीं सस्यादिद्वारा सर्वजनस्य पोषयित्रीमिमामुर्वीं याभिः शर्कराभिरदृꣳहद्दृढीकृतवान्प्रजापतिः । एतदपि पूर्वमुक्तम्—"ताꣳ शर्कराभिरदृꣳहत्" इति । तास्तादृश्यः शर्कराः क्षुद्रपाषाणा नोऽस्मदर्थं सुखप्रदाः सन्तु ।

अग्नेरेतश्चन्द्रꣳ हिरण्यम् । अद्भ्यः संभूतममृतं
प्रजासु । तत्संभरन्नुत्तरतो निधाय (४) । अतिप्रय-
च्छन्दुरितिं तरेयम् ।

कल्पः—"अग्नेरेतश्चन्द्रꣳ हिरण्यमद्भ्यः संभूतममृतं प्रजासु तत्संभरन्नुत्तरतो निधायातिप्रयच्छन्दुरितिं तरेयमिति हिरण्यम्" इति । तद्धिरण्यं तत्संभरन्संपादयन्नग्नेर्वीभत्सानिवारणायोत्तरपार्श्वे तद्धिरण्यं निधाय द्वेष्याय रजतमतिप्रयच्छन्नहं दुरितिं दुर्गतिं तरेयम् ।

अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठः । संवत्सरं देवे-
भ्यो निलाय । तत्ते न्यक्तमिह संभरन्तः । शतं
जीवेम शरदः सवीराः ।

कल्पः—"अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठः संवत्सरं देवेभ्यो निलाय तत्ते न्यक्तमिह संभरन्तः, शतं जीवेम शरदः सवीरा इत्यश्वत्थम्" इति । हेऽग्ने त्वं यद्यदाऽश्वः संस्तदीयं रूपं च सम्यक्कृत्वा देवेभ्यो निलाय गूढोऽपक्रम्य संवत्सरं निरन्तरमश्वत्थे स्थितवानसि । तत्तदा ते त्वदीयं न्यक्तमश्वत्थे निगूढं तेजः सारमिह यज्ञभूमौ संभरन्तः संपादयन्तो वयं सवीराः पुत्रभृत्यसहिताः शतं शरदो जीवेम ।

ऊर्जः पृथिव्या अध्युत्थितोऽसि । वनस्पते शत-

वल्शो विरोह । त्वया वयमिषमूर्जं मदन्तः । राय-

स्पोषेण समिषा मदेम ।

कल्पः—"ऊर्जः पृथिव्या अध्युत्थितोऽसि वनस्पते शतवल्शो विरोह त्वया वयमिषमूर्जं मदन्तो रायस्पोषेण समिषा मदेमेत्युदुम्बरम्" इति । हे वनस्पत उदुम्बरवृक्ष ऊर्जो रसानिमित्तात्तत्सिद्ध्यै पृथिव्या अध्युत्थितोऽसि भूमेरुपरि प्ररूढोऽसि । अतोऽस्माभिश्छिन्नोऽपि पुनः शतवल्शः शतशाखायुक्तो विरोह विशेषेण प्रादुर्भव । त्वयोपकृता वयमिषमन्नमूर्जं रसं च मदन्तो हर्षपुरःसरं प्राप्नुवन्तो रायस्पोषेण धनपुष्ट्या समीचीनेनान्नेन युक्ता मदेम पुनरपि हृष्यास्म ।

गायत्रिया ह्रियमाणस्य यत्ते (५) । पर्णमपतत्तृ-

तीयस्यै दिवोऽधि । सोऽयं पर्णः सोमपर्णाद्धि जातः ।

ततो हरामि सोमपीथस्यावरुद्ध्यै । देवानां ब्रह्म-

वादं वदतां यत् । उपाशृणोः सुश्रवा वै श्रुतोऽसि ।

ततो मामाविशतु ब्रह्मवर्चसम् । तत्संभरंस्तदवरु-

न्धीय साक्षात् ।

कल्पः—"गायत्रिया ह्रियमाणस्य यत्ते पर्णमपतत्तृतीयस्यै दिवोऽधि सोऽयं पर्णः सोमपर्णाद्धि जातस्ततो हरामि सोमपीथस्यावरुद्ध्यै देवानां ब्रह्मवादं वदतां यदुपाशृणोः सुश्रवा वै श्रुतोऽसि ततो मामाविशतु ब्रह्मवर्चसं तत्संभरंस्तदवरुन्धीय साक्षादित्येताभ्यां पर्णम्" इति । हे सोम तृतीयस्यै दिवोऽधीमं लोकमारभ्य गणनायां तृतीयस्य द्युलोकस्योपरि गायत्रिया ह्रियमाणस्य गायत्रीदेवतया बलादाह्रियमाणस्य ते तव यत्पर्णं भूमावपतत्सोऽयं पर्णः पलाशवृक्षः स च सोमपर्णाज्जात इति पर्णनामधेयेनैव प्रसिद्धः । ततस्तस्मात्कारणात्सोमपीथस्थस्यावरुद्ध्यै सोमपानस्य सिद्ध्यै हरामि त्वामिहाऽऽनयामि । किंच पलाशवृक्षच्छायायामुपविश्य ब्रह्मवादं वदतामात्मविषयं संवादं कुर्वतां देवानां संबन्धं ब्रह्मवादं यद्यस्मात्कारणात्त्वमुपाशृणोः समीपे स्थित्वा श्रुतवानसि । अत एव सुश्रवा इति नाम्नैव त्वं श्रुतोऽसि प्रसिद्धोऽसि तत्तस्मात्कारणात्त्वदानयने प्रवृत्तं मां

ब्रह्मवर्चसमाविशतु । तत्तादृशं पर्णाख्यं संभरन्नहं ब्रह्मवर्चसं साक्षादवरुन्धीय विलम्बमन्तरेण प्राप्नुयाम् ।

यया ते सृष्टस्याग्नेः । हेतिमशमयत्प्रजापतिः । ता मि-

मामप्रदाहाय (६) । शमीं॑ शान्त्यै हराम्यहम् ।

कल्पः—"यया ते सृष्टस्याग्नेर्हेतिमशमयत्प्रजापतिस्तामिमामप्रदाहाय शमीं शान्त्यै हराम्यहमिति शमीम्" इति । हे शमीवृक्ष ते त्वदीयया यया शाखया प्रजापतिः स्वसृष्टस्याग्नेर्हेतिं प्रदाहरूपमायुधमशमयत्तामिमां शमीं पूर्वस्य दाहस्य शान्त्या इत उर्ध्वमप्रदाहाय च हरामि यज्ञभूमावानयामि ।

यत्ते सृष्टस्य यतः । विकङ्कतं भा आर्च्छज्जातवेदः ।

तया भासा संमितः । उरुं नो लोकमनुप्रभाहि ।

कल्पः—"यत्ते सृष्टस्य यतो विकङ्कतं भा आर्च्छज्जातवेदस्तया भासा संमित उरुं नो लोकमनुप्रभाहीति विकङ्कतम्" इति । हे जातवेदः प्रजापतिना सृष्टस्य यतः शीघ्रं गच्छतस्ते तव भा या दीप्तिर्विकङ्कतवृक्षमार्च्छत्प्राप्नोत्तया भासा संयुक्तः सन्नोऽस्मदर्थमुरुं विस्तीर्णं लोकं स्थानमनुप्रभाह्यनुक्रमेण प्रकाशय ।

यत्ते तान्तस्य हृदयमाच्छिन्दज्जातवेदः ।

मरुतोऽद्भिस्तमयित्वा । एतत्ते तदशनेः

संभरामि । सात्मा अग्ने सहृदयो भवेह ।

कल्पः—"यत्ते तान्तस्य हृदयमाच्छिन्दज्जातवेदो मरुतोऽद्भिस्तमयित्वैतत्ते तदशनेः संभरामि सात्मा अग्ने सहृदयो भवेहेत्यशनिहतस्य वृक्षस्य शकलानि त्वचो वा" इति । हे जातवेदः पुरा कदाचिन्मरुतो देवा विद्वेषादद्भिस्त्वदीयां तां ज्वालां तमयित्वा शमयित्वा म्लानिं प्रापय्य तान्तस्य म्लानिं प्राप्तस्य ते तव यद्धृदयमाच्छिन्दंस्तदेतत्ते हृदयमशनेः सकाशादहं संभरामि । छिन्नस्य हृदयस्याशनौ प्रविष्टत्वात् । ततः संभरणं युक्तम् । "साऽशनिरभवत्" इति ब्राह्मणं पुरोदाहृतम् । तस्य हृदयस्य मया संभृतत्वादिह देवयजने हेऽग्ने त्वं सात्मा सत्स्वरूपः[1] सहृदयो हृदययुक्तश्च भव । पूर्वोक्तेषु सर्वेष्वपि मन्त्रेषूद्धन्तीत्याद्यनुवाकोक्तं तत्तद्ब्राह्मणमनुसंधेयम् ।

---

1 क. ख. सुखरूपः ।

चित्रियादश्वत्थात्संभृता बृहत्यः (७)। शरी-
रमभिसꣳस्कृताः स्थ । प्रजापतिना यज्ञमुखेन
संमिताः । तिस्रस्त्रिवृद्भिर्मिथुनाः प्रजात्यै ।

कल्पः—"अथ ब्रह्मौदनशेषꣳ सꣳस्कृत्य तस्मिन्नाज्यशेषमानीय तस्मिꣳश्चित्रियाश्वत्थस्य तिस्रस्तिस्रः समिध आर्द्राः सपलाशाः प्रादेशमात्र्यस्तिभिकवत्यो निवर्तयन्ति—चित्रियादश्वत्थात्संभृता बृहत्यः शरीरमभिसꣳस्कृताः स्थ प्रजापतिना यज्ञमुखेन संमितास्तिस्रस्त्रिवृद्भिर्मिथुनाः प्रजात्यै" इति । ग्रामतडागादिचिह्नभूतः प्रसिद्धोऽश्वत्थश्चित्रियः । हे समिधो यूयं चित्रियादश्वत्थात्संभृता मया संपादिताः । अत एव बृहत्यो महत्यः पूज्यास्तथा शरीरमभिसंस्कृताः स्थ । चरुगते महत्याज्ये विवर्तनेन कृत्स्नं स्वशरीरमभिव्याप्य संस्कारयुक्ता भवथ । किंच प्रजापतिरूपेण यज्ञपुरुषमुखेन प्रादेशमात्रेण संमितास्तुल्यास्ताहश्यस्तिस्रः समिधस्त्रिवृद्भिर्भविष्यदाहवनीयादिरूपेण त्रिगुणैरग्निभिः सह प्रजात्यै मिथुनाः प्रजोत्पादनार्थं मिथुनीभूताः ।

अश्वत्थाद्धव्यवाहाद्धि जाताम् । अग्ने-
स्तनूं यज्ञियाꣳ संभरामि । शान्तयो-
निꣳ शमीगर्भम् । अग्नये प्रजनयितवे ।

कल्पः—"अश्वत्थाद्धव्यवाहाद्धि जातामग्नेस्तनूं यज्ञियाꣳ संभरामि शान्तयोनिꣳ शमीगर्भमग्नये प्रजनयितव इत्यायुर्दा अग्न इत्याध्वर्युर्यजमान इत्यरणी अभिमन्त्र्य" इति । आयुरित्यादिकः सौत्रो मन्त्रः । हव्यं वहतीति हव्यवाहोऽग्निरूपोऽयमश्वत्थोऽश्वरूपं धृत्वाऽग्नेस्तस्मिन्वृक्षे प्रविश्य संवत्सरमवस्थितत्वात्तस्मादश्वत्थाज्जातामुत्पन्नामरणिं संभरामि संपादयामि कीदृशमग्नेर्यज्ञिया तनूं लौकिकदाहपाकादिहेतुर्यज्ञिया तनूः । अरणिरूपा तु या यज्ञार्हा शान्तयोनिं दाहप्रकाशाद्यनभिव्यक्त्या शान्तामग्न्युत्पादकत्वेन योनिश्च शमीगर्भं शमीवृक्षवेष्टिताश्वत्थवृक्षजन्यत्वेन शमीगर्भमीदृशीमरणिमग्नये प्रजनयितवेऽग्नेरुत्पादनार्थं संभरामीति पूर्वत्रान्वयः ।

यो अश्वत्थः शमीगर्भः । आरुरोह त्वे स
चा । तं ते हरामि ब्रह्मणा (८) ।

यज्ञियैः केतुभिः सह ।

कल्पः—"यो अश्वत्थः शमीगर्भ आरुरोह त्वे स चा तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सहेति शमीगर्भस्याश्वत्थस्यारणी आहरति" इति । अर्थक्रमादयं मन्त्रः पूर्वभावी द्रष्टव्यः । न ह्याहरणमन्तरेणाभिमन्त्रयितुं शक्यते । हेऽरणे त्वे त्वयि निमित्तभूतायां सत्यां शमीगर्भो योऽश्वत्थः स च तया शम्या समवेत आरुरोह समारुह्य प्रवृद्धस्तं तादृशमश्वत्थं ते त्वदर्थं ब्रह्मणा मन्त्रेण यज्ञियैः केतुभिर्यज्ञार्हैर्लाञ्छनैरभिमन्त्रणादिवक्ष्यमाणसंस्कारैश्च सह हरामि यज्ञभूमावानयामि ।

यं त्वा समभरञ्जातवेदः । यथाशरीरं भूतेषु न्यक्तम् । स संभृतः सीद शिवः प्रजाभ्यः । उरुं नो लोकमनुनेषि विद्वान् ।

कल्पः—"यं त्वा समभरं जातवेदो यथाशरीरं भूतेषु न्यक्तं स संभृतः सीद शिवः प्रजाभ्य उरुं नो लोकमनुनेषि विद्वानिति संभृत्य निदधाति" इति । हे जातवेदो यं त्वा त्वामृत्विजः समभरन्संभारयुक्तं[1] कृतवन्तः । कीदृशं त्वां भूतेषु प्राणिषु यथाशरीरं तत्तच्छरीरमनतिक्रम्य न्यक्तमौदर्याग्निरूपेण निगूढं स तादृशस्त्वं संभृतः संभारैर्युक्तः प्रजाभ्यः शिवः प्रजानां सुखप्रदो भूत्वा सीदेह देवयजनस्थानमुपविश । विद्वान्सर्वलोकाभिज्ञस्त्वं नोऽस्मदर्थमुरुं विस्तीर्णं लोकमनुनेष्यनुक्रमेण संपादय ।

प्र वेधसे कवये मेध्याय । वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं तन्नो अस्तु । अव देवान्यजे हेड्यान् ।

कल्पः—"दर्व्या ब्रह्मौदनादुद्धृत्य—प्र वेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे यतो भयमभयं तन्नो अस्त्वव देवान्यजे हेड्यानिति जुहोति" इति । वेधसे कर्मद्वारा जगतो धात्रे कवये विदुषे सर्वज्ञाय मेध्याय यज्ञयोग्याय वृषभाय देवश्रेष्ठाय वृष्णे कामानां वर्षयित्रे वह्नये वन्दारु वचो नमस्कारशीलं वाक्यमस्माभिः प्राऽऽरब्धम् । प्राणिनां यतो यस्मान्नरका-

[1] क. °न्संभरणयुक्तं ।

द्भयं तत्तस्मान्नोऽस्माकमभयमस्तु । हेऽक्र्याः क्रोधयोग्यानस्माद्विरोधिनो देवानवयजे विनाशयामि ।

यदुक्तं समिदाधानप्रतिपादके ब्राह्मणे—"गायत्रीभिर्ब्राह्मणस्याऽऽदध्यात्" इति, तत्र प्रथममाह—

समिधाऽग्निं दुवस्यत (९) । घृतैर्बोधयतातिथिम् ।

आऽस्मिन्हव्या जुहोतन इति ।

हे ऋत्विजोऽनया प्रक्षिप्यमाणया समिधाऽग्निं दुवस्यत प्रीणयत । अतिथिं वैश्वदेवान्ते समागतं ब्राह्मणमिव पूजनीयमेनमग्निं घृतैर्बोधयत दीपयत । अस्मिन्नग्नौ हव्या हवींष्याजुहोतन सर्वत्र जुहुत ।

अथ द्वितीयमाह—

उप त्वाऽग्ने हविष्मतीः । घृताचीर्यन्तु हर्यत ।

जुषस्व समिधो मम, इति ।

हे हर्यत भजनीय वह्ने हविष्मतीर्ब्रह्मौदनाख्यहविष्मत्यो घृताचीर्घृताच्यो घृतसंपृक्ता एताः समिधस्त्वामुपयन्तु । मम समिधो जुषस्व प्रीत्या सेवस्व ।

अथ तृतीयमाह—

तं त्वा समिद्भिरङ्गिरः । घृतेन वर्धयामसि ।

बृहच्छोचा यविष्ठ्य, इति ।

हेऽङ्गिरोऽङ्गसौष्ठवयुक्त वह्ने तं तादृशं सर्वकर्मसु प्रसिद्धं त्वां समिद्भिर्घृतेन च वर्धयामसि वयं वर्धयामः । हे यविष्ठ्य युवतमाग्ने बृहच्छोचा महत्त्वं यथा भवति तथा दीप्यस्व ।

यदुक्तं ब्राह्मणे—"त्रिष्टुग्भी राजन्यस्य" इति तत्र प्रथममाह—

समिध्यमानः प्रथमो नु धर्मः । समक्तुभिरज्यते

विश्ववारः (१०) । शोचिष्केशो घृतनिर्णिक्पावकः ।

सुयज्ञो अग्निर्यजथाय देवान्, इति ।

---

१ ग. °स्तदस्मा° ।

अयमग्निर्देवान्यजथाय यष्टुमस्कुभिर्घृताक्ताभिः समिद्भिः समज्यते सम्य-गभिव्यज्यते दीप्यते । कीदृशोऽग्निः सर्वैर्यजमानैः सर्वत्र समिध्यमानः प्रथमो नु सर्वासां देवतानां मध्येऽवश्यं प्रथमभावी । अत एवान्यत्राऽऽम्ना-तम्—" अग्निरग्रे प्रथमो देवतानाम् " इति । धर्मो विश्वस्य धारयिता । विश्ववारोऽनिष्टं सर्वं निवारयितुं समर्थः । शोचींषि ज्वालाः केशस्थानीया यस्यासौ शोचिष्केशः । घृतेन निर्णिज्यते निःशेषेण बोध्यते धूमरहितज्वा-लायुक्तः क्रियत इति घृतनिर्णिक् । पावकः सर्वस्य शोधकः । सुयज्ञः शोभ-नज्योतिष्टोमादियज्ञहेतुः ।

अथ द्वितीयमाह—

घृतप्रतीको घृतयोनिरग्निः । घृतैः समिद्धो घृतम-स्यान्नम् । घृतप्रुषस्त्वा सरितो वहन्ति । घृतं पिब-न्सुयजा यक्षि देवान्, इति ।

अयमग्निर्घृतप्रतीकः प्रतीकशब्दो मुखवाची " मुखं प्रतीकम् " इति वाजसनेयश्रुतेः । घृतं प्रतीकं मुखं यस्यासौ घृतप्रतीकः । तत्तदाहुतिषु घृतं पिबतीत्यर्थः । घृतमेव योनिर्ज्वालोत्पत्तिकारणं यस्येति घृतयोनिः । अत एव घृतैः समिद्धः सम्यक्प्रज्वालितः । अन्नमप्यस्य घृतमेव । हेऽग्ने घृतप्रुषो घृतबिन्दुयुक्ताः सरितस्त्वां वहन्ति । घृतवाहिनीषु नदीषु वायुना घृतबिन्द-वस्तीरे प्रसरन्ति तादृशीषु नदीषु प्लवमानस्त्वं क्रीडस्वेत्यर्थः । तथाविध-स्त्वमस्मद्दत्तं घृतं पिबन्सुयजाः शोभनेन यज्ञेन देवान्यक्षि पूजय ।

अथ तृतीयमाह—

आयुर्दा अग्ने हविषो जुषाणः । घृतप्रतीको घृत-योनिरेधि । घृतं पीत्वा मधु चारुगव्यम् । पितेव पुत्रमभिरक्षतादिमम् ( ११ ), इति ।

हेऽग्ने हविषो जुषाणो हवींषि सेवमानो घृतप्रतीको घृतयोनिः सन्ना-युर्दा एधि, अस्माकमायुष्प्रदो भव । तथा मधु मधुरं चारुगव्यं रमणीयं गोसंबन्धिरसं घृतं पीत्वेमं यजमानमभिरक्षतात्सर्वतो रक्ष । यथा पिता पुत्रं रक्षति तद्वत् ।

यदुक्तं ब्राह्मणे—" जगतीभिर्वैश्यस्य " इति, तत्र प्रथममाह—

त्वाम॑ग्ने समि॒धानं॑ यविष्ठ । दे॒वा दू॒तं च॑क्रिरे हव्य॒-
वाह॑म् । उ॒रु॒ज्रय॑सं घृ॒तयो॑निमाहु॑तम् । त्वे॒षं चक्षु॑-
र्दधिरे चोद॒यन्व॑ति, इति ।

हे यविष्ठ युवतमाग्ने समिध्यमानं सम्यक्प्रकाशमानं त्वां देवाः सर्वे हव्यवाहं हविषां वोढारं दूतं चक्रिरे । अत एवान्यत्राऽऽम्नातम्—"अग्निर्देवानां दूत आसीत् " इति । उरुज्रयसमुरूणि ज्रयांसि वैरिणामभिभवनानि यस्यासावुरुज्रयास्तादृशं घृतयोनिं घृतेनोत्पन्नज्वालमाहुतमाहुतिभिराराधितं त्वेषं दीप्यमानं त्वां चोदयन्वति विधायकवाक्ययुक्ते कर्मणि चक्षुर्दधिरे चक्षुःस्थानीयं कृतवन्तो देवाः । यथा लोके चक्षुषा रूपं स्पष्टं प्रकाश्यते तथा त्वया विधिवाक्योक्तानि कर्माणि संपाद्यन्त इत्यर्थः ।

अथ द्वितीयमाह—

त्वाम॑ग्ने प्र॒दिव॒ आहु॑तं घृ॒तेन॑ । सु॒म्नाय॒वः सु॒षमि॒धा
समी॑धिरे । स वा॑वृ॒धान॒ ओष॑धीभिरु॒क्षि॒तः । उ॒रु
ज्रयां॑ꣳसि पार्थि॑वा॒ वि ति॑ष्ठसे, इति ।

सुम्नं सुखमात्मन इच्छतीति सुम्नायव ऋत्विजस्ते प्रदिवे प्रकृष्टस्वर्गार्थं यद्वा प्रदिवः प्रकृष्टस्वर्गान्निमित्तभूतात् । हेऽग्ने त्वां घृतेनाऽऽहुतं सर्वत आराधितं सुषमिधा शोभनया समिधा समीधिरे सम्यगुद्दीपितवन्तः । स त्वमोषधीभिरोषध्युपलक्षिताभिर्वावृधानोऽत्यन्तं वर्धमान उक्षितो घृतेन सिक्तः । पार्थिवा पार्थिवानि ज्रयांसि बाधकान्युरु वितिष्ठसेऽत्यन्तविक्लिष्टानि स्थापय ।

अथ तृतीयमाह—

घृ॒तप्र॑तीकं च ऋ॒तस्य॑ धू॒र्षद॑म् । अ॒ग्निं मि॒त्रं न
स॑मिधा॒न ऋ॑ञ्जते ( १२ ) । इन्धा॑नो अ॒क्रो वि॒द-
थे॑षु दीद्य॑त् । शु॒क्रव॑र्णा॒मुदु॑ नो यꣳसते॒ धिय॑म् , इति ।

हे ऋत्विग्यजमाना युष्मत्संबन्धिन ऋतस्य यज्ञस्य धूर्षदं धुरि सीदन्तं निर्वाहकमित्यर्थः । तादृशं घृतप्रतीकमग्निं समिधानो दीपयन्नयमध्वर्युर्मित्रं न

मित्रमिव ऋञ्जतेऽलं करोति । इन्धानः स्वयं दीप्यमानोऽक्रः केनापि नाऽऽक्रान्तोऽयमग्निर्विदथेषु दीद्यदस्मान्प्रकाशयन्नोऽस्मदीयां शुक्रवर्णां निर्मलरूपां धियं प्रज्ञामुद्यंसतेऽत्यन्तमुद्यच्छतेऽभिवर्धयतीत्यर्थः ।

प्रजा अग्ने संवासय । आशाश्च पशुभिः सह ।

राष्ट्राण्यस्मा आधेहि । यान्यासन्सवितुः सवे ।

कल्पः—"प्रजा अग्ने संवासयाऽऽशाश्च पशुभिः सह राष्ट्राण्यस्मा आधेहि यान्यासन्सवितुः सव इत्युत्तरेण गार्हपत्यायतनं कल्माषमजं बध्नाति" इति । तत्राग्निशब्देनाजः संबोध्यते तस्याग्निसंबन्धित्वात् । "आग्नेयी वा एषा यदजा" इति श्रुत्यन्तरादग्निना सह प्रजापतिमुखादुत्पन्नत्वाच्च । हेऽग्नेऽजात्मन्प्रजा अस्मदीयाः पशुभिः सहाऽऽशा दिग्वर्तिनः प्राणिनश्च संवासय संवासनेन पालय । यानि राष्ट्राणि सवितुः सवे परमेश्वरस्याऽऽज्ञायां पूर्वमासंस्तानि राष्ट्राण्यस्मै यजमानायाऽऽधेहि सर्वतः संपादय ।

मही विश्पत्नी सदने ऋतस्य । अर्वाची एतं

धरुणे रयीणाम् । अन्तर्वत्नी जन्यं जातवेदसम् ।

अध्वराणां जनयथः पुरोगाम् ( १२ ) ।

कल्प.—"मही विश्पत्नी सदने ऋतस्यार्वाची एतं धरुणे रयीणामन्तर्वत्नी जन्यं जातवेदसमध्वराणां जनयथः पुरोगामित्यरणी आह्रियमाणे यजमानः प्रतीक्षते" इति । रयीणां धनानां धरुणे धारयित्र्यौ हेऽरणी मही महत्यौ पूजनीये विश्पत्नी प्रजानां पालयित्र्यावर्वाची अभिमुखे सत्यावृतस्य सदने यज्ञस्य स्थान एतमागच्छतम् । अन्तर्वत्नी गर्भिण्यौ युवां जन्यं जनयितारमग्निं जातवेदसं जातानां वेदितारमध्वराणां पुरोगां यज्ञानामग्रगामिनं जनयथ उत्पादयतम् ।

आरोहतं दशतꣳ शक्वरीर्मम । ऋतेनाग्न

आयुषा वर्चसा सह । ज्योग्जीवन्त

उत्तरामुत्तराꣳ समाम् । दर्शमहं पूर्ण-

मासं यज्ञं यथा यजै ।

कल्पः—"आरोहतं दशतꣳ शक्करीर्मम ऋतेनाग्न आयुषा वर्चसा सह ज्योग्जीवन्त उत्तरामुत्तराꣳ समां दर्शमहं पूर्णमासं यज्ञं यथा यजा इति हस्ताभ्यां प्रतिगृह्य" इति । हेऽरणी मम मदीयाः शक्करीः शक्तियुक्ता अङ्गुलयो याः सन्ति तासां दशतं दशसंख्यायुक्तवर्गमारोहतम् । हेऽग्नेऽरणिगर्भस्थ त्वमपि ऋतेन यज्ञेनाऽऽयुषाऽस्मदीयेन दीर्घायुष्येण वर्चसा बलेन सह दशतमारोह । वयं ज्योग्दीर्घकालं जीवन्त उत्तरामुत्तरां समामुत्तरोत्तरसंवत्सरे विच्छेदमन्तरेण दर्शं पूर्णमासं च यज्ञं यथा यजे यथा यजामि तथा त्वमारोहेति पूर्वत्रान्वयः ।

ऋत्वियवती स्थो अग्निरेतसौ । गर्भं दधाथां

ते वामहं ददे । तत्सत्यं यद्वीरं बिभृथः । वीरं

जनयिष्यथः । ते मत्प्रातः प्रजनिष्येथे ।

ते मा प्रजाते प्रजनयिष्यथः ( १४ ) ।

प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोके ।

कल्पः—"ऋत्वियवती स्थो अग्निरेतसौ गर्भं दधाथां ते वामहं ददे तत्सत्यं यद्वीरं बिभृथो वीरं जनयिष्यथस्ते मत्प्रातः प्रजनिष्येथे ते मा प्रजाते प्रजनयिष्यथः प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोक इति प्रतिगृह्याभिमन्त्रयते यजमानः" इति । हेऽरणी युवामृत्वियवती ऋतुः प्राप्तोऽस्येत्यृत्वियो योनिः स ययोररण्योस्ते ऋत्वियवती प्रजननाभिमुखगर्भवत्यौ । अग्निरेव रेतोरूपेण गर्भो ययोस्ते अग्निरेतसौ तादृश्यौ स्थो [illegible] तादृश्यौ युवां गर्भं दधाथां गर्भं पोषयतम् । ते तादृश्यौ वां युवामहं [illegible] आदत्तवानस्मि । ते युवां वीरं कर्मसु शूरं पुत्रं बिभृथो धारयथः । [illegible] वीरमेव जनयिष्यथ इति यत्तत्सत्यं न तु मिथ्या । ते युवां [illegible] भूतात्प्रातः प्रजनिष्येथे परेद्युः प्रातःकाले [illegible] वह्निमुत्पादयिष्यथः [illegible]जाते वह्निमुत्पादितवत्यौ ते युवामपि प्रजनयिष्यथः [illegible] करिष्यथः । अतः स्वर्गे लोके प्रजया पशुभिर्ब्रह्मवर्चसेन च युक्तो भविष्यामीति शेषः ।

अनृतात्सत्यमुपैमि । मानुषाद्दैव्यमुपैमि ।

दैवीं वाचं यच्छामि ।

कल्पः—" अथ यजमानो व्रतमुपैति वाचं यच्छति—अनृतात्सत्यमुपैमि मानुषाद्दैव्यमुपैमि दैवीं वाचं यच्छामि" इति । अनृतादग्निराहित्यलक्षणात्सत्यमग्निमत्त्वलक्षणमुपैमि प्राप्नोमि । मानुषान्मनुष्याचरणाद्दैव्यं देवयोग्यमाचरणमुपैमि प्राप्नोमि । दैवीं देवसंबन्धिनीं वाचं यच्छामि नियतां करोमि । संस्कृतभाषयैव व्यवहरामीत्यर्थः ।

शल्कैरग्निमिन्धानः । उभौ लोकौ सनेमहम् ।
उभयोर्लोकयोर्ऋद्ध्वा । अति मृत्युं तराम्यहम् ।

कल्पः—"शल्कैरेता रात्रिमेतमग्निमिन्धान आस्ते—शल्कैरग्निमिन्धान उभौ लोकौ सनेमहमुभयोर्लोकयोर्ऋद्ध्वाऽति मृत्युं तराम्यहमित्येतया" इति । अहं शल्कैः काष्ठलेशैरग्निमिन्धानः प्रज्वालयन्नुभौ लोकावेतल्लोकपरलोकौ सनें संजयेयम् । तयोरुभयोर्लोकयोर्ऋद्ध्वा समृद्धो भूत्वा मृत्युमहमतिशयेन तरामि ।

जातवेदो भुवनस्य रेतः । इह सिञ्च तपसो
यज्जनिष्यते (१५) । अग्निमश्वत्थादधि
हव्यवाहम् । शमीगर्भाज्जनयन्यो मयोभूः ।

कल्पः—"तस्मिन्नुपव्युषमरणी निष्टपति—जातवेदो भुवनस्य रेत इह सिञ्च तपसो यज्जनिष्यतेऽग्निमश्वत्थादधि हव्यवाहं शमीगर्भाज्जनयन्यो मयोभूरयं ते योनिर्ऋत्विय इत्येताभ्याम्" इति । द्वितीयमन्त्रः संहितायामपि पठितत्वात्सूत्रकारेण सर्वोऽपि न पठितः । हे जातवेदो ब्राह्मौदनिकाग्ने भुवनस्य रेतः सर्वलोकस्य कारणभूतमाधातव्याग्निरूपमिह सिञ्चानयोररण्योर्निषिञ्च । यद्रेतस्तपसोऽस्मात्संतापनाज्जनिष्यत उत्पत्स्यते तादृशं रेतः सिञ्चेति पूर्वत्रान्वयः । योऽग्निराधातव्यो मयोभूः सुखस्य भावयिता हव्यवाहं हविषो वोढारं शमीगर्भादरणिरूपादश्वत्थाज्जनयञ्जनयितुकामो निषिञ्चेति पूर्वत्रान्वयः ।

द्वितीयमन्त्रपाठस्तु—

अयं ते योनिर्ऋत्वियः । यतो जातो अरोचथाः ।
तं जानन्नग्न आरोह । अथा नो वर्धया रयिम्, इति ।

हे जनयितव्याग्नेऽयमरणिद्वयसंघस्ते तवोत्पत्त्यर्थमृत्वियो योनिर्ऋतुयुक्तम्-

त्पत्तिस्थानं यतो योनेर्जातस्त्वमरोचथा लोके दीप्तिमानासीः। योनिमेतदरणिरूपं जानन्नारोह। अथानन्तरं नोऽस्माकं रयिं धनं वर्धय।

कल्पः—"अपेत वीतेति गार्हपत्यायतनमुद्धत्य" इति। पाठस्तु—

अपेत वीत वि च सर्पतातः। येऽत्र स्थ पुराणा ये

च नूतनाः। अदादिदं यमोऽवसानं पृथिव्याः।

अक्रन्निमं पितरो लोकमस्मै (१८), इति।

यमपुरुषाः संबोध्यन्ते। "यममेव देवयजनमस्यै निर्याच्य" इत्येतन्मन्त्रब्राह्मणे समाम्नानात्। हे यमपुरुषा अत्रास्मिन्देशे पुराणा ये यूयं स्थ नूतनाश्च ये यूयं स्थ ते सर्वेऽप्यतो देशादपेतापगच्छत। वीत परस्परं वियुक्ता गच्छत। पुनरपि वि दूरं सर्पत। यमो राजेदमवस्थानमदाद्यजमानाय दत्तवान् पितरश्चेमं लोकं स्थानविशेषमस्मै यजमानार्थमक्रन्कृतवन्तः।

कल्पः—"सिकतानामर्धं द्वेधं विभज्यार्धं गार्हपत्यायतने निवपत्यर्धं दक्षिणाग्नेरर्धं त्रेधं विभज्य पूर्वेष्वेतेनैव कल्पेन सर्वान्पार्थिवान्निवपति। अग्नेर्भस्मासीति सिकता निवपति" इति। पाठस्तु—

अग्नेर्भस्मास्यग्नेः पुरीषमसि, इति।

हे सिकतेऽग्नेर्भस्म भासमानहेतुस्त्वमसि तथाऽग्ने पुरीषं पूरणहेतुस्त्वमसि।

कल्पः—"संज्ञानमित्यूषान्निवपत्यदश्चन्द्रमसि कृष्णं तदिहास्त्विति मनसा ध्यायति" इति। पाठस्तु—

संज्ञानमसि कामधरणम्। मयि

ते कामधरणं भूयात्, इति।

हे ऊष संज्ञानं सम्यग्ज्ञानहेतुः कामधरणं कामानां धारणहेतुश्च त्वमसि। ते त्वदीयं यत्कामधारणं सामर्थ्यं तन्मय्यपि भूयात्।

सं वः सृजामि हृदयानि। सꣳसृष्टं मनो

अस्तु वः। सꣳसृष्टः प्राणो अस्तु वः।

कल्पः—"सं या वः प्रियास्तनुव इत्येषा। सं वः सृजामि हृदयानि सꣳ-

---

१ क. °त। अपगम्य च वी°। २ ग. °न्निर्वप°।

सृष्टं मनो अस्तु वः सꣳसृष्टः प्राणो अस्तु व इत्येताभ्यां वानस्पत्यान्सꣳसृज्य सिकताद्भिरभज्य निवपति" इति । अत्र "सं वः सृजामि" इति मन्त्रः पूर्वमाम्नातः । हे वानस्पत्यसंभारा वो युष्माकं हृदयानि संसृजामि परस्परमनुरक्तानि करोमि । तथा वो युष्माकं मनो वचश्च संसृष्टमस्तु । हृदयवाक्येन परस्परस्नेहोऽपि विवक्षितः । मनोवाक्येन कार्येष्वैकमत्यम् । तथा वो युष्माकं प्राणश्च संसृष्टोऽस्तु । अनेनैकविधा प्रवृत्तिर्विवक्षिता।

"सं या वः" इति मन्त्रस्य संहितायामाम्नातत्वात्प्रतीकमात्रं सूत्रे दर्शितम् । इह तु सर्वोऽप्येवमाम्नातः—

सं या वः प्रियास्तनुवः । सं प्रिया हृदयानि वः ।
आत्मा वो अस्तु सं प्रियः सं प्रियास्तनुवो मम
( १७ ) इति ।

हे वानस्पत्यसंभारा वो युष्माकं याः प्रियास्तनुवस्ताः संसृज्यन्तामेकस्मिन्नेव कार्ये प्रवर्तन्ताम् । तथा वो युष्माकं प्रियाणि हृदयानि च संसृज्यन्ताम् । तथा वो युष्माकं प्रिय आत्मा जीवश्च संसृज्यताम् । तथा मम प्रियास्तनुवोऽपि संसृज्यन्ताम् । एकस्मिन्कार्ये प्रवर्तन्ताम् । ऋत्विग्भिः सह शरीरैबहुत्वम्[1] ।

कल्पः—"क्लृप्तिसामनसीभ्यामग्नीन्यजमान उपतिष्ठते—कल्पेतां द्यावापृथिवी येऽग्नयः समनसः" इति । तत्र क्लृप्त्यभिधायिकाया ऋचः पाठस्तु—

कल्पेतां द्यावापृथिवी । कल्पन्तामाप ओषधीः ।
कल्पन्तामग्नयः पृथक् । मम ज्यैष्ठ्याय सव्रताः, इति ।

द्यावापृथिव्यादयः सर्वे मम ज्यैष्ठ्यायोत्तमफलसिद्धये सव्रता व्रतेन कर्मणा युक्ताः सन्तः स्वस्वव्यापारक्षमा भवन्तु ।

सामनस्यभिधायिकाया ऋचः पाठस्तु—

येऽग्नयः समनसः । अन्तरा द्यावापृथिवी । वासन्तिकावृतू अभिकल्पमानाः । इन्द्रमिव देवा अभिसंविशन्तु, इति ।

१ क. °रबाहुल्यम् ।

हेऽग्ने द्यावापृथिव्योर्मध्ये त्वया सह समानमनस्का येऽग्नयः सन्ति ते सर्वेऽपि वासन्तिकावृतू ऋतववयवौ वासन्तिकमासौ चैत्रवैशाखाख्यावभिकल्पमानाः सर्वतः संपादयन्तस्तामभितः संविशन्तु । यथा देवा इन्द्रमभिसंविशन्ति तद्वत् ।

अनन्तरमन्त्रस्तु गार्हपत्याधानमन्त्राणां मध्ये सूत्रकारेणोदाहृतः । पाठस्तु—

दिवस्त्वा वीर्येण । पृथिव्यै महिम्ना ( १८ ) ।

अन्तरिक्षस्य पोषेण । सर्वपशुमादधे, इति ।

हे गार्हपत्य द्युलोकस्य यद्वीर्यं पृथिव्याश्च यो महिमाऽन्तरिक्षस्य यत्पोषं सामर्थ्यं तैः सर्वैरपि सर्वपशुप्रदानसमर्थं त्वामिहाऽऽयतन आदधे ।

अजीजनन्नमृतं मर्त्यासः । अस्रेमाणं तरणिं

वीडुजम्भम् । दश स्वसारो अग्रुवः समीचीः ।

पुमाꣳसं जातमभिसꣳरभन्ताम् ।

कल्पः—" अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीडुजम्भं दश स्वसारो अग्रुवः समीचीः पुमाꣳसं जातमभिसꣳरभन्तामिति जातमञ्जलिनाऽभिगृह्य " इति मर्त्यासो मनुष्यऋत्विजोऽमृतं मरणरहितमग्निं देवमजीजनन्नुत्पादितवन्तः । कीदृशमग्निमस्रेमाणमगम्यमशोषणीयं वा । स्रिवु गतिशोषणयोरिति धातुः तरणिं दुःखेभ्यस्तारकं वीडुजम्भं दृढदन्तमूलमग्रुवोऽङ्गुलयस्ताश्च शरीरेण सहोत्पन्नत्वात्स्वसारो भगिनीसमानाः । दशसंख्याकास्ता अङ्गुलयः समीचीरनुकूला भूत्वा जातमभिरूपं पुमांसमभिसंरभन्तामभितः संगृह्णन्तु ।

प्रजापतेस्त्वा प्राणेनाभिप्राणिमि । पूष्णः पोषेण

मह्यम् । दीर्घायुत्वाय शतशारदाय । शतꣳ शर-

द्भ्य आयुषे वर्चसे ( १९ ) । जीवात्वै पुण्याय ।

कल्पः—" जातं यजमानोऽभिप्राणिति—प्रजापतेस्त्वा प्राणेनाभिप्राणिमि पूष्णः पोषेण मह्यं दीर्घायुत्वाय शतशारदाय शतꣳ शरद्भ्य आयुषे वर्चसे

१ क. °मभिक° ।

जीवात्वै पुण्याय" इति । हेऽग्ने प्रजापतेः प्राणेन प्राणवायुना त्वामभिलक्ष्य प्राणिमि श्वासं करोमि । तथा पूष्णो देवस्य पोषेण सामर्थ्येन वाऽभिप्राणिमि । किमर्थं मह्यं मम शतशारदाय दीर्घायुत्वाय शतसंवत्सरपरिमितं यद्दीर्घायुस्तत्सिद्धये । किंच, शतं शरद्भ्यः शतसंख्याकेभ्यः संवत्सरेभ्य ऊर्ध्वमप्यायुःसिद्धये वर्चसे बलाय जीवात्वै जीवनौषधाय पुण्याय सुकृतसिद्धये च ।

अहं त्वदस्मि मदसि त्वमेतत् । ममासि
योनिस्तव योनिरस्मि । ममैव सन्वहं
हव्यान्यग्ने । पुत्रः पित्रे लोककृज्जातवेदः ।

कल्पः—"अहं त्वदस्मि मदसि त्वमेतन्ममासि योनिस्तव योनिरस्मि ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेद इत्याधीयमानमनुमन्त्रयते यजमानः" इति । ह आहवनीयाग्नेऽहं त्वत्तो हेतोरस्मि । यदा त्वमासीस्तदानीमहमस्मि । यदा तु त्वं नाऽऽसीस्तदानीं विद्यमानोऽप्यहं निष्प्रयोजनत्वेन नास्मि । त्वं च मदसि मत्तो हेतोर्जायसे । एतच्च प्रत्यक्षम् । एवमुक्तप्रकारेण मम योनिः कारणं त्वमसि । तवापि योनिः कारणमहमस्मि । तस्मान्ममैव बन्धुः सन्मदीयानि हव्यानि वह । हे जातवेदो यथा लोके पुत्रः पित्रे लोककृत्पुण्यलोकसंपादको भवति तद्वदतिस्नेहेन मम लोककृद्भव ।

अनन्तरमन्त्रो गार्हपत्याधानमन्त्रेषु सूत्रकृतोदाहृतः । पाठस्तु—

प्राणे त्वाऽमृतमादधामि । अन्नाद-
मन्नाद्याय । गोप्तारं गुप्त्यै, इति ।

हे गार्हपत्य प्राणेऽस्मदीये निमित्तभूते सति तद्रक्षार्थममृतं त्वामादधामि । ममान्नाद्यसिद्धयेऽन्नादं मम गुप्त्यै रक्षणसिद्धये गोप्तारं त्वाऽऽदधामि ।

सुगार्हपत्यो विदहन्नरातीः । उषसः श्रेयसीः
श्रेयसीर्दधत् (२०) । अग्ने सपत्नाँ अप-
बाधमानः । रायस्पोषमिषमूर्जमस्मासु धेहि ।

कल्पः—"सुगार्हपत्यो विदहन्नरातीरुषसः श्रेयसीः श्रेयसीर्दधदग्ने सपत्नाँ अपबाधमानो रायस्पोषमिषमूर्जमस्मासु धेहीत्याधीयमानमभिमन्त्रयते यज-

मानः" इति। शोभनो गार्हपत्योऽयमग्निररातीर्द्वेषिणो विशेषेण दहन्नुपसो दिवसाञ्श्रेयसीः श्रेयसीर्दधदुत्तरोत्तरश्रेष्ठान्कुर्वन्वर्तते। हेऽग्ने गार्हपत्य सपत्नानस्मदीयाञ्शत्रूनपबाधमानः पीडयन्धनपुष्टिमक्षरसं चास्मासु संपादय।

इमा उ मामुपतिष्ठन्तु रायः। आभिः प्रजाभिरिह संवसेय। इहो इडा तिष्ठतु विश्वरूपी। मध्ये वसोर्दीदिहि जातवेदः।

कल्पः—"इमा उ मामुपतिष्ठन्तु राय आभिः प्रजाभिरिह संवसेयेहो इडा तिष्ठतु विश्वरूपी मध्ये वसोर्दीदिहि जातवेद इति प्राङ्शोऽश्वप्रथमा अभिप्रव्रजन्ति" इति। इमा उ रायो लोके दृश्यमानानि सर्वाण्यपि धनानि मामुपतिष्ठन्तु प्राप्नुवन्तु। आभिः पुत्रपौत्रादिभिः प्रजाभिः सहेहास्मिञ्जन्मनि संवसेय सम्यक्तिष्ठामि। किंचेहैव जन्मनि विश्वरूपी महिष्यजाद्यनेकपशुरूपयुक्तेडा गौस्तिष्ठतु। हे जातवेदस्त्वमस्मदीयस्य वसोर्मध्ये स्वामित्वेन स्थित्वा दीदिहि दीप्यस्व।

ओजसे बलाय त्वोद्यच्छे। वृषणे शुष्मायाऽऽयुषे वर्चसे। सपत्नतूरसि वृत्रतूः। यस्ते देवेषु महिमा सुवर्गः (२१)। यस्त आत्मा पशुषु प्रविष्टः। पुष्टिर्या ते मनुष्येषु पप्रथे तया। नो अग्ने जुषमाण एहि।

कल्पः—"गार्हपत्ये प्रणयनीयमाश्वत्थमिध्ममादीप्य सिकताश्चोपयमनीरुपकल्पयते तमुद्यच्छति—ओजसे बलाय त्वोद्यच्छे वृषणे शुष्मायाऽऽयुषे वर्चसे सपत्नतूरसि वृत्रतूर्यस्ते देवेषु महिमा सुवर्गो यस्त आत्मा पशुषु प्रविष्टः पुष्टिर्या ते मनुष्येषु पप्रथे तया नो अग्ने जुषमाण एहि" इति। हेऽग्ने त्वामोजःप्रभृतिसिद्ध्यर्थमुद्यच्छे। ओजो बलहेतुरष्टमो धातुः। बलं शरीरसामर्थ्यम्। वृषञ्शब्दः सेचनसामर्थ्यवाची। शुष्मशब्दोऽत्र सहकारिसंपादितां शक्तिमाचष्टे। आयुः प्रसिद्धम्। वर्चः कान्तिः। हेऽग्ने त्वं सपत्नतूरसि वैरिहिंसकोऽसि। तथा वृत्रतूर्धर्मबुद्धेरावरकाणां पापानां हिंसकोऽसि।

सोऽयमेको मन्त्रः । हेऽग्ने देवेषु मध्ये कर्मफलभूतः स्वर्गरूपो यस्ते महिमा पशुषु क्षीरादिहविःस्वरूपेण प्रविष्टो यस्तवाऽऽत्माऽत्यन्तप्रियः पदार्थो मनुष्येषूदराग्निजनिता या त्वदीया पुष्टिः प्रथमे प्रसिद्धा वर्तते तया पुष्ट्या तदुपलक्षितस्वर्गक्षीराभ्यां च नोऽस्माञ्जुषमाण एहि ।

असौ द्वितीयो मन्त्रः—

दिवः पृथिव्याः पर्यन्तरिक्षात् । वातात्पशुभ्यो

अध्योषधीभ्यः । यत्र यत्र जातवेदः संब-

भूथ । ततो नो अग्ने जुषमाण एहि, इति ।

दिवः पृथिव्या अन्तरिक्षादुपरि वातात्पशुभ्य ओषधिभ्यश्चोपरि तथा यत्र यत्र देशविशेषे हे जातवेदः संबभूथोत्पन्नोऽसि । हेऽग्ने ततः सर्वस्मात्स्थानान्नोऽस्माञ्जुषमाण एहि ।

अनन्तरभाविनस्त्रयो मन्त्राः प्रणयनकाले गमनार्थाः । तत्र प्रथममाह—

प्राचीमनु प्रदिशं प्रेहि विद्वान् । अग्नेरग्ने पुरो

अग्निर्भवेह । विश्वा आशा दीद्यानो विभाहि

( २२ ) । ऊर्जं नो धेहि द्विपदे चतुष्पदे, इति ।

हेऽग्ने प्राचीं पूर्वां प्रदिशं प्रकृष्टां दिशमनुलक्ष्य विद्वान्मार्गाभिज्ञः प्रेहि प्रकर्षेण गच्छ । अग्नेर्गार्हपत्यस्येह पुरोऽग्निर्भवास्मिन्देवयजने पूर्वदिग्वर्ती वह्निर्भव । दीद्यानः स्वयं प्रकाशमानो विश्वा आशा विभाहि सर्वा दिशः प्रकाशय । नोऽस्मदीयाय द्विपदे मनुष्याय चतुष्पदे पशवे चोर्जं रसं धेहि संपादय । अयं मन्त्रो "घर्मः शिरः" इत्यनुवाकेऽपि समाम्नातः । प्रयोजनं तु द्विराम्नातस्य सूत्रान्तरे द्रष्टव्यम् ।

अथ द्वितीयमाह—

अन्वग्निरुषसामग्रमख्यत् । अन्वहानि प्रथमो

जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीन् ।

अनु द्यावापृथिवी आततान, इति ।

अयमग्निरुषसामग्रं प्राप्तोऽन्वख्यदनुक्रमेण प्रकाशितवान् । प्रथमो देवेषु

मुख्योऽयं जातवेदा अहानि दिवसानन्वख्यत् । किंच सूर्यस्य पुरुत्रा सर्वानपि रश्मीनन्वख्यत् । तथा द्यावापृथिव्यावनुक्रमेणाऽऽततान सर्वतो व्याप्तवान् । यद्यप्ययं मन्त्रो नाऽऽपस्तम्बेन विनियुक्तस्तथाऽपि सूत्रान्तरानुसारेणात्र विनियोगो द्रष्टव्यः ।

अथ तृतीयमाह—

विक्रमस्व महाँ असि । वेदिषन्मानु-
षेभ्यः । त्रिषु लोकेषु जागृहि, इति ।

हेऽग्ने विक्रमस्वानिष्टनिवारणे पराक्रमं कुरु । त्वं महानत्यधिकशक्तियुक्तोऽसि । मानुषेभ्यो मनुष्याणामर्थे वेदिषन्वेद्यामुपविष्टः संस्त्रिषु लोकेषु जागृहि यजमानं नेतुं सावधानो भव ।

यदिदं दिवो यददः पृथिव्याः । संविदाने
रोदसी संबभूवतुः ( २२ ) । तयोः पृष्ठे सीदतु
जातवेदाः । शंभूः प्रजाभ्यस्तनुवे स्योनः ।

कल्पः—" यदिदं दिवो यददः पृथिव्याः संविदाने रोदसी संबभूवतुस्तयोः पृष्ठे सीदतु जातवेदाः शंभूः प्रजाभ्यस्तनुवे स्योन इत्यभिमन्त्र्य " इति । यदिदमूषाख्यं दिवो याज्ञियं पृथिव्यां वर्तते यच्चादः कृष्णाख्यं पृथिव्या याज्ञियं दिवि चन्द्रमसि वर्तते तेनोभयेन वयमेनं मन्यामहे । रोदसी द्यावापृथिव्यौ संविदान ऐकमत्यं गते संबभूवतुः । पूर्वमेकी बभूवतुरिति तयोरस्मदृश्ययोर्द्यावापृथिव्योः पृष्ठ उपरि जातवेदाः सीदतु । कीदृशः । प्रजाभ्यः शंभूः प्रजानां सुखस्य भावयिता तनुवे स्योनः स्वशरीराय च सुखकरः ।

अनन्तरमन्त्रा आहवनीयाधाने सूत्रकारेणोदाहृताः । तत्पाठस्तु—

प्राणं त्वाऽमृत आदधामि । अन्नादमन्नाद्याय ।
गोप्तारं गुप्त्यै । यत्ते शुक्र शुक्रं वर्चः शुक्रा
तनूः । शुक्रं ज्योतिरजस्रम् । तेन मे दीदिहि
तेन त्वाऽऽदधे । अग्निनाऽग्ने ब्रह्मणा । आनशे

व्यानशे सर्वमायुर्व्यानशे ( २४ ), इति ।

हे आहवनीय प्राणरूपं त्वाममृते स्थाने विनाशरहित आदधामि । अस्या-कमन्नाद्यसिद्ध्यर्थमन्नादं त्वाऽऽदधामि । रक्षणार्थं गोप्तारं त्वामादधामि । सोऽयमेको मन्त्रः । हे शुक्र दीप्यमानाग्ने तव यच्छुक्रं वर्चो निर्मला कान्तिर्या च शुक्रा तनूर्निर्मलो देहो यच्चाजस्रं निरन्तरं शुक्रं ज्योतिर्निर्मल-मितरभासकत्वं तेन सर्वेण युक्तो मे मदर्थं दीदिहि प्रकाशस्व । तेन कार-णेन हेऽग्नेऽग्निना ब्रह्मणाऽग्निप्रकाशकेन मन्त्रेण त्वामादधे । अयं द्वितीयो मन्त्रः । अयमग्निरानशे भोक्तृदेहं व्याप्तवान् । व्यानशे विविधं भोग्यजातं व्याप्तवान् । तथा सर्वमायुरपमृत्युपरिहारेण व्यानशे व्याप्तवान् । अयं तृतीयो मन्त्रः । तावेनौ द्वितीयतृतीयौ "घर्मः शिरः" इत्यनुवाकेऽ-प्याम्नातौ । तयोः प्राचीमितिमन्त्रवत्पृथगुपयोगः सूत्रान्तरे द्रष्टव्यः । यद्वाऽस्यानुवाकस्य मन्त्रकाण्डानुरूपत्वाद्घर्मः शिर इत्यादिकमप्य-त्रत्यमेवेति दर्शयितुं तदेकदेशोऽत्र पठितः । ब्राह्मणसंबन्धार्थं तत्राऽऽम्नातं-(नं) द्रष्टव्यम् ।

यदुक्तं सूत्रकारेण—"अथ विराट्क्रमैर्यजमान उपतिष्ठते" इति, तत्र प्रथमं विराट्क्रमन्त्रमाह—

नर्य प्रजां मे गोपाय । अमृतत्वाय जीवसे । जातां जनिष्यमाणां च । अमृते सत्ये प्रतिष्ठिताम् , इति ।

हे नर्य मनुष्येभ्यो हित गार्हपत्य मे मदीयां प्रजां गोपाय । किमर्थममृत-त्वाय जीवसेऽपमृत्युरहितजीवनाय । कीदृशीं प्रजाम् । पूर्वमुत्पन्नामितःपरमु-त्पत्स्यमानां च । तथाऽमृतत्वहेतौ सत्ये प्रतिष्ठितां सर्वदा सत्यवादिनी-मित्यर्थः ।

अथ द्वितीयमाह—

अथर्व पितुं मे गोपाय । रसमन्नमिहाऽऽयुषे । अदब्धायोऽशीततनो । अविषं नः पितुं कृणु, इति ।

अथर्व पूर्वमथर्वाख्येन(ण) महर्षिणा मथितत्वात्तद्रूपत्वम् । तथा चान्यत्राऽऽ-म्नातम्—"अथर्वा त्वा प्रथमो निरमन्थदग्ने" इति । तादृश हे दक्षिणाग्ने मे पितुं मदीयमन्नं गोपाय । यो रसः क्षीरादिर्यच्चान्नं व्रीहियवादिकं तदुभयमि-ह शरीर आयुष आयुरर्थं स्थापयेति शेषः । हेऽदब्धायो केनाप्यहिंसितागम-

मन, न खलु त्वदीयमागमनं केनचिदपि निवारयितुं शक्यम्। हेऽशीततनो, उष्ण शरीर नोऽस्मदीयं पितुमन्नमविषं विषरहितं कुरु।

अथ तृतीयमाह—

शंस्य पशून्मे गोपाय। द्विपादो ये

चतुष्पदः (२५)। अष्टाशफाश्च य

इहाग्ने। ये चैकशफा आशुगाः, इति।

हे शंस्य ऋत्विग्भिः प्रशस्यमानाऽऽहवनीय मे पशून्गोपाय। ये पशवो द्विपादो मनुष्यरूपा येऽपि चतुष्पदो गवादिरूपास्तेऽष्टापि चतुष्पात्स्वष्टाशफा गोमहिष्यादय एकशफा आशुगामिनश्चाश्वादयो ये सन्ति तान्सर्वानिह लोके हेऽग्ने गोपाय।

अथ चतुर्थमाह—

सप्रथ सभां मे गोपाय। ये च सभ्याः सभा-

सदः। तानिन्द्रियावतः कुरु। सर्वमायुरुपास-

ताम्, इति।

प्रथया ख्यात्या सहितः सप्रथः। तादृश हे सभ्य मे सभामधिदेवनस्थानं गोपाय। ये च सभ्याः सभायोग्याः सभासदः सभायामुपविष्टाः सन्ति तान्सर्वानिन्द्रियावतश्चक्षुरादीन्द्रियपाटवयुक्तान्कुरु। ते च सभ्याः सर्वमायुः शतसंवत्सरमायुरुपासतां सेवन्ताम्।

अथ पञ्चममाह—

अहे बुध्निय मन्त्रं मे गोपाय। यमृषयस्त्रैवि-

दा विदुः। ऋचः सामानि यजूंषि। सा

हि श्रीरमृता सताम्, (२६) इति।

हेऽहेऽहिंसितव्य बुध्निय बुध्ने मूले जगदादावुत्पन्नाऽऽवसथ्य मे मदीय-मृगादिरूपं मन्त्रं गोपाय। यं मन्त्रं त्रयिविदा वेदत्रयाभिज्ञा ऋषयोऽती-न्द्रियद्रष्टारो विदुर्जानन्ति। तं मन्त्रं गोपायेति पूर्वत्रान्वयः। वेदत्रयोक्ता मन्त्रविशेषा ऋगादयः। गृहक्षेत्रादिपालनं परित्यज्य मन्त्रपालनप्रार्थने कार-णमुच्यते। सतां सन्मार्गवर्तिनामृगादिरूपा सा खल्वमृता श्रीः। धनादि-

रूपायाः श्रियो बहुधा विनाशः संभावितः । ऋगादिरूपायास्तु पुनः पुनरभ्यासेनाभिवृद्धिरेव न तूपक्षयः ।

चतुः॑शिखण्डा युव॒तिः सु॒पेशाः॑ । घृ॒तप्र॑तीका
भुव॑नस्य॒ मध्ये॑ । म॒र्मृ॒ज्यमा॑ना म॒हते॒ सौभ॑-
गाय । मह्यं॑ धुक्ष्व॒ यज॑माना॒य॒ कामा॑न् ।

कल्पः—"चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका भुवनस्य मध्ये मर्मृज्यमाना महते सौभगाय मह्यं धुक्ष्व यजमानाय कामानिति वेदिं संमृज्यमानाम्" इति । अनुमन्त्रयत इति शेषः । अस्य च दर्शपूर्णमासगतयाजमानत्वात्तस्याङ्ग एवायं मन्त्र उत्तरे द्रष्टव्यः । बालानां मूर्धगताः शिखण्डाश्चत्वारः । शिखण्डवदुन्नताः श्रोणिद्वयांसद्वयप्रदेशा यस्या वेदेः सा चतुःशिखण्डा युवतिर्मिश्रयित्री । सर्वाणि हवींषि वेद्यां मिश्री भवन्ति । तत्राऽऽहितत्वात् । सुपेशाः सुपर्णं तद्वच्छोभमानं रूपं यस्याः सा सुपेशाः । घृतप्रतीका घृतमेव प्रतीके मुखे यस्याः सा घृतप्रतीका । आदावाज्यमेव वेद्यामासाद्यते । तादृशी वेदिर्भुवनस्य मध्येऽस्माकं महते सौभगाय मर्मृज्यमानाऽतिशयेन शोध्यमाना वर्तते । हे वेदे यजमानाय मह्यं कामान्धुक्ष्व संपादय ।

इ॒हैव सन्त॒त्र स॒तो वो॑ अग्नयः । प्रा॒णेन॑ वा॒चा
मन॑सा बिभर्मि । ति॒रो मा॒ सन्त॒मायु॒र्मा प्रहा॑-
सीत् । ज्योति॑षा वो वैश्वान॒रेणोप॑तिष्ठे ।

कल्पः—"इहैव सन्तत्र सतो वो अग्नयः प्राणेन वाचा मनसा बिभर्मि तिरो मा संतमायुर्मा प्रहासीज्ज्योतिषा वो वैश्वानरेणोपतिष्ठ इति यद्यनुपस्थाय प्रवसेदेतयैवोपतिष्ठेत" इति । अग्निहोत्रिणो ग्रामान्तरगमने प्राप्ते सत्यग्न्युपस्थानं कृत्वा पश्चाद्गन्तव्यम् । यदि कदाचिन्महत उपस्थानस्यावसरो न स्यात्तदानीमेतयैवैकयोपतिष्ठेत । हेऽग्नय इहैव देशे सन्नहं तत्र तत्र गृहविशेषे सतो वर्तमानान्युष्मान्प्राणेन वाचा मनसा बिभर्मि धारयामि । ग्रामान्तरे गतस्यापि मम प्राणादयो भवद्विषयदेशवर्तित्वेन तिरोभूय सन्तमवस्थितं मामायुर्मा प्रहासीन्मा परित्यजतु । वैश्वानरेण सर्वमनुष्यहितेन ज्योतिषा युक्तान्वो

१ क. तत्र निहिं ।

शुष्मानुपतिष्ठे यत्र तत्र स्थितोऽप्यहं सेवे । अयं मन्त्रोऽग्न्युपस्थानप्रकरणेऽग्निहोत्रविषये नेतव्यः ।

पञ्चधाऽग्नीन्व्यंक्रामत् । विराट्सृष्टा प्रजापतेः ।
ऊर्ध्वाऽऽरोहद्रोहिणी । योनिरग्नेः प्रतिष्ठितिः (२७) ।

विशन्तु नः पुरूचीर्विधेम निधाय यत्तेऽग्ने द्राहाय बृहत्यौ ब्रह्मणा दुवस्यत विश्वंभर इमम्मृञ्जते पुरोगां प्रजनयिष्यथो जनिष्यतेऽस्मै मम महिम्ना वर्चसे दधत्सुवर्गो माहि संबभूवतुरायुर्व्योनशे चतुष्पदः सतां प्रजापतेर्द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके द्वितीयाध्याये प्रथमोऽनुवाकः ॥ १ ॥

---

कल्पः—"पञ्चधाऽग्नीन्व्यक्रामद्विराट् सृष्टा प्रजापतेरूर्ध्वाऽऽरोहद्रोहिणी योनिरग्नेः प्रतिष्ठितिरिति सर्वान्" इति । यजमान उपतिष्ठत इत्यनुवर्तते । प्रजापतेः संबन्धिनी येयं सृष्टा विराड्विशेषेण राजमाना गोशरीरधारिणी तानेतानग्नीन्पञ्चधा व्यक्रामद्विभज्य क्रान्तवन्ती । अस्मिन्प्रदेशे गार्हपत्योऽस्मिन्नाहवनीय इत्येवं पदेनाऽऽक्रम्य दर्शितवतीत्यर्थः । सा पुनः स्वस्याः प्रयोजनविशेषमेव पश्यन्त्यूर्ध्वाऽभिमुखी द्युलोकमारोहत् । आरुह्य च रोहिण्यभूत् । सा चाग्नेर्योनिः कारणभूता प्रतिष्ठाहेतुश्च । रोहिणीनक्षत्रेऽग्नीनामाधेयत्वात् ।

अत्र विनियोगसंग्रहः—

उद्धन्य भूमिमुद्धन्ति शं नो देवीरवोक्षति ।
वैश्वेति सिकता न्युप्य यदेत्यूषान्वपेत्तथा ॥ १ ॥
ऊतीराखुकरीषं चोर्जे वल्मीकवपां प्रजाम् ।
सूदं यस्य तु वाराहीमृदं यत्पद्मपत्रकम् ॥ २ ॥
याभिस्तु शर्करा अग्नेः स्वर्णमम्बेति पिप्पलम् ।
ऊर्जं औदुम्बरं गायद्द्वाभ्यां पर्णं यया शमीम् ॥ ३ ॥
यत्ते विकङ्कतं यत्तेऽशनिदग्धं तरुं तथा ।
चित्रीत्यश्वत्थसमिधोऽश्वत्थादरणिमन्त्रणम् ॥ ४ ॥
यो अश्वारण्युपादानं यं त्वा संभारसादनम् ।
प्रवे ब्रह्मौदने होमस्तास्तिभिः समिधः क्षिपेत् ॥ ५ ॥

समिद्भिस्त्रिभिस्तु राजन्यस्त्वा त्रयेण च वैश्यकः ।
प्रजा अजं प्रवध्नाति मही अरणिवीक्षणम् ॥ ६ ॥
आगेऽरणी प्रगृह्णाति ऋत्विग्द्वाभ्यां तु मन्त्रणम् ।
अनु वाचं नियम्याथ शल्कै रात्रौ समिध्यते ॥ ७ ॥
जात द्वाभ्यां प्रातरग्न्यावरणी निष्टपेत्तथा ।
अपेति स्थानमुद्धन्यादग्नेस्तु सिकता वपेत् ॥ ८ ॥
सं वो द्वाभ्यां तु संभारान्यानस्यात्यान्प्रसंसृजेत् ।
ऋग्द्वाभ्यामग्न्युपस्थानं दिवस्त्वा पीश्रमानलम् ॥ ९ ॥
आधत्तेऽजीजनन्नाग्निमञ्जलौ धारयेत्प्रजाः ।
जातं प्राणित्यहं पूर्वानलाधानेऽभिमन्त्रयेत् ॥ १० ॥
प्राणे त्वा पश्चिमाधानं सुगार्हेत्यभिमन्त्रणम् ।
इमाः प्राञ्चोऽभियान्त्योजस्त्रिभिरुद्यम्यतेऽनलः ॥ ११ ॥
प्राची त्रिभिः पूर्वयानं यदि वह्न्यभिमन्त्रणम् ।
प्राणं द्वाभ्यां पूर्ववह्नेस्स्थानं ह्यनुमन्त्रयेत् ॥ १२ ॥
उपरिस्थितिर्नर्यं पञ्च चतुर्वेदिं समीक्षते ।
इह गन्तुरुपस्थानं पञ्च सर्वाग्निमन्त्रणम् ॥
अत्राऽऽधानगता मन्त्रा द्वासप्ततिरुदीरिताः ॥ १३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ द्वितीयप्रपाठके द्वितीयोऽनुवाकः ।

---

प्रथमेऽनुवाक आधानमन्त्रा उक्ताः । तावताऽऽधानं समाप्तम् । अथ पञ्चस्वनुवाकेषु गवामयने केचिद्विशेषा उच्यन्ते । तत्रास्मिन्ननुवाके विषुवन्नामकं मुख्यमहः । तदुभयपार्श्ववर्तीनि चत्वार्यहान्युच्यन्ते । तदेतद्विवक्षते—

नवैतान्यहानि भवन्ति । नव वै सुवर्गा लोकाः ।
यदेतान्यहान्युपयन्ति । नवस्वेव तत्सुवर्गेषु लोकेषु
सत्रिणः प्रतितिष्ठन्तो यन्ति, इति ।

षष्ठे मासि षड्विंशतिसंख्याकेष्वहस्सु गतेष्ववशिष्टानि चत्वार्यहानि तत ऊर्ध्वं विषुवन्नामकमेकं मुख्यमहः । ततोऽप्यूर्ध्वमुत्तरमासषट्कस्याऽऽदौ चत्वार्यहानीत्येवमेतानि नवसंख्याकान्यहान्यनुष्ठेयानि । अष्टाभिर्लोकपालैः परिपालिता अष्टसंख्याकाः स्वर्गा लोकास्तेषां मध्ये कश्चिदूर्ध्वदिग्वर्ती स्वर्ग इत्येवं नवसंख्याकाः स्वर्गाः । तेषु नवस्वपि तेन यथोक्तानुष्ठानेन प्रतिष्ठां प्राप्नुवन्तो गच्छन्ति ।

अत्र केचिच्छाखान्तरीयं पक्षमुपन्यस्यति—

अग्निष्टोमाः परःसामानः कार्या इत्याहुः । अग्निष्टोमसंमितः सुवर्गो लोक इति । द्वादशाग्निष्टोमस्य स्तोत्राणि । द्वादश मासाः संवत्सरः, इति ।

परांस्युत्कृष्टतराणि सामानि येष्वहर्विशेषेषु ते परःसामानः । तेषु विषुवतोऽह्नः पुरस्तादुपरिष्टाच्च त्रयस्त्रयस्ते षडप्यग्निष्टोमात्मकाः कर्तव्या इति शाखान्तराध्यायिन आहुः । तत्रायं हेतुः । अग्निष्टोमेन सदृशः स्वर्गस्तत्कथमिति तदुच्यते । अग्निष्टोमस्य द्वादशसंख्याकानि स्तोत्राणि विद्यन्ते । प्रातःसवने बहिष्पवमानाख्यमेकं स्तोत्रं चत्वार्याज्यस्तोत्राणि । माध्यंदिने सवने माध्यंदिनपवमानाख्यमेकं स्तोत्रम् । पृष्ठस्तोत्राणि चत्वारि । तृतीयसवन आर्भवपवमानाख्यमेकं स्तोत्रं यज्ञायज्ञियं द्वितीयम् । तदेवं द्वादश स्तोत्राणि । संख्यासाम्यान्मासद्वारा संवत्सरसंपत्तौ सत्यां स्वर्गवासिना संवत्सरदेवेनाग्निष्टोमः समो भवति ।

तदेतं शाखान्तरपक्षं दूषयित्वा स्वपक्षं विधत्ते—

तत्तन्न सूक्ष्यम् । उक्थ्या एव सप्तदशाः परःसामानः कार्याः ( १ ) । पशवो वा उक्थानि । पशूनामवरुद्ध्यै, इति ।

परःसामाख्या अहर्विशेषा अग्निष्टोमरूपा इति यदन्यैरुक्तं तत्तथा न सूक्ष्यं न द्रष्टव्यम् । सूक्ष्म दर्शन इति धातुः । कथं तर्हीति तदुच्यते । । उक्थ्यनामकानि द्वादशेभ्यः स्तोत्रेभ्य उपरितनानि त्रीणि स्तोत्राणि यस्मिन्क्रतौ सोऽयमुक्थ्यः । तादृशा एव परःसामाख्या अहर्विशेषाः सप्तदशस्तोमयुक्ताः

कर्तव्याः । यानि त्रीण्युक्थ्यस्तोत्राणि तानि पशुप्राप्तिहेतुत्वात्पशव एव । तस्मादुक्थ्यानुष्ठानं पशुप्राप्तये भवति ।

उभयपार्श्ववर्तिभ्यः परःसामाख्येभ्योऽहर्विशेषेभ्यः पुरस्तादुपरिष्टाच्च द्वे अहनी विधत्ते—

विश्वजिदभिजितावग्निष्टोमौ, इति ।

विश्वजिदाख्यो योऽयमेकाहः स उक्थ्येभ्यः पुरस्तात्कर्तव्यः स च षष्ठे मासि सप्तविंशे दिने प्राप्नोति । अभिजिदाख्योऽपर एकाहः स च परःसामभ्य उपरिष्टात्कर्तव्यः । तथा सति विषुवत उपरितने मासि चतुर्थदिने प्राप्नोति । तावेतावग्निष्टोमौ द्वादशस्तोत्रयुक्तावेव कार्यौ ।

अथ पूर्वोक्तान्यहानि प्रशंसति—

उक्थ्याः सप्तदशाः परःसामानः । ते सꣳस्तुता विराजमभिसंपद्यन्ते । द्वे चर्चावतिरिच्येते । एकया गौरतिरिक्तः । एकयाऽऽयुरूनः । सुवर्गो वै लोको ज्योतिः । ऊर्ग्विराट् ( २ ) । सुवर्गमेव तेन लोकमभिजयन्ति, इति ।

विषुवतः पुरस्तादुपरिष्टाच्च सप्तदशस्तोमयुक्ताः परःसामाख्या अहर्विशेषा उक्थ्यरूपा ये पूर्वं विहिताः सन्ति तेषु विद्यमानाः स्तोत्रविशेषा विराड्दशसंख्यां संपद्यन्ते । तत्प्रकारस्तु सामवेदविहितप्रकारेण गणयित्वा द्रष्टव्यः । ते च परःसामानः पूर्वस्मिन्पक्षे ज्योतिर्गौरायुरित्येवमनुक्रमेण कर्तव्याः । उत्तरस्मिन्पक्ष आयुर्गौर्ज्योतिरित्येवं व्युत्क्रमेण कर्तव्याः । तत्र तत्र सामवेदोक्तप्रकारेण गोनामकः क्रतुरेकया स्तोत्रियया दशसंख्यातोऽतिरिच्यते । आयुर्नामकः क्रतुरेकया न्यूनः । तयोरुभयोर्मेलनेन पुनरपि षट्संख्या पूर्यते । किंचैतेषु योऽयं ज्योतिराख्योऽहर्विशेषः स स्वर्गप्रकाशकत्वात्स्वर्ग एव । या च विराड्रूपा लक्षणभूता दशसंख्या सेयमूर्ग्रसरूपा । तेन तादृशेन परःसामानुष्ठानेन स्वर्गं लोकमभिजयन्तीति ।

१ ग. "विरड्" । २ क. "ख्यो ह्यविशे" ।

अथैतेषु षट्सु परःसामसु पृष्ठस्तोत्रगतानि क्रमेण विधत्ते—

यत्परꣳ राथंतरम् । तत्प्रथमेऽहन्कार्यम् । बृहद्द्वितीये । वैरूपं तृतीये । वैराजं चतुर्थे । शाक्करं पञ्चमे । रैवतꣳ षष्ठे । तद्दु पृष्ठेभ्यो नयन्ति, इति ।

पूर्वपक्षवर्तिनि प्रथमे परःसाम्नि ज्योतिराख्ये रथंतरेण निष्पाद्यं राथंतरं यत्पृष्ठस्तोत्रं तत्कर्तव्यम् । द्वितीयेऽह्नि गोनामके बृहत्साम्नि निष्पाद्यं पृष्ठस्तोत्रं कार्यम् । आयुर्नामके तृतीये वैरूपसामयुक्तं पृष्ठस्तोत्रं कार्यम् । विषुवत ऊर्ध्वभाविन्यायुर्नाम्नि चतुर्थे परःसाम्नि वैराजसामयुक्तं पृष्ठस्तोत्रम् । पञ्चमे गोनाम्नि शाक्करसामयुक्तं पृष्ठस्तोत्रम् । ज्योतिर्नाम्नि षष्ठे रैवतसामयुक्तं पृष्ठस्तोत्रम् । तदु तेनैव प्रकारेणानुतिष्ठन्त एतान्यहानि पृष्ठेभ्यः पृष्ठ( ष्ठ्य )षडहगतेभ्योऽहोभ्य उपरि नयन्ति । यद्यप्येतानि ज्योतिरादीन्यभिप्लवषडहगतान्यहानि तथाऽपि रथंतरादिपृष्ठस्तोत्रयोगात्पृष्ठ(ष्ठ्य)-षडहगतान्येव संपद्यन्त इत्यर्थः ।

अथैतेष्वहःस्वतिग्राह्यविशेषान्विधत्ते—

संतनय एते ग्रहा गृह्यन्ते ( ३ ) । अतिग्राह्याः परःसामसु । इमानेवैतैर्लोकान्संतन्वन्ति, इति ।

संहितायां तृतीयकाण्डे तृतीयप्रपाठके—"देवा वै यद्यज्ञेन नावारुन्धत" इत्यस्मिन्षष्ठेऽनुवाके परःशब्दाभिधेयास्त्रयोऽतिग्राह्या विहिताः । तत्र "अग्न्यायुस्त्वौषधीभ्यो गृह्णामि" इति प्रथमस्य मन्त्रः । "ओषधीभ्यस्त्वा प्रजाभ्यो गृह्णामि" इति द्वितीयस्य मन्त्रः । "प्रजाभ्यस्त्वा प्रजापतये गृह्णामि" इति तृतीयस्य मन्त्रः । एभिर्मन्त्रैः परःसामसु ज्योतिर्गौरायुरित्येतेष्वहःसु अतिग्राह्यनामका ग्रहाः संतनयः संतता ग्रहीतव्याः । प्रथमेऽह्नि प्रथमो द्वितीयेऽह्नि द्वितीयस्तृतीयेऽह्नि तृतीय इत्येवं सांतत्यम् । एतैः संततैर्ग्रहैरेतैरिमान्भूरादींस्त्रीँल्लोकान्संततान्कुर्वन्ति ।

अथ विषुवत ऊर्ध्वभाविषु परःसामसु व्युत्क्रमेण तानेव ग्रहान्विधत्ते—

मिथुना एते ग्रहा गृह्यन्ते । अतिग्राह्याः परःसामसु । मिथुनमेव तैर्यजमाना अवरुन्धते, इति ।

एते ग्रहाः पूर्वेष्वहःस्वनुक्रमगता उत्तरेष्वहःसु व्युत्क्रमगताः । एतच्च

संहितायामेव स्पष्टमाम्नातम्—"पूर्वेष्वहःस्वितः पराञ्चो गृह्यन्त उत्तरेष्वहः-स्वमुतोऽर्वाञ्चो गृह्यन्ते" इति । उत्तरगतान्यहान्यप्यायुर्गोज्योतिरित्येवं व्युत्क्रमगतानि । एवं च सति प्रथमषष्ठयोर्ज्योतिराख्ययोरह्नोरङ्ग इत्यादिमन्त्रयुक्तोऽतिग्राह्यो द्विरावृत्तः । गोनाम्नो द्वितीयपञ्चमयोरोषधीभ्य इतिमन्त्रयुक्तोऽतिग्राह्यो द्विरावृत्तः । आयुर्नाम्नोस्तृतीयचतुर्थयोः प्रजाभ्य इतिमन्त्रयुक्तोऽतिग्राह्यो द्विरावृत्तः । एवं सत्येते मिथुनरूपाः संपद्यन्ते । तैर्यजमाना मिथुनं प्राप्नुवन्ति ।

अथ विषुवद्दिने पृष्ठस्तोत्रगतं साम विधत्ते—

बृहत्पृष्ठं भवति । बृहद्वै सुवर्गो लोकः ।
बृहतैव सुवर्गं लोकं यन्ति, इति ।

बृहत्साम्नः स्वर्गप्राप्तिहेतुत्वात्तद्रूपत्वम् ।

पृष्ठस्तोत्रे सामविशेषं विधाय पवमानस्तोत्रे सामविशेषं विधत्ते—

त्रयस्त्रिꣳशि नाम साम । माध्यंदिने पवमाने भवति ( ४ ) । त्रयस्त्रिꣳशद्वै देवताः । देवता एवावरुन्धते , इति ।

त्रयस्त्रिंशीति कस्यचित्साम्नो नामधेयम् । तच्च साम माध्यंदिने पवमानाख्ये स्तोत्रे गायेत् । देवतानामियं संख्या—"त्रिꣳशच्च त्रयश्च गणिनः" इत्यादिमन्त्रे प्रसिद्धा ।

इदानीं विषुवत उत्तरेषु परःसामसु पूर्वोक्तविपरीतक्रमं विधत्ते—

ये वा इतः पराञ्चꣳ संवत्सरमुपयन्ति । न हैनं ते स्वस्ति समश्नुवते । अथ येऽमुतोऽर्वाञ्चमुपयन्ति । ते हैनꣳ स्वस्ति समश्नुवते । एतद्वा अमुतोऽर्वाञ्चमुपयन्ति । यदेवम् । यो ह खलु वाव प्रजापतिः । स उ वेवेन्द्रः ।

---

1 क. °म् । " यत्पूर्वे° ।

तदु देवेभ्यो नयन्ति (५), इति ।

कार्यो विराड् गृह्यन्ते पवमाने भवतीन्द्र एकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके द्वितीयाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

ये यजमाना इतो भूलोकरूपाद्दूभ्य इत्यादिमन्त्रयुक्तादतिग्राह्यादारभ्य पराञ्चमनुक्रमगतमेव संवत्सरक्रतुमनुतिष्ठन्ति ते यजमाना एनं क्रतुं स्वस्ति क्षेमेण न समश्नुवते न सम्यक्समाप्नुवन्ति । ये तु विषुवत ऊर्ध्वममुतो द्युलोकरूपात्प्रजाभ्यस्त्वेत्यादिमन्त्रयुक्तात्तृतीयादतिग्राह्यादारभ्यार्वाञ्चं व्युत्क्रमगतं संवत्सरक्रतुमनुतिष्ठन्ति त एव यजमाना एनं क्रतुं स्वस्ति क्षेमेण समापयन्ति । एवमतिग्राह्याणां व्युत्क्रमानुष्ठानं यदस्त्येतेनैव प्रकारेणामुतोऽन्तादारभ्यार्वाञ्चं व्युत्क्रमगतं संवत्सरमनुष्ठितवन्तो भवन्ति । तस्मादेवमनुतिष्ठेदित्यर्थः । यः संवत्सरसत्रात्मकः प्रजापतिः स एवेन्द्रो देवानामधिपतिः । तस्मात्कारणाद्देवेभ्यो नयन्ति । देवार्थमेवैनं क्रतुमधिष्ठितवन्तो भवन्ति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

अथ द्वितीयप्रपाठके तृतीयोऽनुवाकः ।

द्वितीयेऽनुवाके नवाहानि विहितानि । अथ तृतीयेऽनुवाके तेषां मध्यमेऽह्नि विषुवति केचिद्विशेषा उच्यन्ते । पूर्वत्र षड्दिनेषु पराञ्चोऽर्वाञ्चश्च येऽतिग्राह्या विहितास्तानुभयविधानस्मिन्विषुवत्यह्नि विधत्ते—

संततिर्वा एते ग्रहाः । यत्परःसामानः ।

विषूवान्दिवाकीर्त्यम् । यथा शालायै पक्षसी ।

एवꣳ संवत्सरस्य पक्षसी । यदेते न गृह्येरन् ।

विषूची संवत्सरस्य पक्षसी व्यवस्रꣳसेयाताम् ।

आर्तिमार्च्छेयुः । यदेते गृह्यन्ते । यथा शा-

लायै पक्षसी मध्यमं वꣳशमभिसमायच्छन्ति ।
(१) । एवꣳ संवत्सरस्य पक्षसी दिवाकीर्त्य-
मभिसंतन्वन्ति । नाऽऽर्तिमार्छन्ति, इति ।

परःसामशब्देन तदहर्गताः पूर्वोक्ताः पराञ्चोऽर्वाञ्चश्चातिग्राह्या लक्ष्यन्ते । तादृशा ये सन्ति ते संततिरूपा अविच्छेदकरज्जुस्थानीयाः । यत्तु दिवाकीर्त्यमहः सोऽहर्विशेषो विषूवान् । दिवैव कीर्त्यं सर्वमनुष्ठेयं न तु रात्राविति दिवाकीर्त्यम् । विष्वक्परःपरविपरीतत्वेन वर्तमानावुभौ पक्षौ यस्याहर्विशेषस्य सोऽयं विषूवान् । तदेतदत्र लौकिकदृष्टान्तेन स्पष्टी क्रियते । लोके प्रौढां शालां कुर्वन्तो मध्य उन्नतान्स्तम्भान्स्थापयित्वा तेषामग्रे तिर्यग्वंशं दीर्घं प्रतिष्ठाप्य तदाधारेणोभौ शालापक्षौ निर्मिमते। यथा लौकिकी शालैवमत्रापि संवत्सरसत्ररूपा शाला। तस्याश्च विषूवानेव स्तम्भाग्रगतवंशस्थानीयः। पूर्वोत्तरमासषट्कद्वयं पक्षद्वयस्थानीयम् । तत्र पूर्वोत्तरेषु परःसामसु षडहःसु मध्यमे च विषुवति गृह्यमाणा अतिग्राह्याः पृष्ठवंशपक्षद्वयबन्धनरज्जुस्थानीयाः। एवं सति यद्येतेऽतिग्राह्याः पर.सामसु विषुवति च न गृह्येरंस्तदा संवत्सरस्य पार्श्वद्वयवर्तिनौ पक्षौ विष्वग्गती सन्तौ विस्रस्तौ विनष्टौ भवेताम् । ततो यजमाना आर्तिं प्राप्नुयुः । यदि त्वतिग्राह्या गृह्यन्ते तदानीं यथा लोके शालायाः पक्षद्वयं मध्यमेन वंशेन सह पुरुषो रज्ज्वा दृढं बध्नात्येवमस्य संवत्सरसत्रस्य पक्षद्वयस्थानीयं मासषट्कद्वयं वंशस्थानीयस्य दिवाकीर्त्यस्योभयोः पार्श्वयोस्तेन दिवाकीर्त्येन सह दृढं संतन्वन्ति । तस्मिंश्च सांतत्ये सति यजमाना आर्तिं नाऽऽप्नुवन्ति । तस्मात्परःसामास्विव विषुवत्यपि सांतत्यायातिग्राह्याः कर्तव्या इति तात्पर्यार्थः ।

अथ विषुवत्यहनि स्तोमविशेषं ग्रहक्रमविशेषं च विधत्ते—

एकविꣳशमहर्भवति । शुक्राग्रा ग्रहा
गृह्यन्ते । प्रत्युत्तब्ध्यै सयत्वाय, इति ।

त्रिवृत्पञ्चदशसप्तदशापेक्षयाऽयमेकविंशस्तोम उन्नतः । एतदनुष्ठानेन वंशस्थानीयस्य विषुवतः प्रत्युत्तब्ध्यै प्रातिस्विकायोन्नतबन्धनाय भवति । ग्रहाणां चैन्द्रवायव्याग्रेयत्वं परित्यज्य शुक्राग्रत्वानुष्ठानेन सयत्वं भवति । यिञ् बन्धन इत्यस्माद्धातोरुत्पन्नः सयशब्दः । शुक्राग्रग्रहसामर्थ्येन दृढबन्धनं भवतीति भावः ।

अथ तस्मिन्पशुविशेषमतिग्राह्यविशेषं च क्रमेण विधत्ते—

सौर्य एतदहः पशुरालभ्यते । सौर्योऽतिग्राह्यो गृह्यते । अह्नेरेव रूपेण समर्धयन्ति । अथो अह्न एवैष बलिर्ह्रियते, इति ।

एतस्मिन्विषुवत्यह्नि सूर्यदेवताकः पशुरालम्भनीयः । अतिग्राह्यश्च सूर्यदेवताको ग्रहीतव्यः । तथा सति दिवाकीर्त्यस्याह्नः सूर्यसंबन्धेन रूपं समृद्धं भवति । अपि चैतस्याह्नः सूर्यसंबन्धरूप एव बलिः पूजा कृता भवति ।

विषुवद्दिनगतामतिग्राह्यसंख्यां प्रशंसति—

सप्तैतदहरतिग्राह्या गृह्यन्ते (२) । सप्त वै शीर्षण्याः प्राणाः । असावादित्यः शिरः प्रजानाम् । शीर्षन्नेव प्रजानां प्राणान्दधाति । तस्मात्सप्त शीर्षन्प्राणाः, इति ।

परःसामसंबन्धिनोऽह्नुयस्त्वोषधीभ्य इत्यादिमन्त्रसाध्याः पराञ्चोऽर्वाञ्चश्चातिग्राह्याः षट्संख्या विषुवति विहिताः । तेषां मध्ये सौर्य एक एवमेते सप्तसंख्याकाः शिरोगतच्छिद्रवर्तिनश्च प्राणाः सप्त मध्यातिग्राह्यस्य देव आदित्य ऊर्ध्ववर्तित्वात्प्रजानां शिरःस्थानीयः । तथा सति प्रजानां शिरस्येव प्राणाः स्थापिता भवन्ति । तस्माल्लोके सर्वत्र शिरसि सप्त प्राणा दृश्यन्ते ।

अथाष्टममतिग्राह्यं विधत्ते—

इन्द्रो वृत्रꣳ हत्वा । असुरान्पराभाव्य । स इमाँल्लोकानभ्यजयत् । तस्यासौ लोकोऽनभिजित आसीत् । तं विश्वकर्मा भूत्वाऽभ्यजयत् । यद्वैश्वकर्मणो गृह्यते (३) । सुवर्गस्य लोकस्याभिजित्यै, इति ।

पुरा कदाचिदिन्द्रो वृत्रं हत्वा तदीयानसुरांश्च तिरस्कृत्य लोकान्वशीकुर्व-

स्वर्गं न वशी चकार । ततः स्वयं विश्वकर्मा भूत्वा तं स्वर्गमभ्यजयत् । अतो वैश्वकर्मणातिग्राह्येण स्वर्गाभिजयो भवति ।

परेद्युरादितिदेवताकमतिग्राह्यं विधत्ते—

प्र वा एतेऽस्माल्लोकाच्च्यवन्ते । ये वैश्वकर्मणं गृह्णते । आदित्यः श्वो गृह्यते । इयं वा अदितिः । अस्यामेव प्रतितिष्ठन्ति, इति ।

वैश्वकर्मणस्य स्वर्गहेतुत्वात्तेनास्माल्लोकात्मच्यवन्ते प्रच्युता भवन्ति । तस्मादेतल्लोकप्रतिष्ठार्थमदितिदेवताकं गृह्णीयात् ।

योऽयं विषुवति वैश्वकर्मणोऽतिग्राह्यो यश्च परेद्युरादित्योऽतिग्राह्यस्तदुभयं प्रशंसति—

अन्योऽन्यो गृह्येते । विश्वान्येवान्येन कर्माणि कुर्वाणा यन्ति । अस्यामन्येन प्रतितिष्ठन्ति, इति ।

विषुवति वैश्वकर्मणाख्योऽन्यः परेद्युरादित्याख्योऽन्यो गृह्येते इत्येवमेकैकः पृथग्ग्रहीतव्यः । तत्र विषुवत्यनुष्ठितेनान्येन वैश्वकर्मणेन विश्वानि कर्माणि कुर्वाणा यजमानाः समाप्तिं प्राप्नुवन्ति । परेद्युरनुष्ठितेनादितिदेवताकेनान्येन भूमौ प्रतितिष्ठन्तीति ।

उत्तरेष्वपि दिनेषु पर्यायेणैतद्ग्रहद्वयं विधत्ते—

तावापराधात्संवत्सरस्यान्योऽन्यो गृह्येते, इति ।

संवत्सरसत्रस्य द्वावर्धौ । तत्र यः परोऽर्ध उत्तरषण्मासात्मकस्तत्समाप्तिपर्यन्तमेकस्मिन्दिने वैश्वकर्मणः परेद्युरादित्य इत्येवं ग्रहद्वयमनुष्ठेयम् ।

उत्तरमासषट्कस्योपान्त्ये दिने तयोरुभयोः प्रयोगं विधत्ते—

तावुभौ सह महाव्रते गृह्येते । यज्ञस्यैवान्तं गत्वा । उभयोर्लोकयोः प्रतितिष्ठन्ति, इति ।

महाव्रतदिवसो यज्ञस्यान्तः । परेद्युरेव सत्रसमाप्तिस्तत्र ग्रहणे सति यज्ञसमाप्तौ लोकद्वये प्रतिष्ठा भवति । सोऽयं ग्रहग्रहणप्रकारः सूत्रे स्पष्टमभिहितः—

१ क. °ख्योऽन्य इ° ।

" तानूर्ध्वानावृत्तांश्च विषुवति तेषां मध्ये सौर्यं उदुत्यं जातवेदसमित्येतस्मि-न्नेवाहनि वैश्वकर्मणमतिग्राह्याणामष्टमं गृह्णाति वाचस्पतिं विश्वकर्माणमिति । श्वोभूत आदित्यं महीमू षु मातरमिति तावेवमेव व्यत्यासं गृह्णात्यामहाव्रताचौ सह महाव्रत " इति ।

अथ विषुवति शस्त्रविशेषं विधत्ते—

अर्क्यमुक्थं भवति । अन्नाद्यस्यावरुद्ध्यै, (४) इति ।

समायच्छत्यतिग्राह्या गृह्यन्ते गृह्यते संवत्सरस्यान्योऽन्यो गृह्येते पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके द्वितीयाध्याये तृतीयः प्रपाठ(योऽनुवा)कः ॥ ३ ॥

---

अर्चनीयो देवोऽर्कस्तत्संबद्धमुक्थं शस्त्रमर्क्यं तच्छंसनीयम् । " अर्को वै देवानामन्नम् " इति श्रुत्यन्तरादन्नप्राप्तिर्युक्ता ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ द्वितीयप्रपाठके चतुर्थोऽनुवाकः ।

तृतीयेऽनुवाके विषुवद्दिनेऽतिग्राह्यविशेषा उक्ताः । अथ चतुर्थे तस्मिन्नेव दिने दिवाकीर्त्यनामानि सामान्युच्यन्ते । यद्विहितं पूर्वानुवाक एकविंशमह-र्भवतीति तदिह तावदादौ प्रशंसति—

एकविꣳश एष भवति । एतेन वै देवा एकविꣳ-शेन । आदित्यमित उत्तमꣳ सुवर्गं लोकमारोह-यन् । स वा एष इत एकविꣳशः । तस्य दशाव-स्तादहानि । दश परस्तात् । स वा एष विराज्यु-भयतः प्रतिष्ठितः । विराजि हि वा एष उभयतः प्रतिष्ठितः । तस्मादन्तरेमौ लोकौ यन् । सर्वेषु सुवर्गेषु लोकेष्वभितपन्नेति ( १ ), इति ।

एष विषुवानेकविंशस्तोमको भवति । एतेनैकविंशस्तोमेन पुरा देवा इतो भूलोकादुत्कृष्टतमं स्वर्गलोकं प्रत्यादित्यमारोहयन् । न केवलमेकविंशस्तोमयोगेनाह्न एकविंशत्वम् । किंत्वितोऽपि कारणात्स एष विषुवानेकविंशः । किं तत्कारणमिति तदुच्यते । तस्य विषुवतोऽधोभागेऽभिप्लवषडहव्यतिरिक्तानि दशाहानि विद्यन्ते । तद्यथा—पृष्ठ्यः षडहः, अभिजिदेकाहः, त्रयः परःसामानोऽहर्विशेषाः, इत्येवं दशाहानि । तथा विषुवत ऊर्ध्वमपि । तथा हि—आवृत्त्या त्रयः परःसामानः, अभिजिदेकाहः, पृष्ठ्यः षडहः, इत्येवं दशाहानि । सोऽयं विषुवानुभयतो दशसंख्यायुक्तत्वेन विराड्रूपेऽहःसंघे प्रतिष्ठितः । यस्मादेष विषुवानुभयतो विराजि प्रतिष्ठितस्तस्मादेतदीयेनैकविंशेन स्वर्गमारूढ आदित्योऽप्युभयतोऽस्मिन्संघरूपे विराजि प्रतिष्ठितः । अधस्तात्पञ्च शतानि रश्मयः । उपरिष्टात्पञ्च शतानि । यद्वा प्रधानभूता रश्मयोऽधस्ताद्दशोपरिष्टाद्दश । तस्माद्विराजि प्रतिष्ठितत्वादनयोर्लोकयोर्मध्ये संचरन्नादित्य ऊर्ध्वंस्थितेषु द्युलोकादिषु स्वर्गेष्वधःस्थितेषु भौमेषु पातालवर्तिषु च स्वर्गेषु स्वकीयरश्मिभिरभितप्यन्संचरति । एवमादित्यसदृशत्वादयं विषुवान्प्रशस्तः ।

अथ विषुवति दिवाकीर्त्यसामानि विधत्ते—

देवा वा आदित्यस्य सुवर्गस्य लोकस्य । पराचोऽतिपादादबिभयुः । तं छन्दोभिरदृꣳहन्धृत्यै । देवा वा आदित्यस्य सुवर्गस्य लोकस्य । अवाचोऽवपादादबिभयुः । तं पञ्चभी रश्मिभिरुदवयन् । तस्मादेकविꣳशोऽहन्पञ्च दिवाकीर्त्यानि क्रियन्ते । रश्मयो वै दिवाकीर्त्यानि, इति ।

स्वर्गलोकगतो योऽयमादित्यस्तस्य पराचोऽतिपादात्पुनरावृत्तिरहितादूर्ध्वभाविनोऽतिगमनाद्देवा भीता आदित्यो निरवधिकमूर्ध्वं गच्छति न तु स्वर्गे स्थास्यतीति भीतास्तत्परिहाराय तमादित्यं सवनगतैर्गायत्र्यादिभिश्छन्दोभिरदृंहन्स्तम्भितवन्तः । रज्जुभिर्बद्धमिवाकुर्वन् । तस्माद्धृत्यै छन्दांसि भवन्ति । ततो देवा आदित्यस्यावाचोऽवपादादधःपतनादबिभयुः । तत्परिहाराय पञ्चभी रश्मिभिरादित्यमुदवयन्नूर्ध्वमुत्तम्भितवन्तः । तस्मादेकविंशे

विषुवत्यह्नि दिवाकीर्त्यनामकानि पञ्च सामानि कर्तव्यानि। तानि च यथोक्तपञ्चरश्मिस्थानानि।

अथ सामान्यतो विहितानि पञ्च सामानि विशेषाकारेण विधत्ते—

ये गा॑यत्रे। ते गा॑यत्रीषूत्त॑रयोः पव॑मानयोः (२)। म॒हा॒दि॑वाकीर्त्य॑ꣳ होतुः॑ पृष्ठम्। वि॒कर्णं॑ ब्रह्मसाम। भा॒सो॑ऽग्निष्टोमः, इति।

गायत्रीछन्दोयुक्ते प्रातःसवने दिवैव कीर्तनीये भ्राजभासाख्ये ये सामनी ते एवोत्तरयोर्माध्यंदिनार्भवपवमानयोर्गायत्रीछन्दस्कास्वृक्षु गातव्ये। महादिवाकीर्त्यनामकं यत्साम तद्धोतृसंबन्धिपृष्ठस्तोत्रं कार्यम्। तथा विकर्णनामकं यत्तद्ब्रह्मसाम कार्यम्। तदेतदुभयं चतुर्षु पृष्ठस्तोत्रेषु प्रथमतृतीययोः संपद्यते। भासाख्यं यत्साम तत्तृतीयसवनेऽग्निष्टोमसाम कार्यम्। येनाग्निष्टोमः समाप्यते तदग्निष्टोमसाम।

एवं विषुवति सामानि विधाय पुनरप्युभयतः स्थितानां परःसाम्नां स्तुतिः क्रियते—

अथै॒तानि॒ परा॑णि। परै॒र्वै दे॒वा आ॑दि॒त्यꣳ सु॑व॒र्गं लो॒कम॑पारयन्। यद॑पा॑रयन्। तत्प॒रा॑णां पर॒त्वम्। पा॒रय॑न्त्येनं॒ परा॑णि। य ए॒वं वेद॑। अथै॒तानि॒ स्परा॑णि। स्परै॒र्वै दे॒वा आ॑दि॒त्यꣳ सु॑व॒र्गं लो॒कम॑स्पारयन्। यद॒स्पा॑रयन्। तत्प(त्स्प)रा॑णाꣳ स्पर॒त्वम्। स्पा॒रय॑न्त्येनꣳ स्परा॑णि। य ए॒वं वेद॑ (३), इति।

ए॒ति पव॑मानयोः स्परा॑णि पञ्च॑ च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके द्वितीयाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

पूर्वोक्तविधिव्यवच्छेदार्थोऽथशब्दः । एतानि पुरस्तादुपरिष्टाच्च कर्तव्यानि परःसामाख्यान्यहानि पराणि परशब्दाभिधेयानि । तत्कथमिति तदुच्यते । पुरा देवाः पराख्यैरेतैरहोभिरेवाऽऽदित्यं स्वर्गं लोकमपारयन्प्रापितवन्तः । अतः पारयन्त्येभिरिति व्युत्पत्त्या परत्वं संपन्नम् । य एवं परत्वं जानाति तमेनं पुरुषं पराख्यान्यहान्यभीष्टफलसमाप्तिं प्रापयन्ति । अपि चैतानि स्पर-शब्देनाप्यभिधीयन्ते । स्पारयति प्रीणयत्येभिरिति स्परत्वम् । अन्यत्पूर्ववत् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

अथ द्वितीयप्रपाठके पञ्चमोऽनुवाकः ।

चतुर्थे दिवाकीर्त्यनामकानि सामानि विहितानि । अथ पञ्चमे पशवोऽभि-धीयन्ते । यदुक्तं सूत्रकारेण—" अथ पशुक्लृप्तिराग्नेयं प्रायणीय आलभन्ते श्वोभूते सारस्वतीं मेषीमेवं विहितानेकादशिनानन्वहमालभन्ते सौर्यं विषुव-त्युपालभ्यं तेषामेवोपाकुर्वतां द्वादशाहीयस्य दशरात्रस्य सप्तदश उक्थ्यो द्वात्रिंशच्छतमेकादशिन्यो प्रवृज्यन्ते नवाहान्यतिरिच्यन्ते तेषु गव्यानतिरिक्त-पशूनालभन्ते वैष्णवं वामनमेकविंशमैन्द्राग्नं त्रिणवे वैश्वदेवं त्रयस्त्रिंशे द्यावापृथिव्यां धेनुं प्रथमे छन्दोमे तस्या एव वायव्यं वत्सं मध्यम आदि-त्यामविं वशामुत्तमे मैत्रावरुणीमविवाक्ये प्राजापत्यमृषभं तूपरं महाव्रतमा-ग्नेयमुदयनीयः " इति । तत्रोक्तान्वैष्णवान्विधातुं प्रस्तौति—

अप्र॑तिष्ठां॒ वा ए॒ते ग॑च्छन्ति । येषा॑ꣳ संव-त्स॒रेऽना॑प्तेऽथ । एका॒द॒शि॒न्या॒प्य॒ते, इति ।

येषां यजमानानामसमाप्ते संवत्सरसत्रे सति तत्समाप्तेः प्रागेव पश्वेका-दशिनी समाप्यते ते यजमानाः संवत्सरसंपूर्तिपर्यन्तं पश्वभावादप्रतिष्ठां गच्छन्ति । " आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः " इत्या-द्यनुवाके पञ्चमकाण्डगते पश्वेकादशिनी समाम्नाता । सेयं संवत्सरगतेषु दिनेषु प्रतिदिनमेकैकः पशुरित्येवं क्रमेण पुनः पुनरावर्तनीया । तथा सति द्विपञ्चाशदधिकशतत्रयसंख्याकेष्वहःसु द्वात्रिंशदेकादशिन्यः समाप्यन्ते । इत ऊर्ध्वं पुनरप्येकादशिनी कर्तुमशक्या । नवानामेवाह्नामवशिष्टत्वात्संवत्सर-पूरणाय तावदष्टाहान्यवशिष्टानि । मध्ये विषुवत एकस्याह्नोऽधिकस्य प्रवि-ष्टत्वादत्र नवाहावशेषः ।

1 ग. एकाह्नाँ ।

तेषु नवसु पश्वभावेन येयमप्रतिष्ठा प्राप्ता तां वारयितुं क्रमेण नव पशून्वैष्णवादीन्विधत्ते—

वैष्णवं वामनमालभन्ते । यज्ञो वै विष्णुः । यज्ञमेवाऽऽलभन्ते प्रतिष्ठित्यै । ऐन्द्राग्नमालभन्ते । इन्द्राग्नी वै देवानामयातयामानौ । ये एव देवते अयातयाम्नी । ते एवाऽऽलभन्ते (१) । वैश्वदेवमालभन्ते । देवता एवावरुन्धते । द्यावापृथिव्यां धेनुमालभन्ते । द्यावापृथिव्योरेव प्रतितिष्ठन्ति । वायव्यं वत्समालभन्ते । वायुरेवैभ्यो यथाऽऽयतनाद्देवता अवरुन्धे । आदित्यामविं वशामालभन्ते । इयं वा अदितिः । अस्यामेव प्रतितिष्ठन्ति । मैत्रावरुणीमालभन्ते (२) । मित्रेणैव यज्ञस्य स्विष्टꣳ शमयन्ति । वरुणेन दुरिष्टम् । प्राजापत्यं तूपरं महाव्रत आलभन्ते । प्राजापत्योऽतिग्राह्यो गृह्यते । अहरेव रूपेण समर्धयन्ति । अथो अह्न एवैष बलिर्ह्रियते । आग्नेयमालभन्ते प्रतिप्रज्ञात्यै, इति ।

प्राजापत्याभ्यां पश्वतिग्राह्याभ्यां महाव्रताख्यमहः प्रजापतिसंबन्धात्स्वानुकूलेन रूपेण समृद्धं भवति । अपि च प्रजापतिसंबन्धोऽस्याह्नोऽस्तीत्येवं पूजा च संपद्यते । आग्नेयेन च पशुनाऽग्निपकाशवद्बुद्धिपकाशरूपं प्रज्ञानं संपद्यते । स्पष्टमन्यत् ।

---

१ ग. °वैश्वदेवा° ।

तानेतान्पशून्देवताद्वारा प्रत्येकं प्रशस्य जातिद्वारा पुनः प्रशंसति—

अजपेत्वान्वा एते पूर्वैर्मासैरवरुन्धते । यदेते गव्याः पशव आलभ्यन्ते । उभयेषां पशूनामवरुद्ध्यै, इति ।

आग्नेयः कृष्णग्रीव इत्यादिकाः सर्वेऽप्यजास्तेष्वन्तिमः पेत्वो गालितवृषणः । अजाश्च पेत्वाश्चाजपेत्वास्तानजपेत्वानेव पशून्पूर्वैर्मासैरेते यजमानाः प्राप्नुवन्ति । इदानीं विधीयमानपशुयुक्तदिनेभ्यः पूर्वेषु मासेषु तादृशानामेव पशूनामालब्धत्वादेतेषु तु विधीयमानेषु पशुषु धेन्वादयो गव्याः सन्ति । तदालम्भने पशूनामुभयेषां पूर्वमालब्धानामजानामिदानीमालभ्यमानानां गव्यानां च प्राप्तिर्भवति ।

पुनरपि व्यतिरेकमुखेण तानेव पशून्प्रशंसति—

यदतिरिक्तामेकादशिनीमालभेरन् । अप्रियं भ्रातृव्यमभ्यतिरिच्येत । यद्द्वौ द्वौ पशू समस्येयुः । कनीय आयुः कुर्वीरन् । यदेते ब्राह्मणवन्तः पशव आलभ्यन्ते । नाप्रियं भ्रातृव्यमभ्यतिरिच्यते । न कनीय आयुः कुर्वते (३), इति ।

ते एवाऽऽलभन्ते मैत्रावरुणीमालभन्तेऽवरुद्ध्यै सप्त च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके द्वितीयाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

अत्रावशिष्टेष्वपि दिनेष्वेकादशिन्येवाऽऽलब्धव्येति दुराग्रहाद्यो मन्यते स प्रष्टव्यः किं वत्सरादूर्ध्वदिनद्वयेनातिरिक्ता सेयमेकादशिन्यालब्धव्या किंवा चरमयोर्द्वयोर्दिनयोर्द्वौ द्वौ पशू समस्याऽऽलब्धव्याविति । नाऽऽद्यः । दिनातिरेके सत्यप्रियस्य भ्रातृव्यस्याभिवृद्धिप्रसङ्गात् । न द्वितीयः । एकादशिन्या दिनसंपूर्णा(र्त्य)भावेनाऽऽयुःक्षयप्रसङ्गात् । अतो दोषद्वयपरिहारायानेन ब्राह्मणेनोक्ताः पशव आलम्भनीयाः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

अथ द्वितीयप्रपाठके षष्ठोऽनुवाकः ।

पञ्चमे वैष्णवाद्या नव पशवोऽभिहिताः । अथ षष्ठे महाव्रतमुच्यते । तत्राऽऽदौ तच्छब्दनिरुक्तिद्वारेण प्रशंसति—

प्रजापतिः प्रजाः सृष्ट्वा वृत्तोऽशयत । तं देवा भूतानाꣳ रसं तेजः संभृत्य । तेनैनमभिषज्यन् । महानववर्तीति । तन्महाव्रतस्य महाव्रतत्वम् । महद्व्रतमिति । तन्महाव्रतस्य महाव्रतत्वम् । महतो व्रतमिति । तन्महाव्रतस्य महाव्रतत्वम्, इति ।

प्रजासृष्टिव्यापारेण श्रान्तः प्रजापतिर्यदा शयनं कृतवांस्तदा देवाः सर्वेषां भूतानां मध्ये सारभूतं तेजः संपाद्य तेन तेजसा तमेनं श्रान्तं प्रजापतिं चिकित्सितवन्तः । ततोऽयं प्रजापतिर्महानभूदित्युक्तवन्तः । यदिदं रसरूपं तेजस्तदिदं महाव्रताख्ये विद्यमानं हविः । तथा सति महानववर्तिष्ठानेन कर्मणेति व्युत्पत्त्या तस्य कर्मणो महाव्रतनाम संपन्नम् । यद्वा कर्मणोऽस्य महाफलहेतुत्वेन महत्त्वान्महच्च तद्व्रतमिति तद्व्युत्पत्तिः । अथवा महतः प्रजापतेरौषधरूपत्वान्महतो व्रतमिति व्युत्पत्तिः ।

तस्मिन्महाव्रताख्येऽह्नि प्रधानभूतस्तोमं विधत्ते—

पञ्चविꣳशः स्तोमो भवति (१) । चतुर्विꣳशत्यर्धमासः संवत्सरः । यद्वा एतस्मिन्सवत्सरेऽधिप्राजायत । तदन्नं पञ्चविꣳशमभवत्, इति ।

एकस्मिन्सूक्ते विद्यमानानां तिसृणामृचामावृत्तिविशेषेण संपाद्यः पञ्चविंशतिसंख्यायुक्तः स्तोमः कर्तव्यः । तत्र चतुर्विंशतिसंख्ययाऽर्धमासद्वारेण संवत्सरसंपत्तिः । यच्चैतस्मिन्संवत्सरेऽधिकमन्नमुत्पन्नं तत्पञ्चविंशतिसंख्यापूरकमभवत् ।

एवं प्रशस्तेन पञ्चविंशतिस्तोमेन युक्तस्याह्नः स्थानविशेषं विधत्ते—

मध्यतः क्रियते । मध्यतो ह्यन्नमशितं धिनोति ।

अथो मध्यत एव प्रजानामूर्ध्वीयते, इति ।

संवत्सरस्य समाप्तिहेतोरतिरात्ररूपादन्तिमादह्नः पूर्वभावित्वेन संवत्सरमध्ये तदनुष्ठानम् । लोकेऽपि यदन्नमशितं सम्रात्यधिकं नात्यल्पं भवति तदेव मध्यमप्रमाणयुक्तं भोक्तारं प्रीणयति । अत एव भुक्तो रसः शरीरमध्य एव स्थाप्यते । तस्मात्संवत्सरमध्येऽनुष्ठानं प्रशस्तम् ।

तस्मिन्नपि मध्ये पुनर्विशेषेण स्थापनं विधत्ते—

अथ यद्वा इदमन्ततः क्रियते । तस्मादुदन्ते प्रजाः समेधन्ते । अन्ततः क्रियते प्रजननायैव, इति ।

अन्तिमादतिरात्रात्पूर्वेष्वहःसु योऽन्तः संवत्सरस्योपान्तरूपो देशस्तत्रैतदहः कर्तव्यम् । यद्यस्मादिदमेव महाव्रतमन्ते क्रियते तस्माल्लोकेषु कृषस्य कृष्यादिव्यापारस्यान्ते फलदशायां प्रजाः सम्यग्वर्धन्ते । तस्मात्प्रजावृद्ध्यर्थमितरेषामह्नामन्त एवैतत्कर्तव्यम् ।

अस्याह्नः पक्षिरूपत्वं परिकल्प्य तदवयवरूपेण स्तोमं विधत्ते—

त्रिवृच्छिरो भवति ( २ ) । त्रेधा विहितꣳ हि शिरः । लोम छवीरस्थि, इति ।

ऋक्त्रयात्मकमेकं सूक्तं तादृशानि त्रीणि सूक्तानि त्रिवृतोऽवयवा यस्य स्तोमस्य सोऽयं स्तोमस्त्रिवृत् । स च पक्ष्याकारस्य शिरःस्थानीयः । लोकेऽपि शिरस्त्रिधा निर्मितम् । लोम केशाः । छवीस्त्वक् । अस्थि प्रसिद्धम् । तदिदं शिरसस्त्रैविध्यम् ।

तस्य त्रिवृत्स्तोमस्य पञ्चदशादिस्तोमवदावृत्तगानशङ्कां वारयितुमूर्ध्वगानं विधत्ते—

पराचा स्तुवन्ति । तस्मात्तत्सदृगेव । न मेद्यतोऽनु मेद्यति । न कृश्यतोऽनु कृश्यति, इति ।

आवृत्तिराहित्यं परावत्वं तादृशेन त्रिवृता स्तुतिं कुर्युः । यस्माच्छिरःस्थानीयस्य त्रिवृत आवृत्तिर्नास्ति तस्माल्लोकेऽपि त्रिवृत्स्थानीयं तच्छिर एकरूपमेव मेद्यतः स्थौल्यं गच्छतः शरीरस्यापि संबन्धि भूत्वा स्वयं न मेद्यति

न स्थूली भवति । तथा कृश्यतः कृशीभवतः शरीरस्य संबन्धि भूत्वा स्वयं न कृशी भवति ।

अथ पक्षद्वयस्थानीयं स्तोमद्वयं विधत्ते—

पञ्चदशोऽन्यः पक्षो भवति । सप्तदशोऽन्यः ।
तस्माद्वयाꣳस्यन्यतरमर्धमभिपर्यावर्तन्ते । अन्य-
तरतो हि तद्गरीयः क्रियते (२), इति ।

यस्मादत्रान्यतरत एकस्मिन्पक्षरूपे सप्तदशाख्ये स्तोमे तत्स्तोत्रं गरीयोऽधिकावृत्तिरूपम् । यस्माल्लोकेऽपि पक्षिण आकाशे गच्छन्तः पर्यावर्तमाना दक्षिणं वामं वाऽन्यतरमर्धमभिलक्ष्य प्रवृद्धमिव कृत्वा पर्यावर्तन्ते ।

योऽयं पूर्वत्र विहितः पञ्चविंशः स्तोमो भवतीति । तं मध्यशरीरत्वकल्पनया प्रशंसति—

पञ्चविꣳश आत्मा भवति । तस्मा-
न्मध्यतः पशवो वरिष्ठाः, इति ।

आत्मा पक्ष्याकारस्य महाव्रतस्य मध्यशरीरम् । तस्मादयं पञ्चविंशस्तोम इतरेभ्यस्त्रिवृदादिस्तोमेभ्यो भूयांस्तस्मात्पशवो मध्यशरीरभागे वरिष्ठाः स्थौल्ययुक्ता दृश्यन्ते ।

अथ पुच्छस्थानीयं स्तोमान्तरं विधत्ते—

एकविꣳशं पुच्छम् । द्विपदासु स्तुवन्ति प्रतिष्ठित्यै, इति ।

योऽयमेकविंशस्त्र्यावृत्तिरूपः स्तोमस्तत्पक्षिरूपस्य महाव्रतस्य पुच्छम् । तं चैतस्तोमं द्विपदास्वृक्षु स्तुवन्ति । पादद्वयेन हि मनुष्याः प्रतितिष्ठन्ति ।

त्रिवृदादिस्तोमानामृत्विजां च समुच्चयं विधत्ते—

सर्वेण सह स्तुवन्ति । सर्वेण ह्यात्म-
नाऽऽत्मन्वी । सहोत्पतन्ति, इति ।

योऽयं त्रिवृदादिकः पञ्चविंशान्तः स्तोमसंघस्तेन सर्वेणापि स्तुतिं कुर्युः । ऋत्विजश्च सर्वे सहैव स्तुतिं कुर्युः । यस्माल्लोके सर्वेणाऽऽत्मना कृत्स्नेनाप्यवयवसंघेन पक्षपुच्छादिना पतङ्ग आत्मन्व्यवयवी भवति न त्वेकैकेनावयवेन ।

तस्मादत्रापि सर्वे स्तोमाः कार्याः । यस्माच्च लोके सर्वे पक्षिणः सहोत्पतन्ति तस्मादत्र सर्वेऽप्यृत्विजः सहैव स्तुतिं कुर्युः । अत एव च्छन्दोगा आमनन्ति—" सर्वे सहर्त्विजो महाव्रतेन स्तुवीरन् । अध्वर्युशिरसोद्गायेत् " इत्यादिना ।

तत्र कंचिद्विशेषं विधत्ते—

एकैकामुच्छिꣳषन्ति । आत्मन्नङ्गानि बद्धानि, इति ।

अध्वर्युप्रभृतयः स्वस्वस्तोत्रेण गानं कुर्वन्तः स्वकीयामन्तिमां स्तोत्रीयामुच्छिष्युः, न तु तया स्तुतिं कुर्युः । यतो लोके कस्मिंश्चिदात्मन्मध्यशरीरे सर्वाण्यवयवान्तराणि बद्धानि भवन्त्यतोऽत्रापि मध्यशरीरस्थानीयायामेकैकस्यां स्तोत्रीयायामवशेषितायामङ्गान्तराणि तत्राऽऽपादयितुं शक्यानि । अन्यथा निराधाराण्यङ्गानि स्युः । तां च तत्र तत्रावशिष्टां स्तोत्रीयामुद्गाता गायेत् । अत एव च्छन्दोगैराम्नायते—" एवं कुर्युरेकैकया स्तोत्रीययाऽस्तुतयोद्गातारमभिसमेयुः " इत्यादिना । संहितायामप्यस्तुतायां गानमुद्गातुराम्नायते—" एकैकयाऽस्तुतया समायन्ति दिग्भ्य एवान्नाद्यꣳ संभरन्ति ताभिरुद्गातोद्गायति दिग्भ्य एवान्नाद्यꣳ संभृत्य तेज आत्मन्दधते " इति ।

अथ हर्षहेतुव्यापारविशेषान्विधत्ते—

न वा एतेन सर्वः पुरुषः (४) । यदित

इतो लोमानि दतो नखान् । परिमादः

क्रियन्ते । तान्येव तेन प्रत्युप्यन्ते, इति ।

इयत्पूर्वमुक्तमेकैकस्तोत्रीयोच्छेषणेन सर्वाण्यङ्गानि स्वात्मनि बद्धानि भवन्तीति । तत्रायं पुरुषो लोमानीतः प्राप्तवान् । दतो दन्तानितः प्राप्तवान् । नखानितः प्राप्तवानिति । यदेतेन लोमदन्तादिप्राप्तिमात्रेण पुरुषः सर्वो नैव भवति । पुरुषस्य भोगसंपूर्णत्वं नास्ति । अतो भोगः परिपूर्यते । परिमादः परितो हर्षहेतवो विनोदव्यापाराः कर्तव्याः । तैर्व्यापारैस्तान्यङ्गानि भोगपरिपूर्णानि प्रत्युप्यन्ते स्थाप्यन्ते ।

सामान्यतो व्यापारविशेषा उक्ताः । अथ विशेषाकारेणैकं विधत्ते—

औदुम्बरस्तल्पो भवति । ऊर्ग्वा अन्नमुदुम्बरः । ऊर्ज एवान्नाद्यस्यावरुद्ध्यै, इति ।

आसन्दी चौदुम्बरी कार्या । उदुम्बरस्यान्नरसरूपत्वाचत्त्वाप्तिर्भवति । एतच्च संहितायामप्याम्नातम्—“ आसन्दीमुद्गाताऽऽरोहति साम्राज्यमेव गच्छन्ति ” इति ।

अथ तल्पे कर्तव्यं विधत्ते—

यस्यं तल्पसद्यमनभिजितꣳ स्यात् । स देवानाꣳ साम्यक्षे । तल्पसद्यमभिजयानीति तल्पमारुह्योद्गायेत् । तल्पसद्यमेवाभिजयति (५) । यस्य तल्पसद्यमभिजितꣳ स्यात् । स देवानाꣳ साम्यक्षे । तल्पसद्यं मा पराजैषीति तल्पमारुह्योद्गायेत् । न तल्पसद्यं पराजयते, इति ।

तल्पे मञ्चके सद्यं सदनमुपवेशनं तल्पसद्यम् । यद्युद्गाता पूर्वं दरिद्रः स्यात्तदा राजादियोग्ये तल्पेऽवस्थानं न प्राप्तं तादृशमुद्गाता यज्ञभूमौ देवानां समक्षे देशेऽवस्थाय तल्पेत्यादिमन्त्रं गायेत् । तस्यायमर्थः । धनिको भूत्वा तल्पेऽवस्थानं सर्वदा प्राप्नवानीति । स च तथैव प्राप्नोति । यद्युद्गाता पूर्वं धनिको भूत्वा तल्पावस्थानं प्राप्तवांस्तदानीमिमं मन्त्रं पठेत् । तस्य चायमर्थः । इदं तल्पावस्थानं कदाचिदपि मा पराजैष्यस्मिन्विषये मम पराजयो मा भूत् । कदाचिदपि मदीयं धनिकत्वं मा विनश्यत्विति ।

अथ होतुर्दोलां विधत्ते—

प्लेङ्खे शꣳसति । महो वै प्लेङ्खः । महस एवान्नाद्यस्यावरुद्ध्यै, इति ।

महस्तेजो दोलायास्तेजोहेतुत्वान्महस्त्वम् । अतस्तत्तेजसोऽन्नस्य च प्राप्त्यै भवति ।

अथ व्यापारान्तरं विधत्ते—

देवासुराः संयत्ता आसन् । त आदित्ये व्यार्य-

१ ग. न संस्यात् । ता° ।

च्छन्त । तं देवाः समजयन् ( ६ ) । ब्राह्मणश्च शूद्रश्च चर्मकर्ते व्यायच्छेते । दैव्यो वै वर्णो ब्राह्मणः । असुर्यः शूद्रः । इमेऽरात्सुरिमे सुभूतमक्रन्नित्यन्यतरो ब्रूयात् । इम उद्वासीकारिण इमे दुर्भूतमक्रन्नित्यन्यतरः । यदेवैषाꣳ सुकृतं या राद्धिः । तदन्यतरोऽभिश्रीणाति । यदेवैषां दुष्कृतं या राद्धिः । तदन्यतरोऽपहन्ति । ब्राह्मणः संजयति । अमुमेवाऽऽदित्यं भ्रातृव्यस्य संविन्दन्ते ( ७ ), इति ।

भवति भवति क्रियते पुरुषो जयत्यजयञ्जयत्येकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके द्वितीयाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

उद्धन्यमानं नवैतानि सन्ततिरेकविꣳश एषोऽप्रतिष्ठां प्रजापतिर्वृत्तः षट् ।
उद्धन्यमानꣳ शोचिष्केशोऽग्ने सपत्नानतिग्राह्या वैश्वदेवमालभन्ते पञ्चाशत् ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके द्वितीयोऽध्यायः ॥ २ ॥

---

देवाश्चासुराश्चायमादित्योऽस्माकमेव भूयादिति परस्परं कलहं कृतवन्तः । तत्र देवानां जयोऽभूत् । अतोऽत्रापि वेदिमध्ये ब्राह्मणो बहिः शूद्रश्चावस्थाय किंचिदार्द्रं चर्म परिमण्डलाकारं गृहीत्वा तद्विषये कलहं कुर्याताम् । तत्र देवस्वरूपो ब्राह्मणः । असुरस्वरूपः शूद्रः । तस्मिन्कलहावसर इमेऽरात्सुरिति मन्त्रं ब्राह्मणो ब्रूयात् । तस्यायमर्थः । इमे यजमानाः सत्रे समृद्धिं गताः शोभनं कर्म कृतवन्त इति । शूद्रस्तु मन्त्रान्तरं ब्रूयात् । तस्यायमर्थः । इमे यजमानाः कर्मव्याजेन धनहानिं कृत्वा देशमेतमुद्वासं निवासशून्यं कुर्वन्ति । तस्मादिमे दुर्व्यापारं कृतवन्त इति । एवं सत्येषां यजमानानां यत्सुकृतं परलोक-

हितं या चेह लोके समृद्धिस्तदुभयमन्यतरो ब्राह्मणः संपादयति । यदन्यत्किंचित्प्रमादकृतमेषां दुष्कृतं या चैषामसमृद्धिर्दारिद्र्यरूपा तदुभयमन्यतरः शूद्रो विनाशयति । निन्दाजनितेन हि क्लेशेन पापफलं सर्वमनुभूतम् । तत्र कलहे ब्राह्मणः सम्यग्जयेत् । तेन भ्रातृव्यस्य संबन्धिनममुमादित्यमेते यजमानाः सम्यग्लभन्ते ।

अस्य प्रपाठकस्यानुवाकार्थसंग्रहः—

आधानमन्त्रा आद्ये स्युर्नवाहानि द्वितीयके ।
गवामयनगानि स्युरतिग्राह्यास्तृतीयके ॥ १ ॥
दिवाकीर्त्यानि तुर्ये स्युः पञ्चमे पशवः श्रुताः ।
महाव्रतं तु षष्ठे स्यात्प्रपाठक उदीरितः ॥ २ ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे द्वितीयः प्रपाठकः समाप्तः ॥ २ ॥

---

( मूलक्रमेण—अष्ट० १ अध्या० २ अनु० ६ ( १६ ) ।
( भाष्यक्रमेण—का० १ प्रपा० २ अनु० ६ ( १६ ) ।

---

अथ तृतीयप्रपाठकारम्भः ।

तत्र प्रथमोऽनुवाकः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
गवामयनमाख्यातं द्वितीये हि प्रपाठके ।
यदनुक्तं संहितायां तत्सर्वमिह वर्णितम् ॥ २ ॥
तृतीये वाजपेयस्य ब्राह्मणं समुदीर्यते ।
दशानुवाकास्तेषु स्युः पुनराधानमादिमे ।
स्यात्पिण्डपितृयज्ञोऽन्ते वाजपेयस्तु मध्यतः ॥ ३ ॥

---

१ क. ॰चिदप्रकृ॰ ।

यत्संहितायामाख्यातं पुनराधानमत्र तु ।
तस्योक्तस्यानुवादेन विशेषः कोऽपि वर्ण्यते ॥ ४ ॥
वाजपेयस्य मन्त्रास्तु संहितायामुदीरिताः ।
मध्यवर्त्यनुवाकेषु तद्व्याख्यानमिहेर्यते ॥ ५ ॥
द्वितीये वाजपेयस्य विधिस्तस्य ग्रहाः परे ।
चतुर्थे पशवः प्रोक्ताः पञ्चमे रथयोजनम् ॥ ६ ॥
मर्यादाधावनं षष्ठे यूपारोहणमुत्तरे ।
अष्टमे त्वभिषेकः स्यादतिग्राह्यास्त्वनन्तरे ॥ ७ ॥
नवमान्ता द्वितीयाद्या वाजपेयावबोधिनः ।
यः पिण्डपितृयज्ञोऽसौ दशमे स्पष्टमीरितः ॥ ८ ॥
तृतीयस्यानुवाकार्था इत्येवं समुदीरिताः ।
वाजपेयब्राह्मणार्था मन्त्रैः सह पुरेरिताः ।
आद्यन्तावनुवाकौ तौ व्याख्यास्येते इह क्रमात् ॥ ९ ॥

तत्राऽऽद्येऽनुवाके पुनराधेयगतयोराज्यभागयोर्विशेषं विधातुमादावुपाख्यायिकामाह—

देवासुराः संयत्ता आसन् । ते देवा विजयमुपयन्तः । अग्नीषोमयोस्तेजस्विनीस्तनूः संन्यदधत । इदमु नो भविष्यति । यदि नो जेष्यन्तीति । तेनाग्नीषोमावपाक्रामताम् । ते देवा विजित्य । अग्नीषोमावन्वैच्छन् । तेऽग्निमन्वविन्दन्नृतुषु तस्मिन्नम् । तस्य विभक्तीभिस्तेजस्विनीस्तनूरवारुन्धत (१) । ते सोममन्वविन्दन् । तमघ्नन् । तस्य यथाभिज्ञायं तनूर्व्यगृह्णत । ते ग्रहा अभवन् । तद्ग्रहाणां ग्रहत्वम् । यस्यैवंविदुषो ग्रहा गृह्यन्ते । तस्य त्वेव गृहीताः, इति ।

यदा देवाश्चासुराश्च युद्धोद्युक्तास्तदा देवा विजयं प्राप्तुकामाः स्वकीयाः स्तेजस्विनीस्तनूरग्नीषोमयोः स्थापितवन्तः । तनुशब्देन शरीरवत्प्रियभूतधनमुपलक्ष्यते । तयोर्धनं स्थापयतां देवानामयमभिप्रायः । यदि कथंचिद्-स्मान्यदाऽसुरा जेष्यन्ति तदानीमिदमेव धनमस्माकं जीवनाय भविष्यतीति । ततः स्थापितेन तेन धनेन सह तावग्नीषोमौ पलायनमकुरुताम् । देवाः पुण्यवशेन विजयं प्राप्य सर्वत्राग्नीषोमावन्विष्य क्वचिदृतुषु वेषमाच्छाद्याव-स्थितमग्निमलभन्त । ऋतूनां बलमवष्टभ्यावस्थितत्वाद्बलादग्रहीतुमशक्ता देवा-स्तस्याग्नेरुत्कोचरूपेण चतस्रो विभक्तीर्दत्त्वा स्वकीयास्तनूर्धनरूपाः स्वीकृतवन्तः । ताश्च विभक्तयः सूत्रे स्पष्टमुदाहृताः—“ अग्नेऽग्नेऽग्नावग्नेऽग्निनाऽग्नेऽग्निमग्ने, इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्ददाति ” इति । “ समिधोऽग्न आज्यस्य वियन्तु तनूनपादग्न आज्यस्य वेतु ” इत्याद्यासु प्रयाजयाज्यासु संबुद्ध्यन्ता अग्निशब्दा आम्नाताः । तेभ्यः पुरस्तात्क्रमेण संबुद्धिसप्तमीतृतीयाद्वितीयाविभक्त्यन्ता अग्निशब्दाः प्रयुक्ताः । तेन तुष्टोऽग्निस्तदीयास्तनूर्दत्तवान् । अथ ते देवाः सोममन्विष्य लब्ध्वा तं ताडयित्वा तस्य सकाशात्स्वकीयास्तनूस्तत्तल्लक्षणेन सम्यगभिज्ञाय यथायथं गृहीतवन्तः । ते च तनुसमाना द्रव्यविशेषा ऐन्द्रवायवादिग्रहा अभवन् । देवैर्गृह्यन्त इति व्युत्पत्त्या ग्रहनाम संपन्नम् । यो यजमानस्तादृशं महिमानं विद्वान्गृह्णाति तस्यैव ग्रहा यथाशास्त्रं गृहीता भवन्ति ।

अथ यथोक्तविभक्तिविधिं मनसि निधाय तं विधिमुन्नेतुमुपोद्घातमाह—

नानाग्नेयं पुनराधेये कुर्यात् । यदनाग्नेयं पुनराधेये कुर्यात् । व्यृद्धमेव तत (२) । अनाग्नेयं वा एतत्क्रियते । यत्समिधस्तनूनपातमिडो बर्हिर्यजति, इति ।

यत्पुनराधेयं तस्मिन्ननाग्नेयं न कुर्यात् । अत एव सूत्रकारेणोक्तम्—“ सर्वमाग्नेयं भवति ” इति । अनाग्नेयकरणे पुनराधेयस्य समृद्धिहेतुत्वं न स्यात् । क्रियते चात्र समिदादिषु चतुर्षु प्रयाजेष्वनाग्नेयम् । तन्मन्त्रेषु देवतान्तराणां समिदादीनां श्रूयमाणत्वात् । सोऽयमाक्षेपरूप उपोद्घातः । अत्र प्रयाजानां चतुर्णामाग्नेयत्वसंपादनाय यथोक्तविभक्तीः कुर्यादिति विधिरुन्नेयः । प्रत्यक्षविधिश्च संहितायामाम्नातः—“ विभक्तयो भवन्ति वाचो विधृत्यै ” इति ।

इदानीमाज्यभागयोर्विशेषं विधत्ते—

उभावाग्नेयावाज्यभागौ स्याताम्, इति ।

प्रकृतावाद्य आज्यभाग आग्नेयः । द्वितीयः सौम्यः । अत्र तु द्वितीयोऽप्याग्नेयः कर्तव्यः ।

अत्रैवापरं विशेषं विधत्ते—

अनाज्यभागौ भवत इत्याहुः । यदुभावाग्नेयावन्वञ्चाविति । अग्नये पवमानायोत्तरः स्यात् । यत्पवमानाय । तेनाऽऽज्यभागः । तेन सौम्यः, इति ।

अत्र केचिदभिज्ञा एवमाक्षिपन्ति । यद्युभावप्याज्यभागावन्वञ्चावव्यवहितावाग्नेयावेव कुर्यात्तदानीमेतावाज्यभागावेव न भवतः । सौम्यस्याननुष्ठितत्वात् । सौम्यो हि सोपपत्तिकः प्रकृतावेवं विहितः—"देवलोकं वाऽग्निना यजमानोऽनुपश्यति पितृलोकꣳ सोमेनोत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायेवेति तस्मादुत्तरः सौम्यः कर्तव्यः" इति । अस्मिन्पक्षेऽभिज्ञस्यैवमुत्तरम्—अनाग्नेयत्वमसौम्यत्वं चेति दोषद्वयं वारयितुं पवमानायाग्नय उत्तर आज्यभागः कर्तव्यः । तत्राग्निः प्रत्यक्षमेव श्रूयते । पवमानविशेषणेन तु केवलाग्नेयत्वदोषवारणादाज्यभागत्वं सिध्यति । तावता सौम्यत्वमुपचरणीयम् । "अग्न आयूꣳषि पवसे" इत्यस्यां पुरोनुवाक्यायां कृतायामग्नये पवमानायायमुत्तर आज्यभागः स्यादिति तात्पर्यार्थः ।

प्रथमस्याऽऽज्यभागस्य प्राकृतीं पुरोनुवाक्यां बाधितुमन्यां विधत्ते—

बुधन्वत्याग्नेयस्याऽऽज्यभागस्य पुरोनुवाक्या भवति (३) । यथा सुप्तं बोधयति । तादृगेव तत्, इति ।

बुधिधातुर्यस्यामृच्यस्ति सेयं बुधन्वती । तस्यां क्रियमाणायां यथा लोके सुप्तं पुरुषं बोधयति तादृशमेव तद्भवति । अत्र सूत्रम्—"अग्निꣳ स्तोमेन बोधयेत्याग्नेयस्याऽऽज्यभागस्य पुरोनुवाक्या भवत्यग्न आयूꣳषि पवस इति सौम्यस्य" इति ।

पत्नीसंयाजमन्त्रेषु विशेषं विधत्ते—

अग्निर्यक्ताः पत्नीसंयाजानामृचः स्युः ।

तेनाऽऽग्नेयꣳ सर्वं भवति, इति।

अग्निपदेन युक्ता अग्निव्यक्ताः। "आप्यायस्व समेतु ते विश्वतः सोमवृष्णियम्" इत्येषा प्रथमस्य पत्नीसंयाजस्य पुरोनुवाक्या। तत्र सोमाग्ने वृष्णियमित्यग्निपदप्रक्षेपोऽग्नियुक्तत्वम्। यथा समिदादिप्रयाजेष्वग्निशब्दगतविभक्तिप्रयोगेणाऽऽग्नेयत्वमेवं पत्नीसंयाजानामप्याग्नेयत्वं संपद्यते।

अत्र चोद्यवादिनामाक्षेपं दर्शयति—

एकधा तेजस्विनीं देवतामुपैती-

त्याहुः। सैनमीश्वरा प्रदह इति, इति।

तेजोधिका देवतां यः पुमानेकधोपैति नैरन्तर्येण सेवते सा देवता तमेनं प्रदग्धुं समर्था भवति। तस्मात्पूर्वोक्तमग्निव्यक्तत्वं न कार्यमित्याक्षेपः।

तस्योत्तरं दर्शयति—

नेति ब्रूयात्। प्रजननं वा

अग्निः। प्रजननमेवोपैतीति, इति।

नास्ति प्रदाह इत्येवमुत्तरं ब्रूयात्। अग्नेर्विरोधिदाहकत्वेऽपि स्वकीयसेवकं प्रति प्रजननेनानुग्राहकत्वान्निरन्तरमग्निं सेवमानः प्रजोत्पत्तिमेव प्राप्नोतीति।

अत्र चोदकप्राप्तान्संभारानाधानमन्त्रांश्च पूर्वपक्षरूपेण निराचष्टे—

कृतयजुः संभृतसंभार इत्याहुः (४)। न

संभृत्याः संभाराः। न यजुः कार्यमिति, इति।

यजुःशब्देन घर्मः शिर इत्याद्या आधानमन्त्रा विवक्षिताः। संभारशब्देन सिकतादिसप्तपृद्विशेषा अश्वत्थोदुम्बरादिसप्तवानस्पत्यविशेषाश्च विवक्षिताः। प्रथमाधाने यजुषामुच्चरितत्वात्संभाराणां च संपादितत्वादस्यापि पुनराधेयस्याऽऽधानादत्यन्तभेदाभावेन यजुःसंभारयोः सिद्धत्वात्तदुभयं पुनर्न कर्तव्यमिति पूर्वः पक्षः। सिद्धान्तमाह—

अथो खलु। संभृत्या एव संभाराः।

कार्यं यजुः। पुनराधेयस्य समृद्ध्यै, इति।

अथोशब्देन पूर्वपक्षो निवर्तते । यद्यप्ययमर्थः संहितायामुक्तस्तथाऽप्यस्यानुवाकस्य तच्छेषत्वद्योतनाय पुनरनुवादः ।

अन्यं विशेषं विधत्ते—

तेनो॑पा॒ꣳशु प्रच॑रति । ए॒ष्य॑ इ॒व वा ए॒षः ।
यत्पु॑न॒राधे॑यः । यथो॑पा॒ꣳशु न॒ष्टमि॒च्छति॑
( ५ ) । ता॒दृगे॒व तत्, इति ।

तेन पुनराधेयेनाव्यक्तशब्दं यथा भवति तथाऽनुतिष्ठेत् । तत्रायं हेतुः । योऽयं पुनराधेयः स एव पुनरन्वेषणीय इव भवति । आधानेन संपादितस्याग्नेरुद्वासनेन विनाशे सति पुनः संपादनाय प्रवृत्तत्वात् । अत एव पुनराधेयविधिरेवमाम्नातः—"उद्वास्य पुनरादधीत" इति । अत्रान्वेषणे दृष्टान्तः । यथा लोके स्वगृहे चौरैरपहृतं नष्टं वस्तु चौरगृहेऽन्विच्छन्पुरुषो हस्तपादादिशब्दो यथा नोतिष्ठति तथैवान्विच्छति तादृगेव तद्द्रष्टव्यम् ।

विशेषान्तरं विधत्ते—

उ॒च्चैः स्वि॑ष्ट॒कृत॒मुत्सृ॑जति । यथा॑ न॒ष्टं वि॒त्त्वा प्रा॒हा॒-
यमिति॑ । ता॒दृगे॒व तत्, इति ।

स्विष्टकृद्विषयं मन्त्रमुच्चैरुच्चारयेत् । यथा लोके नष्टं वस्तु प्रयत्नविशेषेणान्विष्य कथंचित्तल्लब्ध्वा सर्वेषामग्रे मदीयोऽयं पदार्थ इत्येवं प्रकाशयति तद्वदेव तत् । तदेतत्सूत्रकार आह—" साभिधेनीप्रभृत्युपांशु यजुत्योत्तमादनूयाजादुच्चैः स्विष्टकृतम् " इति ।

ये पूर्वपक्षवादिनः सर्वाग्नेयत्वसिद्धान्तपक्षं दूषयन्तः स्वमतं पूर्वपक्षत्वेनोपन्यस्य परैर्निराकृतास्त एव वादिनः पुनरपि स्वकीयं मतं दृढीकृत्य सर्वाग्नेयत्वपक्षं दूषयन्ति तेषां मतमाह—

ए॒क॒धा तेज॑स्विनीं दे॒वता॑मु॒पैतीत्या॑हुः । सैनं-
मीश्व॒रा प्र॒दह॒ इति॑ । तत्त॒था नोपै॑ति । प्र॒जा-
जा॒नू॒या॒जेष्वे॒व विभ॑क्तीः कुर्यात् । य॒था॒पू॒र्वमा-
ज्य॑भागौ॒ स्याता॑म् । ए॒वं पत्नी॑सय॒ाजाः । तद्दे-

श्वानरवत्प्रजननवत्तरमुपैतीति, इति ।

अग्नेर्दाहकत्वात्सर्वमाग्नेयं कर्म प्रदाहायैव स्यात् । तत्पुनराधेयं तथा नोपैति । सर्वमाग्नेयं न कुर्यात् । किं तु प्रयाजानूयाजेष्वेवाग्निविषया विभक्तीः कुर्यात् । तत्र प्रयाजविभक्तय आपस्तम्बोक्ताः पूर्वं दर्शिताः । अनूयाजविभक्तिद्वयं त्वाश्वलायनेनोक्तम्—"देवं बर्हिरग्ने वसुवने वसुधेयस्य वेतु देवो नराशंसोऽग्नौ वसुवने वसुधेयस्य वेतु" इति । एवमुभयत्रैवाग्निविभक्तीः कृत्वा यावाज्यभागौ ये च पत्नीसंयाजास्ते सर्वे प्रकृतिवदेवानुष्ठेया न त्वाग्नेयत्वाय तत्र प्रयतितव्यम् । एवं सति तत्पुनराधेयकर्माग्निविषयाविभक्तिसद्भावाद्वैश्वानरवदग्नियुक्तगत एवातिशयेन प्रजननवच्च कृतं भवतीत्येवं स्वमतदार्ढ्यं संपादितम् ।

अत्र सर्वाग्नेयत्ववादिनां चोद्यमुद्भावयति—

तदाहुः । व्यृद्धं वा एतत् । अनाग्नेयं वा एतत्क्रियत इति, इति ।

द्वितीयाज्यभागस्याऽऽग्नेयत्वं पत्नीसंयाजानां चाग्निव्यक्तत्वं यदि न क्रियते तदानीमेतत्पुनराधेयमनाग्नेयं स्यात् ।

एतच्च समृद्धिहीनमिति वादिनां चोद्यं तस्योत्तरमाह—

नेति ब्रूयात् । अग्निं प्रथमं विभक्तीनां यजति ।
अग्निमुत्तमं पत्नीसंयाजानाम् । तेनाऽऽग्नेयम् ।
तेन समृद्धं क्रियत इति (६), इति ।

अरुन्धतैव तद्भवति संभृतसंभार इत्याहुरिच्छति पत्नीसंयाजा नव च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके तृतीयाध्याये प्रथमोऽनुवाकः ॥ १ ॥

---

एतत्पुनराधेयमस्मदुक्तप्रकारेणाऽऽज्यभागयोः पत्नीसंयाजानां च यथापूर्वत्वेऽपि समृद्धिहीनं न भवतीत्युत्तरं ब्रूयात् । कथमिति तदुच्यते । प्रथमं यागादौ प्रयाजगतविभक्तीनां संबन्धित्वादग्निर्यष्टव्यः । अवसाने च पत्नीसंयाजेषूत्तममग्निं यजेत् । तत्र च—"अग्निर्होता गृहपतिः" इत्याग्नेयो मन्त्र

आम्नातः। अत्र आज्यभागयोराग्नेयत्वेन तन्मध्यपातितं सर्वमाग्नेयं संपद्यते। तेन पुनराधेयं समृद्धं कुरुते।

अत्र मीमांसा। दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

बुधन्वत्त्वादिगुणको देवो वाच्योऽथ केवलः।
आद्यो देवगुणत्वेन मैवं मन्त्रगुणत्वतः॥ [ इति ]।

आधाने पवमानेष्टिष्वाज्यभागौ प्रकृत्य श्रूयते—"बुधन्वानाग्नेयः कार्यः पावकवान्सौम्यः" इति। तथा पुनराधेयेऽपि श्रूयते—"बुधन्वत्याग्नेयस्याऽऽज्यभागस्य पुरोनुवाक्या भवति" इति। अत्र निगमेषु "बुधन्वन्तमग्निमावह पावकवन्तं सोममावह" इत्येवं सगुणो देवो वक्तव्यः। कुतः। बुधन्वत्त्वादेर्देवगुणत्वात्। तथा हि। बुधशब्दोऽस्यास्तीति बुधन्वान्। न खल्वाज्यभागस्य देवताद्वारेण विना साक्षाद्बुधशब्दवत्त्वं संभवति। तस्माद्देवगुणत्वात्सगुणो देवो वक्तव्यः। मैवम्। बुधन्वत्त्वादेर्मन्त्रगुणत्वात्। न ह्याऽऽग्नेयशब्दो यागपरः। किं तु मन्त्रपरः। संभवति हि मन्त्रस्य साक्षादेव बुधशब्दप्रयोगः। "अग्निं स्तोमेन बोधय" इत्यस्मिन्मन्त्रे बुधिधातोः प्रयुक्तत्वात्। बुधन्वता विधिना चाऽऽग्नेयं मन्त्रान्तरं निवर्त्यते। न च तद्धितान्त आग्नेयपद उपसर्जनभूतो देवतावाचकोऽग्निशब्दो बुधन्वच्छब्देन विशेष्टुमर्हति। तस्मात्केवलोऽग्निशब्दो निगमे पठितव्यः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः॥ १॥

---

अथ तृतीयप्रपाठके द्वितीयोऽनुवाकः।

---

प्रथमेऽनुवाके पुनराधेयशेषोऽभिहितः। द्वितीयमारभ्य नवमान्तेष्वष्टस्वनुवाकेषु यद्वाजपेयब्राह्मणमाम्नातं तस्य संहितायां प्रथमकाण्डे सप्तमे प्रपाठके समाम्नातैर्मन्त्रैः सहास्माभिर्व्याख्यातत्वात्तत्रैवाक्षरार्थो द्रष्टव्यः। तात्पर्यं त्वनुवाकानामिहैवाऽऽदौ संगृहीतम्। *

---

* इत उत्तरं द्वितीयानुवाकमारभ्य नवमानुवाकान्तब्राह्मणस्य संहितामन्त्रैः सह व्याख्यातत्वाद्भाष्यकारैः पुनरत्र तद्व्याख्यानं न कृतम्। एतच्च द्वितीयमारभ्येत्यादितत्रैवाक्षरार्थो द्रष्टव्य इत्यन्तेन ग्रन्थेन भाष्यकारैरेव स्पष्टीकृतम्। अतस्तद्ब्राह्मणार्थजिज्ञासूनामत्रापि तदर्थज्ञानसौलभ्याय संहिताभाष्यान्तर्गतं तद्भाष्यं मन्त्रभाष्यसहितं धनुश्चिह्नान्तर्गतं यथास्थितमेवात्रास्माभिर्मुद्राप्यते, ब्राह्मणं तु क्रमप्राप्तबृहदाक्षरैरेव मुद्राप्यत इति सुधीभिरनुसंधेयम्।

( इत्थं षट्स्वनुवाकेषु दार्शिकयाजमानब्राह्मणशेषो वर्णितः। अथ देव सवितः प्रसुवेत्यादिषु षट्सु वाजपेयविषया आध्वर्यवमन्त्रा उच्यन्ते। तत्रा-स्मिन्सप्तमेऽनुवाके रथविषया मन्त्राः कथ्यन्ते। तेषां वाजपेयमन्त्राणां व्याख्यानं ब्राह्मणग्रन्थप्रथमकाण्डे तृतीयप्रपाठके द्वितीयमारभ्य नवमान्ते-ष्वष्टस्वनुवाकेष्वाम्नातम्। तत्र वाजपेयविधिर्ग्रहविधिः पशुविधिश्चाऽऽद्येषु त्रिष्वनुवाकेषु क्रमेणाऽऽम्नाताः। अनयोर्वाजपेयविषययोर्मन्त्रब्राह्मणयोर-त्यन्तविप्रकृष्टदेशवर्तित्वेन बुद्धिसांनिध्याभावाच्छ्रोतॄणां प्रतिपत्तिसौकर्याय पूर्वोक्तदार्शिकसौमिककाण्डवद्ब्राह्मणेन सहैव मन्त्रा व्याख्यायन्ते। तत्र च ब्राह्मणप्रथमानुवाके वाजपेयं विधातुं प्रस्तौति—

देवा वै यथादर्शं यज्ञानाहरन्त। योऽग्निष्टो-
मम्। य उक्थ्यम्। योऽतिरात्रम्। ते सहैव
सर्वे वाजपेयमपश्यन्। ते। अन्योन्यस्मै नाति-
ष्ठन्त। अहमनेन यजा इति। तेऽब्रुवन्।
आजिमस्य धावामेति (१)। तस्मिन्नाजि-
मधावन्। तं बृहस्पतिरुदजयत्। तेनायजत।
स स्वाराज्यमगच्छत्। तमिन्द्रोऽब्रवीत्।
मामनेन याजयेति। तेनेन्द्रमयाजयत्। सोऽग्रं
देवतानां पर्यैत्। अगच्छत्स्वाराज्यम्। अति-
ष्ठन्तास्मै ज्यैष्ठ्याय (२), इति।

देवानां मध्ये कश्चिदग्निष्टोमं ददर्श। अन्य उक्थ्यमपरोऽतिरात्रम्। ते च स्वस्वदर्शनमनतिक्रम्य तान्यज्ञानाहरन्तानुष्ठितवन्तः। ते देवाः सर्वे सहैव वाजपेयं दृष्ट्वाऽहमेव प्रथममनेन वाजपेयेन यजा इत्येवं विवदमानाः परस्परं प्रथमानुष्ठातृत्वलक्षणाय ज्यैष्ठ्याय नातिष्ठन्त ज्यैष्ठ्यं नाङ्गी चक्रुः। तत एव समयं चक्रुरस्माकं मध्य आजिं धावनेन यः कश्चिज्जयति स एव ज्येष्ठोऽस्त्विति। आजिधावनप्रदेशस्यावधिर्भूविशेषः। एवं समयं कृत्वा तस्मिन्वाजपेये विषये विजयायाऽऽजिमधावन्। तत्र तं आजप्रदे

प्रति धावन्बृहस्पतिरुत्कर्षेणाजयत् । इतरेभ्यः प्रथममवधिं परपर्व । ततः प्रथमं स एव तेन वाजपेयेनेष्ट्वा स्वाराज्यमपारतन्त्र्यरूपं महाराज्यमगच्छत्तत इन्द्रस्तं बृहस्पतिं संप्रार्थ्य तेन वाजपेयेनेष्ट्वा देवानां मध्ये ज्यैष्ठ्यत्वमपारतन्त्र्येण स्वर्गाधिपत्यलक्षणस्वाराज्यं चागच्छत् । अस्येन्द्रस्य ज्यैष्ठ्यमितरे सर्वे देवा मात्सर्यं परित्यज्याङ्गी चक्रुः ।

स्वाराज्यादिकामिनो वाजपेयं विधत्ते—

य एवं विद्वान्वाजपेयेन यजते । गच्छति स्वाराज्यम् । अग्रꣳ समानानां पर्येति । तिष्ठन्तेऽस्मै ज्यैष्ठ्याय, इति ।

अधिकारविशेषविधिमुन्नयति—

स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः, इति ।

स बृहस्पतिनाऽनुष्ठितः । एष इन्द्रेणानुष्ठितः । देवानां मध्ये बृहस्पतिर्ब्राह्मणजात्यभिमानी, इन्द्रः क्षत्रियजात्यभिमानी, ताभ्यामेवानुष्ठितत्वान्मनुष्येष्वपि ब्राह्मणराजन्ययोरेवात्राधिकारो न तु वैश्यस्य । अत एवाऽऽपस्तम्ब आह—“ शरदि वाजपेयेन यजेत ब्राह्मणो राजन्यो वार्द्धिकामः” इति ।

नामनिर्वचनं दर्शयति—

तं वा एतं वाजपेय इत्याहुः । वाजाप्यो वा एषः । वाजꣳ ह्येतेन देवा ऐप्सन्, इति ।

वाजो देवान्नरूपः सोमः पेयो यस्मिन्यागे स वाजपेय इत्येकं निर्वचनम् । यस्मादेतेन यज्ञेन देवा वाजं फलरूपमन्नमाप्तुमैच्छंस्तस्मादन्नरूपो वाजः पेयः प्राप्यो येन स वाजपेय इत्यपरनिर्वचनम् ।

सोमस्यैतद्यागसाधनत्वात्तदभेदेन यागं तद्वेदनं च स्तौति—

सोमो वै वाजपेयः । यो वै सोमं वाजपेयं वेद (३) । वाज्येवैनं पीत्वा भवति । आऽस्य वाजी जायते, इति ।

एवं वाजपेयगतं सोमं फलभूतान्नाभेदोपचारेण स्तौति—

अन्नं वै वाजपेयः । य एवं वेद ।

अत्त्यन्नम् । आऽस्यान्नादो जायते, इति ।

यागप्रतिपादकवेदाभेदोपचारेण स्तौति—

ब्रह्म वै वाजपेयः । य एवं वेद । अत्ति ब्रह्म-

णाऽन्नम् । आऽस्य ब्रह्मा जायते ( ४ ), इति ।

ब्रह्मणा वेदाध्ययनसंपादितया गुरुदक्षिणयेत्यर्थः । ब्रह्मा वेदाध्यापकः ।

मन्त्रोच्चारणसाधनभूतवागभेदोपचारेण स्तौति—

वाग्वै वाजस्य प्रसवः । य एवं वेद ।

करोति वाचा वीर्यम् । ऐनं वाचा

गच्छति । अपिवतीं वाचं वदति, इति ।

देव सवितः प्रसुवेत्यादिमन्त्ररूपा वागेव वाजस्य वाजपेयस्य प्रसव उत्पत्तिहेतुः । य एतद्वेदिता स तया सभायां पाण्डित्यरूपतया वाचा वीर्यमतिशयं करोति । सभागतश्च विद्वत्संघः स्तुतिरूपया वाचा युक्तमेनमागच्छति । बहुधा प्रशंसतीत्यर्थः । पुनरपि वाजपेयवाक्यं श्रोष्यामि तदर्थं ज्ञास्याम्यनुतिष्ठामीत्येतादृशीं पुनरपीत्यपिशब्दोपेतां वाचं सर्वदा वदति । श्रद्धालुर्भवतीत्यर्थः ।

एकादशानुवाकगतानामुज्जितिमन्त्राणां पाठं विधातुं प्रस्तौति ।

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत् । स आत्म-

न्वाजपेयमधत्त । तं देवा अब्रुवन् । एष वाव

यज्ञः । यद्वाजपेयः ( ५ ) । अप्येव नोऽत्रा-

स्त्विति । तेभ्य एता उज्जितीः प्रायच्छत्, इति ।

प्रजापतिरितरेभ्यो देवेभ्योऽग्निष्टोमादीन्यज्ञान्विभज्य दत्त्वा वाजपेय

स्वस्मिन्नेव स्थापितवान् । देवाश्च वाजपेय एव मुख्यो यज्ञोऽतोऽस्माकमप्यत्र भागोऽस्त्वित्यब्रुवन् , स च तेभ्य उज्जितिमन्त्रान्प्रायच्छत् ।

विधत्ते—

ता वा एता उज्जितयो व्याख्यायन्ते । यज्ञस्य

सर्वत्वाय । देवतानामनिर्भागाय, इति ।

व्याख्यायन्ते व्याख्यायेरन्पठनीया इत्यर्थः । तत्पाठेन यज्ञस्य सर्वत्वमवैकल्यं भवति । देवताश्च भागयुक्ता भवन्ति । तेषु मन्त्रेष्वग्निरश्विनौ विष्णुः सोम इत्येवं तद्भागभाजो देवता आम्नाताः । अयं विधिरापस्तम्बेन स्पष्टं दर्शितः—" अग्निरेकाक्षरेणेति धावत्सूज्जितीर्यजमानं वाचयति " इति । उज्जितिमन्त्राणां रथधावनकाले पठनीयत्वाद्धावनविधिसमीप एवायं विधिरुत्कृष्टव्यः ।

अस्य च विध्युत्कर्षस्य प्रसङ्गेन बुद्धिस्थं पुरुषार्थत्वेन क्रतुप्रकरणादुत्कृष्टव्यं कंचित्प्रतिग्रहनिषेधं विधित्सुः प्रस्तौति—

देवा वै ब्रह्मणश्चान्नस्य च शमलमपाघ्नन् ।

यद्ब्रह्मणः शमलमासीत् । सा गाथा नाराश२ँ-

स्यभवत् । यदन्नस्य । सा सुरा (६), इति ।

ब्रह्मणो वेदस्य, शमलं मलिनभागम्, अपाघ्नन्नपनीतवन्तः । नराणां राजामात्यादीनामासमन्तात्प्रशंसनं नराशंसस्तद्विषया गीर्नाराशंसी ।

प्रतिग्रहनिषेधं विधत्ते—

तस्माद्गायतश्च मत्तस्य च न प्रतिगृह्यम् । यत्प्र-

तिगृह्णीयात् । शमलं प्रतिगृह्णीयात्, इति ।

यस्माल्लौकिकमनुष्यविषयगानसुरे मलरूपे तस्मात्तादृशगानपरस्य सुरापानमत्तस्य च धनं न प्रतिगृह्णीयात् ।

प्रकारान्तरेण वाजपेयं प्रशंसति—

सर्वा वा एतस्य वाचोऽवरुद्धाः। यो वाजपेययाजी। या पृथिव्यां याऽग्नौ या रथंतरे। याऽन्तरिक्षे या वायौ या वामदेव्ये। या दिवि याऽऽदित्ये या बृहति। याऽप्सु यौषधीषु या वनस्पतिषु, इति।

पृथिव्यन्तरिक्षद्युरूपं यल्लोकत्रयं तदभिमानिदेवतात्रयं रथंतरवामदेव्यबृहद्रूपमुक्तलोकाभिमानिदेवतामियं यत्सामत्रयमबोषधिवनस्पतिरूपं यच्चागोपयुक्तद्रव्यत्रयं तस्य सर्वस्य संबन्धिन्यो या वाचस्ताः सर्वा एतस्य वाजपेययाजिनोऽवरुद्धाः संपन्नाः। तत्र सामसंबन्धिन्यो वाचस्तदाश्रयभूता ऋच एव। पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वेत्येते यूपप्रोक्षणमन्त्राः पृथिव्यादिविषया वाचः। अग्न आयूंषीत्यादिराग्नेयातिग्राह्यमन्त्रोऽग्निविषया वाक्। आ वायो भूषेति ग्रहान्तरमन्त्रो वायुविषया वाक्। तुरीयादित्यसवनं त इन्द्रियमित्यादिग्रहान्तरमन्त्र आदित्यविषया वाक्। आप उन्दन्त्वित्यादिरब्विषया वाक्। ओषधे त्रायस्वैनमित्योषधिविषया वाक्। सूपस्था देवो वनस्पतिरित्यादिर्वनस्पतिविषया वाक्। एवं पृथिवी दीक्षेत्यादयो बहव उदाहार्याः। तदेवं सर्ववागवरोधाद्वाजपेयः प्रशस्तः।

तामिमां प्रशंसामुपसंहरति—

तस्माद्वाजपेययाज्यार्त्विजीनः। सर्वा ह्यस्य वाचोऽवरुद्धाः (७), इति

आर्त्विजीनो वाजपेययष्टा प्रशस्तानृत्विजोऽर्हति वाजपेयेनेष्ट्वा परार्थमार्त्विज्यं चार्हति।

धावामेति ज्यैष्ठ्याय वेदं ब्रह्मा जायते वाजपेयः सुराऽऽर्त्विजीन एकं च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके तृतीयाध्याये द्वितीयोऽनुवाकः॥ २॥

अथ तृतीयाध्याये तृतीयोऽनुवाकः।

इत्थमेकेनानुवाकेन वाजपेयो विहितः। अथान्येनानुवाकेन ग्रहविशेषा विधीयन्ते, तत्रातिग्राह्यान्विधातुं प्रस्तौति—

देवा वै यदन्यैर्ग्रहैर्यज्ञस्य नावारुन्धत। तदतिग्राह्यैरति-ग्राह्यावारुन्धत। तदतिग्राह्याणामतिग्राह्यत्वम्, इति।

अन्यैरैन्द्रवायवादिग्रहैर्यत्फलं न प्राप्नुवंस्तदपि फलमतिग्राह्यसंज्ञकैर्ग्रहैरतिशयेन गृहीत्वा स्वाधीनं कृतवन्तः। इतरग्रहानतिक्रम्य दुष्प्रापं फलं गृह्यत एभिरित्यतिग्राह्याः।

विधत्ते—

यदतिग्राह्या गृह्यन्ते। यदेवान्यैर्ग्रहैर्यज्ञस्य नावरुन्धे। तदेव तैरतिगृह्यावरुन्धे, इति।

प्रकृतिगतानामाग्नेयैन्द्रसौर्याणामतिग्राह्याणां चोदकादेव प्राप्तत्वात्तद्विधित्वभ्रान्तिव्युदासाय संख्याविशेषं विधत्ते—

पञ्च गृह्यन्ते। पाङ्क्तो यज्ञः। यावानेव यज्ञः। तमाप्त्वाऽवरुन्धे (१), इति।

धानाः करम्भ इत्यादिब्राह्मणोदाहरणेन यज्ञस्य पाङ्क्तत्वमसकृद्दर्शितम्। वक्ष्यमाणैरिन्द्राय जुष्टं गृह्णामीत्येतादृशैरिन्द्रलिङ्गैर्मन्त्रैरेव तद्ग्रहणं विधत्ते—

सर्वे ऐन्द्रा भवन्ति। एकधैव यजमान इन्द्रियं दधाति, इति।

सर्वेषामेकदेवताकत्वेनैकविधेन्द्रियधारकत्वम्।

ग्रहान्तराणि विधत्ते—

सप्तदश प्राजापत्या ग्रहा गृह्यन्ते। सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै, इति।

प्रजापतेः सप्तदशत्वं यो वै सप्तदशमित्यत्रोपपादितम्।

वक्ष्यमाणामयाविष्टा इत्यादिकामृचं कुविदङ्गेत्यादिकां च विषयविशेषेण व्यवस्थितां विधत्ते—

एकयर्चा गृह्णाति । एकधैव यजमाने वीर्यं दधाति, इति ।

तेषु ग्रहेषु ग्रहद्वयं विधत्ते—

सोमग्रहाँश्च सुराग्रहाँश्च गृह्णाति । एतद्वै देवानां परममन्नम् । यत्सोमः ( २ ) । एतन्मनुष्याणाम् । यत्सुरा । परमेणैवास्मा अन्नाद्येनावरमन्नाद्यमवरुन्धे, इति ।

मनुष्याणामवरजातीनामिति शेषः । शाल्यन्नादिकं परमान्नं यावनालप्रियंग्वादिकमवरम् । यद्वा परमान्नसंपत्तिस्तदानीमवरान्नसंपत्तिः किमु वक्तव्या । उक्तग्रहप्रकारश्चाऽऽपस्तम्बेन स्पष्टीकृतः—"ऐन्द्रमतिग्राह्यं गृहीत्वोपयामगृहीतोऽसि नृषदं त्वेति पञ्चैन्द्रानतिग्राह्यान्गृह्णाति तेषां पूर्ववत्कल्पः, षोडशिनं गृहीत्वाऽयाविष्टा जनयन्कर्वराणीति सप्तदश प्राजापत्यान्गृह्णाति तेषां षोडशिवत्कल्पः, कुविदङ्गेत्युपरिष्टात्तरे प्रतिप्रस्थाता सप्तदशभिरुपयामैः सुराग्रहान्गृह्णाति" इति ।

द्विविधग्रहविधिमनूद्य प्रशंसति—

सोमग्रहान्गृह्णाति । ब्रह्मणो वा एतत्तेजः । यत्सोमः । ब्रह्मण एव तेजसा तेजो यजमाने दधाति । सुराग्रहान्गृह्णाति । अन्नस्य वा एतच्छमलम् । यत्सुरा ( ३ ) । अन्नस्यैव शमलेन शमलं यजमानादपहन्ति, इति ।

ब्रह्मणो ब्राह्मणस्योचितं तेजः सोमोऽत एव तदभावे व्रात्यत्वमाम्नायते—' यस्य पिता पितामहो वा सोमं न पिबेत्स व्रात्यः ' इति ।

प्रकारान्तरेण विधिद्वयं प्रशंसति—

सोमग्रहाꣳश्च सुराग्रहाꣳश्च गृह्णाति । पुमान्वै सोमः । स्त्री सुरा । तन्मिथुनम् । मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय । आत्मानमेव सोमग्रहैः स्पृणोति । जायाꣳ सुराग्रहैः । तस्माद्वाजपेययाज्यमुष्मिँल्लोके स्त्रियꣳ संभवति । वाजपेयाभिजितꣳ ह्यस्य (४)

इति ।

स्पृणोति प्रीणयति । तस्माज्जायाभिमानिदेवतायाः सुराग्रहैस्तोषितत्वात्स्वर्गलोके स्वापेक्षितां रम्भादिस्त्रियमनुभवति तदेतत्सामर्थ्यमस्य युक्तं वाजपेयेन संपादितत्वात् ।

वर्गद्वयस्य पूर्वोत्तरकालविशेषं स्थानविशेषं च विधत्ते—

पूर्वे सोमग्रहा गृह्यन्ते । अपरे सुराग्रहाः । पुरोक्षꣳ सोमग्रहान्सादयति । पश्चादक्षꣳ सुराग्रहान् । पापवस्यसस्य विधृत्यै, इति ।

पुरोक्षं शकटस्याधस्तादक्षस्य पुरः । पापं सुराग्रहरूपं निन्दितं कर्म, वस्यसं वसुमत्तरं सोमग्रहरूपं पुण्यं कर्म, तयोर्विधृत्यै विभागेन धारणाय ।

व्यतिषङ्गं विधत्ते—

एष वै यजमानः । यत्सोमः । अन्नꣳ सुरा । सोमग्रहाꣳश्च सुराग्रहाꣳश्च व्यतिषजति । अन्नाद्येनैवैनं व्यतिषजति (५), इति ।

व्यतिषङ्गप्रकार आपस्तम्बेन दर्शितः—"व्यतिषजन्सोमग्रहैः सुराग्रहान्गृह्णाति पूर्वोऽध्वर्युर्गृह्णाति जघन्यः प्रतिप्रस्थाता" इति । व्यतिषङ्गं व्यतिषजतेरर्थः । अध्वर्युणा प्रथमे सोमग्रहे गृहीते सति प्रतिप्रस्थाता प्रथमं सुराग्रहं गृह्णीयात् । ततो द्वितीये द्वितीयं सोऽयं व्यतिषङ्गः ।

अध्वर्योरुद्द्रवणस्य विधास्यमानस्य मन्त्रमुत्पा (पपा. १) व्याचष्टे—

संपृचः स्थ सं मा भद्रेण पृङ्क्तेत्याह । अन्नं वै भद्रम् । अन्नाद्येनैवैनꣳ सꣳसृजति, इति ।

हे सोमग्रहा यूयं संपृचः स्थ संपर्कयोग्याः स्थ । अतो मां भद्रेण श्रेयसाऽन्नेन संपृङ्क्त संयोजयत । प्रतिप्रस्थातुरुद्द्रवणस्य विधास्यमानस्य करणभूतं मन्त्रमुत्पा( पपा ? )दयितुं प्रस्तौति—

अन्नस्य वा एतच्छमलम् । यत्सुरा । पाप्मेव खलु वै शमलम् । पाप्मना वा एनमेतच्छमलेन व्यतिषजति । यत्सोमग्रहाꣳश्च सुराग्रहाꣳश्च व्यतिषजति, इति ।

पाप्मेव पापरूपमेव लोकवेदनिन्द्यत्वात् ।

मन्त्रमुत्पा( पपा ? )द्य व्याचष्टे—

विपृचः स्थ वि मा पाप्मना पृङ्क्तेत्याह । पाप्मनैवैनꣳ शमलेन व्यावर्तयति ( ६ ) । तस्माद्वाजपेययाजी पूतो मेध्यो दक्षिण्यः, इति ।

हे सुराग्रहा यूयं विपृचः स्थ विभागयोग्याः स्थ । अतो मां पाप्मना विपृङ्क्त वियोजयत । तस्मात्पापव्यावृत्तत्वादयं शुद्धो यष्टुं दक्षिणां दातुं च योग्यः ।

अध्वर्युप्रतिप्रस्थात्रोरुद्द्रवणं विधत्ते—

प्राङुद्द्रवति सोमग्रहैः । अमुमेव तैर्लोकमभिजयति । प्रत्यङ्सुराग्रहैः । इममेव तैर्लोकमभिजयति, इति ।

तदेतदुद्द्रवणमापस्तम्बः स्पष्टी चकार—"संपृचः स्थ सं मा भद्रेण पृङ्क्तेति प्राङध्वर्युः सोमग्रहैरुद्द्रवति । विपृचः स्थ वि मा पाप्मना पृङ्क्तेति प्रत्यङ्प्रतिप्रस्थाता सुराग्रहैराहवनीयं न्यङ्क्ते सोमग्रहैरवतिष्ठन्ते मार्जालीयं न्यङ्क्ते सुराग्रहैः" इति ।

प्रचारं विधत्ते—

प्रतिष्ठन्ति सोमग्रहैः । यावदेव सत्यम् । तेन

सूयते, इति ।

प्रतिष्ठन्ति प्रचरन्ति जुह्वतीत्यर्थः । सत्यमवश्यंभावि फलं तद्यावदस्ति तेन सर्वेणायं यजमानः सूयते प्रेर्यते कृत्स्नं फलमुद्दिश्य सोमग्रहैर्हुतवान्भवतीत्यर्थः ।

विधत्ते—

वाजसृद्भ्यः । सुराग्रहान्हरन्ति । अनृतेनैव विशः

सꣳसृजति, इति ।

वाजसृतोऽन्नस्यार्जयितारो वैश्याः । तेभ्यः सुराग्रहान्सोमरहितान्दद्युः । सुरायाः शमलत्वेनानृतसदृशत्वाद्विशमधमजातिमनृतेनैव संयोजितवान्भवति ।

दक्षिणाविशेषं विधत्ते—

हिरण्यपात्रं मधोः पूर्णं ददाति । मधव्योऽसानीति, इति ।

मधु माक्षिकम् । मध्वादिभोग्यद्रव्ययुक्तो भवानीत्यनेनाभिप्रायेण मधुपूर्णं सुवर्णपात्रं दद्यात् ।

तद्दानस्य कृष्णलदानसाहित्यं विधत्ते—

एकधा ब्रह्मण उपहरति । एकधैव यजमान आयुस्तेजो दधाति (७), इति ।

कृष्णलसाहित्यं चाऽऽपस्तम्बो दर्शयति—"कृष्णलं कृष्णलं वाजसृद्भ्यः प्रयच्छति तानि प्रत्यादाय ब्रह्मणे ददाति मधुष्ठीलं च सौवर्णं शतमानस्य कृतम्" इति ।

आप्त्वाऽवरुन्धे सोमः शमलं यत्सुरा ह्रस्यैनं व्यतिषजति व्यावर्तयति सृजति चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके तृतीयाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ चतुर्थोऽनुवाकः ।

अग्न्याधानं तेनानुवाकेन समाप्यानुवाकान्तरेण पशून्विधातुं प्रस्तौति—

ब्रह्मवादिनो वदन्ति । नाग्निष्टोमो नोक्थ्यः । न षोडशी नातिरात्रः । अथ कस्माद्वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति । पशुभिरिति ब्रूयात्, इति ।

यज्ञशब्देनोद्देशत्यागरूपाः प्रयाजादयः प्रत्येकमभिधीयन्ते । तत्समूहरूप एव फलसाधनात्मा कर्मविशेषः क्रतुः । वेदवादिनो मिलित्वा परस्परमेवं विचारयन्ति । यज्ञाश्च क्रतवश्च सर्वेऽपि वाजपेयेऽन्तर्भूता इत्यस्ति प्रसिद्धिः । तत्कथमुपपद्यते । तथा हि । प्रयाजादीनां दीक्षणीयादिद्वारा तत्रान्तर्भावेऽप्य-ग्निष्टोमादीनामनन्तर्भावात् । तेषां ब्रह्मवादिनां मध्ये कश्चिद्बुद्धिमानेवमु-त्तरं ब्रूयात् । अग्निष्टोमादिगतैराग्नेयादिसवनीयपशुभिः क्रतवोऽन्तर्भूता इति ।

पशून्विधत्ते—

आग्नेयं पशुमालभते । अग्निष्टोममेव तेनावरुन्धे । ऐन्द्राग्नेनोक्थ्यम् । ऐन्द्रेण षोडशिनः स्तोत्रम् । सारस्वत्याऽतिरात्रम् (१) । मारुत्या बृहतः स्तोत्रम् । एतावन्तो वै यज्ञक्रतवः । तान्पशुभिरेवावरुन्धे, इति ।

आग्नेयादयोऽग्निष्टोमादीनां व्यावर्तकाः पशवः । षोडशिनो ग्रहस्य स्तोत्रं तेन स क्रतुरुपलक्ष्यते । सारस्वती मेषी सा चातिरात्रस्य व्यावृत्तिहेतुः । मारुती वशा तयाऽनूबन्ध्यया बृहत्सामसंबन्धि स्तोत्रमवरुन्धे, तेन च स्तोत्रेण वाजपेय उपलक्ष्यते तस्य चासाधारणत्वात् । तानेतान्पशुविधी-न्बौधायन उदाहरति—" आश्विनं गृहीत्वा षड्रशना आदाय यूपमभ्यैति स्वर्वन्तं यूपमुत्सृज्याथैनान्पशूनुपाकरोत्याग्नेयमैन्द्राग्नमैन्द्रं मारुतीं वशां सप्त-दश प्राजापत्यान्श्यामानेकरूपान्सारस्वतीमन्ततः " इति । आपस्तम्बस्त्वा-ग्नेयादीनां चोदकप्राप्तानामनुवादं मत्वा मेषीमारुत्योर्विधिमुदाहरति— " पशुकाले त्रीन्क्रतुपशूनुपाकृत्य मारुतीं वशामुपाकरोति सारस्वतीं च मेषीम् " इति ।

आत्मादिप्रीतिहेतुत्वेन भूम्यादिलोकजयहेतुत्वेन तेजःप्रभृतिधारणहेतुत्वेन च क्रतुपशून्प्रशंसति—

आत्मानमेव स्पृणोत्यग्निष्टोमेन । प्राणापानावुक्थ्येन । वीर्यꣳ षोडशिनः स्तोत्रेण । वाचमतिरात्रेण । प्रजां बृहतः स्तोत्रेण । इममेव लोकमभिजयत्यग्निष्टोमेन । अन्तरिक्षमुक्थ्येन (२) । सुवर्गं लोकꣳ षोडशिनः स्तोत्रेण । देवयानानेव पथ आरोहत्यतिरात्रेण । नाकꣳ रोहति बृहतः स्तोत्रेण । तेज एवाऽऽत्मन्धत्त आग्नेयेन पशुना । ओजो बलमैन्द्राग्नेयेन । इन्द्रियमैन्द्रेण । वाचꣳ सारस्वत्या । उभावेव देवलोकं च मनुष्यलोकं चाभिजयति मारुत्या वशया, इति ।

अत्राग्निष्टोमेनेत्यादिशब्दैस्तन्निष्पादका आग्नेयादिपशवो विवक्षिताः । पशुविधेः प्रस्तुतत्वात् । आग्नेयेन पशुनेत्यन्तिमपर्याय(ये) विधानाच्च ।

विधत्ते—

सप्तदश प्राजापत्यान्पशूनालभते । सप्तदशः प्रजापतिः (३) । प्रजापतेराप्त्यै, इति ।

तेषु पशुषु गुणद्वयं वाक्यभेदमङ्गीकृत्य विधत्ते—

श्यामा एकरूपा भवन्ति । एवमिव हि प्रजापतिः समृद्ध्यै, इति ।

पशूनामेकरूपत्वं नामैकविधशृङ्गपुच्छादिभिर्युक्तत्वम् । प्रजापतिशब्देनात्रेश्वरस्य हिरण्यगर्भशरीराद्यभिव्यक्तेः प्रागवस्था विवक्ष्यते, सा चावस्था

रूपमेव भवति । तम आसीत्तमसा गूढमिति श्रुतेः। जगद्रूपस्य नानात्वस्या- नुत्पत्तेरेकरूपत्वम्, एकमेवाद्वितीयमिति श्रुतेः । पशूनां जगदीश्वरेण साम्ये सति समृद्धिर्भवति ।

प्रकृतिभूतेऽग्नीषोमीये पशौ पर्यग्निकरणादूर्ध्वमविलम्बेनाऽऽलम्भस्य विहि- तत्वात्, अत्रापि चोदकपरम्परया तत्प्राप्तौ सहसाऽऽलम्भनं निषेधति—

तान्पर्यग्निकृतानुत्सृजति, इति ।

तदानीं नाऽऽलभेतेत्यर्थः ।

आलम्भस्य व्यवधाने कारणमाह—

मरुतो यज्ञमजिघांसन्प्रजापतेः । तेभ्य एतां

मारुतीं वशामालभत । तयैवैनानशमयत, इति ।

सप्तदशप्रजापतिरूपो यः प्रजापतेर्यज्ञस्तं यज्ञं मरुतः पर्यग्निकरणादूर्ध्वं हन्तुमुद्यताः । तदानीमुत्कोचरूपेण प्रजापतिर्मरुद्भ्यो वशामालभत, क्रुद्धा- न्मरुतस्तया वशया शमितवान् ।

प्राजापत्यानां संज्ञपनकालं विधत्ते—

मारुत्या प्रचर्य । एतान्संज्ञपयेत् । मरुत एव शम-

यित्वा (४) । एतैः प्रचरति । यज्ञस्याघाताय, इति ।

प्रचर्य मारुत्या वशाया वपां हुत्वेत्यर्थः ।

सप्तदशानां वपानां सह प्रचारं विदधाति—

एकधा वपा जुहोति । एकदेवत्या हि । एते ।

अथो एकधैव यजमाने वीर्यं दधाति, इति ।

विधत्ते—

नैवारेण सप्तदशशरावेणैतर्हि प्रच-

रति । एतत्पुरोडाशा ह्येते । अथो

पशूनामेव च्छिद्रमपिदधाति, इति ।

नीवारैर्निष्पन्नश्चरुर्नैवारः, सप्तदशसंख्याकैः शरावैर्निरुप्तः सप्तदशशरावः, तेनैव चरुणैतर्हि प्राजापत्यवपाहोमादूर्ध्वं प्रचरेत् । एष एव चरुः पशुपुरो-

दानस्थानीयो येषां प्राजापत्यपशूनां त एतत्पुरोडाशा अतः प्रकृतौ यथा वपया प्रचर्य पुरोडाशेन प्रचरति तद्वदत्रापि । किंच वपोत्खेदात्पशूनां यच्छिद्रं कर्मवैकल्यं भवति तदेतेन चरुणाऽपिहितं भवति ।

सारस्वत्या मेष्याऽङ्गप्रचारस्य कालविशेषं विधत्ते—

सारस्वत्यात्तमया प्रचरति । वाग्वै सरस्वती ।
तस्मात्प्राणानां वागुत्तमा । अथो प्रजापतावेव
यज्ञं प्रतिष्ठापयति । प्रजापतिर्हि वाक्, इति ।

सारस्वती यथोत्तमा चरमा भवति तथा प्रचरेत् । सप्तदशपश्वङ्गप्रचाराद्दूर्ध्वं प्रचरेदित्यर्थः । यस्मात्सारस्वत्या उत्तमत्वं तस्माल्लोकेऽपि सरस्वतीरूपा वाक्प्राणापानचक्षुःश्रोत्रादीनां मध्य उत्तमा, सभामध्ये विद्वदमात्यादेर्वाग्मिनः प्रागल्भ्यदर्शनात् । किंच प्रजापतेः सरस्वतीपतित्वात्तदभेदोपचारेण वाग्रूपत्वे सति सारस्वत्या समापनेन प्रजापतावेव यज्ञः समापितो भवति ।

सारस्वत्या मेष्याः किं(कं)चिद्गुणं विधत्ते—

अपन्नदती भवति । तस्मान्मनुष्याः
सर्वां वाचं वदन्ति (५), इति ।

अपतितदन्तोपेता मेषी कार्या । लोकेऽप्यपतितदन्ताः पुरुषाः सर्वाक्षराणि यथोक्तस्थानप्रयत्नोपेतान्येवोच्चारयन्ति ।

अतिरात्रमन्तरिक्षमुक्थ्येन प्रजापतिः शमयित्वोत्तमया प्रचरति षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके तृतीयाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ तृतीयाध्याये पञ्चमोऽनुवाकः ।

---

तदेवं ब्राह्मणगतेनानुवाकत्रयेण वाजपेयगता विधयो निरूपिताः । अथ मन्त्रव्याख्यानरूपान्ब्राह्मणानुवाकांस्तत्तन्मन्त्रैः सहैवोदाहरामः । तत्र प्रथममन्त्रस्य विनियोगं बौधायन आह—"दीक्षणीयां निर्वपन्सावित्रं जुहोति—

देव॑ सवितः॒ प्रसु॑व य॒ज्ञं प्रसु॑व य॒ज्ञप॑तिं॒ भगा॑य दि॒व्यो ग॑न्ध॒र्वः ।

के॒त॒पूः केतं॑ नः पुनातु वा॒चस्पति॒र्वाचं॑मद्य स्व॑दाति नः ॥

स्वाहेति, दीक्षाहुतीर्होष्यन्सावित्रं जुहोति, प्रायणीया निर्वप्स्यन्सावित्रं जुहोति " इति । हे सवितर्देव प्रेरकान्तर्यामिन्नस्मदीयं वाजपेययज्ञं प्रवर्तय, यज्ञपतिं यजमानं भगायानुष्ठानरूपायैश्वर्याय । दिवि भवो यो गन्धर्वः सवितुरनुग्रहात्केतान्पुनाति प्राणिनो विज्ञानानि शोधयति स्म सोऽस्माकं केतं वाजपेयविज्ञानं पुनातु शोधयेत् (शोधयतु)। वाचस्पतिश्च सवित्राऽनुज्ञातोऽद्यास्मिन्कर्मणि वाचमस्माभिः पठितान्वाजपेयमन्त्रान्स्वदाति स्वदयतु यथावत्सादयतु । अनेन मन्त्रेण होमं विधत्ते—

सा॒वि॒त्रं जु॑हो॒ति॒ कर्म॑णः कर्म॑णः पु॒रस्ता॑त्, इति ।

तदेतद्बौधायनेनैवोदाहृतम् ।

तत्तत्कर्मादौ होममुपपादयति—

कस्तद्वे॑दे॒त्या॑हुः । यद्वा॑जपे॒य॑स्य पू॒र्वं यद॑प॒रमिति॑ ।

स॒वि॒तृप्र॑सूत एव य॑थापू॒र्वं कर्मा॑णि॒ करोति॑, इति ।

यद्धक्रमैश्चोदकप्राप्तैः प्रत्यक्षविहितैश्चोदकस्य वाजपेयस्य यदङ्गं पूर्वभावि यच्च पश्चाद्भावि तन्मनुष्यः को वेदेति बुद्धिमन्त आहुः । सावित्रहोमे तु कृते सवित्रा प्रेरित एव सन्क्रममनुल्लङ्घ्य कृतवान्भवति प्रतिकर्म ।

तमेतं होमं कर्तुमशक्तं प्रति पक्षान्तरं विधत्ते—

सव॑ने सवने जुहोति । आ॒क्र॒म॑णमे॒व तत्सेतुं॒ यज॑मानः

कु॒रु॒ते । सु॒व॒र्गस्य॑ लो॒कस्य॒ सम॑ष्ट्यै, इति ।

उक्तेन त्रयाणां सवनानामादौ होमेन स्वर्गं प्राप्तुं सेतुस्थानीयमाक्रमणं कृतवान्भवति ।

अस्य मन्त्रस्य चतुर्थपादे स्वदनस्यान्नविषयस्य वाग्विषयत्वमुपयुक्तमिति शङ्कां निराकर्तुं व्याचष्टे—

वा॒चस्पति॒र्वाचं॑मद्य स्व॑दाति॒ न इत्या॑ह ।

वाग्वै दे॒वाना॑ं पु॒राऽन्न॑मासीत् । वाचं॑मे॒-

वास्मा॒ अन्न॑ँ स्वदयति ( १ ), इति ।

स्तुत्या देवैस्तु(वानां तृ)प्तत्वाद्वाचो देवान्नत्वम् ।

कल्पः—"रथ एष दक्षिणे श्रोण्यन्ते रथवाहन आहितो भवति तमुपसादयति—

इन्द्र॑स्य वज्रो॑ऽसि वार्त्र॑घ्नस्त्वयाऽयं वृत्रं व॑ध्यात्" इति ।

वार्त्रघ्नो वैरिघाती योऽयमिन्द्रस्य वज्रः, हे रथैवं त्वमसि । त्वया सहकारिणा सहितोऽयं यजमानो वृत्रं वैरिणं वध्यात् । रथवाहने काष्ठविशेषे स्थापिते गमनाय सज्जीकर्तुं तस्य रथस्य तस्मात्काष्ठादवरोहणं विधत्ते—

इन्द्र॑स्य वज्रो॑ऽसि वार्त्र॑घ्न इति

रथ॑मुपाव॑हरति विजि॑त्यै, इति ।

कल्पः—"अथैनं धूर्गृहीतमन्तर्वेद्यभ्यावर्तयन्ति—

वाज॑स्य नु प्र॑सवे मातरं॑ महीमदि॑तिं नाम वच॑सा करामहे ।

यस्या॑मिदं विश्वं भुव॑नमाविवेश तस्यां॑ नो देवः स॑विता धर्मं॑ साविषत्" इति ।

दक्षिणवेदिश्रोण्यन्ते रथवाहनादवरोपितं रथं सौमिकवेदिमध्ये प्रादक्षिण्येनाऽऽनयेदित्यर्थः । वाजस्य नु, अन्नस्यैव प्रसव उत्पत्तिनिमित्तं मातरमन्नस्य निर्मात्रीं महीं वेदरूपां पृथिवीमदितिं नामाखण्डनीयामेव वचसा स्तुत्या करामहे कुर्मः । यस्यां पृथिव्यामिदं सर्वं भूतजातं प्रविश्यावतिष्ठते तस्यां पृथिव्यां नोऽस्माकं धर्मं धारणं सविता देवः साविषदनुजानातु । अनेन मन्त्रपाठेन भूमिं तदाश्रितं जगच्च स्वाधीनत्वेन संपादयतीत्येवं व्याचष्टे—

वाज॑स्य नु प्र॑सवे मातरं॑ मही॑मित्या॑ह ।

यच्चैवेयम् । यच्चास्यामधिं । तदेवावरुन्धे ।

अथो तस्मिन्नेवोभयेऽभिषिच्यते, इति ।

न केवलं बलं तयोः स्वाधीनत्वं किंत्वेतस्मिन्नुभयस्मिन्भूम्यां तदाश्रिते जने च राजत्वेनाभिषिक्तो भवति ।

कल्पः—"अथाश्वान्पल्पूलयति—

अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवथ वाजिनः" इति ।

पल्पूयति जले प्लावयति। शरीरं प्रक्षालयतीत्यर्थः। अप्सु मध्ये यन्मृत्युनिवारकं रोगनिवारकं च सारं वर्तते [तत्र] हे वाजिनोऽन्नवन्तोऽश्वा अपां संबन्धिनीषूत प्रशस्तिष्वमृतत्वभेषजत्वसदृशीष्वन्यास्वपि गुणवत्त्वप्रशंसासु यूयं संबद्धा भवथ। विधत्ते—

अप्स्वंन्तरमृतंमप्सु भेषजमित्यश्वान्पल्पूलयति। अप्सु वा अश्वंस्य तृतीयं प्रविष्टम्। तदंनुवेनान्ववंप्लवते। यदप्सु पंल्पूलयंति(२)। यदेवास्याप्सु प्रविंष्टम्। तदेवावंरुन्धे, इति।

स्नपयितुं प्रवेशितोऽप्यश्वः स्वेच्छया क्रीडञ्जलस्योपरि प्लवते। तत्रेदमुत्प्रेक्षते। अप्सुयोनिर्वा अश्व इति श्रुतेरश्वजन्मकाले गर्भसंबन्धि तृतीयमंशजातं जलेऽवस्थितं भवति। यथा मनुष्यगर्भे तद्वत्। अत एव हि मनुष्या नवप्रसूताया योषितो गर्भस्थानं समाधातुं बहुभिरौषधैश्चिकित्सां कुर्वन्ति। एवं च सत्ययमप्यश्वस्तदंशजातमनुवेन्कामयमानोऽनु प्रायेणावप्लवते। यथा विनष्टद्रव्यमचिन्वन्पुरुषो जले पुनः पुनर्मज्जन्नुत्तिष्ठति तद्वत्। एवं च सत्यध्वर्युः प्लावयतीति यत्तेनाप्सु प्रविष्टमश्वावयवजातं तत्सर्वं संपादितवान्भवति।

प्रकारान्तरेण प्लावनविधिं स्तौति—

बहु वा अश्वोंऽमेध्यमुपंगच्छति। यदप्सु पंल्पूलयंति। मेध्यांनेवैनांन्करोति, इति।

अश्वः खलु पृथिव्यां यत्र क्वाप्यशुचिप्रदेशे विपरिवर्तमानो बहुविधममेध्यमयज्ञार्हमुच्छिष्टादिकमुपगच्छति, अतोऽध्वर्युः प्रक्षालनेनाश्वान्यज्ञयोग्यानेव करोति।

कल्पः—“ अथ दक्षिणं योग्यं युनक्ति—

वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तविꣳशतिः।
ते अग्रे अश्वमायुञ्जन्ते अस्मिन्नग्रयमादधुः ” इति।

योग्यं रथे योक्तुमर्हमश्वम्। वायुश्च मनुश्च पञ्चविंशतिसंख्याका गन्ध-

र्वाश्चेति मिलित्वा सप्तविंशतिसंख्याका ये पुरुषास्ते सर्वेऽग्रेऽस्मत्तः पूर्वं रथे संयोजितवन्तस्ते पुनः सर्वे पृष्ठसंमार्जनाद्युपचारेणास्मिन्नश्वे वेगं संपादितवन्तः । वायुस्त्वामयोजयन्मनुस्त्वामयोजयदिति पृथग्वाक्यकरणं तयोर्मुख्यत्वज्ञापनार्थम् । अहं युनज्मीत्यभिप्रायः । अहं युनज्मीति पाठं परित्यज्य वायुर्वा त्वेति पाठस्याभिप्रायमाह—

वायुर्वा त्वा मनुर्वा त्वेत्याह । एता वा एतं देवता अग्रे अश्वमयुञ्जन् । ताभिरेवैनान्युनक्ति । सवस्योज्जित्यै, इति ।

योजयितॄणां देवानामनुग्रहाद्यज्ञस्योत्कर्षेण जयो भवति ।

विधत्ते—

यजुषा युनक्ति व्यावृत्त्यै ( ३ ), इति ।

अनुष्टुप्छन्दस्ताद्रूपोऽपि वायुर्वा त्वेति मन्त्रो यजुर्वेदपठितत्वाद्यजुरित्युपचर्यते । लौकिके रथे मन्त्रमन्तरेणाश्वयोजनादत्र समन्त्रकत्वेन व्यावृत्तिर्भवति ।

कल्पः—“ अथास्य पृष्ठं मर्मृज्यते—

अपांनपादाशुहेमन्य ऊर्मिः ककुद्मा-

न्प्रतूर्तिर्वाजसातमस्तेनायं वाजꣳ सेत् ” इति ।

मर्मृज्यते पुनः पुनः संमार्ष्टि । हेऽपांनपात्प्लवनकाले जलस्य कालुष्यानापादनादविनाशयितराशुहेमंस्तीव्रगन्तस्तादृश हेऽश्व जले य ऊर्मिः ककुद्मान्ककुदिवोन्नतः प्रतूर्तिर्निमज्जनेन प्रसक्तस्योपद्रवस्य प्रकर्षेण हिंसको वाजसातमः सस्योपकारित्वेनातिशयेनान्नप्रदस्तेन त(त्व)त्पृष्ठलग्नेनोर्मिणाऽस्माकं वाजमन्नं सेत्साधय । विधत्ते—

अपांनपादाशुहेमन्निति संमार्ष्टि । मेध्यानेवैनान्करोति । अथो स्तौत्येवैनानाजिꣳ सरिष्यतः, इति ।

पृष्ठसंमार्जनेन शोधितत्वाद्यागयोग्यत्वम् । किंच धावनार्थायाः सप्तदशप्रव्याधपरिमिताया भूमेरवधिराजिस्तं प्रति सरिष्यन्ति गमिष्यन्ति तान्गमिष्यतोऽश्वान्पृष्ठसंमार्जनरूपेणोपलालनेन स्तौत्येव प्रोत्साहयत्येव ।

कल्पः—" अथ रथमभिप्रैति—

विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि " इति ।

तदेतद्यजमानकर्म । तथाचाऽऽपस्तम्बः—"विष्णोः क्रमोऽसीति रथं यजमानोऽभ्यैति " इति । यजमानस्य मम हे प्रथम प्रक्रम त्वं विष्णोर्व्यापनशीलस्य जगदीश्वरस्य त्रिविक्रमावतारस्य प्रक्रमोऽसि प्रथमपदप्रक्षेपेण जितो भूलोकोऽसि । हे द्वितीयप्रक्रम त्वं क्रान्तं विष्णोर्द्वितीयपदप्रक्षेपेण जितमन्तरिक्षमसि । हे तृतीयप्रक्रम त्वं विक्रान्तं विष्णोः पराक्रमेण जितं त्रिविष्टपमसि । विधत्ते—

विष्णुक्रमान्क्रमते । विष्णुरेव

भूत्वेमाँल्लोकानभिजयति, इति ।

कल्पः—" अथ रथस्य पक्षसी संमृशत्यङ्कौ न्यङ्कावभितो रथं यौ " इति । पक्षसी पार्श्वौ ।

पाठस्तु—अङ्कौ न्यङ्कावभितो रथं यौ ध्वान्तं वाताग्रमनुसंचरन्तौ दूरे हेतिरिन्द्रियावान्पतत्री ते नोऽग्नयः पप्रयः पारयन्तु " इति ।

रथमभितो यावङ्कौ लक्षणभूतौ पार्श्वविशेषौ, न्यङ्कौ नितरां लक्षणभूतौ चक्रविशेषौ । अत एवाऽऽपस्तम्ब आह—" अङ्कौ न्यङ्काविति रथचक्रे अभिमृशति पक्षसी वा " इति । ध्वान्तं ध्वन्युपेतं वाताग्रं वायोरपि पुरोदेशं शीघ्रतया वायुमप्यतिलङ्घ्यानुक्रमेण संचरन्तौ तादृग्भ्यामुभाभ्यामग्नयो नोऽस्मान्पारयन्तु धावनावधिं पारयन्तु । कीदृशा अग्नयः पप्रयोऽपेक्षितमर्थं पूरयितारः । येऽग्नयो दूरे हेतिरित्यादिनामोपेतास्ते । एतन्मन्त्रगतमग्निपदं रथावस्थितदेवतापरत्वेन व्याचष्टे—

वैश्वदेवो वै रथः । अङ्कौ न्यङ्कावभितो रथं

यावित्याह । या एव देवता रथे प्रविष्टाः ।

ताभ्य एव नमस्करोति । आत्मनोऽनार्त्यै, इति ।

दूरे हेतिरित्यादिनामका अग्नयोऽत्र विश्वेदेवाः । तद्वाहनरूपोऽयं रथः । पारयन्त्विति प्रार्थनैव नमस्कारस्तेन नमस्कारेण तदीयं रथमारूढस्यापि स्वस्याऽऽर्तिर्न भवति ।

वेदनं प्रशंसति—

अशमरथंभावुकोऽस्य रथो भवति ।
य एवं वेद (४), इति ।

स्वदयति पल्पूलयति व्यावृत्त्या अनार्त्यै द्वे च ।

शमयुक्तो रथः शमरथो मन्दगतिः । अशमरथः शीघ्रगती रथः । तच्छीलोऽस्य वेदितू रथो भवति ।

अत्र विनियोगसंग्रहः—

देव होमोऽत्र कर्माऽऽदाविन्द्रस्य रथमाहरेत् ।
वाजस्य वेदिमध्ये तमभ्यावर्तयते रथम् ॥
अप्स्वश्वान्प्लावयेद्वायुर्युनक्ति तुरगं रथे ।
अपां तदश्वपृष्ठानि मार्ष्टि विष्णो रथं व्रजेत् ॥
अङ्कौ रथे मृशेत्पक्षावष्टौ मन्त्रा इहोदिताः ॥ इति ।

अथ मीमांसा । प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

यजेत वाजपेयेन स्वाराज्यार्थीत्यसौ गुणः ।
नाम वा गुणता तन्त्रयोगाद्गुणफलद्वये ॥
साधारणयजेः कर्मकरणत्वेन तन्त्रता ।
त्रिकद्वयं विरुद्धं स्यात्तन्त्रतायां फलं प्रति ॥
उपादेयविधेयत्वगुणत्वाख्यत्रिकं यजेः ।
उद्देश्यानूक्तिमुख्यत्वत्रिकं तस्य गुणं प्रति ॥
त्यक्त्वा तन्त्रं तदावृत्तौ वाक्यं भिद्येत तेन सः ।
वाजपेयेति शब्दोऽपि कर्मनामाग्निहोत्रवत् ॥ [ इति ] ।

वाजपेयेन स्वाराज्यकामो यजेतेत्यत्र वाजपेयशब्देन गुणो विधीयते । अन्नवाची वाजशब्दः । तच्चान्नं पेयं सुराद्रव्यम् । तच्चात्र गुणः । सुराग्रहाणामनुष्ठेयत्वात् । ननु गुणत्वे वाजपेयगुणवता यागेन स्वाराज्यं भावयेदित्येवं मत्वर्थलक्षणा प्रसज्यते । मैवम् । सकृदुच्चरितस्य यजेतेत्याख्यातस्य वाजपेयगुणे स्वाराज्यफले च तन्त्रेण संबन्धाङ्गीकाराद्वाजपेयद्रव्येण स्वाराज्याय यजेतेत्येवमुभयसंबन्धः । ननु गुणसंबन्धे सति वाजपेयेन गुणेन यागं कुर्यादिति यजेः कर्मकारकत्वं भवति । फलसंबन्धे तु यागेन स्वारा-

ध्यं संपादयेदिति करणकारकत्वम्। ततः कथमुभयसंबन्ध इति चेन्नायं दोषः।
यजेः साधारणत्वेन द्विरूपत्वसंभवात्। यजेतेत्यत्र प्रकृत्या याग उक्तः प्रत्य-
येन भावनोक्ता। तयोस्तु समभिव्याहारात्संबन्धमात्रं गम्यते। तच्च कर्मत्व-
करणत्वयोः साधारणम्। न खलु तत्र कर्मत्वस्यैव करणत्वस्यैव वा साक्षा-
दभिधायिका काचिदसाधारणविभक्तिः श्रूयतेऽतः साधारणस्य यजेरुभा-
भ्यां गुणफलाभ्यां युगपत्संबन्धे सति यथोचितं संबन्धविशेषः पर्यवस्यति।
एवं तन्त्रेण संबन्धाङ्गीकरणे वाजपेयद्रव्येण यागं कुर्यादित्यस्यार्थस्य
लभ्यमानत्वाद्गुणविधित्वेऽपि नास्ति मत्वर्थलक्षणा। यद्युद्भिदादिष्वप्येवं
गुणविधिः स्यात्तर्हि तान्यपि वाक्यान्यत्रोदाहृत्य तदीयः सिद्धान्तः पुन-
राक्षिप्यतामिति प्राप्ते ब्रूमः। यजेस्तन्त्रेणोभयसंबन्धे सति विरुद्धत्रिकद्वया-
पत्तिः स्यात्। उपादेयत्वं विधेयत्वं गुणत्वं चेत्येकं त्रिकम्। उद्देश्यत्वमनु-
वाद्यत्वं मुख्यत्वं चेत्यपरं त्रिकम्। तत्रोद्देश्यत्वादयः स्वाराज्यफलनिष्ठा
धर्मा उपादेयत्वादयस्त्रयः साधनभूतयजिनिष्ठाः। फलमुद्दिश्य यजिरुपादी-
यते, फलमनूद्य यजिर्विधीयते। फलं प्रधानं यजिरुपसर्जनम्। फलस्योद्दे-
श्यत्वं नाम मानसापेक्षाविषयत्वाकारः। यजेरुपादेयत्वं नामानुष्ठीयमानत्वा-
कारः। तावुभौ मनःशरीरोपाधिकौ धर्मौ। अनुवाद्यत्वविधेयत्वधर्मौ तु
शब्दोपाधिकौ। ज्ञातस्य कथनमनुवादः। अज्ञातस्यानुष्ठेयस्य कथनं विधिः।
फलयागयोः साध्यसाधनरूपतया प्रधानत्वोपसर्जनत्वे। एवं सति फलत-
त्साधनयोः स्वाराज्ययागयोः स्वभावपर्यालोचनायां फलस्योद्देशत्वादित्रिकं
यागस्योपादेयत्वादित्रिकं व्यवतिष्ठते। तथा यागस्य वाजपेयद्रव्यस्य च
साध्यसाधनभावपर्यालोचनायां यागस्योद्देश्यत्वादित्रिकं द्रव्यस्योपादेयत्वा-
दित्रिकं पर्यवस्यति। ततो यागस्य फलद्रव्याभ्यामुभाभ्यां प्रतियोगिभ्यां
युगपत्संबन्धे सति विरुद्धत्रिकद्वयमापद्येत। ननु तर्हि मा भूत्तन्त्रेणोभयसं-
बन्धः। पृथक्संबन्धाय यजिरावर्त्यतामिति चेन्न। वाक्यभेदप्रसङ्गात्।
द्रव्येण यागं कुर्यादित्येकं वाक्यम्। यागेन फलं कुर्यादित्यपरम्। तस्माद्वा-
जपेयशब्दो न गुणविधायकः, किंतु यथोक्तं द्रव्यं निमित्तीकृत्याग्निहोत्र-
शब्दवत्कर्मनामधेयम्। द्वितीयाध्यायस्य द्वितीयपादे चिन्तितम्—

आहुतीस्तिस्र इत्यत्र कर्मैक्यमुत भिन्नता।
एकत्वं सकृदाख्यानात्संख्यावृत्त्या प्रयाजवत्॥

आख्यातमात्रं नो मानं संख्यया बहुकर्मता ।
आवृत्त्यैकादशत्वं तु प्रयाजे गत्यभावतः ॥
पशून्सप्तदश प्राजापत्यानित्यत्र भाष्यकृत् ।
विचारमाह पूर्वत्र क्रियात्रित्वस्फुटत्वतः ॥
बहुत्वोपेतपशुभिर्देवयोगादभिन्नता ।
रूपस्य तेन कर्मैक्यं संख्या नात्र क्रियागता ॥
देवतासंगतस्यैव तद्धितार्थस्य पश्चिमः ।
बहुत्वसंगमो रूपसंख्ययाऽतः क्रियाभिदा ॥ [ इति ] ।

तिस्र आहुतीर्जुहोतीति श्रूयते । तत्र जुहोतीत्येतदाख्यातं समिधो यजतीत्यादिवन्नाभ्यस्तं किंतु सकृदेवाऽऽम्नातम् । तत एकमिदं कर्म । त्रित्वसंख्या तु तस्यैव कर्मण आवृत्त्या नेतव्या । यथा प्रयाजेष्वेकादशत्वसंख्या पञ्चानामेव प्रयाजानामावृत्त्या नीता तद्वदिति प्राप्ते ब्रूमः । किमिदमाख्यातं पदान्तरनिरपेक्षमेव कर्मैक्ये प्रमाणम्, उत पदान्तरान्वितम् । नाऽऽद्यः । वाक्यांशस्य पदमात्रस्य प्रमितिजनकत्वाभावात् । द्वितीये त्रित्वसंख्यया विशेषितेनाऽऽख्यातेन कर्मबहुत्वं गम्यते । प्रयाजानां तु पूर्वमेव संख्यावरुद्धत्वादावृत्तिमन्तरेणैकादशत्वं दुःसंपादम् । इह त्वेतद्विधितः पूर्वकर्मण एकत्वसंख्यावरोधो नास्तीति वैषम्यम् । तदेतद्वृत्तिकारोदाहरणं भाष्यकारो नानुमन्यते । कर्मवाचिन आहुतिशब्दस्य विशेषणेन त्रिशब्देन कर्मबहुत्वस्य स्फुटतया पूर्वपक्षानुत्थानात् । इदं त्वत्रोदाजहार । सप्तदश प्राजापत्यान्पशूनालभत इति । अत्र प्रजापतिर्देवता येषां पशूनां ते प्राजापत्या इति तद्धितव्युत्पत्तौ बहुत्वोपेताः पशव एकं द्रव्यम् । ततो द्रव्यैक्याद्देवतैक्याच्च यागस्य रूपमभिन्नमित्येकमिदं कर्म । या तु सप्तदशेति संख्या सा पशुद्रव्यगता, नतु पूर्वोदाहृतत्रित्वसंख्येव क्रियागता । तस्मान्न कर्मभेदमापादयतीति प्राप्ते ब्रूमः । अत्र प्रजापतिर्देवता यस्य पशोः स प्राजापत्य इति तद्धितान्तं प्रातिपदिकं व्युत्पाद्य पश्चात्तद्धितान्तप्रातिपदिकार्थस्य प्रजापतिदेवताविशिष्टपशोः कर्मत्वबहुत्वविवक्षायामुत्पन्ने इमे द्वितीयाविभक्तिबहुवचने । तत्र प्रथमभाविन्या द्वितीयाविभक्तेरेव तावत्तद्धितोत्पत्तिवेलायामन्वयो नास्ति । कुतः । पश्चाद्भाविनो बहुवचनस्यान्वयः । एवं सति प्राजापत्येत्यनेन तद्धितान्तप्रातिपदिकेनैकपशुद्रव्यकमेकदेवतोपेतं यागस्य रूपं समर्थ्यते । तादृशानां च रूपाणां बहुत्वाय बहुवचनम् । बहुत्वविशेषश्च सप्तदशेति निर्दिश्यते ।

तस्मादत्र संख्यया कर्मभेदः । एवं च सत्यष्टमे वक्ष्यमाणं सप्तदशपशूनामैकादशिनपशुगणविकृतित्वमुपपद्यते । पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

उपाकृतानां किं सप्तदशानां यूपबन्धने ।
क्रमो नास्त्यस्ति वा नास्ति नियामकविवर्जनात् ॥
आद्यसंस्कृत्यनुष्ठानं यत्क्रमेण स एव हि ।
क्रमोऽन्यत्र प्रवृत्तिस्तु क्रमस्यात्र नियामिका ॥ [ इति ] ।

वाजपेये सप्तदश प्राजापत्यान्पशूनालभत इति विहितानां पशूनामुपाकरणनियोजनादयः संस्काराः कर्तव्याः । तत्रेदृशे पशावुपक्रम ईदृशे च समाप्तिरिति नियमकारिणः शास्त्रस्याभावादैच्छिकेन क्रमेणोपाकरणरूपः प्रथमः संस्कारोऽनुष्ठितः । उपाकृतानां यूपे नियोजनं संस्कारान्तरं कर्तव्यम् । तदानीमीदृशः पशुः प्रथमं नियोक्तव्य इति क्रमनियमकारिणां श्रुत्यर्थपाठानामभावान्नास्ति क्रमनियम इति चेन्मैवम् । उपाकरणे यः क्रमः स्वीकृतस्तस्यैव नियोजनादिसंस्कारेषु स्वीकर्तव्यत्वाच्छ्रुत्यर्थपाठ इव प्रथमप्रवृत्तिरपि क्रमं नियन्तुमर्हति । प्रवृत्त्या बुद्धिस्थस्य क्रमस्य त्यागकारणाभावात् । प्रावृत्तिकक्रमस्वीकारे प्रथमपशावुपाकरणनियोजनयोः प्रथमद्वितीयसंस्कारयोर्मध्ये पश्वन्तरेष्वनुष्ठितैः षोडशभिरेवोपाकरणपदार्थैर्व्यवधानं भवति । तच्च व्यवधानं सप्तदशेतिविधिबलादभ्यनुज्ञातम् । प्रावृत्तिकं क्रमं परित्यज्य पश्वन्तराणां पूर्वनियोजनं कृत्वा पश्चात्प्रथमपशोर्यदि नियोजनं क्रियेत तदा द्वात्रिंशद्भिः पदार्थैर्व्यवधानं स्यात् । तत्तु नाभ्यनुज्ञातम् । तस्मात्प्रवृत्त्या क्रमो नियम्यते । तत्रैव द्वितीयपादे चिन्तितम्—

वाजपेये किमेकैकपशोः सर्वसमापनम् ।
सर्वेषु वैकैकधर्म आद्यः साहित्यसिद्धये ॥
वचनात्पशुसाहित्यं प्रयोगोक्त्याऽनुकल्पयते ।
धर्मसाहित्यमेतच्च सिद्धान्तेऽपि न हीयते ॥ [ इति ] ।

वाजपेये सप्तदशसु प्राजापत्येषु पशुष्वेकैकस्मिन्पशावुपाकरणनियोजनादिसंस्काराः सर्वे समापनीयाः । तथा सति साङ्गं प्रधानं कर्तव्यमिति प्रयोगवचनेनावगतं धर्माणां साहित्यं प्रसिध्यति । चोदकोऽपि धर्मसाहित्यं प्रापयति । प्रकृतावुपाकरणनियोजनादीनां साहित्यदर्शनात् । तस्मादत्र काण्डानुसमयो न तु पदार्थानुसमय इति प्राप्ते ब्रूमः । सप्तदश प्राजापत्यान्पशूनालभत इति वचनात्पशुसाहित्यमवगतम् । तच्च प्रबलं प्रत्यक्षेण पशूनित्यनेनेक-

शब्देन प्रापितत्वात् । धर्मसाहित्यं तु न प्रत्यक्षशब्देन प्रापितं किंतु प्रयोगवचनेन परिकल्प्यते । यद्येकस्मिन्प्रयोगे धर्मसाहित्यं न स्यात्तदा कतिपयधर्मवैकल्येन साङ्गप्रधानानुष्ठानविधिर्नोपपद्येतेत्यर्थापत्तेश्चोदकेनापि विकृतौ धर्मसाहित्यवचनमनुष्ठीयते । तदुभयं प्रत्यक्षात्पशुसाहित्यवचनाद्दुर्बलम् । तस्माद्वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीत्यनेन प्रत्यक्षवचनेनावगतं पशुसाहित्यमबाधितुं सर्वेषु पशुष्वेकैक उपाकरणादिधर्मः कर्तव्य इत्येवं पदार्थानुसमयोऽभ्युपेतव्यो न तु कण्डानुसमयः । अस्मिन्नपि पक्षे प्रयोगवचनचोदकाभ्यामवगतं धर्मसाहित्यं न विरुध्यते । एकस्मिन्नेव प्रयोगे कृत्स्नधर्माणामनुष्ठितत्वात् । दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

प्राजापत्यैः पशूनां किं बाधो यद्वा समुच्चयः ।
अक्रियार्था पशूक्तिः स्याल्लिङ्गं तेनास्तु बाधनम् ॥
पशूनुद्दिश्य संख्याया देवस्य च विधौ भिदा ।
कर्मान्यत्वे ग्रहन्यायाद्रोधनाच्च समुच्चयः ॥ [ इति ] ।

वाजपेये श्रूयते । सप्तदश प्राजापत्यान्पशूनालभत इति । तैरेतैः प्राकृतपशूनामाग्नेयादीनां बाधः स्यात् । कुतः । पशुत्वलिङ्गात् । नहि पशुशब्दो ग्रहशब्दवदपूर्वां विधेयक्रियां ब्रूते, येन लिङ्गत्वं हीयेतेति प्राप्ते ब्रूमः । किमत्र प्रकृतपश्वनुवादेन सप्तदशसंख्या प्रजापतिर्देवता चेति गुणद्वयं विधीयते, आहोस्विद्द्विशिष्टमन्यत्कर्म । नाऽऽद्यो वाक्यभेदापत्तेः । द्वितीये तु न पशुशब्दो लिङ्गम् । ततोऽत्र ग्रहन्यायो योजनीयः । किंचावरोधनमेवाऽऽम्नायते—“ ब्रह्मवादिनो वदन्ति । नाग्निष्टोमो नोक्थ्यः । न षोडशी नातिरात्रः । अथ कस्माद्वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति । पशुभिरिति ब्रूयात् । आग्नेयं पशुमालभते । अग्निष्टोममेव तेनावरुन्धे । ऐन्द्राग्नेनोक्थ्यम् । ऐन्द्रेण षोडशिनः स्तोत्रम् । सारस्वत्याऽतिरात्रम् । मारुत्या बृहतः स्तोत्रम् । एतावन्तो वै यज्ञक्रतवः । तान्पशुभिरेवावरुन्द्धे ” इति । अस्मिन्नवरोधनाम्नाये चोदकप्राप्ताग्नेयादिपशुतद्भावस्य सिद्धवदनुवादात्समुच्चयोऽवगम्यते । एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

प्राजापत्यवसानां किं भेदस्तन्त्रमुताग्निमः ।
पशुभेदाद्देवपाककालैक्याच्छक्तितोऽन्तिमः ॥ [ इति ] ।

वाजपेये सप्तदशसु प्रजापतिदेवताकेषु पशुषु तद्भेदानुसारेण वसाहोमो भिद्यत इति चेन्मैवम् । प्रजापतिरेक एव सप्तदशानां पशूनां देवता । तथा

पाकोऽपि सहैव क्रियते। प्रदानस्यापि पाक उपलक्षणम्। प्रदानेऽपि साहित्यमस्ति। कालश्चैको याज्याया अर्धर्चान्तस्य तत्कालत्वेन चोदकातिदेशात्। शक्यते च सह होमः। तस्मात्तन्त्रम्। तत्रैव चतुर्थपादे चिन्तितम्—

प्राजापत्येषु कुम्भ्यादेर्भेदो नो वाऽङ्गभेदतः।
भेदो नैवमशेषाङ्गश्रपणादौ प्रभुत्वतः॥ [इति]।

वाजपेये सप्तदशसु प्राजापत्यपशुषु कुम्भ्या हृदयशूलस्य वपाश्रपण्याश्च भेदः स्यात्। कुतः। तत्तत्पश्वङ्गानां भिन्नत्वात्। नैवम्। पश्वङ्गानां बहुत्वेऽपि प्रौढकुम्भ्यादेर्दृष्टार्थश्रपणादौ प्रभुत्वात्। तस्मात्तन्त्रम्। तत्रैव तृतीयपादे चिन्तितम्—

प्राजापत्यप्रचारः किमार्भवे शस्त्रिसोमतः।
ऊर्ध्वं वा विकृतौ वोत परस्तात्सर्वसोमतः॥
आर्भवे चोदकादुक्त्यासत्तिभ्यां तदनन्तरः।
श्रुतिबाधस्तदा तस्मात्तृतीयो विकृतित्वतः॥
पशवो नहि सोमस्य विकारा अविशेषतः।
उक्तत्वात्सर्वसोमानामुपरिष्टात्प्रचर्यताम्॥ [इति]।

वाजपेये सप्तदशप्राजापत्यपशुप्रचारस्य काले चतुर्धा संशयः। तत्र तावदयं प्रयोगक्रमः। तृतीयसवने प्रथममार्भवः पवमानः। ततो वैश्वदेवग्रहपर्यन्ताः शस्त्रवन्तः सोमाः। ततोऽशस्त्रेष्ववशिष्टेषु सोमग्रहेषु प्रचीर्णेष्वग्निष्टोमसाम्न ऊर्ध्वमुक्थ्यादयः सोमविकारा इति। एवं स्थिते प्राजापत्यपशूनामार्भवकाले प्रचारः। कुतः। प्रकृतौ तस्य पशुप्रचारकालत्वेन चोदकप्राप्तेरित्याद्यः पक्षः। उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति वचनेन सोमग्रहप्रचारादूर्ध्वः कालो विधीयते। यदि प्रातःसवनमाध्यंदिनसवनसोमेभ्य ऊर्ध्वत्वमार्भवकालस्यास्तीति योच्येत तदा चोदकेनैव तत्कालप्राप्तेर्वचनमिदमनर्थकं स्यादतस्तृतीयसवनगतसोमानामुपरीति वक्तव्यम्। यदि तत्र सर्वसोमानामुपरीति विवक्ष्येत तदा चोदकप्राप्तः कालो विप्रकृष्यते। ततः प्रत्यासत्तये शस्त्रिणां वैश्वदेवग्रहान्तानां सोमानामुपरीति द्वितीयः पक्षः। उपरिष्टात्सोमानामित्यविशेषप्रवृत्ता श्रुतिः कतिपयसोमोर्ध्वत्वविवक्षायां बाध्येत। तस्माच्छस्त्रवतां तद्रहितानां च सोमानामुपरिष्टादग्निष्टोमे यज्ञायज्ञीयसाम्ना संस्थिते सति तत्प्रचारः कार्यः। तस्य विकृतिकालत्वात्प्राजापत्यपशूनां च विकृतिरूपत्वादिति तृतीयः पक्षः। सोमविकाराणामेवायं कालः

पशवस्तु न सोमविकारस्तस्मादविशेषवचनानुसारेण प्राकृतानां वैकृतानां च सर्वेषां सोमानामुपरिष्टात्प्राजापत्यपशुप्रचार इति राद्धान्तः। तत्रैव द्वितीयपादे चिन्तितम्—

पर्यग्निकरणे त्याग आलम्भो ब्रह्मसामनि।
कर्मशेषनिषेधश्च कर्मान्तरविधिर्भवेत्॥
किंवोत्कर्षोऽवशिष्टस्य ह्यारण्योक्तिवदादिमः।
अदृष्टवाक्यभेदाप्तेर्द्रव्याभावेन चान्तिमः॥ [इति]।

वाजपेये सप्तदश प्राजापत्यान्पशून्प्रकृत्य श्रूयते—"तान्पर्यग्निकृतानुत्सृजति। ब्रह्मसाम्न्यालभते" इति। तेषु सप्तदशसु पशुषु पर्यग्निकरणेऽनुष्ठिते सत्युत्तरकालभावी कर्मशेष उत्सर्गशब्देन निषिध्यते। अश्वमेधे पर्यग्निकृतानारण्यानुत्सृजन्तीत्यत्र कर्मशेषनिषेधस्य संप्रतिपन्नत्वादत्रापि तथात्वेन सप्तदश पशवः पर्यग्निकरणान्ताः समापनीयाः। आलभतिना च ब्रह्मसामकाले कर्मान्तरं विधीयत इति प्राप्ते ब्रूमः। कर्मान्तरविधौ सप्तदशपशुजन्यादृष्टाद्भिन्नं किंचिददृष्टं कल्प्येत, वाक्यभेदश्च प्राप्नुयात्। किंच ब्रह्मसाम्न्यालभत इत्यत्र द्रव्यदेवतयोरश्रवणान्न कर्मान्तरविधिः संभवति। तस्मात्पर्यग्निकरणानन्तरमेव कर्तव्यस्य सप्तदशपशूनामालम्भादिशेषस्य ब्रह्मसामकाल उत्कर्षो विधीयते। तथा सत्यर्थप्राप्तः पर्यग्निकरणानन्तरभाविकर्मशेषव्यापारोपरम उत्सर्गशब्देनानूद्यते। *

## इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके तृतीयाध्याये पञ्चमोऽनुवाकः॥ ५॥

---

अथ तृतीयाध्याये षष्ठोऽनुवाकः।

---

सप्तमे रथमन्त्रा वर्णिताः। अष्टमे रथस्य धावनमन्त्रा वर्ण्यन्ते। कल्पः—"रथमातिष्ठति—

देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषम्" इति।

आतिष्ठत्यारोहेदित्यर्थः। वाजजिताऽन्नजयकारिणा बृहस्पतिनाऽनुगृहीतोऽहं वाजं जेषमन्नं जेष्यामि।

---

* अत्र संहिताभाष्यक्रमेण—'प्रथमकाण्डे सप्तमप्रपाठके सप्तमोऽनुवाकः समाप्तः' इत्यस्तीति जानीयात्।

एतन्मन्त्रगतं बृहस्पतिशब्दं ब्राह्मणजात्यभिमानिदेवपरत्वेन व्याचष्टे—

देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषमित्याह । सवितृप्रसूत एव ब्रह्मणा वाजमुज्जयति, इति ।

कल्पः—"चात्वाले रथचक्रं निमितं ब्रह्माऽऽरोहति तमत एवानुमन्त्रयते-देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाकꣳ रुहेयम्" इति । निमितं निखातस्य काष्ठस्याग्रे स्थापितं वर्षिष्ठमतिशयेन प्रवृद्धम् । पूर्वमन्त्रवद्व्याचष्टे—

देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाकꣳ रुहेयमित्याह । सवितृप्रसूत एव ब्रह्मणा वर्षिष्ठं नाकꣳ रोहति, इति ।

विधत्ते—

चात्वाले रथचक्रं निमितꣳ रोहति । अतो वा अङ्गिरस उत्तमाः सुवर्गं लोकमायन् । साक्षादेव यजमानः सुवर्गं लोकमेति, इति ।

अत उपरिस्थिताद्रथचक्रादुत्तमा उद्गततमाः । साक्षादेवाव्यवधानेनैव ।

विधत्ते—

आवेष्टयति । वज्रो वै रथः । वज्रेणैव दिशोऽभिजयति (१), इति ।

ऊर्ध्वकाष्ठाग्रे स्थापितं ब्रह्मणा समारूढं रथचक्रं त्रिःप्रदक्षिणं पर्यावर्तयेत् । रथस्य वज्रांशत्वाद्वज्रत्वम् । तच्चान्यत्राऽऽम्नातम्—"स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयम्" इति । अतो भ्राम्यमाणेन वज्ररूपेण रथचक्रेणैव सर्वासां दिशां जयो भवति ।

विधत्ते—

वाजिनाꣳ साम गायते । अन्नं वै वाजः । अन्न-
मेवावरुन्धे, इति ।

वाजिनामन्नार्थिनां संबन्धि यत्साम तद्ब्रह्मा गायेत् । अन्नपदस्तु साम-विशेषः शाखान्तरे द्रष्टव्यः । ब्रह्मण इदं गानमित्यापस्तम्बः स्पष्टयति—" औदुम्बरꣳ रथचक्रं ब्रह्माऽऽरोहति तमाह । वाजिनाꣳ साम गायेति तस्य चक्रं त्रिःप्रदक्षिणमावर्तयति । तत्राऽऽवर्त(र्त्य?)माने ब्रह्मा गायति " इति ।

कल्पः—" आघ्नन्ति दुन्दुभीन्संप्रवदन्ति वाचः संप्रवदिता वाचोऽनुम-न्त्रयते—

इन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो वाजमजयित् " इति ।

यागलक्षणेन परमैश्वर्येण योगाद्यजमान इन्द्रस्तस्मादिन्द्राय हे सभ्या ब्राह्मणा आशीर्वादरूपां श्रुतां वाचं वदत । इन्द्रं यजमानं वाजं जापयत । अन्नविषये जयं प्रापयत । अयमिन्द्रो यजमानो वाजमन्नमजयिज्जयतु । सोऽयं मन्त्र आपस्तम्बेन दुन्दुभिवादने विनियुक्तः—' इन्द्राय वाचं वद-तेति दुन्दुभीन्सꣳह्रादयन्ति " इति । तमेनं दुन्दुभिघातं विधातुं प्रस्तौति—

वाचो वर्ष्म देवेभ्योऽपाक्रामत् । तद्वनस्पतीन्प्रावि-
शत् । सैषा वाग्वनस्पतिषु वदति । या दुन्दुभौ ।
तस्माद्दुन्दुभिः सर्वा वाचोऽतिवदति, इति ।

वाग्देवताया वर्ष्म नादात्मकं प्रधानशरीरं तस्य प्रदेशादयं दुन्दुभिः सर्वा मनुष्यवाचोऽतिक्रम्य ध्वनिं करोति ।

विधत्ते—

दुन्दुभीन्समाघ्नन्ति । परमा वा एषा वाक् ( २ ) ।
या दुन्दुभौ । परमयैव वाचाऽवरां वाचमवरुन्धे ।
अथो वाच एव वर्ष्म यजमानोऽवरुन्धे, इति ।

मन्त्रगतमिन्द्रियपदं वाजमजयिदित्येतच्च व्याचष्टे—

इन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो वाजम-जयिदित्याह । एष वा एतर्हीन्द्रः । यो यजते । यजमान एव वाजमुज्जयति, इति ।

कल्पः—“ अथास्मा अश्वाजनिं प्रयच्छति—

अश्वाजनिवाजिनि वाजेषु वाजिनीवत्यश्वान्समत्सु वाजय ” इति ।

अस्मै यजमानाय । अश्वान्जाति क्षिपतीत्यश्वाजनी कशा । सा च विज-येनान्नप्रदत्वाद्वाजिनी । वाजिन्यो वेगवत्योऽश्वगतयस्ता अस्याः कशाया इति वाजिनीवती । यथोक्तगुणत्रयोपेते हे कशे वाजेष्वन्नेषु निमित्तभूतेषु सत्सु त्वमश्वान्समत्सु युद्धेषु वाजय गमय । अयं मन्त्रः स्पष्टत्वबुद्धयोपे-क्षितः । अत्रेविधेयान्विधत्ते—

सप्तदश प्रव्याधानाजिं धावन्ति । सप्तदशः स्तोत्रं भवति । सप्तदश सप्तदश दीयन्ते ( ३ ) । सप्त-दशः प्रजापतिः । प्रजापतेराप्त्यै, इति ।

प्रकर्षेण बलाधिक्येन विध्यन्ते मुच्यन्ते बाणा यावत्परिमाणेषु देशविशे-षेषु तावत्परिमाणा देशाः प्रव्याधास्ते च सप्तदशसंख्याकाः । तेषामन्तेऽव-धित्वद्योतनाय काचिदौदुम्बरी शाखा निखन्यते । तत्काष्ठपर्यन्तोऽवधिराजिः । तत्पर्यन्तं रथारूढा धावेयुः । अस्मिन्वाजपेये सामवेदप्रसिद्धं यत्स्तोत्रं तत्सप्तदशसंख्याकावृत्तियुक्तं भवेत् । तदावृत्तिप्रकारस्त्वष्टमप्रपाठके सवि-षमातिष्ठेत्यरिदमनुवाके ब्राह्मणोदाहरणेन स्पष्टी करिष्यते । दक्षिणात्वेन दातव्यानां रथादीनां गोशतान्तानां द्रव्याणां मध्य एकैकद्रव्यं सप्तदशसं-ख्यायुक्तं दद्यात् । तथाऽऽपस्तम्बो दर्शयति—“ दक्षिणाकाले सप्तदश रथान्ददाति सप्तदशवासांसि सप्तदशाश्वान्सप्तदश हस्तिनः सप्तदश निष्कान्स-प्तदश दास्यः(सीः) सप्तदशाजाः सप्तदशावीः सप्तदश वासांसि सप्तदश गवां शतानि ” इति । यद्यपि स्तोमविशेषविधेर्द्रव्यसंख्याविधेश्च नायमवसर-स्तथाऽपि गन्तव्यदेशविशेषसंख्याविधिप्रसङ्गेन तदुभयं विहितम् । तथा सत्येकेनैव सप्तदशः प्रजापतिरित्यनेनार्थवादेन विधित्रयस्य स्तोतुं शक्यत्वात् ।

कल्पः—"तया यथायुक्तमश्वान्क्षिपति—

"अर्वाऽसि" इति दक्षिणं "सप्तिरसि" इति मध्यमं "वाज्यसि" इत्युत्तरम्" इति ।

अर्वादयोऽश्वजातिविशेषाः । तदेवाभिप्रेत्यान्यत्राऽऽम्नायते—"हयो देवानव- हदर्वा सुरान्वाजी गन्धर्वानश्वो मनुष्यान्" इति ( वामदक्षिणयोरश्वयोर्मध्य ईषाद्वयं प्रसार्य तयोर्मध्ये सप्त्याख्यजातिविशेषोपेतमश्वं युञ्ज्याय(ञ्ज्या)त् । श्रींस्तान्देवतात्रयरूपेण स्तौति—

अर्वाऽसि सप्तिरसि वाज्यसीत्याह । अग्निर्वा अर्वा । वायुः सप्तिः । आदित्यो वाजी । एताभिरेवास्मै देवताभिर्देवरथं युनक्ति, इति ।

पूर्वं यजुषा युनक्तीत्यत्र मन्त्रो विहितः ।

इदानीं रथयोगं विधत्ते—

प्रष्टिवाहिनं युनक्ति । प्रष्टिवाही वै देवरथः । देव- रथमेवास्मै युनक्ति ( ४ ), इति ।

प्रष्टिः पादत्रयोपेतो भोजनपात्रस्याऽऽधारस्तद्वदश्वैस्त्रिभिर्वहतीति प्रष्टिवाही । अत एवोपरिष्टाद्वक्ष्यते—'त्रयोऽश्वा भवन्ति रथश्चतुर्थः' इति ।

कल्पः—"अथैतानाजिसृतो विरूपापयति—

वाजिनो वाजं धावत मरुतां प्रसवे जयत वि योजना

मिमीध्वमध्वनः स्कभ्नीत । काष्ठां गच्छत " इति ।

हे वाजिनोऽश्वा वाजपक्षं संपादयितुं त्वरया धावत । मरुतामनुज्ञायां सत्या- मक्षं जयत । विशेषेण बहून्यपि योजनानि मिमीध्वं शीघ्रधावनेन परिमिता- न्स्वल्पानीव कुरुत । किंचाध्वनो मार्गान्स्कभ्नीत स्कम्भयत शीघ्रगत्या पीडि- तान्कुरुत । काष्ठामध्वसमाप्तिमाजिशिरो गच्छत । अस्मिन्मन्त्रे प्रथमभागं प्रतीकत्वेनोपादाय चतुर्थभागे काष्ठाशब्दं व्याचष्टे—

वाजिनो वाजं धावत काष्ठां गच्छतेत्याह । सुवर्गो वै लोकः काष्ठा । सुवर्गमेव लोकं यन्ति, इति ।

दिग्विशेषं विधातुं प्रस्तौति—

सुवर्गं वा एते लोकं यन्ति ।

य आजिं धावन्ति, इति ।

विधत्ते—

प्राञ्चो धावन्ति । प्राङिव हि सुवर्गो लोकः, इति ।

प्राञ्चः पूर्वाभिमुखाः । ऐन्द्रत्वात्स्वर्गस्य प्राग्दिग्वर्तित्वम् ।

कल्पः—"अथ रथान्धावतोऽनुमन्त्रयते, वाजे वाजेऽवत वाजिनो न इति चतसृभिरनुच्छन्दसम्" इति । तत्रेयमृक्प्रथमा—

वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः, इति ।

हे वाजिनोऽश्वा वाजे वाजे तत्तदन्ननिमित्तं धननिमित्तं च नोऽस्मानवत । विप्रा ब्राह्मणवत्स्नानेन शुद्धा अमृता मरणरहिताः श्रमरहिता ऋतज्ञा ऋतं सत्यमस्य गन्तव्यदेशं जानन्तस्तादृशाश्वाभिमानिनो हे देवा अस्य मध्वः पिबत, धावनात्पूर्वं पश्चाच्चावघ्राप्यमाणं मधुसमानं नैवारचरुरसं पिबत । पीत्वा च मादयध्वं हृष्टा भवत । ततस्तृप्ताः सन्तो देवयानैः पथिभिराजिं प्रति यात । अथ द्वितीया—

ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनः, इति ।

तेऽश्वा अर्वन्तो गतिकुशला हवनश्रुतोऽस्मदाह्वानश्रोतारो वाजिनोऽन्नवन्तो विश्वे सर्वेऽपि हवमाह्वानमस्मद्वचनं शृण्वन्तु । अथ तृतीया—

मितद्रवः सहस्रसा मेधसाता सनिष्यवः । महो ये रत्नं समिथेषु जभ्रिरे शं नो भवन्तु वाजिनो हवेषु, इति ।

महान्तमपि पन्थानं मितमल्पमिव द्रवन्ति गच्छन्तीति मितद्रवः । सहस्रसाः सहस्रस्य महतोऽन्नराशेः सनितारो दातारः । मेधसाता यज्ञस्य प्रदातारः । सनिष्यवः सनिं द्रव्यदानमस्मास्विच्छन्तः । ईदृशा येऽश्वाः समिथेषु संग्रामेषु महो रत्नमत्यधिकं शत्रोर्धनं जभ्रिरे जितवन्तस्ते वाजिनो नोऽस्माकं शं भवन्तु सुखकरा भवन्तु ।

अथ चतुर्थी—

देवताता मितद्रवः स्वर्काः । जम्भयन्तोऽहिं वृकꣳ
रक्षाꣳसि सनेम्यस्मद्युयवन् । अमीवाः, इति ।

देवताता देवानर्हन्तीति देवतातयः । मितद्रवः पूर्ववत् । स्वर्काः शीघ्रधा-
वनेन सुष्ठ्वर्चनीयाः, ते वाजिनोऽहिं वृकं रक्षांसि सर्पवदरण्यश्ववद्बाधका-
न्राक्षसाञ्जम्भयन्तः । वर्ण(वचन)व्यत्ययः । सनेमि क्षिप्रमेवामीवा रोगान-
स्मद्युयवन्नस्मत्तो वियोजितवन्तः । तदेवमध्यापकसंप्रदायमनुसृत्य मन्त्रचतु-
ष्टयं विभक्तम् । बोधायनाचार्यस्तु ते नो अर्वन्त इत्यादिर्वाजिनो हवेष्वित्य-
न्त एक एव मन्त्र इत्यभिप्रेत्य चतुर्थीमेषस्य वाजीत्यादिकामृचं चतुष्टयेऽ-
न्तर्भावयामास । तदीयपाठस्तु—

एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि ।
क्रतुं दधिक्रा अनु सन्तवीत्वत्पथामङ्काꣳस्यन्वापनीफणत् , इति ।

ग्रीवायां कक्ष आस्ये च तत्तदुचितरज्जुविशेषैर्बद्धः सन्नेष स्य वाज्ये-
षोऽश्वः क्षिपणिं तुरण्यति कशां त्वरयति बहुधा बद्धत्वाद्बन्धं भञ्जयितुमित-
स्ततो न गच्छति, कशायास्त्वरया शीघ्रं धावतीत्यर्थः । दधिक्रा धारका-
न्मार्गावरोधकान्पाषाणादीनप्यतिक्रामन्क्रतुं सादिनोऽभिप्रायमनुसन्तवीत्व-
त्सम्यगनुसंदधानः पथां मार्गाणामङ्कांसि लक्षणानि कुटिलानि निम्नोन्नतानि
च वाजयन्वापनीफणदनुक्रमेणर्जुत्वं समत्वं चाऽऽपादयंस्तुरण्यतीति पूर्वत्रा-
न्वयः ।

कल्पः—" स यद्यस्मै रथभ्रेषमाचक्षते आग्नीध्र एतां जुहोत्युत स्मास्य
द्रवतस्तुरण्यते " इति । पाठस्तु—

उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनुवाति प्रगर्धिनः । श्येनस्येव
ध्रजतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः, इति ।

उत स्मापि च द्रवतो गच्छतस्तुरण्यतस्त्वरयतः प्रगर्धिनोऽवधिं प्राप्तुं
काङ्क्षतोऽस्याश्वस्याङ्कसं शृङ्गारचिह्नं वस्त्रचामरादिकं परि सर्वस्मिन्नपि
देहे वर्तमानमनुवाति गच्छन्तमश्वमनूत्क्षिप्तत्वेन दृश्यमानं गच्छति । कस्य
किमिव । वेः पक्षिणः पर्णं न पक्ष इव । यथा त्वरया गच्छतः पक्षिणः
पक्ष उत्क्षिप्तो गच्छन्नवलोक्यते तथा धावतोऽश्वस्यालंकाररूपं वस्त्र-
चामरादिकं विस्पष्टमवलोक्यते । पक्षिमात्रस्य पर्णमङ्कसस्य दृष्टान्तत्वे-
नाभिहितम् । शीघ्रधावने श्येनदृष्टान्त उच्यते । ध्रजतो गच्छतः श्येनस्येव

दधिक्राव्णो धारकपर्वताद्यतिक्रामिण ऊर्जा सहात्यन्तबलेन सह तरित्रतो भृशं तरतोऽश्वस्येति योज्यम् । आपस्तम्बस्त्वेवमाह—" वाजिनो वाजं धावतेति चतसृभिर्धावतोऽनुमन्त्रयतेऽग्निरेकाक्षरेणेति धावत्सूज्जितीर्यजमानं वाचयति लक्षणं(?)पाण्योदश्च आवृत्य प्रदक्षिणमावर्तते मितद्रव इति चतसृभिः प्रत्याधावतोऽनुमन्त्रयते " इति । वाजिनो वि योजना वाजे वाजे ते नो अर्वन्त इति चतस्रः । प्रधावतोऽनुमन्त्रणं विधत्ते—

चतसृभिरनुमन्त्रयते । चत्वारि च्छन्दाꣳसि ।
छन्दोभिरेवैना सुवर्गं लोकं गमयति (५), इति ।

गायत्री त्रिष्टुब्जगत्यनुष्टुबिति च्छन्दसां चतुष्टयम् ।
उदङ्मुखत्वेनाऽऽवृत्तिं विधत्ते—

प्र वा एतेऽस्माल्लोकाच्च्यवते(न्ते) । य
आजिं धावन्ति । उदञ्च आवर्तन्ते ।
अस्मादेव तेन लोकान्नयन्ति, इति ।

कल्पः—" रथविमोचनीयं जुहोत्या मा वाजस्य प्रसवो जगम्यात् " इति पाठस्तु—

आ मा वाजस्य प्रसवो जगम्यादा द्यावापृथिवी विश्वशंभू । आ माऽऽगन्तां पितरा मातरा चाऽऽमा सोमो अमृतत्वाय गम्यात्, इति ।

वाजस्यान्नस्य प्रसव उत्पत्तिर्मां प्रत्याजगम्यादागच्छतु । द्यावापृथिव्यौ च विश्वशंभू कृत्स्नस्य जगतः सुखं भावयन्तौ(न्त्यौ) मामागच्छताम् । पितरा मातराऽस्मदीयः पिता च मां प्रत्यागन्तां चिरजीवित्वाय समागच्छताम् । किंच सोमश्चामृतत्वाय मम देवत्वजन्मने मां प्रत्यागम्यादागच्छतु । अपाम सोमममृता अभूमेति ह्यन्यत्र श्रुतम् । विधत्ते—

रथविमोचनीयं जुहोति प्रतिष्ठित्यै, इति ।

रथविमोकेनाश्वानामायासं परिहृत्य स्वयं प्रतिष्ठितो भवति ।
अन्ते वाजप्रसवोक्तेरभिप्रायमाह—

आ मा वाजस्य प्रसवो जगम्यादित्याह ।

अन्नं वै वाजः । अन्नमेवावरुन्धे, इति ।

इतरैः षोडशरथैर्धावद्भ्यः कृष्णलदानं विधातुं प्रस्तौति--

यथालोकं वा एत उज्जयन्ति ।

य आजिं धावन्ति ( ६ ), इति ।

ये रथान्तरवर्तिन आजिं धावन्ति, एते यथा लोकं यथास्थानमुज्जयन्ति यस्मिन्यस्मिन्स्थाने यो यो धावत्यसावसौ तत्तत्स्थानं जयतीत्यर्थः ।

विधत्ते--

कृष्णलं कृष्णलं वाजसृद्भ्यः प्रयच्छति । यमेव ते

यं जं लोकमुज्जयन्ति । तं परिक्रीयावरुन्धे, इति ।

यवत्रयपरिमितं सुवर्णं कृष्णलम् । वाजमन्नमुद्दिश्य सरन्ति धावन्तीति वाजसृतो रथान्तरवर्तिनः । अत एवाऽऽपस्तम्बः--" यजुर्युक्तं यजमान आरोहति वाजसृत इतरान्रथान् " इति । एकैकस्मै वाजसृत एकैकं कृष्णलं दद्यात्तेन तैः संपादितमन्नं निवासस्थानं च परिक्रीय स्वाधीनं करोति ।

तान्षोडश कृष्णलान्पुनरादायैकीकृत्य ब्रह्मणे तद्दानं विधत्ते --

एकधा ब्रह्मण उपहरति । एक-

धैव यजमाने वीर्यं दधाति, इति ।

चरुं विधातुं प्रस्तौति--

देवा वा ओषधीष्वाजिमयुः । ता बृहस्पतिरुदज-

यत् । स नीवारान्निरवृणीत । तन्नीवाराणां नीवा-

रत्वम्, इति ।

यथा पूर्वं प्रथमतो वाजपेययागार्थमाजिं धावतो बृहस्पतेर्जयस्तद्वदत्राप्योषधीषु सारस्वीकारायाऽऽजिपासौ बृहस्पतिर्जयं प्राप्यौषधीषु सारत्वेन नीवारानन्याभ्य ओषधीभ्यो निष्कृष्यावृणीत निःशेषेण वृतत्वान्नीवारत्वं संपन्नम् ।

विधत्ते—

नैवारश्चरुर्भवति (७)। एतद्वै देवानां परममन्नम्। यन्नीवाराः। परमेणैवास्मा अन्नाद्येनावरमन्नाद्यमवरुन्धे, इति।

शाल्यादिभ्योऽत्यन्तपूतत्वेन नीवाराणां देवान्नत्वम्।

चरोः परिमाणं विधत्ते—

सप्तदशशरावो भवति। सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै, इति।

चरोः सप्तदशशरावपरिमितत्वं पूर्वं तत्प्रचारविधौ व्याख्यातम्।

चरुनिष्पादनोपयुक्तं द्रव्यविशेषं विधत्ते—

क्षीरे भवति। रुचमेवास्मिन्दधाति, इति।

रुचं स्वादुत्वम्।

निष्पन्ने चरौ घृतप्लावनं विधत्ते—

सर्पिष्वान्भवति मेध्यत्वाय, इति।

एतदेवाभिप्रेत्याश्वदेवानुद्दिश्यास्य मध्वः पिबत मादयध्वमित्यस्य मन्त्रस्यार्थो व्याख्यातः। चरोर्देवतां विधत्ते—

बार्हस्पत्यो वा एष देवतया (८)। यो वाजपेयेन यजते। बार्हस्पत्य एष चरुः, इति।

कर्तव्य इत्यध्याहारः। वाजपेययाजिनो बृहस्पतिर्देवतेति तत्रत्यचरोरपि सा देवता युक्ता।

कल्पः—"तमेतान्यजुर्युजोऽश्वानवघ्रापयति—

वाजिनो वाजजितो वाजꣳ सरिष्यन्तो वाजं जेष्यन्तो बृहस्पतेर्भागमवजिघ्रत" इति।

वाजजितोऽन्नं जेतुमुद्यता वाजिनो हेऽश्वा वाजमन्नं जेतुमाजिमुद्दिश्य सरिष्यन्तो धावनं करिष्यन्तो वाजमन्नं जेष्यन्तो यूयं बृहस्पतेर्भागमिमं चरुमवजिघ्रत। कल्पः—"यजुर्युजोऽश्वान्मत्याधावतोऽवघ्रापयति—"

वाजिनो वाजजितो वाजꣳ सरिष्यन्तो वाजं
जिगिवाꣳसो बृहस्पतेर्भागे निमृड्ढ्वम् " इति ।

यजमानार्थे रथे यजुर्भिर्मन्त्रैर्योजनीया अश्वा यजुर्युजः । ससृवांसो धावनं कृतवन्तः । जिगिवांसो जयं कृतवन्तः । निमृड्ढ्वं शुद्धा भवत । आपस्तम्बमते तु जिगिवाꣳस इत्यन्तो मन्त्रः । तदर्थपूरणाय बृहस्पतेर्भागमवजिघ्रतेति पूर्वस्मान्मन्त्रादनुवर्तनीयम् । अवशिष्टभागो मन्त्रान्तरं तस्य विनियोगं स एवाऽऽह—" बृहस्पतेर्भागे निमृड्ढ्मिति प्रपोथेषु च लेपान्निमार्ष्टि " इति । प्रपोथा ओष्ठाग्राणि । आजिधावनात्पुरा पश्चाच्चावघ्रापणं विधत्ते—

अश्वान्सरिष्यतः ससृुषश्चावघ्रापयति । यमेव ते वाजं लोकमुज्जयन्ति । तमेवावरुन्धे, इति ।

कल्पः—"अथ रथान्विमुच्यमानाननुमन्त्रयते—

इयं वः सा सत्या संधाऽभूद्यामिन्द्रेण समधद्ध्वम् " इति ।

हे रथा वो युष्माकमियं संधाऽऽजिधावनप्रतिज्ञा सा सत्याऽभूत् । यां प्रतिज्ञामिन्द्रेणेन्द्रानुग्रहेण समधद्ध्वं सम्यग्धारितवन्तः । इन्द्रानुग्रहायैवेन्द्रस्य वज्रोऽसीति रथमन्त्र आम्नातः । कल्पः—"दुन्दुभीनवस्यतोऽनुमन्त्रयते—

अजीजिपत वनस्पतय इन्द्रं वाजं विमुच्यध्वम् " इति ।

हे वनस्पतयो वनस्पतिविकारा दुन्दुभय इन्द्रं यागस्वामिनं वाजमन्नमुद्दिश्याजीजिपत यथा जितवान्भवति तथा जितवन्तः । तादृशा यूयं पूर्वं यत्र बद्धास्ततो विमुच्यध्वं विमुक्ता भवत । बन्धनप्रदेशस्त्वापस्तम्बेन दर्शितः—" दक्षिणस्यां वेदिश्रोण्यां सप्तदश दुन्दुभीन्प्रबध्नाति " इति । विधत्ते—

अजीजिपत वनस्पतय इन्द्रं वाजं विमुच्यध्वमिति दुन्दुभीन्विमुञ्चति । यमेव ते वाजं लोकमिन्द्रियं दुन्दुभय उज्जयन्ति । तमेवावरुन्धे ( ९ ), इति ।

अभिजयति वा एषा वाग्दीयन्तेऽस्मै युनक्ति गमयति य आजिं धावन्ति भवति देवतयाऽष्टौ च ।

अत्र विनियोगसंग्रहः—

देवाऽऽरोहेद्रथं स्वामी ब्रह्मारोहणमन्त्रणम् ।
देवेतीन्द्रा दुन्दुभीनां घोषोऽश्वाज कशाग्रहः ॥
अर्वाऽसीति त्रिभिर्मन्त्रैर्युनक्त्यश्वत्रयं रथे ।
वाजीत्येतैर्मन्त्रयेत चतुर्भिर्धावतो रथान् ॥
मितेत्याभिश्चतसृभिस्नान्प्रत्याधावतो रथान् ।
आ मा रथविमुक्त्याख्यं जुहुयाद्वाजिनद्वयात् ॥
गवेः पुरोपरिष्टाच्च घ्रापयेच्च रथश्वकान् ।
बृहादिजिघ्रतेत्यन्तो द्वितीयेऽप्यनुषज्यते ॥
बृहेति मार्ष्टि घोणायामियं तु रथमन्त्रणम् ।
अजी दुन्दुभिमन्त्रः स्यादेकविंशतिरीरिताः ॥ इति ।

अथ मीमांसा । दशमाध्यायस्य तृतीयपादे चिन्तितम् ।

यजुर्युक्तोऽध्वर्युभागं बाधते यमयत्युत ।
बाधः प्राकाशवन्मैवं पक्षे प्राप्तो नियम्यते ॥ [ इति ] ।

वाजपेये श्रूयते—यजुर्युक्तं रथमध्वर्यवे ददातीति । तत्रायमर्थः—रथशकटदासीनिष्कादीनि सप्तदश द्रव्याणि प्राकृतगवाश्वादिदक्षिणाद्रव्यबाधकान्यत्र विहितानि । तेषु च प्रतिद्रव्यं सप्तदशसंख्या विहिता । ततो रथाः सप्तदश । तेषु मुख्यं रथं यजमानारोहणायेन्द्रस्य वज्रोऽसीत्यादिभिर्यजुर्वेदोक्तैर्मन्त्रैः सज्जी करोति । सोऽयं यजुर्युक्तो रथस्तं च दक्षिणाकालेऽध्वर्यवे दद्यादिति । प्राकाशावध्वर्यवे ददातीत्यत्र यथा चोदकप्राप्तस्याध्वर्युभागस्य बाध एवमत्रापि । ननु सप्तदशद्रव्यविधानेनैव प्राकृतद्रव्यबाधः सिद्धः । बाढम् । तथाऽप्यर्धिनः पादिन इत्यादिसमाख्याप्रापिता विषमविभागविशेषक्लृप्तिर्न द्रव्यान्तरमात्रेण बाधितुं शक्या । विरोधिनो विधा[ना]न्तरस्याविधानादतश्चोदकप्राप्तेयमध्वर्योर्भागविशेषक्लृप्तिः । सा यजुर्युक्तरथरूपभागविशेषविधिना बाध्यते । तस्मादध्वर्योर्न रथान्तरभागोऽस्ति । नापि शकटदास्यादिभाग इति पूर्वः पक्षः । नैतद्युक्तम् । प्राकाशदृष्टान्तवैषम्यात् । अत्यन्तमप्राप्तौ हि प्राकाशौ तत्र विधेयौ । यजुर्युक्तरथस्तु पक्षे प्राप्तः । तथा हि—सप्तदश रथान्ददातीत्युक्ते कस्य को रथ इति वीक्षायां यजमानेच्छाया निया-

प्रकृतत्वाद्यदाऽध्वर्यवे तं दातुमिच्छति तदा प्राप्नोति यदा नेच्छति तदा न प्राप्नोतीति पक्षे प्राप्तिः । ततो यजुर्युक्तो यो रथः सोऽध्वर्यवेऽवश्यं देय इति नियम्यतेऽतो न कल्प्यात्यनेन बाधः ।

तत्रैव द्वितीयपादे चिन्तितम्—

शरावैः सप्तदशभिर्यश्चरुस्तत्र मुष्टयः ।
चत्वारः सन्ति नो वोत स्यादेकं मुष्टिसंख्ययोः ॥
तत्किमाद्यश्चोदितत्वाच्छरावापूरणान्न सः ।
द्वितीयोऽस्तीति चेन्मैवं द्विलोपे बाधगौरवात् ॥
तृतीयोऽस्त्वेकलोपेऽत्र धर्मसंख्यैव लुप्यताम् ।
क्रियायोगान्न तद्धर्मः प्राथम्यात्साऽनुगृह्यताम् ॥ [ इति ] ।

प्रकृतौ चतुरो मुष्टीन्निर्वपतीति मुष्टितत्संख्ये श्रुते । तथा वाजपेये विकृतिरूपः सप्तदशशरावश्चरुः श्रुतः । तत्र चरौ किं मुष्टिसंख्ये द्वे अपि विद्येते किंवा द्वे अपि न विद्येते । आहोस्विदुभयोरेकमस्त्यन्यन्नास्ति । यद्येकं तदाऽपि किं मुष्टिरेव किंवा संख्यैवेति संशयः । चोदकप्राप्तमुभयमस्तीत्याद्यः पक्षः प्राप्नोति । चतुर्भिर्मुष्टिभिः सप्तदशशरावपूरणसमर्थस्य चरोरनिष्पत्तेः स पक्षो न युक्तः । तर्हि मुष्टिसंख्ये द्वे अपि बाध्येते इति द्वितीयः पक्षोऽस्त्विति चेन्मैवम् । एकतरबाधेनैव पूरणाभावपरिहारे सिद्धे सति द्वयोर्बाधे गौरवप्रसङ्गात् । नन्वत्रोपदिष्टेन शरावद्रव्येणातिदिष्टं मुष्टिद्रव्यं बाध्यते । तथा सप्तदशसंख्यया चतुःसंख्या बाध्यत इत्युभयबाधोऽवश्यंभावी । मैवम् । भिन्नविषयत्वेन बाधासंभवात् । शरावसप्तदशसंख्ये यागसंबद्धे, मुष्टिचतुःसंख्ये तु निर्वापसंबद्धे इति विषयभेदः । कथं तर्ह्यत्र बाधप्रसङ्गः । अन्यथाऽनुपपत्त्येति वदामः । अनुपपत्तिश्च पूरणासंभवेन दर्शिता । पूरणं चैकबाधेनाप्युपपद्यते । मुष्टिबाधे यथोचितं चतुःसंख्योपेतैः कुडवादिभिः पूर्तिः स्यात् । चतुःसंख्याबाधे यथोचितमधिकसंख्योपेतैर्मुष्टिभिः पूर्तिर्भविष्यति । एवं तर्ह्येकलोप इति तृतीयः पक्षोऽस्तु । तत्र संख्या धर्मः । मुष्टिर्धर्मी । तथा सति मुष्टौ लुप्ते सति निराश्रयस्य धर्मस्यासिद्धेः संख्यालोपोऽप्यवश्यंभावी । संख्यायां तु लुप्तायां मुष्टिः शक्नोत्यवस्थातुम् । तस्मात्संख्यैव लुप्यतामिति प्राप्ते ब्रूमः । चतुःसंख्या तावन्न मुष्टिमात्रेऽन्वेति । कर्मकारकत्वाद्द्वितीयाविभक्त्यन्तस्य चतुःशब्दस्य * सहकर्म-

* सकर्मकेणेत्यर्थः ।

कारकेण निर्वपतिधातुना सहान्वयात् । अतः संख्या न मुष्टिधर्मः । पाणिकान्वयेन तु मुष्टिविशेषणं भविष्यति । संख्यामुष्ट्योः क्रियासंबन्धे समाने सत्यपि प्रथमश्रुतत्वात्साऽनुगृह्यते चरमश्रुतत्वेन दुर्बलो मुष्टिर्बाध्यत इति राद्धान्तः । *

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके तृतीयाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ सप्तमोऽनुवाकः ।

---

अष्टमे रथधावनमुक्तं नवमे यूपारोहणमुच्यते । कल्पः—"अथ यजमानं तार्प्यं परिधापयति—

क्षत्रस्योल्बमसि, इति । क्षत्रस्य योनिरसि, इति दर्भमयं पत्नीम्" इति ।

घृताक्तं वस्त्रं तार्प्यम् । क्षत्रस्य राजस्थानीयस्य यजमानस्य गर्भत्वेनोपचर्यमाणस्योल्बमावरणमसि । उल्बवृतो गर्भ इति च्छन्दोगा आमनन्ति । हे दर्भमय पट क्षत्रस्य राजमहिषीस्थानीयस्य पत्नीशरीरस्य योनिरसि शीतनिवारणकारणमसि । तदेतत्परिधानद्वयं विधत्ते—

तार्प्यं यजमानं परिधापयति । यज्ञो वै तार्प्यम् । यज्ञेनैवैन५ समर्धयति । दर्भमयं परिधापयति । पवित्रं वै दर्भाः । पुनात्येवैनम् । वाजं वा एषोऽवरुरुत्सते । यो वाजपेयेन यजते । ओषधयः खलु वै वाजः । यद्दर्भमयं परिधापयति (१) । वाजस्यावरुद्ध्यै, इति ।

तार्प्यस्य यज्ञस्य यज्ञसाधनत्वाद्यज्ञत्वम् । एवं पत्नीदेहम् । वाजपेययाजिनोऽन्नावरोधकामिन ओषधिरूपदर्भमयेनान्नमवरुद्धं भवति ।

कल्पः—"अथ जायामामन्त्रयते—

---

* अत्र—"इति माधवीये० प्रथमकाण्डे सप्तमप्रपाठकेऽष्टमोऽनुवाकः" इति संहिताभाष्यक्रमेणानुवाकसमाप्तिर्वर्तते ।

जाय एहि सुवो रोहाव, इति । रोहावहि सुवः, इति—इतरा प्रत्याह ।
अहं नावुभयोः सुवो रोक्ष्यामि, इति यजमान." इति ।

स्पष्टार्थो मन्त्रः । एहीत्याह्वानस्य तात्पर्यमाह—

जाय एहि सुवो रोहावेत्याह । पत्नियां एवैष
यज्ञस्यान्वारम्भोऽनवच्छित्त्यै, इति ।

आह्वान(ने)न यजमानस्य यज्ञारम्भमनु पत्न्या अपि यज्ञारम्भे सति यज्ञोऽनवच्छिन्नो भवति ।

पूर्वमन्त्रैः स्वर्गत्वेन निरूपितस्याऽऽरोहणीयस्य यूपस्य चोदकप्राप्तं परिमाणमपवादितुं परिमाणान्तरं विधत्ते—

सप्तदशारत्निर्यूपो भवति । सप्तदशः
प्रजापतिः । प्रजापतेराप्त्यै, इति ।

चतुर्विंशत्यङ्गुलिपरिमितोऽरत्निः, सप्तदशसंख्याका अरत्नयः परिमाणं यस्य यूपस्येति विग्रहः ।

अन्यद्गुणद्वयं यूपस्य विधत्ते—

तूपरश्चतुरश्रिर्भवति, इति ।

इतरेषां यूपानामग्रे शृङ्गस्थानीयः काष्ठशेषोऽणीयाश्चषालमतियोकायावशेष्यते सोऽस्य नास्तीति तूपरत्वम् । अष्टाश्रित्वमपवदितुं चतुरश्रित्वम् ।

चषालनामकस्य यूपकटकस्य दारुमयत्वापवादाय विधत्ते—

गौधूमं चषालम् । न वा एते व्रीहयो न यवाः ।
यद्गोधूमाः (२) । एवमिव हि प्रजापतिः समृद्ध्यै ।
अथो अमुमेवास्मै लोकमन्नवन्तं करोति, इति ।

गौधूमं कुर्यादिति शेषः । यथा व्रीहिभ्यो यवेभ्यश्च गोधूमानां लोके प्रशस्तत्वमेवमेवान्येभ्यो देवेभ्यः प्रशस्तः प्रजापतिः । किंच गोधूमसंपत्त्या स्वर्गोऽन्नवान्भवति ।

यूपस्य वेष्टनं विधत्ते—

वासोभिर्वेष्टयति । एष वै यजमानः । यद्यूपः । सर्वदेवत्यं वासः । सर्वाभिरेवैनं देवताभिः समर्धयति । अथो आक्रमणमेव तत्सेतुं यजमानः कुरुते । सुवर्गस्य लोकस्य समष्ट्यै, इति ।

वाससां संख्यामापस्तम्ब आह—"रशनाकाले सप्तदशभिर्वासोभिर्यूपं वेष्टयति" इति । वाससां सर्वदेवत्यत्वमग्नेस्तूषाधानमित्यादौ सौमिकदीक्षाप्रकरणे विस्पष्टम् । आक्रमणं स्वर्गारोहणं सोपानसदृशम् ।

कल्पः—"आहवनीये जुहोत्यन्वारब्धे यजमाने वाजश्च प्रसवश्चेति द्वादश स्रुवाहुतीः" इति ।

पाठस्तु—वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चान्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च, इति ।

वाजादयः सर्वे मम सन्त्विति शेषः । वाजोऽन्नं प्रसवस्तस्योत्पत्तिः । अपिजस्तस्यैव पुनः पुनरुत्पत्तिः । क्रतुः संकल्पो भोगादिविषयो यागो वा । सुवस्तस्यैवोत्पत्तौ हेतुरादित्यः । अथवा वाजादयश्चैत्रादिमासानां नामविशेषाः । तदानीं सर्वे ते प्रीणन्त्विति वाक्यशेषः । चकाराः परस्परसमुच्चयार्थाः । अनुक्तकालादिदेवतासमुच्चयार्था वा । विधत्ते—

द्वादश वाजप्रसवीयानि जुहोति ( ३ ) । द्वादश मासाः संवत्सरः । संवत्सरमेव प्रीणाति । अथो संवत्सरमेवास्मा उपदधाति । सुवर्गस्य लोकस्य समष्ट्यै, इति ।

वाजशब्दप्रसवशब्दौ येषु कर्मसु मन्त्रत्वेन श्रूयेते तानि कर्माणि वाजप्रसवीयानि । अन्नोत्पत्तिहेतुत्वाद्वा वाजप्रसवीयत्वम् । न केवलमनेन होमेन संवत्सरदेवतायाः प्रीतिः किं त्वस्य यजमानस्य स्वर्गप्राप्तये संवत्सरदेवताभिः श्रेणिवदुपधानमाधानमाधारमपि करोति ।

कल्पः—"तं दशभिः कल्पै रोहत्यायुर्यज्ञेन कल्पताम्" इति । तं यूपम् । कल्पैः कल्पशब्दोपेतैः ।

पाठस्तु—"आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम्, इति ।

आत्मा जीवः । यज्ञेन यज्ञसंबन्धिना यूपारोहणेन । आयुरादयः स्वस्वप्रयोजनसमर्था भवन्तु । विधत्ते—

दशभिः कल्पै रोहति । नव वै पुरुषे प्राणाः । नाभिर्दशमी । प्राणानेव यथास्थानं कल्पयित्वा । सुवर्ग लोकमेति । एतावद्वै पुरुषस्य स्वम् (४) । यावत्प्राणाः । यावदेवास्यास्ति । तेन सह सुवर्गं लोकमेति, इति ।

अन्यत्र सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चाविति श्रुतत्वादिहापि छिद्राभिप्रायः प्राणशब्दः । अनेन कल्पमन्त्रपाठेन प्राणापानचक्षुःश्रोत्रादीन्प्राणान्स्वस्वस्थाने स्थापयित्वा तैस्तदीयस्थानैः सह स्वर्गः प्राप्तो भवति ।

कल्पः—"बाहू उद्गृह्णाति—

सुवर्देवाꣳ अगन्मामृता अभूम प्रजापतेः प्रजा अभूम" इति ।

उद्गृहीताभ्यां बाहुभ्यां स्वर्गप्राप्तिमभिनयता यजमानेनेदमुच्यते । वयं स्वर्गाविरिथतद्देवान्प्रत्यगन्म प्राप्ताः स्मः । प्राप्य चामृता देवा अभूम । अतः प्रजापतेः प्रीतिविषयाः प्रजा अस्मिन्भूलोके यज्ञानुष्ठानपरा अभूम । मन्त्रस्य त्रीन्भागान्पृथग्व्याचष्टे—

सुवर्देवाꣳ अगन्मेत्याह । सुवर्गमेव लोकमेति । अमृता अभूमेत्याह । अमृतमिव हि सुवर्गो लोकः । प्रजापतेः प्रजा अभूमेत्याह । प्राजापत्यो वा अयं लोकः । अस्मादेव तेन लोकान्नैति (५), इति ।

तेन तृतीयभागपाठेन भूलोकात्सर्वात्मना निर्गतो न भवति ।

कल्पः—"अथ तं लोकं प्रत्यवेक्षते—

समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोषः, इति ।

संगतोऽस्मि संगम्यतामिति यथायोगमध्याहर्तव्यम् ।

आशीःपरत्वेन व्याचष्टे—

समहं प्रजया सं मया प्रजेत्याह ।

आशिषमेवैतामाशास्ते, इति ।

कल्पः—"तमेवमासपुटैर्घ्नन्ति—

अन्नाय त्वा, इति पुरस्तादध्वर्युः, अन्नाद्याय त्वा, इति दक्षिणतो ब्रह्मा,

वाजाय त्वा, इति पश्चाद्धोता, वाजजित्यायै त्वा, इत्युत्तरत उद्गाता" इति ।

ऊषखननपांसव आसास्तानश्वत्थपत्रैः पुटीकृत्य तैरासपुटैर्यूपादवरोहन्तं यजमानं हन्युः । अत एवाऽऽपस्तम्ब आह—"तमाश्वत्थैरासपुटैरूषपुटैरुपयैर्वा वैश्याः(वश्याः) प्रतिदिशमर्पयन्ति महर्त्विजो वा दीर्घवंशेषु प्रबध्य" इति । सामान्येन प्राणिभिर्भोज्यमन्नम् । राजामात्यादिभिर्भोज्यमन्नाद्यम् । तत्राप्यपूपादिविशेषो वाजः । तस्य सर्वस्यान्नस्य संपादनं वाजजित्या । द्विविधं हननं क्रमेण विधत्ते—

आसपुटैर्घ्नन्ति । अन्नं वा इयम् । अन्नाद्येनैवैनꣳ

समर्धयन्ति । ऊषैर्घ्नन्ति । एते हि साक्षादन्नम् ।

यदूषाः । साक्षादेवैनमन्नाद्येन समर्धयन्ति, इति ।

ऊषाणामाधानादिसाधनत्वेन पारलौकिकान्नं प्रति साक्षात्साधनत्वम् ।

हनने प्रकारविशेषं विधत्ते—

पुरस्तात्प्रत्यञ्चं घ्नन्ति ( ६ ) ।

पुरस्ताद्धि प्रतीचीनमन्नमद्यते, इति ।

हन्यमानस्य पुरस्तादवस्थितो हन्ता प्रत्यञ्चं स्वाभिमुखं हन्यात् । लोकेऽपि हि पुरतोऽवस्थितात्पात्रात्समादाय स्वाभिमुखं तदन्नमद्यते । एव-

दापस्तम्बेन स्पष्टीकृतम्--"मुखतोऽभिघ्नन्ति हन्तारं हन्तारमभिपर्यावर्तते(?)" इति।

ताड्यमानप्रदेशं विधत्ते--

शीर्षतो घ्नन्ति। शीर्षतो ह्यन्नमद्यते, इति।

चतुर्दिक्षु हननं विधत्ते—

दिग्भ्यो घ्नन्ति। दिग्भ्य एवास्मा अन्नाद्यमवरुन्धते, इति।

कल्पः "अत्रास्मै प्रत्यवरोहत आसन्दीं निदधाति तस्यां बस्ताजिनमास्तृणाति बस्ताजिने शतमानꣳ हिरण्यं दक्षिणं पादं हिरण्य उपावरोहयति—

अमृतमसि, इति। पुष्टिरसि प्रजननमसि, इति सव्यं बस्ताजिने" इति।

हे हिरण्य त्वं विनाशरहितमसि। नह्यग्नौ प्रक्षिप्तमपि हिरण्यं काष्ठादिवद्विनश्यति। हे बस्ताजिन त्वं पुष्टिरसि। संवत्सरे बहुपत्योत्पादकत्वात्। एतदेवाभिप्रेत्य प्रजननमसीत्युच्यते। हिरण्येऽवरोहं विधातुं प्रस्तौति—

ईश्वरो वा एष पराङ्प्रदघः। यो यूपꣳ रोहति, इति।

यूपमारूढो यजमानः पराङ्लोकाद्विमुखः प्रदघः प्रदग्धुं स्वात्मानं विनाशयितुमीश्वरः समर्थो भवति। अथवा प्रदघः प्रकर्षेण गन्तुमीश्वरो न पुनरावर्तेत इत्यर्थः।

विधत्ते—

हिरण्यमध्यवरोहति। अमृतं वै हिरण्यम्। अमृतꣳ सुवर्गो लोकः। अमृत एव सुवर्गे लोके प्रतितिष्ठति, इति।

हिरण्यस्य परिमाणं विधत्ते—

शतमानं भवति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति, इति।

मानशब्देन पणस्य विंशो भागोऽभिधीयते । ततः पञ्चपणपरिमितमित्युक्तं भवति । शतसंख्याकाः संवत्सराः पुरुषस्याऽऽयुः । दशानां ज्ञानकर्मेन्द्रियाणां मध्ये चक्षुरादीन्द्रियस्यैकैकस्य दशसु नाडीषु वृत्तिभेदेन शतेन्द्रियत्वम् ।

बस्ताजिने वामपादप्रक्षेपं विधातुं प्रस्तौति—

पुष्ट्यै वा एतद्रूपम् । यदजा । त्रिः
संवत्सरस्यान्यान्पशून्परिप्रजायते , इति ।

संवत्सरे सकृत्प्रसवोपेतानन्यान्गवादिपशून्परित्यज्य संवत्सरे त्रिरपत्यानि प्रसूतेऽतोऽस्याः पुष्टिरूपत्वम् ।

विधत्ते—

बस्ताजिनमध्यवरोहति । पुष्ट्यामेव
प्रजनने प्रतितिष्ठति ( ७ ), इति ।

परिधापयति गोधूमा जुहोति स्वं नैति प्रत्यञ्चं घ्नन्ति लोको नवं च ।

अथ विनियोगसंग्रहः—

क्षत्त्रतार्प्यं क्षत्त्रदार्भ्यं परिधत्तोऽत्र दंपती ।
जाये स्वाभ्याह्वयेद्भार्यां रोहा तं प्रतिवक्ति सा ॥
अहं त्वाभ्याह वाजस्य स्रुहुत्व दूर[illegible]ीः ।
आयुर्दशभिरारोहेत्स्वयं बाहूद्ग्र[illegible]
सं भुवं प्रेक्षतेऽञ्जाय चतुर्भिस्तु [illegible] ।
दिग्भ्यो घ्नन्त्यासपुटैरमृतपुष्टिद्वयात्पदे ।
स्वर्णवरात्वचोर्द्वाभ्यां त्रिंशत्त्विहोदिताः ॥ [ इति ]।

अथ मीमांसा । दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

तार्प्यमहतवस्त्रस्य बाधकं स्यान्न वाऽग्रिमः ।
गुणाच्छादनकार्यैक्यादयोग्यत्वात्समुच्चयः ॥ इति ।

महाव्रते श्रूयते—तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नीति । प्रकृतावहतं वासः परिधत्त इति । घृताक्तं वस्त्रं तार्प्यमित्युच्यते । ताभ्यां तार्प्यदर्भम-

याभ्यां दंपत्योरहतं वस्त्रं बाध्यते । कुतः । परिधत्त इत्यनेन प्रकृतिलिङ्गेन गुणाच्छादनलक्षणस्य कार्यस्यैकत्वावगमात् । मैवम् । तार्प्यदर्भमययोर्गुणमाच्छादयितुमयोग्यत्वात् । परिधानं स्वत्रोपरितनं प्रावरणम् । तत्कार्यभेदात्समुच्चयः ।

तृतीयध्यायस्य प्रथमपादे चिन्तितम्—

भवेत्सप्तदशारत्निर्वाजपेयस्य यूपकः ।
उन्मानं द्रव्यगं वाजपेयस्याङ्गं पशोरुत ॥
आनन्तर्यात्प्रकरणात्कर्माङ्गं षोडशिन्यदः ।
ऊर्ध्वपात्रे खादिरेऽग्रे संयुज्यान्वेति कर्मणा ॥
यूपद्वारा पशोरङ्गं पशुद्वारा च कर्मणः ।
सौमिकत्वाद्वाजपेये यूपो नास्ति पशुं विना ॥ [ इति ] ।

वाजपेयप्रकरणे श्रूयते——सप्तदशारत्निर्वाजपेयस्य यूपो भवतीति । अत्र यूपद्रव्यगतं सप्तदशारत्निशब्दोदितं यदूर्ध्वमानं तद्वाजपेयकर्मणोऽङ्गम् । सप्तशारत्निशब्दवाजपेयशब्दयोरानन्तर्यात् । प्रकरणं चैवमनुगृह्यते । यदि कर्मणः साक्षादूर्ध्वं मानं न संभवेत्तर्हि वाजपेयगतं खादिरमूर्ध्वं यत्षोडशिपात्रं तस्मिन्नद उन्मानं संबध्य तद्द्वारा कर्मणाऽन्वेतीति प्राप्ते ब्रूमः । सप्तदशारत्निर्यूप इति सामानाधिकरण्याद्यूपेन साक्षात्संबध्यते । तस्य च यूपस्य पश्वङ्गत्वादुन्मानं यूपद्वारा पशोरङ्गं भवति । तस्यापि पशोर्वाजपेयाङ्गत्वात्पशुद्वारा कर्मणोऽङ्गम् । यद्यपि वाजपेययूपशब्दयोरानन्तर्यमस्ति तथाऽपि वाजपेयस्य सोमयागतया साक्षाद्यूपसंबन्धाभावात्पशुव्यवधानमभ्युपेयम् । वाजपेयस्येति षष्ठ्याः संबन्धमात्रवाचित्वेन व्यवहितसंबन्धमप्यसावभिधत्ते । देवदत्तस्य नप्तेतिप्रयोगवत् । यत्सप्तदशारत्निवाजपेयशब्दयोरानन्तर्यं यच्च प्रकरणं तदुभयं न विरुद्धम् । पश्वङ्गत्वेऽप्यन्ततो वाजपेयाङ्गत्वाङ्गीकारात् । किंच पूर्वपक्षे यूपशब्देन षोडशिपात्रं लक्षणीयम् । सिद्धान्ते तु नासौ दोषः । तत्रैवाष्टमपादे चिन्तितम्—

वाचयेत्स्वामिनं ब्राह्मं वाचनीयो ज्ञ एव वा ।
अविशेषादुभौ ज्ञस्य स्वामित्वाद्वाचयेदमुम् ॥ [ इति ] ।

वाजपेये श्रूयते——क्लृप्तीर्यजमानं वाचयतीति । आयुर्यज्ञेन कल्पतामित्यादयो मन्त्राः क्लृप्तयः । तत्र मन्त्रतदर्थाभिज्ञमनभिज्ञं चोभावपि वाचयेत् । विद्वांसं वाचयेदित्येवं विशेषस्याश्रवणात् । अनभिज्ञं तदैव विज्ञपित्वाऽपि

वाचयितुं शक्यत्वादिति चेन्नैवम् । अध्ययनविधिबलादधीतवेदस्य विदितवेदार्थस्यैव यजमानत्वात् । तस्मादभिज्ञमेव वाचयेत् । *

## इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके तृतीयाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

अथ तृतीयाध्यायेऽष्टमोऽनुवाकः ।

नवमे यूपारोहणमुक्तम् । दशमेऽन्नहोमा उच्यन्ते । कल्पः—"अथास्यैतत्पुरस्तादौदुम्बरे द्रोणे सर्वौषधमाज्येन समुदायुतं भवति तस्यौदुम्बरेण स्रुवेणोपघातं सप्तान्नहोमाञ्जुहोति वाजस्येमं प्रसवः सुषुवेऽग्रे सोममिति" इति। तत्रेयमृक्प्रथमा—

वाजस्येमं प्रसवः सुषुवे अग्रे सोमꣳ राजानमोषधीष्वप्सु ।
ता अस्मभ्यं मधुमतीर्भवन्तु वयꣳ राष्ट्रे जाग्रियाम पुरोहिताः, इति ।

वाजस्यान्नस्योत्पादकः परमेश्वर औषधीष्वप्सु च सारभूतमिमं सोमं वल्लीरूपं राजानं दीप्तिमन्तं पदार्थमग्रे सृष्ट्यादौ सुषुव उत्पादयामास । ताश्चौषधय आपश्चास्मदर्थं मधुमतीर्माधुर्योपेता भवन्तु । वयमप्यस्मिन्राष्ट्रे पुरोहिता यागानुष्ठानादौ पुरोगामिणो जाग्रियाम जागरूका भूयास्म । अथ द्वितीया—

वाजस्येदं प्रसव आ बभूवेमा च विश्वा भुवनानि सर्वतः ।
स विराजं पर्येति प्रजानन्प्रजां पुष्टिं वर्धयमानो अस्मे, इति ।

वाजस्य प्रसवः परमेश्वर इदमनुष्ठीयमानं कर्माऽऽबभूव भावितवानुत्पादितवान् । इमानि सर्वाणि भुवनानि सर्वत उत्पादितवान् स परमेश्वरोऽस्मे अस्मदर्थं प्रजां पुष्टिं च वर्धयमानः प्रजानन्नस्मदभिप्रायं प्रकर्षेण जानानो विराजं हूयमानमन्नं पर्येति सर्वतः प्राप्नोतु । अन्नं वै विराडिति श्रुतिः । अथ तृतीया—

वाजस्येमां प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट् ।
अदित्सन्तं दापयतु प्रजानन्रयिं च नः सर्ववीरां नियच्छतु, इति ।

वाजस्य प्रसव ईश्वर इमां दिवमिमानि चान्यानि सर्वाणि भुवनानि शिश्रिय आश्रितवान् । सर्वेषां च भुवनानां राजा भूत्वाऽदित्सन्तं हविर्दातुमनिच्छन्तं

* अत्र संहिताभाष्यक्रमेण—"इति सायणाचार्यविरचितभाष्ये प्रथमकाण्डे सप्तमप्रपाठके नवमोऽनुवाकः" इति वर्तं

मां प्रजानन्मदीयबुद्धिप्रेरणेन हविर्दापयतु । ततो नोऽस्मभ्यं सर्ववीरां पुत्रभृत्यादयः सर्वे वीरा यस्याः सा सर्ववीरा तादृशीं रयिं धनं च नियच्छतु नियमेन ददातु । अथ चतुर्थी—

अग्ने अच्छा वदेह नः प्रति नः सुमना भव ।

प्र णो यच्छ भुवस्पते धनदा असि नस्त्वम्, इति ।

हेऽग्न इहास्मिन्कर्मणि नोऽस्माकमच्छाऽऽभिमुख्येन वद हितं कथय । नोऽस्मान्प्रति सुमनाः करुणार्द्रचित्तो भव । हे भुवस्पते भूमिपते नोऽस्मभ्यं प्रकर्षेण यच्छ धनं देहि । यस्मात्त्वमस्मत्स्वामी सन्नोऽस्मभ्यं धनदा असि । अथ पञ्चमी—

प्र णो यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः ।

प्र देवाः प्रोत सूनृता प्र वाग्देवी ददातु नः, इति ।

षड्भिः प्रशब्दैः प्रयच्छत्विति प्रददात्वित्यन्वये सत्येतानि षड्वाक्यानि भवन्ति । अर्यमभगबृहस्पतयो देवेषूत्तमत्वाद्द्विप्रपरिव्राजकन्यायेन पृथङ्निर्दिश्यन्ते । तेभ्योऽन्ये त्वत्र देवशब्देनोच्यन्ते । ते सर्वे नोऽस्मभ्यं धनं प्रयच्छन्तु । उतापि च सूनृता प्रियवागभिमानिनी देवता या चान्यवाङ्मात्राभिमानिनी देवता ते उभे धनं प्रयच्छताम् । अथ षष्ठी—

अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय । वाचं

विष्णुꣳ सरस्वतीꣳ सवितारं च वाजिनम्, इति ।

हे ईश्वर पुनरस्मभ्यं दातुं धनस्य दानायार्यमादींश्चोदय प्रेरय । वाक्सरस्वत्योः पूर्वोक्तसूनृतावाचोरिव भेदो द्रष्टव्यः । वाजिनमन्नाधिपतिम् । अथ सप्तमी—

सोमꣳ राजानं वरुणमग्निमन्वारभामहे ।

आदित्यान्विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिम्, इति ।

वयं सोमराजादीन्प्रथमतः कर्मारम्भकाननुसृत्य पश्चादारभामहेऽतस्ते सर्वेऽनुगृह्णन्तु । विधत्ते—

सप्तान्नहोमाञ्जुहोति । सप्त वा अन्नानि । यावन्त्येवान्नानि । तान्येवावरुन्धे । सप्त ग्राम्या ओषधयः । सप्ताऽऽरण्याः । उभयीषामवरुद्ध्यै, इति ।

अन्नहेतूनामोषधीनां सप्तत्वात्तत्कार्याणामन्नानामपि सप्तत्वम् । ओषधीनां सप्तत्वमापस्तम्बोऽग्निचयने दर्शयति—तिलमाषव्रीहियवाः प्रियङ्ग्वणवो गोधूमा वेणुः श्यामाका नीवारा जर्तिलाश्च गवीधुका अरण्यजा मार्कटका विज्ञेया गार्मुतसप्तमाः कुलत्थसप्तमा वा सप्त ग्राम्याः कृष्टे सप्ताऽऽरण्या अकृष्ट इति ।

एकैकस्यान्नस्य पृथगेव होमं विधत्ते—

अन्न॑स्यान्नस्य जुहोति । अन्न॑स्यान्न॒स्याव॑रुद्ध्यै, इति ।

इमं पक्षमापस्तम्बो दर्शयति—"वाजप्रसवीयं जुहोति सप्त ग्राम्या ओषधयः सप्ताऽऽरण्याः पृथगन्नानि द्रवीकृत्यौदुम्बरेण स्रुवेण वाजस्येमं प्रसवः सुषुव इति ग्राम्याणि हुत्वाऽऽरण्यानि जुहोति" इति ।

इदानीं बोधायनाभिमतं सर्वाण्येकीकृत्य होमं विधत्ते—

यद्वा॑जपेययाज्यन॑वरुद्धस्याश्नी॒यात् (१) ।

अव॑रुद्धेन व्यृ॑ध्येत । सर्व॑स्य सम॒वदाय॑

जुहोति । अनवरुद्धस्याव॑रुद्ध्यै, इति ।

होमकाले यदन्नमवरुद्धं स्वीकृतं तदुपेक्ष्य यदस्वीकृतं वाजपेययाजी कालान्तरेऽश्नीयात् । तदानीमुपेक्षितेन यागकालीनेनान्नेनासौ वियुक्तो भवेदतः सर्वमेकीकृत्य होमे सर्वस्यापि यागकाले स्वीकृतत्वेन दोषापादकमस्वीकृतं किंचिन्न भवेदतोऽस्वीकृतस्य सर्वस्यापि यागकाले स्वीकाराय मिलित्वा होम इत्यर्थः ।

होमे साधनविशेषं विधत्ते—

औदु॑म्बरेण स्रुवेण॑ जुहोति । ऊर्ग्वा अन्न॑मुदु॒म्बरः॑ । ऊर्ज॒ एवान्नाद्य॒स्याव॑रुद्ध्यै, इति ।

ऊर्ग्वा अन्नं बलप्रदमेवान्नमत एव देशविशेषे बहुयते ।

कल्पः—"अथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणाति तद्यजमानं प्राङ्मुखमुपवेश्य सुवर्णरजताभ्यां रुक्माभ्यां पर्युपास्य पुरस्तात्प्रत्यङ्मभिषिञ्चति । शीर्षतोऽभिषिञ्चत्यामुखादन्ववस्रावयति—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै

वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य त्वा बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामि " इति ।

अत्रेन्द्रस्येत्यस्मिन्मध्यममन्त्रेऽनुषङ्गसूचनायानाम्नातोऽपि त्वाशब्दः सूत्रकारेण पठितः । देवस्य त्वेत्यादिर्व्याख्यातः । या सरस्वती वाग्विशेषदेवता या च वाक्शब्दाभिहिता वाक्सामान्यदेवता यश्चान्तर्यामी यन्तृशब्दवाच्यो योऽप्यग्निस्तेजप्रदस्तेषां यन्त्रेण नियमनेनानुज्ञया साम्राज्यनिमित्तं त्वामभिषिञ्चामि । इन्द्रस्येत्येतावानेवाऽऽम्नातो द्वितीयो मन्त्रः। स च पूर्वोत्तरभागयोरनुषङ्गेण व्याख्यातव्यः । बृहस्पतेरित्यादौ तृतीयमन्त्रे पूर्वभागोऽनुषञ्जनीयः । देवस्य त्वेत्येतस्मिन्मन्त्रभागे प्रसवपदाभिप्रायमाह—

देवस्य त्वा सवितुः प्रसव इत्याह । सवितृप्रसव एवैनं ब्रह्मणा देवताभिरभिषिञ्चति, इति ।

ब्रह्मणा मन्त्रेण प्रतिपाद्याभिरिति शेषः ।

सर्वौषधिरसमभिषेकद्रव्यत्वेन विधत्ते—

अन्नस्यान्नस्याभिषिञ्चति । अन्नस्यान्नस्यावरुद्ध्यै (२), इति ।

प्रकारविशेषं विधत्ते—

पुरस्तात्प्रत्यञ्चमभिषिञ्चति । पुरस्ताद्धि प्रतीचीनमन्नमद्यते । शीर्षतोऽभिषिञ्चति । शीर्षतो ह्यन्नमद्यते, इति ।

आसपुटघातविषयवाक्यवद्व्याख्येयम् ।

गुणान्तरं विधत्ते—

आमुखादन्ववस्रावयति । मुखत एवास्मा अन्नाद्यं दधाति, इति ।

शिरस आरभ्याऽऽनुलोम्येन मुखपर्यन्तमेवावस्रावयेन्नत्वधः ।

मन्त्रेष्वग्नीन्द्रबृहस्पतिशब्दतात्पर्यं व्याचष्टे—

अग्नेस्त्वा साम्राज्येनाभिषिञ्चामीत्याह । एष

वा अग्नेः सवः । तेनैवैनमभिषिञ्चति । इन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामीत्याह (३) । इन्द्रियमेवास्मिन्नेतेन दधाति । बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामीत्याह । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैवैनमभिषिञ्चति, इति ।

एष औषधिरसः । अग्नेः सवोऽग्निना प्रेरितः । अतोऽग्निशब्दमुच्चारयन्नग्निसंबन्धेन तेनैव रसेनाभिषिञ्चति । एष वा इन्द्रस्य सवो बृहस्पतेः सव इत्यनुसंधेयम् ।

विधत्ते—

सोमग्रहाꣳश्चावदानीयानि चर्त्विग्भ्य उपहरन्ति । अमुमेव तैर्लोकमन्नवन्तं करोति । सुराग्रहाꣳश्चानवदानीयानि च वाजसृद्भ्यः । इममेव तैर्लोकमन्नवन्तं करोति । अथो उभयीष्वेवाभिषिच्यते, इति ।

पश्वोर्यान्यवदानीयानि हृदयादीनि हृदयस्याग्रेऽवद्यतीत्यादिश्रुतेः, तानीडायामवत्तानि सोमग्रहांश्चर्त्विग्भ्यः प्रयच्छेत् । शिरआदीन्यनवदानीयानि न शीर्ष्णोऽवद्यति नांसयोरित्यादिश्रुतेः, तानि सुराग्रहांश्च वाजसृद्भ्यो रथान्तरैः षोडशभिराजिधावनं कृतवद्भ्यो वैश्येभ्यः प्रयच्छेत् । एवं सत्युभयीषु दैवीषु मानुषीषु च प्रजास्वयमभिषिक्तो भवति ।

विधत्ते—

विमाथं कुर्वते वाजसृतः (४) । इन्द्रियस्यावरुद्ध्यै, इति ।

विशेषेण मथनमालोडनं कलहो विमाथः । युया(पा?)नवश्यनटनायाभिनवं विमाथं कुर्युः ।

सवनत्रये स्तोत्रेषु ऋग्विशेषं विधत्ते—

अनिरुक्ताभिः प्रातःसवने स्तुवते । अनिरुक्तः

प्रजापतिः । प्रजापतेराप्त्यै । वाजवतीभिर्मा-
ध्यंदिने । अन्नं वै वाजः । अन्नमेवावरुन्धे ।
शिपिविष्टवतीभिस्तृतीयसवने । यज्ञो वै विष्णुः ।
पशवः शिपिः । यज्ञ एव पशुषु प्रतितिष्ठति, इति ।

अनिरुक्ताभिरव्यक्तदेवताकाभिर्ऋग्भिः साकल्येन तन्महिम्नो वक्तुमशक्यत्वात् । प्रजापतिरनिरुक्तः । वाजशब्दोपेता ऋचो वाजवत्यः, शिपिविष्टशब्दोपेताश्चर्चः शिपिविष्टवत्यस्ताः सर्वाः सामवेदे द्रष्टव्याः । विष्टशब्दो विष्णुपर्यायः सन्नत्र फलव्यापिनं यज्ञमाचष्टे । शिपिशब्दः पशुवाची । अतः शिपिविष्टवतीभिर्ऋग्भिर्यज्ञे पशुषु च प्रतितिष्ठत्येव ।

सामविशेषं विधत्ते—

बृहदन्त्यं भवति । अन्तमेवैनꣳ
श्रियै गमयति (५), इति ।

अश्नीयादन्नस्यान्नस्यावरुद्ध्या इन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामीत्याह
वाजसृतः शिपिस्त्रीणि च ।

अन्तिमस्य स्तोत्रस्य यदन्त्यं साम तद्बृहद्गायेत् । तेन साम्नैनं यजमानं श्रियै संपत्तिसिद्धये यज्ञस्य समाप्तिं प्रापितवान्भवति ।

अत्र विनियोगसंग्रहः—

वाजःसप्तभिरन्नस्य होमो देवयजुस्त्वयात् ।
अभिषिञ्चेत्स्वामिनं तं दश मन्त्रा इहोदिताः ॥ इति । *

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके तृतीयाध्याये ऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ तृतीयाध्याये नवमोऽनुवाकः ।

---

दशमेऽन्नहोम उक्तः । एकादश उज्जितिमन्त्रा उच्यन्ते । कल्पः—"अथ

* अत्र संहिताभाष्यक्रमेण—" इति श्रीसाय० प्रथमकाण्डे सप्तमप्रपाठके दशमोऽनुवाकः " इति वर्तते ।

यजमानमन्वास्थायोज्जितीर्वाचयत्यग्निरेकाक्षरेण वाचमुदजयदिति सप्तदश"
इति । पाठस्तु—

अग्निरेकाक्षरेण वाचमुदजयदश्विनौ द्व्यक्षरेण प्राणापानावुदजयतां विष्णुस्त्र्यक्षरेण त्रीँल्लोकानुदजयत्सोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत्पूषा पञ्चाक्षरेण पङ्क्तिमुदजयद्धाता षडक्षरेण षडृतूनुदजयन्मरुतः सप्ताक्षरेण सप्तपदाꣳ शक्वरीमुदजयन्बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयन्मित्रो नवाक्षरेण त्रिवृतꣳ स्तोममुदजयत् । वरुणो दशाक्षरेण विराजमुदजयदिन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयद्विश्वे देवा द्वादशाक्षरेण जगतीमुदजयन्वसवस्त्रयोदशाक्षरेण त्रयोदशꣳ स्तोममुदजयन्रुद्राश्चतुर्दशाक्षरेण चतुर्दशꣳ स्तोममुदजयन्नादित्याः पञ्चदशाक्षरेण पञ्चदशꣳ स्तोममुदजयन्नदितिः षोडशाक्षरेण षोडशꣳ स्तोममुदजयत्प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ स्तोममुदजयत् , इति ।

आश्रवयेत्यादिके सप्तदशाक्षरे मन्त्रसंघ एकैकाक्षरवृद्ध्या तत्तन्मन्त्रं पठित्वा तत्सामर्थ्यादग्न्यादयो वागादीनुदजयन् । अथवा विद्यान्तरे एकाक्षरो मन्त्रशास्त्रप्रसिद्धो वाऽग्निबीजं(?) तेनैकाक्षरेण मन्त्रेणाग्नेर्वागुज्जयः । द्व्यक्षरेणाजपामन्त्रेण प्राणापानात्मकेनाश्विनोः प्राणापानोज्जयः । एवमन्येऽपि त्र्यक्षरादिमन्त्रा यथायोगमुन्नेयाः । मन्त्राक्षरसंख्यानुसारेण लोकत्रयादिजयो विज्ञेयः । त्रिवृत्स्तोमगतानामृचां नवसंख्योपेतत्वात्तज्जयो द्रष्टव्यः । त्रयोदशस्तोमादावपि तिसृणामृचामावृत्तिविशेषेण तत्तत्संख्या द्रष्टव्या । एतदुज्जितिविधिस्तु ता वा एता उज्जितयो व्याख्यायन्त इत्यत्रादशः पूर्वमस्माभिर्व्याख्यातः सोऽयमत्रोत्कर्षणीयः । अत्र विनियोगसंग्रहः—

अग्निः सप्तदशाऽऽम्नाता उज्जितीर्वाचयेदमूः ।
यजमानं रथेष्वेषु धावत्स्वध्वर्युरादरात् ॥ इति । *

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके तृतीयाध्याये
नवमोऽनुवाकः ॥ ९ ॥

---

* अत्र संहिताभाष्यक्रमेण—" इति श्रीमाध० प्रथमकाण्डे सप्तमप्रपाठक एकादशोऽनुवाकः" इति वर्तते ।

अथ दशमोऽनुवाकः ।

एकादशे उज्जितिमन्त्रा उक्ताः । द्वादशेऽतिग्राह्यमन्त्रा उच्यन्ते । कल्पः—आग्रयणं गृहीत्वा पञ्चैन्द्रानतिग्राह्यान्गृह्णात्युपयामगृहीतोऽसि नृषदं त्वा द्रुषदमित्येताभिः पञ्चभिरिति । तत्र प्रथममन्त्रपाठस्तु—

उपयामगृहीतोऽसि नृषदं त्वा द्रुषदं भुवनसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा, इति ।

हे प्रथमातिग्राह्य त्वमुपयामेन पृथिव्यात्मकेन पात्रेण गृहीतोऽसि । इयं वोपयाम इति पूर्वमुदाहृतम् । मनुष्येषु वनस्पतिषु स्वामित्वेनावस्थितमिन्द्राय प्रियं त्वां गृह्णामि । एष खरप्रदेशस्ते स्थानं तस्मादिन्द्राय त्वाऽत्र सादयामि । एष इत्यादिः सादनमन्त्रः । नृषदमित्यादिपदाभिप्रायमाह—

नृषदं त्वेत्याह । प्रजा वै नृन् । प्रजानामेवैतेनं सूयते । द्रुषदमित्याह । वनस्पतयो वै द्रु । वनस्पतीनामेवैतेनं सूयते । भुवनसदमित्याह । यदा वै वसीयान्भवति । भुवनमगन्निति वै तमाहुः । भुवनमेवैतेनं गच्छति, (१) इति ।

नृन्नरः । तेषु सीदतीति नृषत्तं नृषदम् । एतेन यजुष्पाठेन प्रजानां मध्ये सूयते स्वामित्वेनाभिषिच्यते । यदा लोके वसीयान्धनाढ्यो भवति तदा तं पुरुषं स्वामित्वेन कृत्स्नं भुवनमगन्प्राप्नुवानिति जना आहुः ।

अथ द्वितीयग्रहणमन्त्रः—

उपयामगृहीतोऽस्यप्सुषदं त्वा घृतसदं व्योमसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा, इति ।

पूर्ववद्व्याख्येयम् । एतदेवाभिप्रेत्य तथैव व्याचष्टे—

अप्सुषदं त्वा घृतसदमित्याह । अपामेवैतेनं घृतस्य सूयते । व्योमसदमित्याह । यदा वै वसीयान्भवति । व्योमागन्निति वै तमाहुः । व्योमैवैतेनं गच्छति, इति ।

अग्न्युक्तत्यादिपाठेन तत्स्वामित्वेनाभिषेकः । धनाढ्यस्य व्योमगामित्वं नाम गजाश्वारोहणम् ।

अथ तृतीयग्रहणमन्त्रः—

उपयामगृहीतोऽसि पृथिविषदं त्वाऽन्तरिक्षसदं नाकसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा, इति । पूर्ववद्व्याचष्टे—

पृथिविषदं त्वाऽन्तरिक्षसदमित्याह । एषामेवैतेन लोकानाꣳ सूयते । तस्माद्वाजपेययाजी न कंचन प्रत्यवरोहति । अपीव हि देवतानाꣳ सूयते । नाकसदमित्याह । यदा वै वसीयान्भवति । नाकमगन्निति वै तमाहुः । नाकमेवैतेन गच्छति, इति ।

तस्मादयं वाजपेययागेनाग्न्यादिदेवतानामपि मध्येऽभिषिक्त इव भवति । अग्नेस्त्वा साम्राज्येनाभिषिञ्चामीत्यादिमन्त्रेष्वग्न्यादीनां यत्तत्साम्राज्यं तेन निमित्तेनाभिषेकस्योक्तत्वान्न प्रत्यवरोहति । अपि तस्माद्देवतानां मध्येऽभिषिक्तत्वाद्देववदेव कमपि मनुष्यं प्रति गजादिवाहनान्नावरोहति नावरोहेदिति विधिः । अत एवाऽऽपस्तम्ब आह—"यावज्जीवं न कंचन प्रत्यवरोहेद्बृहस्पतिसवेन वा प्रत्यवरोहणीयेन यजेत" इति ।

अथ चतुर्थग्रहणमन्त्रः—

ये ग्रहाः पञ्चजनीना येषां तिस्रः परमजाः । दैव्यः कोशः । समुब्जितः । तेषां विशिप्रियाणामिषमूर्जꣳ समग्रभीमेष ते योनिरिन्द्राय त्वा, इति ।

येऽतिग्राह्यरूपा ग्रहाः पञ्चजनीनाः पञ्चजनेभ्यो देवमनुष्यासुररक्षोगन्धर्वेभ्यो निषादपञ्चमेभ्यो वर्णेभ्यो वा हिताः । येषामतिग्राह्याणां तिस्र आग्नेयैन्द्रसौर्याख्यातिग्राह्यरूपाः परमजाः प्रकृतयः । किंच येषां प्रभावेन(ण) दैव्यो दिवि भवः कोशो मेघः समुब्जितः सम्यङ्न्युब्जीकृतः । वर्षाभिमुखः कृत इत्यर्थः । विविधानि शिप्राणि हनुस्थानीयानि पात्राग्राणि तैरुपेता विशिप्रियास्तादृशानां तेषामतिग्राह्याणां पूरणायेषमन्नसदृशमूर्जं बलप्रदं सोमरसं समग्रभीं सम्यग्गृह्णामि ।

पञ्चजनीनशब्दाभिप्रायं दर्शयति—

ये ग्रहाः पञ्चजनीना इत्याह ।

पञ्चजनानामेवैतेन सूयते, इति ।

एतेन मन्त्रपाठेन निषादपञ्चमानां वर्णानां स्वामित्वेनाभिषिच्यते ।

अथ पञ्चमग्रहणमन्त्रः—

अपाꣳ रसमुद्वयसꣳ सूर्यरश्मिꣳ समाभृतम् । अपाꣳ रसस्य यो रसस्तं

वो गृह्णाम्युत्तममेष ते योनिरिन्द्राय त्वा, इति ।

हेऽतिग्राह्या वो युष्माकं मध्य उत्तमं चरमं ग्रहं तं तथाविधं गृह्णामि । किंविधम् । अपां रसम् । उदकस्यैव सोमरसत्वेन परिणामात् । उद्भूतं वयोऽन्नं जीवनं वा यस्य तमुद्वयसम् । सोमरसो ह्यन्नभूतो जीवनहेतुश्च । अपाम सोमममृता अभूमेत्युक्तत्वात् । सूर्य(र्यो?) रश्मिः परिपाकहेतुर्यस्य तं सूर्यरश्मिम् । वृष्टिक्लिन्ना ओषधय आतपेन पच्यन्तेऽन्यथा वृष्ट्याधिक्येन पूरयेयुः । समाभृतं गायत्र्या द्युलोकात्सम्यगानीतम् । किंचापां रसः सोमवल्लिरूपेण परिणतस्तस्यापि यो रसः सारस्तादृशमुदकरसम् ।

स्वामित्वं तेजोयुक्तत्वं च भागद्वयपाठेन भवतीति दर्शयति—

अपाꣳ रसमुद्वयसमित्याह । अपामेवैतेन

रसस्य सूयते । सूर्यरश्मिꣳ समाभृतमि-

त्याह सशुक्रत्वाय ( २ ), इति ।

गच्छति सूयते नवं च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके तृतीयाध्याये

नवमोऽनुवाकः ॥ ९ ॥

---

अथ दशमोऽनुवाकः ।

अथ दशमे पिण्डपितृयज्ञ उच्यते । तत्राऽऽदौ कालविशेषं विधत्ते—

इन्द्रो वृत्रꣳ हत्वा । असुरान्पराभाव्य । सोऽमा-

वास्यां प्रत्यागच्छत् । ते पितरः पूर्वेद्युरागच्छन् । पितॄन्यज्ञोऽच्छत् । तं देवाः पुनरयाचन्त । तमेभ्यो न पुनरददुः । तेऽब्रुवन्वरं वृणामहै । अथ वः पुनर्दास्यामः । अस्मभ्यमेव पूर्वेद्युः क्रियाता इति (१) । तमेभ्यः पुनरददुः । तस्मात्पितृभ्यः पूर्वेद्युः क्रियते । यत्पितृभ्यः पूर्वेद्युः करोति । पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुते, इति ।

इन्द्रः पुरा युद्धे वृत्रं हत्वा तदीयानसुरांश्च पराभूतान्कृत्वा पश्चादमावास्यायागदिनं प्रति स्वगृहे समागच्छत् । शुक्लप्रतिपदि ह्यमावास्यायागः क्रियते । ततः पूर्वेद्युः पितर आगतास्तैः पितृभिः सह यज्ञोऽपि गतः । तं पितृभिः सहावस्थितं यज्ञं देवाः स्वार्थमयाचन्त पूर्वमस्मदीयो यज्ञ इदानीं भवत्समीपमागतः पुनरस्मभ्यमेव यज्ञो दातव्य इति । ततः पितरस्तमदत्त्वा तद्दानार्थमुत्कोचमपेक्षितवन्तः । पूर्वेद्युर्दर्शदिनेऽस्मदर्थं कर्म कर्तव्यम् । ततः प्रतिपद्यनुष्ठेयं दर्शपूर्णमासाख्यं यज्ञं दास्याम इति प्रत्यजानन् । ततो देवैस्तथेत्यङ्गीकृते तं यज्ञं दत्तवन्तः । तस्मात्पित्रर्थं कर्म पूर्वेद्युः पूर्वदिने कुर्यात् । तथा कृते तेन मूल्येन यज्ञं पितृभ्यो निष्क्रीय यजमानस्तमनुष्ठातुं प्रवर्तते ।

कालं विधाय होममन्त्रं विधत्ते—

सोमाय पितृपीताय स्वधा नम इत्याह । पितुरेवाधि सोमपीथमवरुन्धे । न हि पिता प्रमीयमाण आहैष सोमपीथ इति । इन्द्रियं वै सोमपीथः । इन्द्रियमेव सोमपीथमवरुन्धे । तेनेन्द्रियेण द्वितीयां जायामभ्यश्नुते ( २ ), इति ।

पितृभिः पीतोऽमृतत्वेन परिणतो यः सोमस्तस्मै सोमायेदं स्वधा दत्तम् । नमस्कारोऽपि कृत इत्यमुं मन्त्रं होमकाले ब्रूयात् । अनेन होमेन स्वकीयस्य

पितुरध्युपरि यत्सोमपानं पूर्वं वृत्तं तत्स्वयं प्राप्नोति । पितुः संबन्धि गृहक्षेत्रादिकं यथा होममन्तरेण प्राप्नोति तद्वदीयं सोमपानमपि प्राप्नोतीति चेन्मैवम् । गृहादिवदसमर्पितत्वात् । प्रमीयमाणः पिता पुत्रमाहूयेदं गृहमिदं क्षेत्रं तवेति यथा ब्रूते तथा सोमपानमिदं तवेति न हस्ते समर्पयति । तस्माद्धोमेनैव सोमपानफलं संपादनीयम् । न चैतत्प्रयाससाध्यं सोमपानं मा भूदेवेति शङ्कनीयम् । सोमपानस्येन्द्रियवृद्धिरूपत्वेनावश्यं प्रापणीयत्वात् । पूर्वं स्वस्मिन्विद्यमानेन्द्रियेणैकां जायां भोक्तुं समर्थः । पितृप्रसादलब्धेन त्विन्द्रियेण द्वितीयामपि भोक्तुं समर्थो भवति ।

एतद्वेदनं प्रशंसति—

एतद्वै ब्राह्मणं पुरा वाजश्रवसा विदामक्रन् ।
तस्मात्ते द्वे द्वे जाये अभ्याक्षत । य एवं
वेद । अभि द्वितीयां जायामश्नुते, इति ।

वाजोऽन्नं तद्दाननिमित्तं श्रवः कीर्तिर्यस्य महर्षेरसौ वाजश्रवास्तस्य पुत्रा वाजश्रवसाः । ते च पुरा " सोमाय पितृपीताय " इति मन्त्रस्य व्याख्यानरूपमेतद्ब्राह्मणं विदितवन्तः । तस्माद्वेदनात्ते महर्षयः प्रत्येकं जायाद्वयमभिप्राप्तवन्तः । तस्मादन्योऽपि विदित्वा द्वितीयां जायां प्राप्नोति ।

अथ द्वितीयहोममन्त्रं विधत्ते—

अग्नये कव्यवाहनाय स्वधा नम इत्याह ।
य एव पितृणामग्निः । तं प्रीणाति, इति ।

कव्यं पित्र्यं हविर्वहतीति कव्यवाहनः । तस्य च पितृसंबन्धोऽन्यत्राप्याम्नातः—" त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणां सह रक्षा असुराणाम् " इति । तस्मादेतन्मन्त्रहोमेन तं पित्र्यमग्निं परितोषयति ।

शाखान्तरगतेन—" यमायाङ्गिरस्वते पितृमते स्वधा नमः " इति मन्त्रेणैकामाहुतिमभिप्रेत्य त्रित्वं विदधाति—

तिस्र आहुतीर्जुहोति, इति ।

तथा च सूत्रकारेण स्पष्टमुक्तम्—" सोमाय पितृपीताय स्वधा नम इति

प्रथमां दक्षिणाग्नौ जुहोति यमायाङ्गिरस्वते पितृमते स्वधा नम इति द्वितीया-मग्नये कव्यवाहनाय स्वधा नम इति तृतीयाम् " इति ।

यदुक्तं सूत्रकारेण—" सव्यं जान्वाच्यावाचीनपाणिः सकृदाच्छिन्ने बर्हिषि दक्षिणापवर्गान्पिण्डान्ददाति " इति । तदिदं विधत्ते—

त्रिर्निद॑धाति, इति ।

तदेदाहुतित्रयं पिण्डत्रयं च मिलित्वा प्रशंसति—

षट् संप॑द्यन्ते (३) । षड् वा ऋ॒तव॑: । ऋ॒तूने॒व प्रीणाति, इति ।

यदुक्तं सूत्रकारेण—" मेक्षणमुपस्तीर्य तेनावदायाभिघार्य " इति तस्य मेक्षणस्याग्नौ प्रहरणं विधत्ते—

तू॒ष्णीं मेक्ष॒णमाद॑धाति । अस्ति॑ वा॒ हि ष॒ष्ठ ऋ॒तुर्न॑ वा, इति ।

मेक्षणशब्देन प्रादेशमात्रा समिदुच्यते । हविरवदानसाधनं मेक्षणं मन्त्र-मन्तरेणाग्नौ प्रक्षिपेत् । शाखेषु षष्ठ ऋतुरस्तीत्येकः पक्षः । "षड् वा ऋतवः" इति श्रुतेः । नास्तीत्यपरः पक्षः । " पञ्चर्तवो हेमन्तशिशिरयोः समासेन " इति श्रुत्यन्तरात् । अतस्तूष्णीं समिदाधाने पक्षद्वयमप्यनुश्रुतं भवति । तत्र समिधः प्रक्षिप्तत्वादस्तित्वपक्षोऽङ्गीकृतः । मन्त्राहित्यादभावपक्षोऽङ्गीकृतः ।

आहुतित्रयं पिण्डत्रयं च प्रकारान्तरेण प्रशंसति—

दे॒वान्वै पि॒तॄन्प्री॒तान् । म॒नु॒ष्या॑: पि॒तरोऽनु॒ प्रपि॑पते । ति॒स्र आहु॑तीर्जु॒होति । त्रिर्निद॑धाति । षट् संप॑द्यन्ते । षड् वा ऋ॒तव॑: (४) । ऋ॒तव॑: खलु॒ वै दे॒वाः पि॒तर॑: । ऋ॒तूने॒व दे॒वान्पि॒तॄन्प्री॑णाति । तान्प्री॒तान् । म॒नु॒ष्या॑: पि॒तरोऽनु॒ प्रपि॑पते, इति ।

द्विविधा हि पितरो देवात्मका मनुष्यात्मकाश्च । पितृलोकस्वामिनो देवा-

त्मकाः । मृताः सन्तो भोगार्थं तल्लोकं प्राप्ता मनुष्यात्मकाः । तत्र देवात्मकेषु पितृषु प्रीतेषु तानन्तु मनुष्यात्मकाः पितरः प्रपिपते प्रीता भवन्तीति युक्तम् । तदर्थमादौ तिस्र आहुतयः पश्चात्पिण्डत्रयम् । किंचोभयमेलनेन षट्संपत्त्या तत्संख्याका ऋतवः संपद्यन्ते । ऋत्वभिमानिनश्च देवाः पितरः । ततश्च संख्यामात्रेण देवपितृषु प्रीतेषु पश्चान्मनुष्यपितरः प्रीता भवन्ति ।

विधत्ते—

सकृदाच्छिन्नं बर्हिर्भवति । सकृदिव हि पितरः, इति ।

पिण्डानामधस्ताद्यद्बर्हिरास्तीर्यते तदेकप्रयत्नेनैव च्छेदनीयम् । न तु लवनकाले दात्रस्य पुनः पुनर्व्यापारः । एकेनैव दृढेन व्यापारेण यावदवच्छिन्नं तावदेवाऽऽनेतव्यम् । यस्मात्पितरः सकृन्मरणेनैव पितृत्वं प्राप्नुवन्ति । न तु तत्प्राप्त्यै पुनः पुनर्म्रियन्ते ।

पिण्डदानस्य त्रित्वं प्रशंसति—

त्रिर्निदधाति । तृतीये वा इतो लोके पितरः । तानेव प्रीणाति, इति ।

इतो भूलोकादारभ्यान्तरिक्षलोकमतिक्रम्य यस्तृतीयो लोकस्तत्र पितरो वर्तन्ते । अतस्त्रित्वेन तान्परितोषयति ।

विधत्ते—

पराङावर्तते (५) । ह्रीका हि पितरः, इति ।

दक्षिणाभिमुखः पिण्डं दत्त्वा पिण्डनिरीक्षणं परित्यज्य पराङ्मुखो भवेत् । पितॄणां लज्जाशीलत्वात् । लोकेऽपि हि भुञ्जानाः प्रभवो नान्यैर्वीक्ष्यन्ते ।

विधत्ते—

ओष्मणो व्यावृत उपास्ते । ऊष्मभागा हि पितरः, इति ।

औष्ण्यवशात्पिण्डेषु योऽयमूष्मा निर्गच्छति तस्य यावदुपरमोऽव्यावृत्तस्तदुपरमपर्यन्तं तथैव स्थित्वा सेवेत । पितॄणामूष्मभागित्वेन तच्छान्तिपर्यन्तं तद्भोजनकालत्वात् ।

---

१ क. °गाय तञ्चो° ।

अथ विचारपूर्वकं पिण्डशेषस्य पात्रगतस्याऽऽघ्राणं विधत्ते—

ब्रह्मवादिनो वदन्ति । प्राश्याँ३ न प्राश्या३-
मिति । यत्प्राश्नीयात् । जन्यमन्नमद्यात् ।
प्रमायुकः स्यात् । यन्न प्राश्नीयात् । अहविः
स्यात् । ( ६ ) । पितृभ्य आवृश्च्येत । अव-
घ्रेयमेव । तन्नेव प्राशितं नेवाप्राशितम्, इति ।

विचारार्था श्रुतिः । प्राशनपक्षे बीजभक्षणवददनीयस्याभावात्क्षुधितो यजमानो म्रियेत । अप्राशनपक्षे तु सर्वत्र हविःशेषस्य भक्षणदर्शनादिदं हविरेव न स्यात् । अतोऽयं पितृभ्यो विच्छिद्येत । अतो दोषद्वयपरिहाराय पात्रगतमन्नमवजिघ्रेदेव । तदवघ्रातं प्राशितमिव न भवति । निगरणाभावात् । अप्राशितमिव न भवति । तदीयगन्धस्यान्तः प्रवेशात् ।

यदुक्तं सूत्रकारेण—" वाससो दशां छित्त्वा निदधाति " इति । तदेतद्विधत्ते—

वीरं वा वै पितरः प्रयन्तो हरन्ति । वीरं
वा ददति । दशां छिनत्ति । हरणभागा
हि पितरः । पितृनेव निरवदयते, इति ।

पिण्डरूपमन्नं भुक्त्वा यदा पितरः स्वस्थाने प्रयान्ति तदानीमस्य वीरं पुत्रं विद्यमानमपहरन्ति वाऽविद्यमानं ददति वा । पक्षद्वयमपि संभाव्यते । वैकल्ये पुत्रं मारयन्ति । साकल्ये पुत्रं प्रयच्छन्ति । अत्र वैकल्यस्य दुष्परिहरत्वात्पुत्र.. मत्याम्नायत्वेन वस्त्राग्रमीषत्सूत्रं छित्वा पिण्डेषु निदध्यात् । यस्मादप..रण-मेव पितरो भजन्ते तस्मात्पितृभिःशेषभागदानेन विसर्जयति ।

तत्रैवं कंचिद्विशेषं विधत्ते—

उत्तर आयुषि लोम छिन्दीत । पितृ..
णाᳲ ह्येतर्हि नेदीयः ( ७ ), इति ।

पञ्चाशत्संवत्सरपरिमितं पूर्वमायुरवशिष्टं तूत्तरम् । तस्मिन्वयसि वस्त्रदशा न च्छेत्तव्याः किंतु स्वकीयं लोम छित्त्वा तत्र निदध्यात् । यस्मादयमासन्नमरणत्वात्पितॄणामपि समीपवर्ती तस्मात्तस्मिन्वयस्येतदुचितम् ।

विधत्ते—

नमस्करोति । नमस्कारो हि पितॄणाम्, इति ।

अत्यन्तं प्रिय इति शेषः ।

तत्र मन्त्रं विनियुङ्क्ते—

नमो वः पितरो रसाय । नमो वः पितरः शुष्माय । नमो वः पितरो जीवाय । नमो वः पितरः स्वधायै । नमो वः पितरो मन्यवे । नमो वः पितरो घोराय । पितरो नमो वः । य एतस्मिँल्लोके स्थ (८) । युष्मा्ँस्तेऽनु । येऽस्मिँल्लोके । मां तेऽनु । य एतस्मिँल्लोके स्थ । यूयं तेषां वसिष्ठा भूयास्त । येऽस्मिँल्लोके । अहं तेषां वसिष्ठो भूयासमित्याह । वसिष्ठः समानानां भवति । य एवं विद्वान्पितृभ्यः करोति, इति ।

हे पितरो वो युष्माकं यो रसो युष्माभिर्भुज्यमानः क्षीरादिस्तस्मै नमोऽस्तु । एवं सर्वत्र योज्यम् । शुष्मशब्दो बलवाची । जीवो देहाध्यक्षः । स्वधा तदीया स्त्री । पितरो हि स्वधायां प्रीतिं कुर्वन्ति । मन्युः कोपः । घोरो मारणादिव्यापारः । हे पितरो यूयमेतस्मिँल्लोके स्थितास्तेभ्यो युष्मभ्यं नमः । ये तु युष्मत्तोऽन्ये परकीयपितरोऽस्मिँल्लोके वर्तन्ते ते सर्वे युष्माननुवर्तन्ताम् । ये तु मनुष्या अस्मिँल्लोके वर्तन्ते ते सर्वे मामनुवर्तन्ताम् । ये यूयं परकीयैः पितृभिः सहास्मिँल्लोके स्थितास्ते यूयं तेषां परकीयपितॄणां वसिष्ठा अतिशयेन निवासहेतवो भूयास्त । ये तु मनुष्या अस्मिँल्लोके वर्तन्ते तेषां

सर्वेषामहं युष्मत्प्रसादादतिशयेन निवासहेतुर्भूयासम् । इत्येतं मन्त्रं नमस्कुर्वन्पठेत् । यः पुमानेवं नमस्कारमन्त्रं विद्वान्पित्रर्थं पिण्डदानं करोति स एष समानानां मनुष्याणामतिशयेन निवासहेतुर्भवति ।

पिण्डपितृयज्ञं प्रशंसति—

एष वै मनुष्याणां यज्ञः (९)। देवानां वा इतरे
यज्ञाः। तेन वा एतत्पितृलोके चरति, इति ।

द्विविधानां पितॄणां मध्ये ये मनुष्याः पितरस्तेषामेव पिण्डपितृयज्ञः। ये तु देवास्तेषां दर्शपूर्णमासादिका इतरे यज्ञाः। तस्मादेतेन पिण्डपितृयज्ञेनैष पुरुषः पितृलोके चरति ।

अथ "प्रजापते न त्वदेतानि" इति मन्त्रेण गार्हपत्यदेशं प्रत्यागमनं विधत्ते—

यः पितृभ्यः करोति । स ईश्वरः प्रमेतोः ।
प्राजापत्ययर्चा पुनरैति । यज्ञो वै प्रजापतिः ।
यज्ञेनैव सह पुनरैति । न प्रमायुको भवति, इति ।

यः पुमान्पित्रर्थमुक्तं कर्म करोति स पितृप्रियत्वात्सहसा मर्तुं सुसमर्थो भवति । तत्परिहाराय प्राजापत्यमन्त्रेण गार्हपत्यदेशं पुनरागच्छेत् । प्रजापतेर्यज्ञस्रष्टृत्वेन यज्ञरूपत्वाद्यज्ञेनैव सह पुनरागतो भवति । अतो न म्रियते ।

एतदेव समन्त्रकं पुनरागमनं प्रशंसति—

पितृलोके वा एतद्यजमानश्चरति । यत्पितृभ्यः
करोति । स ईश्वर आर्तिमार्तोः । प्रजापति-
स्त्वा वैनं तत उन्नेतुमर्हतीत्याहुः । यत्प्राजाप-
त्ययर्चा पुनरैति । प्रजापतिरेवैनं तत उन्नयति ।
नाऽऽर्तिमार्छति यजमानः (१०), इति ।

इत्यंश्रुते पद्यन्ते पद्यन्ते षड् वा ऋतवो वर्ततेऽहवि स्याद्वेदीयः स्थ यज्ञो यजमानश्चरति यत्पितृभ्यः करोति पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके तृतीयाध्याये दशमोऽनुवाकः ॥ १० ॥

---

देवासुरा अग्नीषोमयोर्देवा वै यथादर्शी देवा वै यदन्यैर्ग्रहैर्ब्रह्मवादिनो नाग्निष्टोमो न सावित्रं देवस्याहं ताप्यꣳ सप्ताह्नहोमान्नृषदं त्वेन्द्रो वृत्रꣳ हत्वा दश । देवासुरा वाऽऽऊर्ज्यैवैनं तस्माद्वाजपेययाजी देवस्याहं वाजस्याव-रुद्ध्या इन्द्रियमेवास्मिन्ह्लीका हि पितरः पञ्चषष्टिः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके तृतीयोऽध्यायः ॥ ३ ॥

---

पितृभ्यः करोतीति यदस्त्येतेन यजमानः पितृलोक एव संचरति । अतः स यजमानो मनुष्यलोके निःस्पृहत्वादत्र पीडां प्राप्तुं प्रभवति । तमेनं प्रजापतिरेव तत आर्तेरुद्धर्तुमर्हतीत्येवमभिज्ञा आहुः । अतः प्राजापत्यमन्त्रेणाऽऽगच्छन्तं प्रजापतिरुद्धरति । सोऽप्यार्तिं न प्राप्नोति ।

अत्र मीमांसा । चतुर्थाध्यायस्य चतुर्थपादे चिन्तितम्—

क्रत्वङ्गं स्यान्न वा पिण्डपितृयज्ञः क्रतौ हि सः ।
अमावास्योक्तितो नैवं तत्कालोक्तेः पुमर्थता ॥ [ इति ] ।

इदमाम्नायते—" अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति " इति । तत्रामावास्याशब्दवाच्ये कर्मणि विधीयमानत्वादयं पिण्डपितृयज्ञः क्रत्वङ्गमिति चेत् । नैवम् । अमावास्याशब्दस्य कालवाचित्वात् । कर्मणि त्वयं शब्दो लाक्षणिकः । न च वाक्येन क्रत्वङ्गत्वाभावेऽपि प्रकरणेन तद्भवेदिति वाच्यम् । तस्यानारभ्याधीतत्वात् । तस्मादयं पुरुषार्थः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमार्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीब्राह्मणभाष्ये प्रथमकाण्डे तृतीयः प्रपाठकः समाप्तः ॥ ३ ॥

( मूलक्रमेण—अष्ट० १ अध्या० ३ अनु० १० ( २६ ) ।
( भाष्यक्रमेण—कां० १ प्रपा० ३ अनु० १० (२६) ।

अथ प्रथमकाण्डे चतुर्थप्रपाठकारम्भः ।

तत्र प्रथमोऽनुवाकः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
तृतीये वाजपेयो यः स प्राधान्येन वर्णितः ।
पुनराधेयकं पिण्डपितृयज्ञश्च वर्णितः ॥
सोमादिब्राह्मणे पूर्वं यन्नोक्तं तच्चतुर्थके ।
प्रवक्ष्यते ग्रहाश्चास्मिन्ननुवाके समीरिताः ॥

तत्राऽऽदौ ग्रहाणां ग्रहणं विधत्ते—

उभये वा एते प्रजापतेरध्यसृज्यन्त । देवाश्चासुराश्च । तान्न व्यजानात् । इमेऽन्य इमेऽन्य इति । स देवानꣳशूनंकरोत् । तानभ्यषुणोत् । तान्पवित्रेणापुनात् । तान्परस्तात्पवित्रस्य व्यगृह्णात् । ते ग्रहा अभवन् । तद्ग्रहाणां ग्रहत्वम् ( १ ) । देवता वा एता यजमानस्य गृहे गृह्यन्ते । यद्ग्रहाः । विदुरेनं देवाः । यस्यैवं विदुष एते ग्रहा गृह्यन्ते, इति ।

देवा असुराश्चेत्येते द्विविधा अपत्यविशेषाः प्रजापतेः सकाशादधिकत्वेनासृज्यन्त । सृष्टानां च तेषामतिबहुलत्वेन संकीर्णत्वादिमेऽन्ये पृथग्भूता देवा इमे चान्ये पृथग्भूता असुरा इति प्रजापतिस्तद्विभागं न ज्ञातवान् । अतो विभागज्ञानाय देवान्सर्वानंशूनकरोत् । सोमलतावयवरूपाणि शरीराणि देवानां कृतवान् । तानि लताशरीराणि स्वचिह्नत्वेन धृत्वा देवा व्यावृत्तत्वेन प्रजापतिना विज्ञाताः । तांश्च लतादेहानभिषुत्य दशापवित्राख्येण वस्त्रखण्डेन ऋजीषं यथा न संकीर्यते तथा रसं शोधयित्वा पवित्रस्य परस्तादूर्ध्वमवस्थितस्याधोभागे विविधमिन्द्रवाय्वादिदेवार्थं गृहीतवान् । ते च रसा ग्रहा अभवन् । तस्माद्गृह्यन्त इति व्युत्पत्त्या रसानां ग्रहत्वं संपन्नम् । य एते ग्रहास्ता एता देवता भूत्वा ता एव यजमानस्य गृहे हविर्धाने गृह्यन्ते । अत एते ग्रहा ग्रहीतव्या इत्यर्थः । एवं महिमानं जानतो यस्य यजमानस्य ग्रहा एते गृह्यन्ते तमेनं यजमानं देवा विदुः । सम्यगनुष्ठितवानित्येवं देवलोके प्रसिद्धिं गच्छतीत्यर्थः । सौमिकमन्त्रव्याख्यानरूपे षष्ठकाण्डे ऐन्द्रवाय्वादिग्रहविशेषा एव विहिता न तु ग्रहसामान्यम् । इह तु तद्विधीयत इत्ययमनुवाकस्तत्काण्डशेषः ।

ग्रहग्रहणं विधायोपांशुग्रहस्य होमं विधत्ते—

एषा वै सोमस्याऽऽहुतिः । यदुपाꣳशुः । सोमेन देवाꣳस्तर्पयाणीति खलु वै सोमेन यजते । यदुपाꣳशुं जुहोति । सोमेनैव तद्देवाꣳस्तर्पयति, इति ।

"वाचस्पतये पवस्व वाजिन्" इत्यनुवाकेन सिद्धो योऽयमुपांशुग्रह एषैव सोमस्य समन्ताद्धुतिः । अत्र हि पात्रस्थः सर्वोऽपि सोमो हूयते । न तु ग्रहान्तरवत्कियानप्यवशिष्यते । यजमानोऽपि सोमेन देवांस्तृप्तान्करोमीत्यभिप्रेत्य सोमयागे प्रवृत्तः । तस्मादुपांशु जुहुयात् । तेन संपूर्णसोमेनैव देवांस्तर्पयति ।

अथेतरग्रहहोमं विधत्ते—

यद्ग्रहाञ्जुहोति (२) । देवा एव तद्देवान्गच्छन्ति, इति ।

तेन ग्रहहोमेन लताशरीरधारिणो देवा एव दिव्यविग्रहधारिण इन्द्रवाय्वादिदेवानागच्छन्ति ।

---

१ क °वांश्चासु° ।

ऊर्ध्वपात्रस्थाः सोमरसात्मका ये चमसास्तेषां होमं विधायानूर्ध्वं चतुरस्रपात्रस्थिताः सोमरसात्मका ये चमसास्तेषां होमं विधत्ते—

यच्चमसाञ्जुहोति । तेनैवानुरूपेण यजमानः सुवर्गं लोकमेति, इति ।

ग्रहैरेव देवानां तुष्टत्वाद्यजमानस्य स्वर्गार्थत्वेनानुरूपश्चमसहोमः । अतस्तेनैवानुरूपेण यजमानः स्वर्गं लोकं प्राप्नोतीति ।

अथ प्रश्नोत्तराभ्यां रसग्रहणाधाररूपाणि पात्राणि विधत्ते—

किं न्वेतदग्र आसीदित्याहुः । यत्पात्राणीति । इयं वा एतदग्र आसीत् । मृन्मयानि वा एतान्यासन् । तैर्देवा न व्यावृतमगच्छन् । त एतानि दारुमयाणि पात्राण्यपश्यन् । तान्यकुर्वत (२) । तैर्वै ते व्यावृतमगच्छन् । यद्दारुमयाणि पात्राणि भवन्ति । व्यावृतमेव तैर्यजमानो गच्छति, इति ।

यज्ञशालायां दृश्यमानानि पात्राणीति यच्चदेतत्पात्रनिष्पत्तेः पुरा किं नु नाम वस्त्वासीदित्येवं पात्रोपादानभूतवस्तुप्रश्नः । एतानि पात्राणि मृन्मयान्येव दृष्टानि तस्मात्पात्रोत्पत्तेः पूर्वं तदुपादानं भूमिरासीदित्युत्तरम् । मनुष्यार्थपाकशालायामपि मृन्मयपात्राणां विद्यमानत्वात्तैः पात्रैर्देवा मनुष्येभ्यो व्यावृत्तिं न प्राप्ता इति पुनः प्रश्नवादिनां वचनम् । ते देवा क्वचिदवस्थितान्येव दारुमयाणि पात्राणि दृष्ट्वा तानि स्वार्थं स्वीकृत्य तैर्दारुमयैर्मनुष्येभ्यो व्यावृत्तिं प्राप्ता इत्युत्तरवादिनां वचनम् । तस्माद्दारुमयाणि पात्राणि कर्तव्यानि । तैर्यजमान इतरेभ्यो व्यावृत्तिं प्राप्नोति ।

तत्र देवार्थानि दारुमयाणि पात्राणि यानि सन्ति यानि चान्यद्द्रव्यसंग्रहार्थानि मृन्मयानि तदुभयं प्रशंसति—

यानि दारुमयाणि पात्राणि भवन्ति । अमु-

---

१ ग. किं त्वे° । २ ग. तु ।

मेव तैर्लोकमभिजयति । यानि मृन्मयानि । इममेव तैर्लोकमभिजयति, इति ।

अथ प्रश्नोत्तराभ्यां स्थालीं निरूप्य मृन्मयानां दारुमयाणां ग्रहणहोमयोर्व्यवस्थां विधत्ते—

ब्रह्मवादिनो वदन्ति । कास्तिस्रः स्थालीर्वायव्याः सोमग्रहणीरिति । देवा वै पृश्निमदुह्रन् (४) । तस्या एते स्तना आसन् । इयं वै पृश्निः । तामादित्या आदित्यस्थाल्या चतुष्पदः पशूनदुहन् । यदादित्यस्थाली भवति । चतुष्पद एव तया पशून्यजमान इमां दुहे । तामिन्द्र उक्थ्यस्थाल्येन्द्रियमदुहत् । यदुक्थ्यस्थाली भवति । इन्द्रियमेव तया यजमान इमां दुहे । तां विश्वे देवा आग्रयणस्थाल्योर्जमदुह्रन् । यदाग्रयणस्थाली भवति । ऊर्जमेव तया यजमान इमां दुहे । तां मनुष्या ध्रुवस्थाल्यायुरदुह्रन् । यद्ध्रुवस्थाली भवति । आयुरेव तया यजमान इमां दुहे । स्थाल्या गृह्णाति । वायव्येन जुहोति । तस्मादन्येन पात्रेण पशून्दुहन्ति । अन्येन प्रतिगृह्णन्ति । अथो व्यावृत्तमेव तद्यजमानो गच्छति (५), इति ।

ग्रहत्वं ग्रहांऽन्नुहोत्यर्थकुर्वताद्दुहन्नाग्रयणस्थाली भवति नवं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके चतुर्थाध्याये प्रथमोऽनुवाकः ॥ १ ॥

वायुः स्वामी येषां दारुमयाणां पात्रविशेषाणां ते वायव्याः । यद्यप्येकैकस्य पात्रस्यैकैको देवस्तथाऽपि वायुना बरस्य वृतत्वाद्वायव्यशब्देनैव तेषां व्यवहारः । तथा चैन्द्रवायवग्रहब्राह्मणे समाम्नायते—"ते वायुमब्रुवन्निमं नः स्वदयेति । सोऽब्रवीद्वरं वृणै मदेवत्यान्येव वः पात्राण्युच्यन्ता इति । तस्मान्नानादेवत्यानि सन्ति वायव्यान्युच्यन्ते" इति । ते च वायव्याः पात्रविशेषाः सोमग्रहणार्था ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णातीत्यादिश्रवणात् । तद्वन्मृन्मयस्थाल्योऽपि चतस्रः सोमग्रहण्य इत्येवमत्र प्रसिद्धिः । ताश्च स्थालयः किंविधा इति प्रश्नः । तस्योत्तरमुच्यते । पुरा कदाचिद्भूमिः पृश्निः श्वेतगोरूपाऽभूत् । भूविकारभूता आदित्यस्थाल्युक्थ्यस्थाल्याग्रयणस्थाली ध्रुवस्थालीत्येते चत्वारः स्थालीविशेषास्तस्या गोः स्तना आसन् । तांश्च स्तनानादित्यादयो दुग्ध्वा पश्वादिफलानि प्राप्तवन्तः । एवं यजमानोऽपि तानि प्राप्तुं स्थालीचतुष्टयं कुर्यात् । कृत्वा च मृन्मयस्थाल्यां तत्तद्देवतासंबन्धिन्यां तत्तद्देवार्थं सोमरसं गृह्णीयात् । तं च सोमरसं होमकाले दारुमये वायव्यपात्रेऽवनीय तेन पात्रेण जुहुयात् । यस्मादेवं तस्माल्लोकेऽपि दोहपात्रमन्यत्क्षीरग्रहणपात्रं चान्यत् । अपि चैवंकुर्वाणो यजमान इतरेभ्यो व्यावृत्तिं प्राप्नोति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥१॥

अथ चतुर्थप्रपाठके द्वितीयोऽनुवाकः ।

प्रथमेऽनुवाके सोमविशेषे ग्रहविधिरुक्तः । द्वितीयानुवाके सौत्रामणिशेषा मन्त्रा उच्यन्ते । तत्राऽऽश्विनसारस्वतैन्द्रग्रहेषु त्रिष्वपि साधारणं याज्यानुवाक्यायुगलम् । तथा च सौत्रामणिब्राह्मणमेवमाम्नातम्—"युवꣳ सुराममश्विनेति सर्वदेवत्ये याज्यानुवाक्ये भवतः" इति । तत्र पुरोनुवाक्यामाह—

युवꣳ सुराममश्विना । नमुचावासुरे सचा । विपिपाना शुभस्पती । इन्द्रं कर्मस्वावतम्, इति ।

हेऽश्विनौ नमुचावासुरे नमुचिनामके कस्मिंश्चिदसुरे सचा संबद्धं सुरामं सुरया संपादितमिमं पात्रस्थं द्रव्यशेषं विपिपाना विशेषेण पिबन्तौ शुभस्पती शोभनस्य कर्मणः पालकौ युवां कर्मस्वेतेष्विन्द्रमावतं सहपानेन पालयतम् ।

याज्यामाह—

पुत्रमिव पितरावश्विनोभा । इन्द्रावतं कर्मणा

दंसनाभिः । यत्सुरामं व्यपिबः शचीभिः ।

सरस्वती त्वा मघवन्नभीष्णात् , इति ।

हेऽश्विनौ युवामुभौ यथा लोके पितरौ पुत्रं पालयतस्तद्वद्यजमानममेन कर्मणा रक्षतम् । दंसनाशब्दः कर्मवाची । शचीशब्दः शक्तिवाची । हे इन्द्र यद्यस्मात्कारणात्कर्मविशेषेण याभिः शक्तिभिः सह त्वं सुरया संपादितमिमं रसविशेषं विशेषेण पीतवांस्तस्माद्यजमानं रक्षेति शेषः । हे मघवन्नियं सरस्वती त्वामभीष्णाद्भिषज्यतु । पानेन परितोषयत्वित्यर्थः ।

अथ मन्त्रद्वयेन सुराया अनुमन्त्रणम् । तथा च सूत्रकारः—"हुतां हूयमानां वा यजमानोऽनुमन्त्रयते" इति ।

तत्र प्रथमं मन्त्रमाह—

अहाव्यग्ने हविरास्ये ते । स्रुचीव घृतं चमू

इव सोमः (१) । वाजसनिꣳ रयिमस्मे सुवी-

रम् । प्रशस्तं धेहि यशसं बृहन्तम्, इति ।

हेऽग्ने ते तवाऽऽस्ये मुखेऽहावीदं द्रव्यं हुतम् । यथा स्रुचि जुह्वादौ घृतं निहितं यथा वा चमू चमसेषु सोमो निहितस्तद्वत्तस्मादस्मे अस्मासु सुवीरं शोभनकर्मशूरं पुत्रं धेहि संपादय । कीदृशम् । वाजसनिमन्नदातारं रयिं धनवन्तं प्रशस्तं विद्यादिगुणयुक्तं यशसं यशस्विनं बृहन्तं महान्तं सर्वकार्यसमर्थम् ।

अथ द्वितीयं मन्त्रमाह—

यस्मिन्नश्वास ऋषभास उक्षणः । वशा मेषा

अवसृष्टास आहुताः । कीलालपे सोमपृष्ठाय

वेधसे । हृदा मतिं जनय चारुमग्नये, इति ।

यदित्यनेनाश्वादय आहुता अश्वासः । अश्वमेधयागे अश्वा हुताः । ऐन्द्रमृषभमित्यादिषु विहितेषु कर्मसु ऋषभा हुताः । ऐन्द्रमुक्षाणमित्यादिषूक्षाणो हुताः । सेचनसमर्था उक्षाणः । पुंगवगात्रा ऋषभाः । मैत्रावरुणीं वशामालभेतेत्यादिषु विहितेषु वशा हुताः । सारस्वतं मेषमित्यादिषु मेषा हुताः । ते च सर्वेऽवसृष्टासो यजमानेन समर्पिताः । तादृशायाग्नये हृदाऽन्तःकरणेन चारुं मतिं कर्मानुष्ठानविषयत्वेन समीचीनां बुद्धिं जनयाहं संपादयामि । कीदृशायाग्नये । कीलालपेऽन्नरसपायिने । सोमयागस्थितानि पृष्ठानि यस्यासौ सोमपृष्ठस्तस्मै वेधसे विधात्रे ।

नाना हि वां देवहित॑ सदो मितम् । मा सꣳसृक्षाथां परमे व्योमन् । सुरा त्वमसि शुष्मिणी सोम एषः । मा मा हिꣳसीः स्वां योनिमाविशन् (२) । यदत्र शिष्टꣳ रसिनः सुतस्य । यदिन्द्रो अपिबच्छचीभिः । अहं तदस्य मनसा शिवेन । सोम राजानमिह भक्षयामि ।

कल्पः—"ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारं नाना हि वां देवहितꣳ सदो मितं मा सꣳसृक्षाथां परमे व्योमन्सुरा त्वमसि शुष्मिणी सोम एष मा मा हिꣳसीः स्वां योनिमाविशन्यदत्र शिष्टꣳ रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिरहं तदस्य मनसा शिवेन सोमꣳ राजानमिह भक्षयामीति वा स्वयं पिबेत् " इति । अत्र सुरोच्छेषस्य ब्राह्मणं पातारं किंचिन्मूल्यदानेन परिक्रीणीयात् । नाना हि वामिति मन्त्रेण यदत्रेति मन्त्रेण वा स्वयं पिबेदित्यर्थः । हे सोमग्रहसुराग्रहौ वां युवयोः सदो निवासस्थानं नाना मितं पृथगेव संपादितम् । अतः परमे व्योमन्नकृष्ट आकाशे भक्षणस्थाने मा संसृक्षाथां परस्परसंसृष्टौ मा भूताम् । हे पात्रस्थद्रव्य त्वं शुष्मिणी बलवती सुराऽसि । एष खलु सोमः सुप्रसिद्धविभवस्त्वं स्वां योनिं स्वकीयस्थानमुदररूपमाविशन्मामिह मा हिंसीः । अत्र पात्रे रसिनो रसवतः सुतस्याभिषुतस्य यच्छिष्ट-

मस्ति यत्रेन्द्रः शचीभिः स्वशक्तिभिः सहापिबत्तत्रास्य पात्रस्थद्रव्यस्यैकदेशं सोमं राजानमहं शिवेन भक्तियुक्तेन मनसेह कर्मणि भक्षयामि ।

द्वे स्रुती अंशृणवं पितृणाम् । अहं देवानां-

मुत मर्त्यानाम् । ताभ्यामिदं विश्वं भुवनꣳ

समेति । अन्तरा पूर्वमपरं च केतुम् ।

कल्पः—"द्वे स्रुती अशृणवं पितृणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वं भुवनꣳ समेत्यन्तरा पूर्वमपरं च केतुमिति वा वल्मीकवपायामवनयेत् " इति । पितृणामस्मत्पूर्वपुरुषाणां द्वे स्रुती अशृणवं द्वौ मार्गाविति शास्त्रमुखेणाहं श्रुतवानस्मि । तयोर्मध्ये देवानामेको मार्गो येन गत्वा ब्रह्मलोके देवा भूत्वा न पुनरावर्तन्ते । उतापि च मर्त्या येन गत्वा स्वर्गमनुभूय पुनरावर्तन्ते ताभ्यामुभाभ्यां मार्गाभ्यामिदं विश्वं भुवनं शास्त्रार्थानुष्ठानपरं सर्वप्राणिजातं समेति सम्यग्गच्छति । पूर्वं केतुं चिह्नं पृथिवीमपरं केतुं दिवं चान्तरा द्यावापृथिव्योर्मध्ये द्वे स्रुती वर्तेते इत्यर्थः ।

यस्ते देव वरुण गायत्रछन्दाः

पाशः । तं त एतेनावयजे, इति ।

कल्पः—" यस्ते देव वरुण गायत्रछन्दाः पाशस्तं त एतेनावयजे स्वाहेत्याश्विनपात्रमवभृथे प्रविध्यन्ति " इति । हे वरुणदेवते त्वदीयः पाशो गायत्र्याख्येण च्छन्दसा युक्तो यो विद्यते तं पाशमेतेन पात्रेण विनाशयामि । कल्पः—" एतेनैव त्रिष्टुप्छन्दा इति सारस्वतस्य जगतीछन्दा इत्यैन्द्रस्य " इति । एतेन यस्ते देवेति मन्त्रेण त्रिष्टुप्छदा इतिविशेषयुक्तेन सारस्वतस्य पात्रं प्रविध्यन्ति । एवमुत्तरत्रापि । पाठस्तु—

यस्ते देव वरुण त्रिष्टुप्छन्दाः पाशः । तं त

एतेनावयजे । यस्ते देव वरुण जगती

छन्दाः पाशः । तं त एतेनावयजे, इति ।

समाप्ताः सौत्रामणिशेषा मन्त्राः । अथ सोमशेषः कश्चिद्विधिः । यदुक्तं सूत्रकारेण—" राज्ञो राजभव्यस्य वाऽनुबन्ध्यायाः पशुपुरोडाशमष्टौ देवसुवाꣳ हवींꣳष्यनु निर्वपति " इति । तदिदं विधत्ते—

सोमो वा एतस्य राज्यमादत्ते। यो राजा सन्राज्यो वा सोमेन यजते। देवसुवामेतानि हवीꣳषि भवन्ति। एतावन्तो वै देवानाꣳ सवाः। त एवास्मै सवान्प्रयच्छन्ति। त एनं पुनः सुवन्ते राज्याय। देवसू राजा भवति, इति।

सोम आविशन्यजे राज्यायैकं च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके चतुर्थाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

यः पूर्वं राजा राजत्वयोग्यो वा भूत्वा सोमेन यजत एतस्य राज्यं सोमदेव एव गृह्णाति। अतस्तन्निवारणाय हविर्निर्वापः। सुवन्ते प्रेरयन्ति राज्यार्थमिति सुवो देवाश्च ते सुवश्च देवसुवोऽग्न्यादयस्तत्संबन्धीनि हवींष्यग्नये गृहपतये पुरोडाशमष्टाकपालमित्यनुवाकोक्तानि यावन्त ऐश्वर्यविशेषास्तस्मिन्ननुवाके श्रूयन्ते—"अग्निरेवैनं गृहपतीनाꣳ सुवते सोमो वनस्पतीनाम्" इत्यादिना। एतावन्त एव गृहपतित्वादयोऽपेक्षिता देवानां संबन्धिन ऐश्वर्यविशेषाः। ततस्तैर्हविर्भिस्तुष्टास्त एवाग्न्यादयो देवा अस्मै यजमानाय तान्गृहपतित्वाद्यैश्वर्यविशेषान्प्रयच्छन्तीति ते देवा एनं यजमानं पुनरपि राज्याय प्रेरयन्ति। असावपि देवैः प्रेरितो राजा भवति। अत्र विनियोगसंग्रहः—

युवं सुरामं याज्यनुवाक्ये सौत्रामणौ गते।
अहाव्यस्मिन्निति द्वाभ्यां तत्र होमानुमन्त्रणम् ॥
नानेति वा यदत्रेति वा मन्त्राद्भक्षयेद्धविः।
द्वे स्रुतीति च वल्मीकवपायां वा क्षिपेद्धि तत् ॥
यस्ते देवाश्विनादीनि विध्यन्त्यवभृथे त्रिभिः।
अनुवाके द्वितीयेऽस्मिन्दश मन्त्रा उदाहृताः ॥ [ इति ]।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ चतुर्थप्रपाठके तृतीयोऽनुवाकः ।

द्वितीये सौत्रामणिमन्त्रा उक्ताः । तृतीयचतुर्थयोरग्निहोत्रविषयं प्रायश्चित्तमुच्यते । तत्राप्यस्मिन्ननुवाके दोहविषयं प्रायश्चित्तम् । तत्र कंचिन्मन्त्रं पठति—

उदस्थाद्देव्यदितिर्विश्वरूपी । आयुर्यज्ञपतावधात् । इन्द्राय कृण्वती भागम् । मित्राय वरुणाय च, इति ।

येयमग्निहोत्रहविर्दोहनार्था धेनुः सेयं देवी देवतारूपोदस्थादुत्तिष्ठतु । कीदृशी । देव्यदितिर्भूमिरूपा विश्वरूपी कृष्णशुक्लादिनानारूपयुक्ता सेयं यज्ञपतावायुः संपादयतु । किं कुर्वती । इन्द्रमित्रावरुणेभ्यो हविर्भागं संपादयन्ती ।

तमेतं मन्त्रं विनियुङ्क्ते—

इयं वा अग्निहोत्री । इयं वा एतस्य निषीदति । यस्याग्निहोत्री निषीदति । तामुत्थापयेत् । उदस्थाद्देव्यदितिरिति । इयं वै देव्यदितिः ( १ ) । इमामेवास्मा उत्थापयति, इति ।

यस्याग्निहोत्रहविर्दोहनाय प्रवृत्तस्याग्निहोत्री धेनुरुपविशति, एतस्य पुरुषस्याग्निहोत्री भूमिरूपेति कृत्वा भूमिदेवतैव दोहं प्रतिबध्नन्ती निषीदति । तस्मादुदस्थादिति मन्त्रेण तामुत्थापयेत् । मन्त्रगतस्यादितिशब्दस्य भूमिवाचित्वाद्भूमिमेवोत्थापयति ।

मन्त्रस्य द्वितीयपादतात्पर्यं दर्शयति—

आयुर्यज्ञपतावधादित्याह । आयुरेवास्मिन्दधाति, इति ।

उत्तरार्धस्य यथार्थतां दर्शयति—

इन्द्राय कृण्वती भागं मित्राय वरुणाय चेत्याह । यथा यजुरेवैतत्, इति ।

प्रायश्चित्तान्तरं विधत्ते—

अर्वर्तिं वा एषैतस्य पाप्मानं प्रतिरूयाय निषीदति यस्याग्निहोत्र्युपसृष्टा निषीदति । तां दुग्ध्वा ब्राह्मणाय दद्यात् । यस्यान्नं नाद्यात् । अर्वर्तिमेवास्मिन्पाप्मानं प्रतिमुञ्चति ( २ ), इति ।

वर्तिर्वर्तनं जीवनोपायः । अवर्तिर्दारिद्र्यम् । यस्यानुष्ठातुर्दोहनार्थे वत्सेन संसृष्टा धेनुरुपविशति, एतस्यावर्तिं दारिद्र्यहेतुं पाप्मानमेषा धेनुः प्रतिरूयाय सर्वत्र प्रख्याप्योपविशति । अतस्तां धेनुं दुग्ध्वा पश्चाद्ब्राह्मणाय दद्यात् । कीदृशाय । यस्य ब्राह्मणस्यान्नमित ऊर्ध्वं यजमानो नाद्यात्तादृशाय । तेन दानेन स्वकीयं दारिद्र्यहेतुं पाप्मानमस्मिन्ब्राह्मणे कवचादिवत्प्रतिमुञ्चति ।

दोहनपूर्वकं दानं प्रशंसति—

दुग्ध्वा ददाति । न ह्यदृष्टा दक्षिणा दीयते, इति ।

यस्मात्प्रतिग्रहीत्रा पुरुषेणादृष्टा दक्षिणा दानयोग्या न भवति, तस्माद्दुग्ध्वा क्षीरं तस्मै प्रदर्श्य त्वमेवं दुग्ध्वा भुङ्क्ष्वेत्येवं दद्यात् ।

अथ प्रायश्चित्तान्तरं विधातुं प्रस्तौति—

पृथिवीं वा एतस्य पयः प्रविशति । यस्याग्निहोत्रं दुह्यमानꣳ स्कन्दति, इति ।

यस्य यजमानस्याग्निहोत्रार्थं हविर्दोहनकाले स्वल्पमपि पतति, एतस्य कृत्स्नमपि पृथ्वीमेव प्रविशति ।

एतत्प्रायश्चित्तरूपं मन्त्रपाठं विधत्ते—

यदद्य दुग्धं पृथिवीमसक्त । यदोषधीरत्यसरद्यदापः । पयो गृहेषु पयो अघ्नियासु । पयो वत्सेषु पयो अस्तु तन्मयीत्याह । पय एवाऽऽत्मन्गृहेषु पशुषु धत्ते, इति ।

अथाऽस्मिन्दिने यद्दुग्धं पृथिवीमसक्त पृथिव्यां पतितं यच्च बिन्दुरूपेणौषधीरपो वा प्राविशत्तत्पयो मदीयेषु गृहेष्वत्रस्थितमस्तु । तथा तत्पयो मदीयासु गोषु स्थितमस्तु । तथा तत्पयो मदीयवत्सेषु स्थितमस्तु । तथा तत्पयो मयि स्थितमस्तु । तमेतं मन्त्रं पठेत् । तेन स्कन्नं पय आत्मनि गृहेषु पशुषु च स्थापितं भवति ।

एतदभिमन्त्रणानन्तरमुदकस्पर्शं विधत्ते—

अप उपसृजति ( ३ ) । अद्भिरेवैनदाप्नोति, इति ।

स्वेनोपसृष्टाभिरद्भिरेव स्कन्नमेतत्पयः पुनः प्राप्नोति ।

प्रायश्चित्तान्तरं विधत्ते—

यो वै यज्ञस्याऽऽर्तेनानार्तꣳ सꣳसृजति । उभे वै ते तर्ह्यार्छितः । आर्छति खलु वा एतदग्निहोत्रम् । यद्दुह्यमानꣳ स्कन्दति । यदभिदुह्यात् । आर्तेनानार्तं यज्ञस्य सꣳसृजेत् । तदेव यादृक्कीदृक् च होतव्यम् । अथान्यां दुग्ध्वा पुनर्होतव्यम् । अनार्तेनैवाऽऽर्तं यज्ञस्य निष्करोति ( ४ ), इति ।

यज्ञस्य संबन्धि हविर्द्विविधम् । आर्तमनार्तं चेति । दुह्यमानस्य स्कन्दने सति तदार्तं भवति । इतः परं धोक्ष्यमाणमनार्तं भवति । तथा सति स्कन्दनादूर्ध्वं तदेव पात्रस्थमभिलक्ष्य यदि पुनर्दुह्यात्तदानीमार्तस्योपर्यनार्तस्य स्थापनादुभयमपि पयः संसृजेत् । तत्संसर्गे च द्वितीयमप्यार्तमेव भवेत् । तस्मादार्तस्योपरि दोहनं न कुर्यात् । किंतु तदेवाऽऽर्तं यादृशं तादृशं पर्याप्तमपर्याप्तं वा होतव्यम् । तावता नित्यानुष्ठानसिद्धिः । अथाऽऽर्तपरिहारार्थमन्यां दुग्ध्वा पुनर्होतव्यम् । तेन पुनर्होमेनैव यज्ञस्य यत्पूर्वमार्तं तत्समादधाति ।

प्रायश्चित्तान्तरं विधत्ते—

यद्युद्द्रुतस्य स्कन्देत् । यत्ततो हुत्वा पुनरेयात् । यज्ञं विच्छिन्द्यात् । यत्र स्कन्देत् ।

तन्निषद्य पुनर्गृह्णीयात् । यत्रैव स्कन्दति ।
तत एवैनत्पुनर्गृह्णाति । तदेव यादृक्कीदृक्च
होतव्यम् । अथान्यां दुग्ध्वा पुनर्होतव्यम् ।
अनार्तिनैवाऽऽर्तं यज्ञस्य निष्करोति(५), इति ।

दोहनादूर्ध्वमुद्द्रुतस्याऽऽहवनीयं प्रत्युन्नीतस्य लेशो यदि भूमौ पतेत्तदानीमहुत्वा यदि ततो देशात्पुनरागच्छेत्तदानीं यज्ञो विच्छिद्येत । अतस्तत्परिहाराय यस्मिन्देशे स्कन्नं तस्मिन्नेव देशे स्वयमुपविश्य तत्पतितं पुनः पात्रे गृह्णीयात् । तथा सति यस्मिन्नेव देशे स्कन्नं तस्मिन्देशे पुनर्गृहीतत्वाचेन दुग्धान्तरं न भवेत् । तदेव पुनर्गृहीतेन सहितं पात्रस्थं नित्यार्थं हुत्वा प्रायश्चित्तार्थमन्यां दुग्ध्वा जुहुयात् ।

पुनरपि प्रायश्चित्तान्तरं विधत्ते—

वि वा एतस्य यज्ञश्छिद्यते । यस्याग्निहोत्रेऽधिश्रिते श्वाऽन्तरा धावति । रुद्रः खलु वा एषः । यदग्निः । यद्गामन्वत्यावर्तयेत् । रुद्राय पशूनपि दध्यात् । अपशुर्यजमानः स्यात् । यदपोऽन्वतिषिञ्चेत् । अनाद्यमग्नेरापः । अनाद्यमाभ्यामपि दध्यात् । गार्हपत्याद्भस्माऽऽदाय । इदं विष्णुर्विचक्रम इति वैष्णव्यर्चाऽऽहवनीयादूध्वः समुद्द्रुवेत् । यज्ञो वै विष्णुः । यज्ञेनैव यज्ञꣳ संतनोति । भस्मना पदमपि वपति शान्त्यै (६), इति ।

वै देव्यदितिर्मुञ्चति सृजति करोति करोत्याभ्यामपि दध्यात्पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके चतुर्थाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

यस्य यजमानस्याग्निहोत्रहविषि पाकार्थं गार्हपत्येऽधिश्रिते सत्याहवनीयगार्हपत्ययोर्मध्ये यदि श्वा धावेत्तदानीमेतस्य यज्ञो विच्छिद्येत । अतस्तत्परिहाराय यदि तेन शुनो मार्गेण गामतिनीय पुनरावर्तयेत्तदानीमग्नेः क्रूरत्वेन रुद्ररूपत्वात्तस्मै रुद्राय पशून्समर्पयेत् । ततो यजमानः पशुरहितः स्यात् । यदि तु शुनः पदे जलमनुक्रमेणातिशयेन निषिञ्चेत्तदानीमग्नेरनाद्यभूता आपः संपन्नाः । तादृशमनाद्यं वस्तु द्वाभ्यामग्निभ्यां समर्पयेत्ततो गोर्नयनमुदकस्य निषेचनं च न कुर्यात् । किंतु गार्हपत्यात्किंचिद्भस्माऽऽदाय "इदं विष्णुः" इति मन्त्रेणाऽऽहवनीयपर्यन्तं भस्म प्रसारयंस्तस्योपरि स्वयं गच्छेत् । ततो यज्ञस्य विष्णुत्वाद्विष्णुरूपेणैव यज्ञेन वर्तमानं यज्ञं संततं करोति । तेन भस्मना शुनः पदमाच्छादयेत् । तच्च दोषस्य शान्त्यै भवति । अत्र विनियोगसंग्रहः—

उदस्थादित्यग्निहोत्रीमुत्थापयति दोहने ।
यदद्य दुग्धमित्येतत्स्कन्नक्षीराभिमन्त्रणे ॥
इदं विष्णुश्चान्तराये ध्वंसयेद्भस्म वह्निगम् ।
अनुवाके तृतीयेऽस्मिन्मन्त्रास्त्रय उदीरिताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः । ३ ।

---

अथ चतुर्थप्रपाठके चतुर्थोऽनुवाकः ।

---

तृतीये दोहविषयं प्रायश्चित्तमुक्तम् । चतुर्थे वह्निविषयं प्रायश्चित्तमुच्यते । तत्रैकं प्रायश्चित्तं विधत्ते—

नि वा एतस्याऽऽहवनीयो गार्हपत्यं कामयते । नि गार्हपत्य आहवनीयम् । यस्याग्निमनुद्धृतꣳ सूर्योऽभिनिम्रोचति । दर्भेण हिरण्यं प्रबध्य पुरस्ताद्धरेत् । अथाग्निम् । अथाग्निहोत्रम् । यद्धिरण्यं पुरस्ताद्धरति । ज्योतिर्वै हिरण्यम् । ज्योतिरेवैनं पश्यन्नुद्धरति । यदग्निं

पूर्वं॑ हर॒त्यथा॑ग्निहो॒त्रम् ( १ )।

भा॒ग॒धेये॑नै॒वैनं॒ प्रण॑यति, इति।

यस्य पुरुषस्यानुद्धृतमग्निमुपलक्ष्य सूर्योऽस्तमेति सायंकालीनाग्निहोत्रार्था-दाहवनीयं प्रत्यग्निप्रणयनात्प्रागेव यद्यस्तमियात्तदानीमेतस्य पुरुषस्याऽऽहव-नीयो गार्हपत्यं न्यक्कर्तुं कामयते। गार्हपत्यश्चैनं न्यक्कामयते। ततोऽग्निद्वयमपि फलप्रदं न भवति। ततोऽस्तमयादूर्ध्वमग्निं प्रणयन्पुरुषः केनचिद्दर्भेण हिरण्यं प्रकर्षेण बद्ध्वा तत्पुरस्तान्नयेत्। तस्य पृष्ठतोऽग्निं नयेत्। तस्यापि पृष्ठतोऽ-ग्निहोत्रहविर्नयेत्। तत्र हिरण्यनयनेन ज्योतीरूपं हिरण्यं पुरतः पश्यन्पृष्ठतोऽ-ग्निरुद्धारादस्तमयदोषं न प्राप्नोति। पुरतोऽग्निं पश्चाद्धविर्नयनं तदीयेन भाग-धेयेन युक्तमेवाग्निं प्रणयति।

अग्निमुद्धरणे कंचिद्विशेषं विधत्ते—

ब्रा॒ह्म॒ण आ॑र्षे॒य उद्ध॑रेत्। ब्रा॒ह्म॒णो वै सर्वा॑

दे॒वताः। सर्वा॑भिरे॒वैनं॑ दे॒वता॑भि॒रुद्ध॑रति, इति।

स्वकीयानृषीन्यो वेत्ति स आर्षेयः प्रवराभिज्ञ इत्यर्थः। तादृशो ब्राह्मणो दर्भेण प्रबद्धस्य हिरण्यस्य पृष्ठतो वह्निमुद्धरेत्। अत एव सूत्रकारेणोक्तम्— "अन्वङ्गार्षेयो ब्राह्मणो बहुविदग्निमुद्धरेत्" इति। "यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति" इति श्रुत्यन्तरात्सर्वदेवताकर्तृकमिदमुद्धरणं भवति।

अत्रैवापरं विशेषं विधत्ते—

अ॒ग्नि॒हो॒त्रमु॑पसा॒द्याता॒मितो॑रासीत।

व्र॒तमे॒व हृ॒तमनु॑ म्रियते, इति।

आर्षेयस्य ब्राह्मणस्य पृष्ठतोऽग्निहोत्रहविर्नीत्वा तदधस्तादुपसाद्य श्वासं निरुध्य ग्लानिपर्यन्तमवतिष्ठेत। एवं सति सूर्यास्तमयेन विनाशितं व्रतमनु स्वयमपि मरणोपचारं नाटयति। लोकेऽपि हि म्रियमाणं स्निग्धमनुम्रियन्ते।

पुनरपि विशेषान्तरं विधत्ते—

अन्तं॒ वा ए॒ष आ॒त्मनो॑ गच्छति। यस्ता॒म्यति।

अन्तमेष यज्ञस्य गच्छति । यस्याग्निमनु-
द्धृतꣳ सूर्योऽभिनिम्रोचति ( २ ) । पुनः समन्यं
जुहोति । अन्तेनैवान्तं यज्ञस्य निष्करोति, इति ।

यो ग्लानिं प्राप्नोति, एष विनाशमिव प्राप्नोति । यस्य चाग्न्युद्धरणात्पुरा सूर्योऽस्तमेति, एष यज्ञस्य विनाशं प्राप्नोति । अतो दोषद्वयनिवृत्त्यर्थं पुनः श्वासं कृत्वा जुहुयात् । तथा सति स्वकीयेन विनाशेन सह यज्ञस्य विनाशं समादधाति ।

पुनरप्यपरं विशेषं विधत्ते—

वरुणो वा एतस्य यज्ञं गृह्णाति । यस्याग्निमनु-
द्धृतꣳ सूर्योऽभिनिम्रोचति । वारुणं चरुं
निर्वपेत् । तेनैव यज्ञं निष्क्रीणीते, इति ।

वरुणेनापहृतो यज्ञश्चरुणा मूल्येन पुनः क्रीतो भवति । हिरण्यबन्धनमारभ्य चरुपर्यन्तमेकमिदं प्रायश्चित्तम् ।

अस्तमयनिमित्तं प्रायश्चित्तमभिधायोदयनिमित्तं प्रायश्चित्तं विधत्ते—

नि वा एतस्याऽऽहवनीयो गार्हपत्यं काम-
यते । नि गार्हपत्य आहवनीयम् । यस्याग्नि-
मनुद्धृतꣳ सूर्योऽभ्युदेति । चतुर्गृहीतमाज्यं
पुरस्ताद्धरेत् ( ३ ) । अथाग्निम् । अथा-
ग्निहोत्रम् । यदाज्यं पुरस्ताद्धरति । एतद्वा
अग्नेः प्रियं धाम । यदाज्यम् । प्रियेणैवैनं
धाम्ना समर्धयति । यदग्निं पूर्वꣳ हरत्यथा-
ग्निहोत्रम् । भागधेयेनैवैनं प्रणयति । ब्राह्मण

आर्षेय उद्धरेत् । ब्राह्मणो वै सर्वा देवताः (४)। सर्वाभिरेवैनं देवताभिरुद्धरति, इति ।

पूर्ववद्व्याख्येयम् ।

अत्र पूर्वस्मादधिकं कंचिद्विशेषं विधत्ते—

पराची वा एतस्मै व्युच्छन्ती व्युच्छाति । यस्याग्निमनुद्धृतꣳ सूर्योऽभ्युदेति । उषाः केतुना जुषताम् । यज्ञं देवेभिरन्वितम् । देवेभ्यो मधुमत्तमꣳ स्वाहेति प्रत्यङ्ङ्निषद्याऽऽज्येन जुहुयात् । प्रतीचीमेवास्मै विवासयति, इति ।

यस्य पुरुषस्याग्न्युद्धरणात्प्राक्सूर्योदयो भवेदेतस्मै पुरुषायोषःकालदेवता व्युच्छन्ती प्रभातं कुर्वती पराची वै पुनरावृत्तिरहितैव व्युच्छाति प्रभातं करोति । एकस्मिन्दिने प्रभातं कृत्वा विनश्यति दिनान्तरेषु प्रभातं कर्तुं न तिष्ठतीत्यर्थः । एतद्दोषपरिहाराय प्रत्यङ्मुख उपविश्य "उषाः" इत्यादिमन्त्रमुच्चार्याऽऽज्येन जुहुयात् । ततोऽस्मै यजमानार्थं प्रतीचीं पुनरावृत्तियुक्तां स्वाकृतिं कृत्वा विवासयति । दैनंदिनं प्रभातं संभावयति । मन्त्रस्यायमर्थः—इयमुषःकालदेवता केतुना दिवसचिह्नभूतेनाऽऽदित्येन सह देवेभिरन्वितमन्यैर्देवैः प्रीतिपूर्वकं स्वीकृतमिमं यज्ञं जुषताम् । देवेभ्योऽत्यन्तमाधुर्योपेतमाज्यं स्वादुतममस्त्विति ।

होमानन्तरकर्तव्यं विधत्ते—

अग्निहोत्रमुपसाद्यातमितोरासीत । व्रतमेव हतमनुम्रियते । अन्तं वा एष आत्मनो गच्छति (५) । यस्ताम्यति । अन्तमेष यज्ञस्य गच्छति । यस्याग्निमनुद्धृतꣳ सूर्योऽभ्युदेति । पुनः समन्यं जुहोति । अन्तेनैवान्तं यज्ञस्य

निष्क्रीणाति । मित्रो वा एतस्य यज्ञं गृह्णाति । यस्याग्निमनुद्धृतꣳ सूर्योऽभ्युदेति । मैत्रं चरुं निर्वपेत् । तेनैव यज्ञं निष्क्रीणीते, इति ।

पूर्ववत्सर्वं व्याख्येयम् । आज्योद्धरणमारभ्य मैत्रचरुपर्यन्तमेकं प्रायश्चित्तम् ।

अथाग्न्युद्वानानिमित्तं प्रायश्चित्तं विधत्ते—

यस्याऽऽहवनीयेऽनुद्वाते गार्हपत्य उद्वायेत् (६) । यदाहवनीयमनुद्वाप्य गार्हपत्यं मन्थेत् । विच्छिन्द्यात् । भ्रातृव्यमस्मै जनयेत् । यद्वै यज्ञस्य वास्तव्यं क्रियते । तदनु रुद्रोऽवचराति । यत्पूर्वमन्ववस्येत् । वास्तव्यमग्निमुपासीत । रुद्रोऽस्य पशून्घातुकः स्यात् । आहवनीयमुद्वाप्य । गार्हपत्यं मन्थेत् (७), इति ।

यस्य पुरुषस्याऽऽहवनीयाग्नौ विद्यमाने सति गार्हपत्याग्निर्नश्येत्तदानीमयं पुरुषस्तं विद्यमानमाहवनीयमविनाश्य यदि गार्हपत्यार्थं मन्थनं कुर्यात्तदानीमाहवनीयजनकस्य गार्हपत्यस्याभावाद्यज्ञो विच्छिद्येत । पूर्वो ह्याहवनीयजनको गार्हपत्यो विनष्टः । इत ऊर्ध्वं मन्थनीयस्तु नैतस्याऽऽहवनीयस्य जनकः । किंच तन्मन्थनेन यजमानस्य भ्रातृव्यमुत्पादयेत् । मन्थनीयस्य पूर्वाहवनीयविरोधित्वात् । एवं तर्हि शास्त्रीयौ गार्हपत्याहवनीयौ मा भूताम् । लौकिकमेवाग्निहोत्रं क्रियतामिति चेत् । तदप्यनुपपन्नम् । यज्ञस्य संबन्धि यदङ्गं वास्तव्यं लौकिकं क्रियते । वास्तवे लोकव्यवहारे भवं वास्तव्यम् । तल्लौकिकमङ्गमनु रुद्रः क्रूरो देवो यज्ञशालायां प्रविशति । एवं सति यदि पूर्वं विद्यमानमाहवनीयमनु कर्म समापयेत्तदानीं लौकिकमेवाग्निमुपासितवान्भवति । ततो रुद्रोऽस्य पशून्विनाशयेत् । तस्मात्पूर्वसिद्धमाहवनीयं विनाश्य पश्चाद्गार्हपत्यार्थमग्निं मन्थेत् ।

तत्र मन्थनमन्त्रं विधत्ते—

इतः प्रथमं जज्ञे अग्निः । स्वाद्योनेरधि जातवेदाः ।
स गायत्रिया त्रिष्टुभा जगत्या । देवेभ्यो हव्यं
वहतु प्रजानन्निति । छन्दोभिरेवैनꣳ स्वाद्योनेः
प्रजनयति, इति ।

जातवेदा उत्पन्नसर्वजगदभिज्ञोऽग्निः स्वाद्योनेः स्वकीयात्कारणादितोऽरणेः प्रथममुत्पन्नः । स च गायत्र्यादिच्छन्दस्त्रयेण सहकारिणा देवान्हविश्च प्रकर्षेण जानन्नस्मदीयं हव्यं देवेभ्यो वहत्वित्यनेन मन्त्रेण मन्थनं कुर्यात् । तथा सति गायत्र्यादिच्छन्दोभिरेवानुगृहीतः स्वकीयात्कारणादुत्पादितो भवति ।

यथोक्तं मन्थनविधिमनूद्यानुमन्त्रणं विधत्ते—

गार्हपत्यं मन्थति । गार्हपत्यं वा अन्वाहिताग्नेः
पशव उपतिष्ठन्ते । स यदुद्वायति । तदनु पश-
वोऽपक्रामन्ति । इषे रय्यै रमस्व ( ८ ) । सहसे
द्युम्नाय । ऊर्जे पत्यायेत्याह । पशवो वै रयिः ।
पशूनेवास्मै रमयति, इति ।

मन्थनेन निष्पन्नो यो गार्हपत्यस्तदनु पशवोऽस्य संपद्यन्ते । तदुद्वासने तु पशवो नश्यन्ति । अतस्तदुद्वासनं वारयितुमिष इत्यादिमन्त्रेणाभिमन्त्रयेत् । मन्त्रस्य चायमर्थः—हेऽग्न इषेऽन्नार्थं रय्यै धनार्थं सहसे बलार्थं द्युम्नाय यशोऽर्थमूर्जे क्षीरादिरसार्थं पत्याय स्वामित्वार्थं च रमस्व त्वमत्र क्रीडां कुरु । अस्मिन्मन्त्रे धनवाचिना रयिशब्देन पशूनामप्यभिमतत्वात्पशूनस्मै संपादयति ।

अथ मन्त्रेण समिन्धनविधिमभिप्रेत्य तस्य भागमनूद्य व्याचष्टे—

सारस्वतौ त्वोत्सौ समिन्धातामित्याह । ऋक्सामे
वै सारस्वतावुत्सौ । ऋक्सामाभ्यामेवैनꣳ समिन्धे,
इति ।

हेऽग्न उत्सावत्युत्सुकौ सारस्वतौ सरस्वतिसंबन्धिनावृग्वेदसामवेदौ त्वां समिन्धातां सम्यग्दीपयताम् ।

भागान्तरमुदाहृत्य व्याचष्टे—

सम्राडसि विराडसीत्याह । रथन्तरं वै सम्राट् । बृहद्विराट् (९) । ताभ्यामेवैनꣳ समिन्धे, इति ।

सम्यग्राजत इति सम्राट् । विविधं राजत इति विराट् । हेऽग्ने सामद्वयरूपस्त्वमसि ।

अथ निमित्तान्तरकृतं प्रायश्चित्तं विधत्ते—

वज्रो वै चक्रम् । वज्रो वा एतस्य यज्ञं विच्छिनत्ति । यस्यानो वा रथो वाऽन्तराग्नी याति । आहवनीयमुद्वाप्य । गार्हपत्यादुद्धरेत् । यदग्ने पूर्वं प्रभृतं पदꣳ हि ते । सूर्यस्य रश्मीनन्वाततान । तत्र रयिष्ठामनुसंभरैतम् । सं नः सृज सुमत्या वाजवत्येति । पूर्वेणैवास्य यज्ञेन यज्ञमनुसंतनोति, इति ।

शकटस्य रथस्य वा यच्चक्रं तल्लोहबद्धतया वज्रसमानम् । "रथतृतीयम्" इति वज्रांशत्वश्रुतेश्च । तथा सत्याहवनीयगार्हपत्ययोर्मध्ये रथस्य शकटस्य वा गमने सति वज्रेण यज्ञो विच्छिद्येत । अतस्तत्परिहारार्थमाहवनीयं विनाश्य यदग्नय इत्यादिमन्त्रेण गार्हपत्यात्पुनरुद्धरेत् । मन्त्रस्य चायमर्थः—हेऽग्ने ते तव प्रभृतं प्रकर्षेण पुष्टं यत्पदं स्वरूपं सूर्यस्य रश्मीनन्वनुक्रमणेन सर्वतः प्रसारयामास । तत्र यद्रयिष्ठां धनसमृद्धाववस्थितमेतमाहवनीयमनुक्रमेण संभर सम्यक्पोषय । नोऽस्मान्वाजवत्याऽन्नेनोपेतया सुमत्या शोभनबुद्ध्या संसृज संयोजय । अनेन मन्त्रेणाऽऽहवनीयोद्धरणे सति पूर्वसिद्धेनैव यज्ञेनास्य यजमानस्य करिष्यमाणं यज्ञमनुक्रमेण संततं करोति ।

अस्मिन्नेवोद्धरणे मन्त्रान्तरं विधत्ते—

त्वमग्ने सप्रथा असीत्याह । अग्निः सर्वा देवताः । देवताभिरेव यज्ञꣳ संतनोति, इति ।

हेऽग्ने त्वं सप्रथाः कीर्तियुक्तोऽसि । अस्य मन्त्रस्योत्तरभाग उपहोमकाण्डे समाम्नास्यते । अस्मिन्पादे प्रशस्यमानोऽग्निः सर्वदेवतात्मकः । ते देवा बिभ्यतोऽग्निं प्राविशंस्तस्मादाहुरग्निः सर्वदेवता इत्यन्यत्राऽऽम्नानात् । अतो देवताभिरेव सहायभूताभिर्यज्ञं संततं करोति ।

अत्रैव कर्तव्यशेषं विधत्ते—

अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् । अग्निमेव पथिकृतꣳ स्वेन भागधेयेनोपधावति । स एवैनं यज्ञियं पन्थामपि नयति । अनड्वान्दक्षिणा । वही ह्येष समृद्ध्यै (१०), इति ।

हरत्यथाग्निहोत्रं निम्रोचति हरेद्देवता गच्छत्युद्वायेन्मन्थेद्रमस्व बृहद्भिराडेति नवं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके चतुर्थाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

---

[ नि वै पूर्वं त्रीणि निम्नो(म्रो)चति दर्भेण यद्धिरण्यमग्निहोत्रम् । पुनर्वरुणो वारुणं नि वा एतस्याभ्युदेति चतुर्गृहीतमाज्यं यदाज्यं यदग्निं पराच्युषाः । पुर्नमित्रो मैत्रं यस्याऽऽहवनीयेऽनुद्राते गार्हपत्ये यद्वै मन्थेदुद्धरेत् ॥ (१) ]

पन्थानं करोतीति पथिकृत्ताहशोऽग्निर्निरुप्तेन स्वकीयेन भागधेयेन सेवित एनं यजमानं यज्ञयोग्यं पन्थानं प्रापयति । तत्र चानड्वान्दक्षिणा देया । स च भारवाहित्वात्समृद्ध्यै संपद्यते ।

अत्र विनियोगसंग्रहः—

उषामन्त्रेण होमः स्यात्पुरा सूर्योदये सति ।
इतः प्रथेति मन्त्रेण पश्चिमानलमन्थनम् ॥

---

१ ग. °न्थानम° । २ क. °षाहोमः पुरा वह्नेरुदये सति हूयते । इ° ।

इषे रय्यै तु मथितं मन्त्रयेतानलं तदा ।
सारस्वतौ त्वेति मन्त्रादेतमग्निं समिन्धयेत् ॥
यदग्न इत्यन्तराये रथेनाग्निं समुद्धरेत् ।
त्वमग्न इत्यपि तथा षण्मन्त्रा इति कीर्तिताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥४॥

---

अथ चतुर्थप्रपाठके पञ्चमोऽनुवाकः ।

---

चतुर्थेऽग्निविषयं प्रायश्चित्तमुक्तम् । पञ्चमे सोमविषयं प्रायश्चित्तमुच्यते । तत्र प्रातःसवनविषयं प्रायश्चित्तं विधत्ते—

यस्यं प्रातःसवने सोमोऽतिरिच्यते । माध्यंदिनꣳ सवंनं कामयमानोऽभ्यतिरिच्यते । गौर्धयति मरुतामिति धयंद्वतीषु कुर्वन्ति । हिनस्ति वै संध्यधीतम् । संधीव खलु वा एतत् । यत्सवनस्यातिरिच्यते । यद्धयद्वतीषु कुर्वन्ति । संधेः शान्त्यै, इति ।

यस्य यजमानस्य प्रातःसवनेऽनुष्ठिते सति तत्राभिषुतः सोमः कियानप्यवशिष्यते तस्यासौ सोमो माध्यंदिनसवनेऽपि स्वस्योपयोगमपेक्ष्यातिरिक्तो भवति । तस्यातिरेकदोषस्य परिहाराय धयच्छब्दोपेतास्वृक्षु गौर्धयति मरुतामित्यादिषु स्तोत्रं कुर्वन्ति । यद्वेदवाक्यमहोरात्रयोः संधावधीतं तदध्येतारं हिनस्ति । तथा चाध्ययननिषेधेषु प्रस्तुतेष्वापस्तम्बः स्मरति— "तावन्तं कालं नाधीयीताध्यापयेद्वा संध्योस्तथा" इति । प्रातःसवनस्य सोमातिरेको यत्तदेतत्संधीव । यथा संध्याकालोऽहोरात्रोभयस्पर्श्येवमतिरिक्तसोमोऽपि प्रातःसवने संपादितत्वान्माध्यंदिनसवनकामित्वाच्चोभयस्य स्पर्शी । ततः संध्याकालाध्ययनसमानो दोषः प्राप्नुयात् । तत्र धयद्वतीषु स्तोत्रे क्रियमाणे सत्यतिरिक्तस्य सोमस्यापि प्रातःसवनान्तःपातित्वात्सं-

धित्वं शाम्यति । तदेतत्सूत्रकारेणापि स्पष्टमुक्तम्—"यदि प्रातःसवने प्राग्घोमात्सोममतिरिक्तं पश्येत्तं चमसेष्वभ्युन्नयेदुपजुहुयाद्वा हुते दृष्ट्वा स्तुतशस्त्रवन्तं कुर्यात्" इति । एवं सति प्रातःसवनस्यैतदन्तत्वादनन्तरभाविनो माध्यंदिनसवनत्वादुभयव्यतिरिक्तः संधिर्नाम कश्चिन्न भविष्यति ।

अतिरिक्तसोमस्य स्तोमार्थं धयद्वतीषु यत्स्तोत्रं क्रियते तत्र सामस्तोमविशेषौ विधत्ते—

गायत्रꣳ साम भवति पञ्चदशः स्तोमः । तेनैव प्रातःसवनान्नयन्ति (१), इति ।

प्रातःसवने हि बहिष्पवमानस्तोत्रं गायत्रसाम्ना निष्पाद्यते । आज्यस्तोत्राणि पञ्चदशस्तोमेन । तस्योभयस्यात्र क्रियमाणत्वेन प्रातःसवनलक्षणसद्भावादतिरिक्तसोमस्यानुष्ठातारः प्रातःसवनान्नापगच्छन्ति ।

धयद्वतीष्वृक्षु मरुच्छब्दस्य विद्यमानत्वात्तत्प्रयुक्तं गुणं दर्शयति—

मरुत्वतीषु कुर्वन्ति । तेनैव माध्यंदिनात्सवनान्नयन्ति, इति ।

मरुतो हि माध्यंदिनसवनसंबन्धिनः । तत्र हि तदीया ग्रहा आम्नाताः । "यन्माध्यंदिने सवने मरुत्वतीया गृह्यन्ते" इति श्रुतेः । अतो मरुत्वतीषु स्तोत्रकरणेन माध्यंदिनसवनलक्षणसद्भावादतिरिक्तसोमेन कामितमाध्यंदिनसवनं नापगच्छन्ति ।

अतिरिक्तसोमानुष्ठानप्रकारं विधत्ते—

होतुश्चमसमनून्नयन्ते । होताऽनुशꣳसति । मध्यत एव यज्ञꣳ समादधाति, इति ।

दशसु चमसेषु मध्ये योऽयं होतुश्चमसस्तमादावतिरिक्तसोमेन पूरयित्वा पश्चादन्यान्पूरयेत् । अत्र होतैव शस्त्रं पठेत् । अत एव सूत्रकार आह—"ऐन्द्रावैष्णवं होताऽनुशंसति" इति । एवं कुर्वन्यज्ञं मध्यतः समादधाति । अन्यूनातिरिक्तं सवनद्वयं समी करोति । यथा संधिदोषो न भवति तथा करोतीत्यर्थः ।

अथ माध्यंदिनसवनविषयं प्रायश्चित्तं विधत्ते—

यस्य माध्यंदिने सवने सोमोऽतिरिच्यते ।

आदित्यं तृतीयसवनं कामयमानोऽभ्यतिरि-
च्यते । गौरिवीतꣳ साम भवति । अतिरिक्तं
वै गौरिवीतम् । अतिरिक्तं यत्सवनस्यातिरि-
च्यते (२) । अतिरिक्तस्य शान्त्यै, इति ।

यद्गौरिवीताख्यं साम तत्राक्षरातिरेकस्य विद्यमानत्वात्तेनायमतिरिक्तदोषः शाम्यति । इतरत्पूर्ववद्व्याख्येयम् ।

अत्र सामाधारमृग्विशेषं विधत्ते—

बण्महाꣳ असि सूर्येति कुर्वन्ति । यस्यै-
वाऽऽदित्यस्य सवनस्य कामेनातिरि-
च्यते । तेनैवैनं कामेन समर्धयन्ति, इति ।

बडित्यादिकमृक्प्रतीकम् । तत्र चाऽऽदित्यवाचकः सूर्यशब्द आम्नातः । तृतीयसवनं चाऽऽदित्यसंबन्धि । आदित्यग्रहस्य तत्र विहितत्वात् । अत एव सूत्रकारेणोक्तम्—"आदित्यारम्भणं तृतीयसवनम्" इति । एवं सत्यतिरिक्तेन सोमेन काम्यमानमादित्यसंबन्धि तृतीयसवनं सूर्यशब्दघटितेन मन्त्रेण लब्धमिति कृत्वा तेन कामेनातिरिक्तसोमं समृद्धं करोति ।

ऋचं विधाय सामविशेषं विधत्ते—

गौरिवीतꣳ साम भवति । तेनैव
माध्यंदिनात्सवनान्नयन्ति, इति ।

माध्यंदिनसवने गौरिवीतसाम्नः पृष्ठस्तोत्रे विकल्पेन विहितत्वात्तत्साम तत्सवनलक्षणम् । अतस्तेन साम्ना माध्यंदिनसवनान्नापगच्छन्ति ।

स्तोमविशेषं विधत्ते—

सप्तदशः स्तोमः । तेनैव तृतीयसवनान्नयन्ति, इति ।

तृतीसवनगतस्याऽऽर्भवपवमानस्य सप्तदशस्तोमयुक्तत्वादसौ स्तोमस्तत्सवनलक्षणम् । तेन तृतीयसवनान्नापगच्छन्ति ।

अनुष्ठानप्रकारं विधत्ते—

होतुश्चमसमनून्नयन्ते । होताऽनुशꣳसति ( ३ )। मध्यत एव यज्ञꣳ समादधाति, इति।

पूर्ववद्व्याख्येयम्।

अथ तृतीयसवने प्रायश्चित्तविशेषं विधत्ते—

यस्य तृतीयसवने सोमोऽतिरिच्येत । उक्थ्यं कुर्वीत । यस्योक्थ्येऽतिरिच्येत । अतिरात्रं कुर्वीत । यस्यातिरात्रेऽतिरिच्येत । तत्वै दुष्प्रज्ञानम्। यजमानं वा एतत्पशव आसाद्य यन्ति। बृहत्साम भवति । बृहद्वा इमाँल्लोकान्दाधार । बार्हताः पशवः । बृहतैवास्मै पशून्दाधार, इति।

द्वादशस्तोत्रयुक्तेऽग्निष्टोमे प्रयुक्ते सति तृतीयसवने यदि सोमातिरेकस्तदानीं तस्योपयोगाय द्वादशभ्य उपरि स्तोत्रत्रयोपेतमुक्थ्यं कुर्वीत । तत्रापि सोमातिरेके सत्येकोनत्रिंशत्स्तोत्रयुक्तमतिरात्रं कुर्वीत । तत्रापि सोमातिरेके ततोऽधिकस्तोत्रयुक्तस्य क्रतोरभावादतिरेकसमाधानं ज्ञातुं दुःशकं तर्हि माभूत्समाधानमिति चेत् । न। पशुहानिप्रसङ्गात् । एतेनातिरेकेण पशवो यजमानमासाद्य सर्वतोऽभिभूय यत्र क्वापि यन्ति । तस्मात्कार्यमेतत्समाधानम् । बृहत्सामगानेन तत्समाहितं भवति । बृहतः सर्वलोकधारणसमर्थत्वात्पशूनां च तत्सामलभ्यत्वेनाऽऽहृतत्वात्पलायमानान्पशून्यजमानार्थं तेन साम्ना धारयति।

तस्य साम्न आधारभूता ऋचो विधत्ते—

शिपिविष्टवतीषु कुर्वन्ति । शिपिविष्टो वै देवानां पुष्टम् । पुष्टचैवैनꣳ समर्धयन्ति, इति।

शिपिविष्टशब्दो यास्वृक्षु विद्यते ताः शिपिविष्टवत्यः । शिपिविष्टशब्दो विष्णुवाची । "यः पशोर्भूमा या पुष्टिस्तद्विष्णुः शिपिविष्टः" इति श्रुत्यन्त-

१ ग. °तोऽपि भूयो य°।

रात्। स च देवानां पुष्टिहेतुः। अतः शिपिविष्टवतीषु कुर्वतीषु गायन्तीषु गाने सति पुष्ट्यैव यजमानं समृद्धं कुर्वन्ति।

अनुष्ठानप्रकारं विधत्ते—

होतुंश्चमसमनून्नंयन्ते। होताऽनुंशꣳसति।
मध्यत एव यज्ञꣳ समादंधाति, इति।

यन्ति सर्वनस्यातिरिच्यंते शꣳसति दाधाराष्टौ चं।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके चतुर्थाध्याये पञ्चमोऽनुवाकः॥ ५॥

पूर्ववत्।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

अथ चतुर्थप्रपाठके षष्ठोऽनुवाकः।

पञ्चमे सोमातिरेकप्रायश्चित्तमुक्तम्। षष्ठे त्वेकग्रामवर्तिबहुसोमयागविषयविशेषोऽभिधीयते। तत्रैकं विशेषं विधत्ते—

एकैंको वै जनतांयामिन्द्रंः। एकं वा एता-
विन्द्रंमभिसꣳसुंनुतः। यौ द्वौ सꣳसुनुतः। प्रजा-
पंतिर्वा एष वितांयते। यद्यज्ञः। तस्य
ग्रावांणो दन्तांः। अन्यतरं वा एते सꣳसु-
न्वतोर्निर्बंप्सति। पूर्वेणोपसृत्या देवता इत्यांहुः।
पूर्वोपसृतस्य वै श्रेयान्भवति। एतिवन्त्याज्यांनि
भवन्त्यभिजिंत्यै (१), इति।

जनानां समूहो जनता। एकैकस्यां जनतायामेकैक इन्द्र एको हि स्वामी। तं जनसमूहं योगक्षेमसंपादनेन पालयति। तथा सत्येकग्रामवर्तिन्यामेकस्यां जन-

तायां मध्ये यौ द्वौ यजमानौ संसुनुतः संभूय सोमयागं कुरुतः। एकस्मिन्काले कुरुत इत्यर्थः। तावेतावुभौ यजमानावेकमेवेन्द्रमभिलक्ष्य संभूयैकस्मिन्कालेऽनुतिष्ठतः। तथा सति ममायमिन्द्रोऽस्त्वित्स्त्येवं तयोर्विप्रतिपत्तिर्भवेत्। अत एवाऽऽश्वलायनेनोक्तम्—"विमतानां प्रसवसंनिपातेऽश्वः" इति। तत्र यो यज्ञः स एष प्रजापतिरूप एव भूत्वा विस्तार्यते। तस्य प्रजापतिरूपस्य यज्ञस्योपांशुसवनादयो ग्रावाणस्तीक्ष्णदन्तस्थानीयाः। एते ग्रावाणः संभूय सोममभिषुण्वतोर्द्वयोर्यजमानयोर्मध्येऽन्यतरं यजमानं निर्बप्सति निःश्लेषेण भर्त्सयन्ति। एकेन यजमानेनेन्द्रस्य परिगृहीतत्वादितरस्येन्द्राभावेन यागाभाव एव भर्त्सनम्। अत एवाभिज्ञाः पूर्वेण प्रथमप्रवृत्तेन यजमानेन देवता उपसृत्याः प्राप्या इत्याहुः। लोकेऽपि हि प्रथमं सेवमाने भृत्ये स्वामी पक्षपातं करोति। तस्मात्पश्चादुपगच्छन्तं निर्देवतं यजमानं ग्रावरूपा दन्ता दशन्ति। अतस्तत्परिहारायाऽऽज्यस्तोत्राण्येतिवन्ति कर्तव्यानि। इण् गताविल्यस्य धातोरर्थमेतिशब्दो ब्रूते। क्तिन्प्रत्ययान्तस्यास्य धातोराङ्पूर्वत्वे सत्येतिशब्दनिष्पत्तेस्तदर्थवाचिनः शब्दा येषु स्तोत्रेषु विद्यन्ते तादृशानि स्तोत्राणि प्रातःसवने कर्तव्यानि। तथा सतीन्द्राभावदोषपरिहारेणास्याभिजयो भवति।

तत्रापरं विशेषं विधत्ते—

मरुत्वतीः प्रतिपदः। मरुतो वै देवानामपराजितमायतनम्। देवानामेवापराजित आयतने यतते, इति।

मरुच्छब्दो यास्वृक्ष्वस्ति ता मरुत्वत्यः। तथाविधा ऋच आज्यस्तोत्रे प्रतिपदः प्रथमभाविनीः कुर्यात्। देवानां मध्ये मरुतो बलवत्त्वेन पराजयरहितं स्थानम्। ततो देवसंबन्धिन्यपराजिते स्थाने प्रयत्नं करोति।

ऋग्विशेषं विधाय सामविशेषं विधत्ते—

उभे बृहद्रथंतरे भवतः। इयं वाव रथंतरम्। असौ बृहत्। आभ्यामेवैनमन्तरेति। वाचश्च मनसश्च। प्राणाच्चापानाच्च। दिवश्च पृथिव्याश्च (२)। सर्वस्माद्वित्ताद्वेद्यात्, इति।

एकस्मिन्स्तोत्रे बृहत्सामान्यस्मिन्रथंतरमित्येवं चतुर्ष्वाज्यस्तोत्रेषु पर्यायेणोभे सामनी भवतः । रथंतरस्य भूलोकरूपत्वात् । बृहतो द्युलोकरूपत्वात् । एतद्रूपाभ्यां सामभ्यामेवैनं यजमानं संस्रवदोषादन्तरितं व्यवहितं करोति । किंच सामद्वयस्य त्रागादियुग्मरूपत्वात्तगद्वादिभिरपि व्यवधानं करोति । वित्तं पूर्वं लब्धं वेद्यमितः परं लब्धव्यम् ।

आज्यस्तोत्रेषु सामविशेषं विधाय तृतीये पृष्ठस्तोत्रे सामविशेषं विधत्ते—

अभिवर्तो ब्रह्मसामं भवति ।

सुवर्गस्य लोकस्याभिवृत्त्यै, इति ।

ब्रह्मसंबन्धिनि पृष्ठस्तोत्रेऽभिवर्ताख्यं सामोद्गाता गायेत् । यामृचं ब्रह्मा शंसति तस्यामृच्युद्गात्रा गातव्यं साम ब्रह्मसामम् । अभिवर्तसाम्ना स्वर्गोऽभिमुखत्वेन वर्तते ।

अथाहर्विशेषं विधत्ते—

अभिजिद्भवति । सुवर्गस्य लोकस्याभिजित्यै । विश्वजिद्भवति विश्वस्य जित्यै, इति ।

अभिजिद्विश्वजिताख्ययोरेकाहयोरन्यतरं कुर्यात् । उभयोरपि जयहेतुत्वात् ।

अथापरं विशेषं विधत्ते—

यस्य भूयाꣳसो यज्ञक्रतव इत्याहुः । स देवतां वृङ्क्त इति । यद्यग्निष्टोमः सोमः परस्तात्स्यात् (२) । उक्थ्यं कुर्वीत । यद्युक्थ्यः स्यात् । अतिरात्रं कुर्वीत । यज्ञक्रतुभिरेवास्य देवतां वृङ्क्ते, इति ।

उभयोर्मध्ये यस्य यजमानस्य यज्ञक्रतवो भूयांसोऽङ्गभूतैर्यज्ञैर्युक्ताः प्रधानक्रतवोऽनुष्ठेयधर्मबहुला भवन्ति स तादृशो यजमानोऽल्पधर्मानुष्ठायिनोऽन्यस्य यजमानस्य देवता विनाशयति । अतः परस्तादन्यस्य यजमानस्य गृहे यद्यग्निष्टोमाख्यः सोमः स्यात्तदा स्वयं ततोऽधिकमुक्थ्यं कुर्वीत । यद्युक्थ्यस्तदा स्वयं ततोऽधिकमतिरात्रं कुर्वीत । एवं स्वकीयैरधिकयज्ञक्रतुभिरेवेतरस्य देवता विनाशयति । तस्य फलाभिवयाभाव एव विनाश इत्युच्यते ।

विशेषान्तरं विधत्ते—

यो वै छन्दोभिरभिभवति । स सꣳसुन्वतोरभिभवति । संवेशाय त्वोपवेशाय त्वेत्याह । छन्दाꣳसि वै संवेश उपवेशः । छन्दोभिरेवास्य च्छन्दाꣳस्यभिभवति, इति ।

यो यजमानः स्वकीयैश्छन्दोभिरितरस्य च्छन्दांस्यभिभवितुमुद्युङ्क्ते स एव संसुन्वतोर्मात्सर्येण सोममभिषुण्वतोर्मध्ये परकीयाणि च्छन्दांस्यभिभवितुं समर्थो भवति । तस्मात्तत्सामर्थ्याय संवेशादिमन्त्रहोमं कुर्यात् । संप्राप्यावस्थितिः संवेशः । तत्रैवाऽऽसनमुपवेशः । हे देव मम संवेशाय त्वां भजे तथोपवेशाय च त्वां भज इत्येवं मन्त्रं होमकाले ब्रूयात् । एतन्मन्त्रशेषश्च संहितायां तृतीयकाण्डे समाम्नातो व्याख्यातश्च । स्वकीयानि च्छन्दांस्येव संवेशोपवेशौ । तत्साधनत्वात् । अतः स्वकीयैश्छन्दोभिरेव होमतुष्टैरन्यस्य च्छन्दांस्यभिभवति ।

पुनरप्यन्यं विशेषं विधत्ते—

इष्टर्गो वा ऋत्विजामध्वर्युः (४) । इष्टर्गः खलु वै पूर्वोऽर्ष्टुः क्षीयते । प्राणापानौ मृत्योर्मा पातमित्याह । प्राणापानयोरेव श्रयते । प्राणापानौ मा मा हासिष्टमित्याह । नैनं पुराऽऽयुषः प्राणापानौ जहितः, इति ।

इष्टं वृङ्क्ते विनाशयतीतीष्टर्गोऽध्वर्युः सर्वेषामृत्विजामिष्टं विनाशयति । तस्यानुष्ठानबाहुल्येन प्रमादसंभवात् । अर्ष्टुरार्तिं गच्छत ऋत्विक्संघात्पूर्वः प्रथमभावी सन्नयमिष्टर्गोऽध्वर्युः क्षीणो भवति । ततः क्षयव्यावृत्तये प्राणापानावित्यादिमन्त्रं होमकाले ब्रूयात् । हे प्राणापानौ मृत्योः सकाशान्मा पातं मां रक्षतम् । अनेन मन्त्रपूर्वभागेण प्राणापानयोरेवाऽऽश्रितो भवति । हे प्राणापानौ मां मा हासिष्टं मां कदाचिदपि मा परित्यजतम् । अनेन मन्त्रस्योत्तरभागेण

शतसंवत्सरादायुषः पुरा प्राणापानावेनं न परित्यजतः । इत्येवमेकदेशवर्तिनोः सोमयाजिनोः संशये प्राप्ते विशेषोऽभिहितः ।

अथ सत्रविषये कंचिद्विशेषं विधत्ते—

आर्तिं वा एते निर्यन्ति । येषां दीक्षितानां प्रमीयते । तं यदंववर्जेयुः । क्रूरकृतामिवैषां लोकः स्यात् । आहर दहेति ब्रूयात् (५) । तं दक्षिणतो वेद्यै निधाय । सर्पराज्ञिया ऋग्भिः स्तुयुः । इयं वै सर्पतो राज्ञी । अस्या एवैनं परिददति, इति ।

सत्राय दीक्षितानां येषां मध्ये कश्चिन्म्रियेत तदानीमेते सर्वे सत्रिण आर्तिं यज्ञविनाशरूपां बाधां निरन्तरं प्राप्नुवन्ति । तं मृतमन्ये दीक्षिता यद्यवज्ञाय दूरतो वर्जयेयुस्तदानीमेषां वर्जयितॄणां क्रूरकृतामिव ब्रह्महत्यादिरूपं पापं कृतवतामिव नरकलोकः स्यात् । अतोऽवज्ञामकृत्वा तं मृतमिहाऽऽनीय दाहादिसंस्कारं च कुर्विति तदीयपुत्रादिकं प्रत्यादरेण ब्रूयात् । अथ तं प्रेतं वेद्या दक्षिणभागे निधाय सर्पराज्ञीदेवताकाभिर्भूमिर्भूम्नेत्यादिभिर्ऋग्भिः स्तोत्रं कुर्युः । इयमेव भूमिः सर्पतः संचरतः प्राणिजातस्य राज्ञी । अतोऽस्यै भूम्या एवैनं मृतं समर्पयन्ति ।

अथ स्तुतेरूर्ध्वं शंसनं विधत्ते—

व्यृद्धं तदित्याहुः । यत्स्तुतमननुशस्तमिति । होता प्रथमः प्राचीनावीती मार्जालीयं परीयात् । यामीरनुब्रुवन् । सर्पराज्ञीनां कीर्तयेत् । उभयोरेवैनं लोकयोः परिददति (६) । अथोऽधुवन्त्येवैनम् । अथोऽन्यै वाऽस्मै ह्नुवते, इति ।

यद्देवतारूपं स्तोत्रेण विषयीकृतं तदनन्तरमेव शस्त्रेण विषयीकृतं न स्यात् ।

तत्समृद्धिहीनं भवतीत्यभिज्ञा आहुः । अतः सर्पराज्ञीभिः स्तोत्रे कृते सत्यनन्तरमेव होता प्रथमः पुरोगामी सन्प्राचीनावीती भूत्वा मार्जालीयं धिष्ण्यं परितो गच्छेत् । किं कुर्वन्योऽस्य कौष्ठ्येत्यादिका यामीर्ऋचोऽनुब्रुवन् । ततो भूमिर्भूम्नेत्यादिकाः सर्पराज्ञीर्ब्रूयात् । तथा सति यमविषयाभिर्भूमिविषयाभिश्च लोकद्वयेऽप्येनं प्रतिष्ठापयन्ति । अपि चैनं मृतं सत्रिणं धुवन्त्येव वस्त्रधूननादिभिरितरसवोपचारैरुपचरन्त्येव । अपि चास्मै मृतयजमानाय निह्नुवत एव वियोगासहिष्णुत्वप्रलापादिभिरपलपन्त्येव ।

मार्जालीयपरिभ्रमणस्याऽऽवृत्तिं विधत्ते—

त्रिः परि॑यन्ति । त्रय॑ इ॒मे लो॒काः । ए॒भ्य ए॒वैनं॑ लो॒केभ्यो॑ धुवते । त्रिः पुनः॒ परि॑यन्ति । षट् संप॑द्यन्ते । षड्वा ऋ॒तवः॑ । ऋ॒तुभि॑रे॒वैनं॑ धुवते, इति ।

त्रिवारं प्रादक्षिण्येन लोकत्रयप्राप्त्यर्थमेनमुपचरन्ति । पुनस्त्रिवारमप्रदक्षिणावृत्तौ सत्यां षट्संख्ययर्तुभिरेवैनमुपचरन्ति ।

अथ बहिष्पवमानार्थमृक्सामविशेषं विधत्ते—

अग्न॒ आयू॑ꣳषि पवस॒ इति॑ प्रतिप॒दं॑ कुर्वीरन् । र॒थं॒त॒र॒सा॒मै॒षा॒ꣳ सोमः॑ स्यात् । आयु॑रे॒वाऽऽत्मन्द॑धते । अथो॑ पा॒प्मानं॑मे॒व वि॒जह॑तो यन्ति ( ७ ), इति ।

अभिजित्यै पृथिव्याश्च स्यादध्वर्युर्ब्रूयाल्लोकयोः परिददाति कुर्वीरस्त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके चतुर्थाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

बहिष्पवमानस्तोत्रस्याऽऽदौ पूर्वप्राप्तामृचं बाधित्वाऽग्न आयूꣳषीत्यृचं पठेत् । तथा गायत्रं साम बाधित्वा रथंतरं साम गायेत् । तथा प्रतिपत्पाठेनात्मन्यायुष्यं धारयन्ति । रथंतरसाम्ना यत्क्रूरकृत्समानलोकप्राप्तिपापं त्यजन्तः पुण्यलोकं प्राप्नुवन्ति ।

अत्र मीमांसा । षष्ठाध्यायस्य तृतीयपादे चिन्तितम्—

मृते सत्रिणि नान्यः स्यात्स्याद्वा नात्रापि पूर्ववत् ।
स्यादस्वाम्येऽपि कर्त्रंशे साप्तदश्यस्य सिद्धये ॥ [ इति ] ।

सत्रिषु बहुषु यजमानेष्वेकस्मिन्मृते प्रतिनिधिर्नास्ति। पूर्वाधिकरणे यजमानप्रतिनिधेर्निराकृतत्वादिति चेत् । मैवम् । भङ्ग्यन्तरेण तत्सिद्धेः । सत्रिणां हि कार्यद्वयं फलभोक्तृत्वं यागकर्तृत्वं च । तत्र प्रतिनिधेः फलित्वाभावेऽपि कर्तृत्वं संभवति । ऋत्विक्कार्ये कर्तृत्वे प्रतिनिधिमन्तरेण साप्तदश्याभावात्षोडशैव कार्याणि निष्पद्येरन् । एकं कार्यं लुप्येत। तस्माद्यजमानस्य प्रतिनिध्यभावेऽपि ऋत्विजः प्रतिनिधिसंभवात्पुरुषान्तरं प्रतिनिधातव्यम् ।

तत्रैवान्यच्चिन्तितम्—

स स्वाम्यप्युत कर्तैव स्वामी तत्स्थानगत्वतः ।
अनारब्धुः फलाभावादस्वामी कर्तृमात्रता ॥ [ इति ] ।

यः सत्रिणः प्रतिनिधिस्तस्य यजमानस्थाने स्वीकृतत्वेन यजमानत्वमप्यस्तीति चेत् । मैवम् । आरभ्य समाप्तिपर्यन्तमनुष्ठातुः फलं युक्तम् । प्रतिनिधिस्तु नाऽऽरब्धवान् । अतः फलाभावाद्यजमानत्वं नास्ति । किंतु कर्तृत्वमेव । मृतस्य तु समाप्त्यभावेऽपि फलमाम्नायते—"यो दीक्षितानां प्रमीयेतापि तत्र फलम्" इति ।

तत्रैवान्यच्चिन्तितम्—

नास्य स्युः फलिसंस्काराः कार्या वा नाफलित्वतः ।
अन्येषां साप्तदश्यार्थमफलिन्यपि ते मताः ॥ [ इति ] ।

सत्रे योऽयं प्रतिनिधिस्तस्य फलित्वाभावात्फलयोग्यताहेतवो वपनादिसंस्कारा न कर्तव्या इति चेत् । मैवम्। अस्य फलाभावेऽप्यस्मिन्संस्कृते सत्यन्येषां यत्साप्तदश्यं तत्संस्कृतेषु सप्तदशसु स्थितं भवति । ततः सप्तदशावराः सत्रमासीरन्नित्येतच्छास्त्रमनुगृहीतं भवति । अन्यथा संस्कृताः षोडशैवेति तच्छास्त्रं बाध्येत । यदि बहूनां यजमानानामलाभादवरा अल्पसंख्या यजमानाः स्युस्तदाऽपि सप्तदशापेक्षिताः । न तु ततोऽप्यल्पसंख्या इत्यर्थः । तस्मादफलिन्यपि तस्मिन्संस्काराः कर्तव्याः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

===

अथ चतुर्थप्रपाठके सप्तमोऽनुवाकः ।

षष्ठे सवननिमित्तं प्रायश्चित्तमुक्तम् । सप्तमे यूपविरोहणादिप्रायश्चित्तान्युच्यन्ते । तत्र यूपविरोहणप्रायश्चित्तं विधत्ते—

असुर्यं वा एतस्माद्वर्णं कृत्वा । पशवो वीर्यमपक्रामन्ति । यस्य यूपो विरोहति । त्वाष्ट्रं बहुरूपमालभेत । त्वष्टा वै रूपाणामीशे । य एव रूपाणामीशे । सोऽस्मिन्पशून्वीर्यं यच्छति । नास्मात्पशवो वीर्यमपक्रामन्ति, इति ।

यस्य यजमानस्य यूपो विरोहणानङ्कुराञ्जनयत्येतस्माद्यजमानात्पशवो वीर्यं चापक्रामन्ति । किं कृत्वाऽसूर्यं वर्णमसुरेभ्यो हितं कृत्वा । तदेतदपक्रमणं निवारयितुं त्वष्टृदेवताकं बहुवर्णोपेतं पशुमालभेत । त्वष्टा हि रूपाणां स्वामी । " त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृत " इति श्रुत्यन्तरात् । अतः पशूनां त्वष्टा रूपस्वामी यजमाने तान्पशून्वीर्यं च नियच्छति । ततो नास्मात्पशवो वीर्यं चापक्रामन्ति ।

अथाग्निविनाशप्रायश्चित्तं विधत्ते—

आर्तिं वा एते निर्यन्ति । येषां दीक्षितानामग्निरुद्वायति (१) । यदाहवनीय उद्वायेत् । यत्तं मन्थेत् । विच्छिन्द्यात् । भ्रातृव्यमस्मै जनयेत् । यदाहवनीय उद्वायेत् । आग्नीध्राद्दुद्धरेत् । यदाग्नीध्र उद्वायेत् । गार्हपत्यादुद्धरेत् । यद्गार्हपत्य उद्वायेत् । अत एव पुनर्मन्थेत् (२) । अत्र वाव स निलयते । यत्र खलु वै निलीनमुत्तमं पश्यन्ति । तदेनमिच्छन्ति, इति ।

दीक्षितानां येषां पुरुषाणामग्निर्विनश्यति ते पुरुषा विनाशमेव प्राप्नुवन्ति । तत्परिहाराय कश्चिद्भ्रान्त आहवनीयस्य नाशे यद्याहवनीयार्थमेव मन्थनं कुर्यात्तदानीं तस्य मथिताहवनीयस्य गार्हपत्यजन्यत्वाभावात्तयोरुभयोरैकमत्याभावेन यज्ञो विच्छिद्येत । मथितस्य गार्हपत्येन विरोधाद्यजमानस्य भ्रातृव्यं जनयेत् । तस्मादाहवनीयनाशे सत्याग्नीध्राद्धिष्णियाद्वाऽग्निमुद्धरेत् । न तु मन्थनं कुर्यात् । आग्नीध्रस्य नाशे गार्हपत्यादग्निमुद्धरेत् । तस्य गार्हपत्यस्य नाशे तत एव गार्हपत्यादर्धदग्धकाष्ठात्पुनर्मन्थनं कुर्यात् । यस्मादत्रैव गार्हपत्ये सोऽग्निर्विलीनोऽन्तर्हितस्तस्मादत्रैव मन्थनं युक्तम् । लोकेऽपि मणिमुक्तादिकमुत्तमं वस्तु यत्र भूप्रदेशे पतित्वा निलीनं भवति तत्रैव तदन्विष्य लब्धुमिच्छन्ति । तस्माद्गार्हपत्यस्थितकाष्ठे मन्थनमुचितम् ।

तस्मिन्मन्थने कंचिद्विशेषं विधत्ते—

यस्माद्दारोरुद्द्रायेत् । तस्यारणीं कुर्यात् । क्रुमुकमपि कुर्यात् । एषा वा अग्नेः प्रिया तनूः । यत्क्रुमुकः । प्रिययैवैनं तनुवा समर्धयन्ति, इति ।

गार्हपत्यावस्थितेष्वर्धदग्धकाष्ठेषु मध्ये चरमं वह्न्युद्वासनं यस्मिन्दारुणि पश्यति तद्दारुसंबन्धिन्यावेवारणी कुर्यात् । तयोररण्योर्मन्थनवेलायां क्रुमुकं प्रक्षिपेत् । तक्षणेन निष्पन्नोऽतिलघुः शकलः सोऽयं क्रुमुकः । सैषाऽग्नेरतिप्रिया तनूः । क्रुमुके हि सहसा वह्निर्ज्वलति । अतः प्रियेणैव शरीरेण वह्निं समृद्धं करोति ।

आहवनीयमन्थने यो दोष उक्तस्तदभावेन गार्हपत्यमन्थनं प्रशंसति—

गार्हपत्यं मन्थति ( ३ ) । गार्हपत्यो वा अग्नेर्योनिः । स्वादेवैनं योनेर्जनयति । नास्मै भ्रातृव्यं जनयति, इति ।

आधानकाले गार्हपत्यस्येतराग्नियोनित्वं दृष्टम् । अतोऽत्रापि गार्हपत्यमन्थने सति स्वकीयादेव योनेरुत्तरभाविनमेनमाहवनीयाद्यग्निं जनयति । अतो विरोधाभावाद्यजमानस्य भ्रातृव्यं नोत्पादयति ।

पूर्वं यस्य प्रातःसवन इत्यनुवाके सोमातिरेकप्रायश्चित्तमुक्तम् । इदानीं सोमोपक्षयनिमित्तं प्रायश्चित्तं विधत्ते—

यस्य सोमं उपदस्येत् । सुवर्णꣳ हिरण्यं द्वेधा विच्छिद्य । ऋजीषेऽन्यदा धूनुयात् । जुहुयाद्न्यत् । सोममेवाभिषुणोति । सोमं जुहोति, इति ।

यस्य यजमानस्याभिषुतः सोम उपक्षीयेत कृत्स्नानुष्ठानाय न पर्याप्नुयात्सोऽयं सम्यग्वर्णोपेतं हिरण्यं द्वेधा विभज्य तदीयमेकं शकलं पूर्वं निष्पीडितरसे सोमवल्लीसंबन्धिन्यृजीष आधूनुयान्मिश्रयित्वा पुनरभिषुणुयात् । इतरच्छकलं मुख्ये चमसे निधाय रसेन सह जुहुयात् । तथा कृते सोम एवाभिषुतो हुतश्च भवति ।

तदेतत्सुवर्णं प्रशंसति—

सोमस्य वा अभिषूयमाणस्य प्रिया तनूरुदक्रामत् (४) । तत्सुवर्णꣳ हिरण्यमभवत् । यत्सुवर्णꣳ हिरण्यं कुर्वन्ति । प्रिययैवैनं तनुवा समर्धयन्ति, इति ।

रजतव्यावृत्त्यर्थं सुवर्णमिति विशेषणम् ।

उपक्षयप्रायश्चित्तमुक्त्वाऽपहारप्रायश्चित्तं विधत्ते—

यस्याक्रीतꣳ सोममपहरेयुः । क्रीणीयादेव । सैव ततः प्रायश्चित्तिः, इति ।

दीक्षणीयेष्टेः पूर्वमेव सोमं संपाद्य क्रयपर्यन्तं क्वचिदवस्थापयेत् । अत एव सूत्रकार आह—"अत्र राजानमाहृत्य पयसोदनेन परिविवेषयन्त्याक्रयात्" इति । अत्र क्रयात्पूर्वं दीक्षादिवसेषु परिचर्यमाणं सोमं यदि केचिदपहरेयुस्तदानीमन्यमपि कंचित्सोमं संपाद्य क्रयः कर्तव्य एव । क्रयानुष्ठितिरेव तस्यापहारस्य प्रायश्चित्तिः ।

अथ क्रीतस्यापहारे प्रायश्चित्तं विधत्ते—

यस्य क्रीतमपहरेयुः । आदाराश्च फाल्गुनानि

चाभिषुणुयात् । गायत्री यः सोममाहरत् । तस्य योऽश्शुः पराऽपतत् (५) । त आदारा अभवन् । इन्द्रो वृत्रमहन् । तस्य वल्कः पराऽपतत् । तानि फाल्गुनान्यभवन् । पशवो वै फाल्गुनानि । पशवः सोमो राजा । यदादाराश्श्च फाल्गुनानि चाभिषुणोति । सोममेव राजानमभिषुणोति, इति ।

क्रीतस्य सोमस्यापहारे सोमप्रतिनिधित्वेनाऽऽदाराणां फाल्गुनानां चाभिषवः । आद्रियन्ते सोमरहितैस्तात्पर्येण स्वी क्रियन्त इत्यादाराः क्षीरयुक्तवल्लीविशेषाः । लोकव्यवहारे फल्गु स्वल्पमेव प्रयोजनं येषामार्द्रदूर्वाङ्कुरादीनां तृणानां तानि फाल्गुनानि । पुरा गायत्र्या समानीयमानस्य सोमस्य कश्चिदवयवो भूमौ पतितः । स आदाररूपेणोत्पन्नः । इन्द्रेण हतस्य वृत्रस्य वल्कस्त्वक्शकलो भूमौ पतित्वा फाल्गुनरूपेणोदभूत् । फाल्गुनानां पशुप्रियत्वात्पशुरूपत्वं सोमस्य च पशुप्राप्तिहेतुत्वात्पशुरूपत्वम् । एवं सत्यादारफाल्गुनाभिषवेण सोम एवाभिषुतो भवति ।

तत्र कर्तव्यविशेषान्विधत्ते —

शृतेन प्रातःसवने श्रीणीयात् । दध्ना मध्यंदिने (६) । नीतमिश्रेण तृतीयसवने । अग्निष्टोमः सोमः स्याद्रथंतरसाम । य एवर्त्विजो वृताः स्युः । त एनं याजयेयुः । एकां गां दक्षिणां दद्यात्तेभ्य एव । पुनः सोमं क्रीणीयात् । यज्ञेनैव तद्यज्ञमिच्छति । सैव ततः प्रायश्चित्तिः, इति ।

अभिषुतमादारं फाल्गुनरसं शृतेन पक्वक्षीरेण श्रीणीयान्मिश्रयेत् । नवनीतोत्पत्तेः पूर्वावस्थमीषन्मथितं दधि नीतमिश्रम् । यद्यप्ययमुक्थ्यषोडश्यादिरूपं क्रत्वन्तरमारब्धवांस्तथाऽपि तत्परित्यागेन प्रायश्चित्तरूपेऽस्मिन्प्रयोगे रथंतरपृष्ठोऽग्निष्टोमरूप एव सोमयागः कार्यः । तत्र पूर्वं वृता ऋत्विज एव याजकास्तेभ्यः सर्वेभ्य एकैव गौर्दक्षिणा । तथा नैमित्तिकं प्रयोगमनुष्ठाय पुनर्नित्यप्रयोगार्थं सोमं क्रीणीयात् । एवं सति नैमित्तिकप्रयोगरूपेणैव यज्ञेन नित्यप्रयोगरूपं यज्ञं प्राप्तुमिच्छति सेयमेवंविधैवानुष्ठितिः । ततः क्रीतसोमापहारदोषात्प्रायश्चित्तिर्विमुक्तिहेतुः ।

अथ सत्रं संकल्प्य ततो निवृत्तौ प्रायश्चित्तं विधत्ते—

सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानमागुरते । यः सत्रायाऽऽगुरते । एतावान्खलु वै पुरुषः । यावदस्य वित्तम् । सर्ववेदसेन यजेत । सर्वपृष्ठोऽस्य सोमः स्यात् । सर्वाभ्य एव देवताभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानं निष्क्रीणीते (७), इति ।

उद्धार्यंति मन्थेन्मन्थत्यक्रामत्परार्वतन्मध्यंदिन आगुरते पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके चतुर्थाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

यो यजमानः सत्रार्थं संकल्पयति स पुरुषः सर्वदेवताभ्यस्तत्प्रतिपादकस्तोत्रेभ्यश्च स्वात्मानं संकल्पयति । अस्य पुरुषस्य यावद्वित्तमस्ति तावदेवास्य पुरुषस्य सर्वकर्मनिर्वाहकं सारभूतं स्वरूपम् । दरिद्रस्य भोगदानयोरशक्तत्वात् । तथा च संकल्पितात्मकः पुरुषः स्वरूपसारभूतसर्ववेदसदक्षिणाकं सर्वपृष्ठस्तोत्रयुक्तं स्वसंकल्पितदोषप्रायश्चित्तभूतं सोमभागं कुर्यात् । ततश्च स्वमतिनिधिभूततादृशयागकर्मणा सर्वदेवताभ्यस्तत्प्रतिपादकपृष्ठस्तोत्रेभ्यश्च संकल्पितं स्वात्मानं निष्क्रीणीते । यज्ञस्य सर्ववेदसत्वं तु वेदःशब्दस्य धनवाचित्वेन सर्ववेदः सर्वधनं दक्षिणा यस्मिन्यज्ञ इति व्युत्पत्त्या बोध्यम् । सेयं सत्रेषु संकल्पभ्रष्टस्य प्रायश्चित्तिः । तदिदं सोमप्रतिनिधिरूपं प्रायश्चित्तं

सूत्रकारेण स्पष्टमुदाहृतम्—“ सोमाभावे पूतीकानभिषुणुयात्पूतीकाभाव आदारान्फाल्गुनानि च यानि श्वेनतूलानि स्युस्तदभावे याः काश्चौषधीः क्षीरिणीररुणदूर्वाः कुशान्वा हरितानिति वाजसनेयकमिति, यदि सत्रायाऽऽगूर्य न यजेत विश्वजिताऽतिरात्रेण सर्वपृष्ठेन सर्वस्तोमेन सर्ववेदसदक्षिणेन यजेत ” इति ।

अत्र मीमांसा । षष्ठाध्यायस्य तृतीयपादे चिन्तितम्—

सोमाभावे भवेत्पूतीविधिः प्रतिनिधाबुत ।
नियमो वचनादाद्यो लाघवात्तन्नियम्यते ॥ [ इति ] ।

यदि सोमं न विन्देत पूतीकानभिषुणुयादिति लिङ्प्रत्ययस्य विधिवाचित्वादिदं वाक्यं पूतीकलताखण्डानां विधायकमिति चेत् । मैवम् । सदृशतया प्रतिनिधेयत्वेन प्राप्तेषु पूतीकादिद्रव्येषु नियममात्रविधौ लाघवात् । तस्मात्पूतीकद्रव्यं नियम्यते ।

अत्रैवान्यच्चिन्तितम्—

पूतीकस्यापचारे स्यात्तेन सोमेन वा समम् ।
आद्यः श्रुतांशसादृश्यात्पूतीकाविधितोऽन्तिमः ॥ [ इति ] ।

यदा सोमप्रतिनिधेः पूतीकस्यापचारः स्यात्तदा तेन पूतीकेन सदृशं द्रव्यान्तरमुपादेयम् । “ पूतीकानभिषुणुयात् ” इति श्रुतेः पूतीकांशेः सादृश्यस्य लाभादिति चेत् । मैवम् । नास्ति पूतीकानां विधिः । किं तु नियमार्थं तद्वचनमित्युक्तम् । अतः श्रुतस्य सोमस्य सादृश्यलाभाय सोमसमं द्रव्यान्तरमुपादेयम् ।

दशमाध्यायस्य तृतीयपादे चिन्तितम्—

एकां पञ्चेति कृत्स्नां वा गोसंख्यां वा निवर्तयेत् ।
स्यादाद्यो दक्षिणायोगान्मैवं व्यवहितत्वतः ॥ [ इति ] ।

इदं श्रूयते—“ यस्य सोममपहरेयुरेकां गां दक्षिणां दद्यादभिदग्धे पञ्च गाः ” इति । तदिदं संख्याविशिष्टं द्रव्यं विधीयमानं गवादिदक्षिणां कृत्स्नां निवर्तयेत् । तस्य दक्षिणाशब्दयोगेन कार्यैकत्वात् । मैवम् । विशिष्टविधौ गौरवात् । गवां प्राप्तत्वाच्च संख्यामात्रं विधेयम् । तस्य च गोपदेन व्यवधानान्न दक्षिणायोगोऽस्ति । गोपदयोगे तु गोगतां स्वविरोधिनीं पूर्वप्राप्तसंख्यामेव निवर्तयेन्न त्वन्यत्किंचिदिति राद्धान्तः ।

षष्ठाध्यायस्य चतुर्थपादे चिन्तितम्—

सत्रायाऽऽगुरते योऽयं यजेद्विश्वजितेत्यसौ ।
यः कोऽप्युत प्रवृत्तः स्यादप्रवृत्तोऽथवाऽग्रिमः ॥

अविशेषात्प्रवृत्तोऽस्तु सत्राङ्गं हि तथा भवेत् ।
निमित्तोक्तेरप्रवृत्तः प्रायश्चित्तं चरेदिदम् ॥ [ इति ] ।

इदमाम्नायते—" यः सत्रायाऽऽगुरते स विश्वजिता यजेत " इति । आगुरते संकल्पयति । तत्र सत्रं संकल्प्य कश्चिदनुष्ठातुं प्रवृत्तः । अपरो न प्रवृत्तः । तयोरुभयोर्मध्ये यः कोऽपि विश्वजिता यजेत । कुतः । प्रवृत्त एव यजेतेति विशेषस्याश्रवणात् । एवमप्रवृत्त एव यजेतेत्यपि विशेषो न श्रूयते । तस्मादुभयोरन्यतर इत्याद्यः पक्षः । सत्रे प्रवृत्तस्यैव विश्वजिदनुष्ठाने सत्राङ्गत्वं विश्वजितो लभ्यते । तस्मात्प्रवृत्त एव विश्वजितं कुर्यादिति द्वितीयः पक्षः । ' यः सत्रायाऽऽगुरते ' इति निमित्तत्वेनोपन्यासात्संकल्प्य यदि सत्रं नानुतिष्ठेत्तदा प्रायश्चित्तार्थं विश्वजिद्यागं कुर्यादिति राद्धान्तः ।

षष्ठाध्यायस्य सप्तमपादे चिन्तितम्—

सर्वस्वदाने पित्रादावपि तद्धन एव वा ।
स्वत्वादाद्यः पितृत्वादावत्यागाद्धन एव तत् ॥ [ इति ] ।

इदमामनन्ति—" विश्वजिति सर्वस्वं ददाति " इति । तत्र धन इव पित्रादिष्वप्यात्मीयत्वस्य समानत्वादस्ति पित्रादीनामपि तद्दानमिति प्राप्ते ब्रूमः । आत्मसंबन्धत्यागपूर्वकं परसंबन्धापादनं दानमित्युच्यते । न हि दीयमाने पितरि स्वकीयपितृत्वत्यागः परकीयपितृत्वापादनं वा संभवति । किंच स्वशब्दस्याऽऽत्मा ज्ञातिरात्मीयं धनं चेति चत्वारोऽर्थाः । तेष्वेकस्मिन्प्रयोग एक एवार्थो वाच्यः । प्रकृतौ गवादिधनस्यैव दक्षिणात्वादिहापि धनवाचित्वं युक्तम् । तस्माद्धनस्यैव दानम् ।

तत्रैवान्यच्चिन्तितम्—

देया न वा महाभूमिः स्वत्वाद्राजा ददातु ताम् ।
पालनस्यैव राज्यत्वान्न स्वं भूर्दीयते न सा ॥ [ इति ] ।

यदा सार्वभौमो राजा विश्वजिति सर्वं ददाति तदा गोपथराजमार्गजलाशयाद्यन्विता महाभूमिस्तेन दातव्या । कुतः । भूमेस्तदीयधनत्वात् । " राजा सर्वस्येष्टे ब्राह्मणवर्जम् " इति स्मृतेरिति प्राप्ते ब्रूमः । दुष्टशिक्षाशिष्टपरिपालनाभ्यां राज्ञ ईशितृत्वं स्मृत्यभिप्रेतमिति न राज्ञो भूमिर्धनम् । किं तु तस्यां भूमौ स्वकर्मफलं भुञ्जानानां सर्वेषां प्राणिनां साधारणं धनम् । अतोऽसाधारणस्य भूखण्डस्य सत्यपि दाने महाभूमेर्दानं नास्ति ।

तत्रैवान्यच्चिन्तितम्—

दानं केसरिणां नो वा विहितप्रतिषेधतः ।
विकल्पः पर्युदासोऽयं ये यजामहनीतितः ॥ [ इति ] ।

" न केसरिणो ददाति " इति विश्वजिति श्रूयते । तत्र सर्वस्वदानविधानात्केसरिदाननिषेधाच्चाश्वदानं विकल्पितमिति प्राप्ते ब्रूमः । नायं प्रतिषेधः । किं तु पर्युदासः । तत्प्रकारश्च दशमाध्यायस्य प्रथमपादे ये यजामहमन्त्रोदाहरणेन व्युत्पादयिष्यते । तत्रत्येन न्यायेनाश्वपर्युदासे सत्यश्वव्यतिरिक्तं सर्वस्वं देयमिति विधिनिषेधयोरेकवाक्यताया अभावान्नाश्वस्य पाक्षिकमपि दानम् ।

तत्रैवान्यच्चिन्तितम्—

अर्जयित्वाऽपि किं सर्वं देयं द्रव्यं यदस्ति तत् ।
सर्वोद्देशविधेराद्यो न प्राप्ते सर्वता विधेः ॥ [ इति ] ।

पूर्वोक्ते सर्वस्वदाने सर्वमुद्दिश्य दानं विधीयते । पुरुषेण भोग्यं शय्यासनादिकं यत्सर्वं तद्दातव्यमिति । तस्मादविद्यमानं सर्वमर्जयित्वाऽपि देयमिति चेत् । मैवम् । चोदकप्राप्तं दानमुद्दिश्य सर्वत्वविधानात् । सर्वशब्दश्च प्रसिद्धवाचित्वाद्विद्यमानविषयः । तस्माद्यदस्ति तदेव देयम् ।

तत्रैवान्यच्चिन्तितम्—

धर्मार्थं सेवकः शूद्रो देयो नो वा स दासवत् ।
देयोऽस्वत्वात्पराधीनत्वाभावान्न च दीयते ॥ [ इति ] ।

यस्तु शूद्रो विहितं स्वधर्ममवगन्तुं सेवते सोऽपि स्वमध्यपातित्वाद्गर्भदासवद्देय इति चेत् । मैवम् । जीविताद्यदानेन तस्मिन्सेवके स्वत्वाभावात्स्वेच्छाचारित्वेन परस्वत्वापादनासंभवाच्च न देयः । तत्रैवान्यच्चिन्तितम्—

भूतं भावि च देयं स्यात्कालेऽवस्थितमेव वा ।
आद्यः सर्वश्रुतेरन्त्योऽसंभवादन्ययोस्तथा ॥ [ इति ] ।

विश्वजिन्मया कर्तव्य इत्यध्यवसायादूर्ध्वं दक्षिणाकालात्पूर्वं यत्स्वेन भोग्यं संचितं तद्भूतम् । यच्च दक्षिणाकालादूर्ध्वं भविष्यत्येवेति निश्चितं तद्भावि । तदुभयमपि सर्वशब्दार्थत्वाद्दातव्यमिति चेत् । मैवम् । भूतस्य विनाशसंभवात् । भाविनस्तदानीमप्राप्तत्वादविद्यमानस्य दानायोगाच्च दक्षिणाकालेऽवस्थितमेव सर्वं देयम् । तत्रैवान्यच्चिन्तितम्—

दक्षिणाक्रतुभुक्त्यर्थं त्रयं देयमुतेष्टये ।
शिष्टाऽथवा दाक्षिणार्थमेवाऽऽद्यः सर्वशब्दतः ॥

क्रतुशेषस्तदा बाध्यः प्रधानत्वादबाधनात् ।
मध्योऽन्त्यो दक्षिणार्थस्यानुवादात्सर्वतोविधेः ॥ [ इति ] ।

प्रकृतौ कर्मारम्भ एव यजमानेनाऽऽत्मीयं धनं वचनबलात्त्रिधा व्यवस्थापितम् । इदं मे शुक्त्यर्थमिदं मे यज्ञार्थमिदं मे दक्षिणार्थमिति । तदेवत्रयमपि दक्षिणार्हत्वाद्दातव्यमित्येकः पक्षः । दक्षिणा हि माध्यंदिने सवने दीयते । तत ऊर्ध्वं तृतीयसवनमारभ्योदवसानीयान्तः क्रतुभागोऽवशिष्टः । स च द्रव्यालाभाद्बाध्येत । न चाङ्गभूतया दक्षिणया प्रधानस्य क्रतोर्बाधो युक्तः । ततस्तदबाधनाय क्रत्वर्थं भागमवस्थाप्यावशिष्टं सर्वं देयमिति द्वितीयः पक्षः । यद्दक्षिणात्वेन विधीयते तत्सर्वमित्यनूद्य विधानाद्दक्षिणार्थभाग एव दातव्य इति राद्धान्तः ।

अष्टमाध्याये प्रथमपादे चिन्तितम्—

इष्टेः सोमस्य वा धर्मा विश्वजित्प्रमुखेष्विह ।
अविशेषादैच्छिकाः स्युः सोमस्याव्यक्तिसाम्यतः ॥ [इति] ।

"विश्वजिता यजेत" "अभिजिता यजेत" "द्वादशाहेन यजेत" इत्यादिषु नियामकाभावादिष्टिसोमयोरन्यतरस्य धर्मा इच्छया ग्रहीतव्याः । मैवम् । अव्यक्तलिङ्गेन सोमसाम्यादुत्पत्तिवाक्ये देवतानभिधानमव्यक्तिस्तस्मात्सोमस्य धर्मं नातिदिशेत् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथ चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ।

---

सप्तमे विरोहणादिप्रायश्चित्तमुक्तम् । अथाष्टमे शुद्धिहेतवो मन्त्रा उच्यन्ते । ते चानारभ्याधीतं प्रकृतिगामीति न्यायेन प्रकृतौ विनियोक्तव्याः । तत्रापि शुद्धिलिङ्गेन शोधनक्रियासंबन्धिन एते भवन्ति । सा च क्रिया सोमप्रकरणे दीक्षितसंस्कारेष्वाम्नाता— 'दर्भपिञ्जूलैः पवयति' इति । तत्राऽऽध्वर्यवा मन्त्राश्चित्पतिस्त्वा पुनातु, इत्यादिकास्तत्प्रकरण एव समाम्नाताः । अतः परिशेषात्पुनीमह इत्युत्तमपुरुषलिङ्गाच्च पाव्यमानस्य यजमानस्य जप इति

गम्यते । अत एव सूत्रकारेणोक्तम्—"पाव्यमानो जपति तस्य ते पवित्रपते" इति च "पवमानः सुवर्जनः" इत्यस्मिन्ननुवाके प्रथमामृचमाह—

पवमानः सुवर्जनः । पवित्रेण विचर्षणिः ।

यः पोता स पुनातु मा, इति ।

यो देवः पोता सर्वेषां शोधयिता स देवः पवित्रेण शुद्धिसाधनेनास्मदीयजपध्यानादिना मां पुनातु शोधयतु । कीदृशः । पोता पवमानः शोधनकुशलः सुवर्जनः स्वर्ग एवोत्पन्नो विचर्षणिर्विविधशोधनप्रकाराभिज्ञः ।

अथ द्वितीयामाह—

पुनन्तु मा देवजनाः । पुनन्तु मनवो

धिया । पुनन्तु विश्व आयवः, इति ।

ये कल्पादौ स्वर्गलोकेषु समुत्पन्नत्वेन देवरूपा जना ये च स्वायंभुवमनुप्रभृतय ऋषयो येऽपि स्वकर्मवशान्मनुष्यलोकमायान्तीत्यादयो मनुष्याः सदाचारसंपन्नाः शुश्रुवांसस्ते विश्वे सर्वेऽपि धियाऽनुग्रहबुद्ध्या मां पुनन्तु ।

अथ तृतीयामाह—

जातवेदः पवित्रवत् । पवित्रेण पुनाहि मा । शुक्रेण

देव दीद्यत् । अग्ने क्रत्वा क्रतूꣳ रनु (१), इति ।

हे जातवेद, उत्पन्नसर्वजगदभिज्ञाग्ने देव शुक्रेण दीद्यद्भास्वद्दीप्त्या भासमानस्त्वं क्रतूꣳ रन्वस्मदनुष्ठेयान्कर्मविशेषाननुसृत्य पवित्रेण क्रत्वा शोधकेन त्वत्संकल्पेन पवित्रवदस्मदनुष्ठितं कर्म शुद्धियुक्तं यथा भवति तथा मां पुनीहि शोधय ।

अथ चतुर्थीमाह—

यत्ते पवित्रमर्चिषि । अग्ने विततम-

न्तरा । ब्रह्म तेन पुनीमहे, इति ।

हेऽग्ने ते तवार्चिषि ज्वालायामन्तरा मध्ये विततं विस्तृतं यत्पवित्रं शुद्धिसाधनं ब्रह्म प्रवृद्धमस्ति तेन वयं पुनीमहे ।

अथ पञ्चमीमाह—

उभाभ्यां देव सवितः । पवित्रेण सवेन
च । इदं ब्रह्म पुनीमहे, इति ।

हे सवितर्देव त्वदीयं यत्पवित्रं शुद्धिसाधनं यश्च सवः कर्मस्वस्मद्विषयं प्रेरणं ताभ्यामुभाभ्यामिदं ब्रह्म परिवृढं कर्म पुनीमहे शोधयामः ।

अथ षष्ठीमाह—

वैश्वदेवी पुनती देव्यागात् । यस्यै बह्वीस्त-
नुवो वीतपृष्ठाः । तया मदन्तः सधमाद्येषु ।
वयꣳ स्याम पतयो रयीणाम् ( २ ), इति ।

सर्वदेवसंबन्धिनी या देवी शोधनकुशला साऽस्मान्पुनती शोधयन्ती, आगादागच्छतु । यस्यै यस्या देव्यास्तनुवः शुद्धिहेतवो देहविशेषा वीतपृष्ठाः कान्तस्तुतयस्तया देव्याऽनुगृहीताः सधमाद्येषु ऋत्विग्भिः सह हर्षयोग्येषु कर्मसु मदन्तो हृष्यन्तो वयं रयीणां धनानां पतयः स्याम ।

अथ सप्तमीमाह—

वैश्वानरो रश्मिभिर्मा पुनातु । वातः प्राणेने-
षिरो मयोभूः । द्यावापृथिवी पयसा पयोभिः ।
ऋतावरी यज्ञिये मा पुनीताम्, इति ।

विश्वेषां नराणां हितोऽग्निरादित्यो वा देवः स्वकीयरश्मिभिर्मा पुनातु । वातो वायुदेवः प्राणेनेषिरः प्राणरूपेण देहेषु गच्छन्मयोभूः सुखस्य भावयिता भवतु । द्यावापृथिव्यौ च ऋतावरी सत्यवत्यौ यज्ञिये यज्ञाय हिते सत्यौ पयसा जलेन पयोभिः क्षीरादिरसैश्च मां पुनीताम् ।

अथाष्टमीमाह—

बृहद्भिः सवितस्तृभिः । वर्षिष्ठैर्देवमन्मभिः ।
अग्ने दक्षैः पुनाहि मा, इति ।

हे सवितः कर्मसु प्रेरकाग्ने देव मन्यत्रिर्मनवैरस्मदनुग्रहविषयैर्मां पुनीहि । कीदृशैर्बृहद्भिर्महद्भिरादरयुक्तैस्तृभिः पापतरणसाधनैर्वर्षिष्ठैश्चिरकालानुवृत्त्या वृद्धतमैर्दक्षैः शोधनकुशलैः ।

अथ नवमीमाह--

येन॑ दे॒वा अपु॑नत । येनाऽऽपो॑ दि॒व्यंकशः॑ । तेन॑ दि॒व्येन॒ ब्रह्म॑णा । ( ३ ) । इ॒दं ब्रह्म॑ पुनीमहे, इति ।

येन शुद्धिसाधनेन देवाः पूर्वान्यजमानानपुनत । कश गताविति धातोरुत्पन्नः सकारान्तः कशःशब्दो गतिवाची । येन शुद्धिसाधनेनाऽऽपो देवता दिव्यंकशोऽपुनत दिव्यलोकविषयां गतिं शोधितवन्तः(त्यः) । दिव्येन द्युलोकयोग्येन ब्रह्मणा परिवृढेन तेन शुद्धिसाधनेनेदं ब्रह्मानुष्ठीयमानं परिवृढं कर्म पुनीमहे ।

अथ दशमीमाह---

यः पा॑वमा॒नी॒र॒ध्येति॑ । ऋषि॑भि॒ः संभृ॑त॒ꣳ रस॑म् । सर्व॒ꣳ स पू॒तम॑श्नाति । स्व॒दि॒तं मा॑त॒रिश्व॑ना, इति ।

यः पुमान्पावमानीः शोधकदेवतासंबन्धिनीरेता ऋचोऽध्येति पठत्यर्थतः स्मरति वा स पुरुषः सर्वं रसं सारभूतं फलमश्नाति भुङ्क्ते । कीदृशं रसम् । ऋषिभिः संभृतं मन्त्रैस्तदभिज्ञैर्मुनिभिश्च संपादितम् । अत एव पूतं शुद्धं मातरिश्वना वायुना स्वदितं स्वादूकृतम् ।

अथैकादशीमाह---

पा॒व॒मा॒नीर्यो॑ अ॒ध्येति॑ । ऋषि॑भि॒ः संभृ॑त॒ꣳ रस॑म् । तस्मै॒ सर॑स्वती दुहे । क्षी॒रꣳ स॒र्पिर्मधू॑द॒कम्, इति ।

यः पावमानीरध्येति तस्मै पुरुषाय सरस्वती रसं दुहे । कीदृशम् । क्षीरादिरूपम् ।

अथ द्वादशीमाह---

पा॒व॒मा॒नीः स्व॒स्त्यय॑नीः (४) । सु॒दुघा॒ हि पय॑स्वतीः ।

ऋषिभिः संभृतो रसः । ब्राह्मणेष्वमृतꣳ हितम्, इति ।

याः पावमान्य ऋचस्ताः स्वस्त्ययनीः क्षेमप्रापिकाः सुदुघाः सुष्ठु फलं दुहानाः पयस्वतीः क्षीरादिरसहेतवश्च भवन्त्विति शेषः । ऋषिभिर्मन्त्रदर्शिभिर्मुनिभी रसः फलसारः संभृतोऽस्मासु संपादितोऽस्तु । ब्रह्म मन्त्रस्तत्पाठका ब्राह्मणास्तेष्वस्मास्वमृतमविनाशि फलं हितं संपादितमस्तु ।

अथ त्रयोदशीमाह—

पावमानीर्दिशन्तु नः । इमं लोकमथो अमुम् । कामा-

न्समर्धयन्तु नः । देवीर्देवैः समाभृताः, इति ।

देवैरिन्द्रादिभिः समाभृताः संपादिताः पावमानीर्देवीः पवमानमन्त्राभिमानिन्यो देव्यो नोऽस्माकं लोकद्वयं दिशन्तु प्रयच्छन्तु । तत्रत्यान्कामान्नोऽस्मदर्थं समृद्धान्कुर्वन्तु ।

अथ चतुर्दशीमाह—

पावमानीः स्वस्त्ययनीः । सुदुघा हि घृतश्चुतः । ऋषिभिः

संभृतो रसः (५) । ब्राह्मणेष्वमृतꣳ हितम्, इति ।

घृतं श्चोतन्ति क्षारयन्तीति घृतश्चुतः । अन्यत्पूर्ववत् ।

अथ पञ्चदशीमाह—

येन देवाः पवित्रेण । आत्मानं पुनते सदा ।

तेन सहस्रधारेण । पावमान्यः पुनन्तु मा, इति ।

देवा इन्द्राद्या येन पवित्रेण शुद्धिसाधनेन सदा स्वदेहं शोधयन्ति सहस्रावान्तरभेदयुक्तेन तेन साधनेन पावमान्य ऋचो मां पुनन्तु ।

अथ षोडशीमाह—

प्राजापत्यं पवित्रम् । शतोद्यामꣳ हिरण्मयम् ।

तेन ब्रह्मविदो वयम् । पूतं ब्रह्म पुनीमहे, इति ।

यत्पवित्रं शुद्धिसाधनं प्राजापत्यं प्रजापतिसंबन्धि शतोद्यामं दर्भैर्निर्मितत्वा-

च्छतसंख्याकैरुग्रामैर्नाडीभिर्युक्तं हिरण्मयं पापहरणसाधनेन द्रव्येण निर्मितं तेन तादृशेन पवित्रेण ब्रह्मविदो वेदार्थविदो वयं पूतं ब्रह्म पूर्वमपि शुद्धं परिवृढं कर्म पुनीमहे भूयोऽपि शोधयामः ।

अथ सप्तदशीमाह—

इन्द्रः सुनीती सह मा पुनातु । सोमः स्वस्त्या वरुणः समीच्या । यमो राजा प्रमृणाभिः पुनातु मा । जातवेदा मोर्जयन्त्या पुनातु ( ६ ), इति ।

अनु रयीणां ब्रह्मणा स्वस्त्ययनीः सुदुघा हि घृतश्चुत ऋषिभिः संभृतो रसः पुनातु त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके चतुर्थाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

इन्द्रः सुनीत्या शोभनफलप्रापिकया देव्या सह मां पुनातु । सोमः स्वस्त्या क्षेमप्रापिकया देव्या सह मां पुनातु । वरुणः समीच्याऽनुकूलया देव्या सह मां पुनातु । यमो राजा प्रमृणाभिः प्रकर्षेण मारिकाभिर्देवीभिः सह मां पुनातु । जातवेदा ऊर्जयन्त्या क्षीरादिरसप्रापिकया देव्या सह मां पुनातु ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ चतुर्थप्रपाठके नवमोऽनुवाकः ।

---

अष्टमे शुद्ध्यर्था मन्त्रा उक्ताः । तावता सोमशेषमशेषमवस्थाप्य नवमे राजसूयगतचातुर्मास्यशेष उच्यते । तानि चातुर्मास्यानि त्रिधातुमादावाख्यायिकामाह—

प्रजा वै सत्रमासत तपस्तप्यमाना अजुह्वतीः । देवा अपश्यं चमसं घृतस्य पूर्णꣳ स्वधाम् । तमुपोदतिष्ठन्तमजुहवुः । तेनार्धमास ऊर्जम-

वारुन्धत । तस्मादर्धमासे देवा इज्यन्ते, इति ।

पुरा कदाचिद्देवपितृमनुष्यपश्वसुराख्याः प्रजाः सत्रमन्वतिष्ठन् । सत्रसदृशं सुकृतं संपादितवन्त(न्त्य) इत्यर्थः । किं कुर्वन्त्यः । उपवासादिरूपं तपोऽनुतिष्ठन्त्योऽजुह्वतीर्न कंचिदपि होमं कुर्वत्यस्तासां प्रजानां मध्ये देवाः कंचित्कालं तपस्तप्त्वा घृतपूरितं स्वोचितान्नधारकं कंचिच्चमसं दृष्ट्वा तं प्राप्य समीप उत्थाय हुत्वा तद्धोमेनैकैकस्मिन्नर्धमासे स्वभोज्यं रसविशेषं प्राप्तवन्तः । तस्मात्कारणादर्धमासे पौर्णमास्याममावास्यायां च देवा दर्शपूर्णमासाभ्यामिज्यन्ते ।

अथ तदेव पित्रादीनां तपःफलं दर्शयति—

पितरोऽपश्यं चमसं घृतस्यं पूर्णꣳ स्वधाम् । तमुपोदतिष्ठन्तमजुहवुः । तेन मास्यूर्जमवारुन्धत । तस्मान्मासि पितृभ्यः क्रियते । मनुष्या अपश्यं चमसं घृतस्यं पूर्णꣳ स्वधाम् (१) । तमुपोदतिष्ठन्तमजुहवुः । तेन द्वयीमूर्जमवारुन्धत । तस्माद्द्विरह्नो मनुष्येभ्य उपह्रियते । प्रातश्च सायं च । पशवोऽपश्यं चमसं घृतस्यं पूर्णꣳ स्वधाम् । तमुपोदतिष्ठन्तमजुहवुः । तेन त्रयीमूर्जमवारुन्धत । तस्मात्त्रिरह्नः पशवः प्रेरते । प्रातः संगवे सायम् । असुरा अपश्यं चमसं घृतस्यं पूर्णꣳ स्वधाम् । (२) । तमुपोदतिष्ठन्तमजुहवुः । तेन संवत्सर ऊर्जमवारुन्धत, इति ।

पितृभिरेकस्मिन्मासे स्वभोज्यान्नस्य प्राप्तत्वात्प्रतिमासममावास्यायां पिण्डपितृयज्ञः क्रियते । मनुष्यैरेकस्मिन्नेवाह्नि कालद्वयवर्तिनो भोज्यस्य प्राप्तत्वात्प्रातःकाले सायंकाले च भुज्यते । पशुभिमानिभिर्देवैरेकस्मिन्नेवाह्नि कालत्रय

भोज्यस्यान्नस्य प्राप्तत्वात्त्रिषु कालेषु पशवस्तृणभक्षणार्थं संचरन्ति । तत्तन्मध्यकाले तु रोमन्थं कुर्वन्तो वर्तन्ते । असुरास्त्वेकस्मिन्संवत्सरे स्वभोज्यमन्नं प्राप्तवन्तः ।

अथ देवैरनुष्ठितं व्यापारं दर्शयति—

ते देवा अमन्यन्त । अमी वा इदमभूवन् । यद्वयꣳ स्म इति । त एतानि चातुर्मास्यान्यपश्यन् । तानि निरवपन् । तैरेवैषां तामूर्जमवृञ्जत । ततो देवा अभवन् । पराऽसुराः (३), इति ।

ते देवा मिलित्वैवं विचारितवन्तो यदैश्वर्यं वयमिदानीं प्राप्य वर्तामहे तदिदं सर्वममी असुरा एव प्राप्तवन्तः । तस्मात्संवत्सरे सकृद्भुक्त्वा तृप्ताः सन्तः पुनः संवत्सरसमाप्तिपर्यन्तं स्वभोजनव्यापाराभावान्निरन्तरं युध्यन्तोऽस्मान्क्लेशयिष्यन्ति । एवं विचार्य ते देवा असुरविनाशहेतुत्वेनैतानि वक्ष्यमाणानि वैश्वदेवादीनि चातुर्मास्यानि दृष्टवन्तः । यस्मात्संवत्सरे तैर्निरुप्तैरसुराणां संवत्सरपर्याप्तं भोज्यं विनाशितवन्तस्तस्मो देवा विजयं प्राप्ता असुराश्च पराभूताः ।

इत्थमाख्यायिकया चातुर्मास्यानामत्यन्तप्रशस्तत्वं दर्शयितुं दर्शपूर्णमासादिप्रशंसापूर्वकं तत्तत्प्रशंसामुपन्यस्य दर्शादिविध्यनुवादपुरःसरं तद्विधत्ते—

यद्यजते । यामेव देवा ऊर्जमवारुन्धत । तां तेनावरुन्धे । यत्पितृभ्यः करोति । यामेव पितर ऊर्जमवारुन्धत । तां तेनावरुन्धे । यदाव-सथेऽन्नꣳ हरन्ति । यामेव मनुष्या ऊर्जमवारु-न्धत । तां तेनावरुन्धे । यद्दक्षिणां ददाति (४) । यामेव पशव ऊर्जमवारुन्धत । तां तेनावरुन्धे । यच्चातुर्मास्यैर्यजते । यामेवासुरा

ऊर्जमवारुन्धत । तां तेनावरुन्धे । भवत्यात्मना ।
पराऽस्य भ्रातृव्यो भवति, इति ।

यजते दर्शपूर्णमासावनुतिष्ठति । पितृभ्यः करोति । पिण्डपितृयज्ञमनुतिष्ठति । आवसथेऽन्नं हरन्ति । वैश्वदेवान्तेऽतिथीनन्नेन पूजयन्ति । अन्वाहार्यगवादिरूपां दक्षिणां ददाति । तथा च यथा तेन तेन तत्तत्फलप्राप्तये दर्शपूर्णमासादयः कर्तव्या एवमत्रापि फलप्राप्तये चातुर्मास्यानि यजेत । तत आत्मना भवति । स्वयमेव जययुक्तो भवति । भ्रातृव्यस्तु पराभव ति ।

अत्र चातुर्मास्यविधौ तात्पर्यं दर्शयितुं पुनः प्रशंसति—

विराजो वा एषा विक्रान्तिः । यच्चातुर्मास्यानि । वैश्वदेवेनास्मिँल्लोके प्रत्यतिष्ठत् । वरुणप्रघासैरन्तरिक्षे । साकमेधैरमुष्मिँल्लोके । एष ह्त्वा वै तत्सर्वं भवति । य एवं विद्वाꣳश्चातुर्मास्यैर्यजते (५), इति ।

मनुष्या अपश्यं चमसं घृतस्य पूर्णꣳ स्वधामसुरा अपश्यं चमसं घृतस्य पूर्णꣳ स्वधामसुरा ददात्यातिष्ठच्चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके चतुर्थाध्याये नवमोऽनुवाकः ॥ ९ ॥

---

विशेषेण राजत इति विराट् प्रजापतिस्तस्य विशेषेण लोकत्रयाक्रमणसाधनानि चातुर्मास्यानि वैश्वदेवादीनि चतुर्षु मासेष्वनुष्ठेयत्वाच्चातुर्मास्यानि । फाल्गुन्यां पौर्णमास्यां वैश्वदेवाख्यं पर्वानुष्ठाय मासचतुष्टयमतीत्याऽऽषाढ्यां पौर्णमास्यां वरुणप्रघासाख्यं पर्वानुष्ठाय पुनर्मासचतुष्टयमतीत्य कार्तिक्यां पौर्णमास्यां तदीयचतुर्दश्यां च साकमेधाख्यं पर्वानुष्ठेयम् । एतैर्यथा प्रजापतेर्लोकत्रये प्रतिष्ठैवमन्योऽप्येतत्सर्वं प्राप्नोति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

अथ चतुर्थप्रपाठके दशमोऽनुवाकः ।

नवमे चातुर्मास्यानि विहितानि । अथ दशमे तत्र विशेषं विधातुं प्रस्तौति—

अग्निर्वाव संवत्सरः । आदित्यः परिवत्सरः ।

चन्द्रमा इदावत्सरः । वायुरनुवत्सरः, इति ।

प्रभवविभवादीनां षष्टिसंवत्सराणां मध्ये एकैकसंवत्सरपञ्चकमेकैकं युगम् । तस्मिन्युगे वर्तमानानां पञ्चानां संवत्सराणां क्रमेण संवत्सरः परिवत्सर इदावत्सरोऽनुवत्सर इद्वत्सर इत्येतानि नामधेयानि । तथा चोक्तम्—

चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे ।
संपरीदान्विदित्येतच्छब्दपूर्वास्तु वत्सराः ॥ इति ।

तत्र संवत्सरादीनां चतुर्णामभिमानित्वादग्न्यादयस्तद्रूपाः ।

एवं प्रस्तुत्य वैश्वदेवाख्ये कर्मणि संवत्सरस्वरूपाग्निप्राप्तिप्रतिपादनपुरःसरं कंचिन्मन्त्रविशेषं विधत्ते—

यद्वैश्वदेवेन यजते । अग्निमेव तत्संवत्सरमाप्नोति ।

तस्माद्वैश्वदेवेन यजमानः । संवत्सरीणाꣳ स्वस्ति-

माशास्त इत्याशासीत, इति ।

वैश्वदेवाख्यस्य प्रथमपर्वणः संवत्सररूपाग्निप्राप्तिहेतुत्वात्तद्यागकाले तदीयसूक्तवाकमध्ये संवत्सरीणामिति वाक्यं पठेत् । सूक्तवाके हि भूयो हविष्करणमाशास्ते, दिव्यं धामाऽऽशास्त इति वाक्यद्वयं पठितम् । तयोर्वाक्ययोर्मध्ये संवत्सरीणामिति वाक्यं पठेत् । अत एव सूत्रकार उदाहृत्य पठति— " संवत्सरीणाꣳ स्वस्तिमाशास्ते दिव्यं धामाऽऽशास्त इति सूक्तवाकस्याऽऽशीःषु होताऽनुवर्तयते " इति ।

अथ द्वितीयतृतीयपर्वणोः परिवत्सरेदावत्सररूपादित्यचन्द्रमसोः प्राप्तिप्रतिपादनपुरःसरं क्रमेण मन्त्रविशेषं विधत्ते—

यद्वरुणप्रघासैर्यजते । आदित्यमेव तत्परिवत्सर-

माप्नोति ( १ ) । तस्माद्वरुणप्रघासैर्यजमानः ।

परिवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत । यत्साकमेधैर्यजते । चन्द्रमसमेव तदिदावत्सरमाप्नोति । तस्मात्साकमेधैर्यजमानः । इदावत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत, इति ।

इत्थं चातुर्मास्यावयवरूपाणि वैश्वदेवादीनि त्रीणि पर्वाणि तदीयमन्त्रविशेषांश्च विधाय तदवयवरूपं महापितृयज्ञं विधत्ते—

यत्पितृयज्ञेन यजते । देवानेव तदन्ववस्यति, इति ।

तत्तेन पितृयज्ञेन पितृमद्विशेषण...कसोमादीन्देवानन्ववस्यत्यनुक्रमेण प्रीणयति। अथ चतुर्थपर्वण्यनुवत्सररूपवायुप्राप्तिप्रतिपादनपरःसरं मन्त्रविशेषं विधत्ते—

अथ वा अस्य वायुश्चानुवत्सरश्चाप्रीतावुच्छिष्येते । यच्छुनासीरीयेण यजते ( २ ) । वायुमेव तदनुवत्सरमाप्नोति । तस्माच्छुनासीरीयेण यजमानः । अनुवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत, इति ।

वैश्वदेवादिभिस्त्रिभिः पर्वभिः संवत्सरादयस्तथा कालास्तदभिमानिदेवा अग्न्यादयः प्रीता अनुवत्सरः कालस्तदभिमानी वायुश्चेत्येतावुभौ पूर्वमप्रीताववशिष्टौ । शुनासीरीयाख्येन(ण) चतुर्थेन पर्वणा तदुभयप्रीतिर्भवति । तस्माच्छुनासीरीयेण यजमानोऽनुवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीतेति पूर्ववद्व्याख्येयम् ।

पर्वचतुष्टयसंघात्मकं चातुर्मास्ययागं प्रशंसति—

संवत्सरं वा एष ईप्सतीत्याहुः । यश्चातुर्मास्यैर्यजत इति । एष ह त्वै संवत्सरमा-

मोति । य एवं विद्वाञ्श्चातुर्मास्यैर्यजते, इति ।

यः पुमानेवंचतुष्टयोपेतैश्चातुर्मास्यैर्यजते स एव संवत्सराभिमानिनं प्रजापतिं प्राप्तुमिच्छतीत्येवमभिज्ञा आहुः । तस्माच्चयाजी संवत्सराभिमानित्वं प्राप्नोति ।

अथ वैश्वदेवाख्यं कर्म प्रशंसति—

विश्वे देवाः समजयन्त । तेऽग्निमेवायजन्त ।
त एतं लोकमजयन् (३) । यस्मिन्नग्निः ।
यद्वैश्वदेवेन यजते । एतमेव लोकं जयति ।
यस्मिन्नग्निः । अग्नेरेव सायुज्यमुपैति, इति ।

विश्वे देवा इति देवगणविशेषाः । तद्गणस्था देवा यदा सम्यग्यष्टुमुपक्रान्तवन्तस्तदानीमग्निमेवेष्ट्वा यस्मिँल्लोकेऽग्निर्वर्तते एतमेव लोकं ते प्राप्नुवन् । अतोऽन्योऽपि विश्वदेवेनेष्ट्वा यस्मिन्नग्निर्वर्तते तं लोकं प्राप्य तस्याग्नेः सायुज्यं सहावस्थानमेव प्राप्नोति ।

पुनरपि वैश्वदेवं प्रकारान्तरेण प्रशंसति—

यदा वैश्वदेवेन यजते । अथ संवत्सरस्य गृहपतिमाप्नोति । यदा संवत्सरस्य गृहपतिमाप्नोति । अथ सहस्रयाजिनमाप्नोति । यदा सहस्रयाजिनमाप्नोति ( ४ ) । अथ गृहमेधिनमाप्नोति । यदा गृहमेधिनमाप्नोति । अथाग्निर्भवति । यदाऽग्निर्भवति । अथ गौर्भवति । एषा वै वैश्वदेवस्य मात्रा । एतद्वा एतेषामवमम् । अतोऽतो वा उत्तराणि श्रेयाꣳसि भवन्ति । यद्विश्वे देवाः समयजन्त । तद्वै-

श्वदेवस्य वैश्वदेवत्वम् (५), इति ।

संवत्सराख्यस्य सत्रस्य गवामयनस्य यजमानेषु मुख्यो गृहपतिः सहस्रदक्षिणायुक्तेनाऽऽप्तोर्यामादिना यजमानः सहस्रयाजी स एकः श्रुतिस्मृत्युदितगार्हस्थ्यानुष्ठायी गृहमेधी । एते गृहपत्यादयो मनुष्येषु श्रेष्ठाः । अग्निर्देवतात्मा गौर्गवाश्विनाविति देवविशेषः । यस्मिन्दिने वैश्वदेवेन यजते तस्मिन्नेव दिने गृहपतिः सहस्रयाजी गृहमेधी वह्निगवाख्यदेवानां महिम्ना योग्यो भवति । येयं फलवल्लीरुक्तैषैव वैश्वदेवपर्वणो मात्रा । इयदेव फलमित्यर्थः । एतच्च वैश्वदेवफलमेतेषामितरपर्वफलानां मध्येऽवममत्यल्पम् । अतोऽत एकैकस्मात्पर्वफलादुत्तरोत्तरपर्वफलान्यत्यन्तं प्रशस्तानि । यस्माद्विश्वे देवा एतत्पर्व सम्यगनुष्ठितवन्तस्तस्मादस्य वैश्वदेवत्वं संपन्नम् ।

द्वितीयं पर्व प्रशंसति—

अथाऽऽदित्यो वरुणꣳ राजानं वरुणप्रघासैरय-
जत । स एतं लोकमजयत् । यस्मिन्नादित्यः ।
यद्वरुणप्रघासैर्यजते । एतमेव लोकं जयति ।
यस्मिन्नादित्यः । आदित्यस्यैव सायुज्यमुपैति ।
यदादित्यो वरुणꣳ राजानं वरुणप्रघासैरय-
जत । तद्वरुणप्रघासानां वरुणप्रघासत्वम्, इति ।

प्रकृष्टो घासो भक्ष्यविशेषो मेषसंबन्धी येषु हविर्विशेषेषु ते प्रघासाः । ते च वरुणसंबन्धिनः । वरुणपाशविमोकार्थमनुष्ठीयमानत्वात् । तथा च राजसूयप्रकरणे समाम्नायते—"तैर्वै स प्रजा वरुणपाशादमुञ्चत्" इति । तैरेतैर्वरुणप्रघासैरादित्यो वरुणं राजानमिष्ट्वा यस्मिन्निदानीमादित्यो दृश्यते तमेतं लोकमजयत् । अतोऽन्योऽपि तं लोकं जित्वाऽऽदित्यस्य सायुज्यमाप्नोति । वरुणमुद्दिश्येज्यमानत्वादेते वरुणप्रघासनामका हविर्विशेषाः संपन्नाः ।

तृतीयं पर्व प्रशंसति—

अथ सोमो राजा छन्दाꣳसि साकमेधैरयजत
(६) । स एतं लोकमजयत् । यस्मिꣳश्चन्द्रमा

विभाति । यत्साकमेधैर्यजते । एतमेव लोकं जयति ।
यस्मिꣳश्चन्द्रमा विभाति । चन्द्रमस एव सायुज्य-
मुपैति । सोमो वै चन्द्रमाः । एष ह त्वै साक्षात्सोमं
भक्षयति । य एवं विद्वान्त्साकमेधैर्यजते । यत्सोमश्च
राजा छन्दाꣳसि च समैधन्त (७) । तत्साकमेधा-
नाꣳ साकमेधत्वम्, इति ।

सोमो राजा साकमेधाख्यैर्हविर्भिश्छन्दोदेवान्पूजयित्वा यस्मिन्नयं चन्द्रमा विशेषेण भासते तमेतं लोकमजयत् । एवमन्योऽपि तं लोकं जित्वा चन्द्रमसः सायुज्यं प्राप्नोति । एष यज्ञेऽभ्यभिषूयमाणः सोम एव चन्द्रमाः । चन्द्रमस एतदभिमानित्वादतश्चन्द्रप्रसादेन कालव्यवधानमन्तरेण साकमेधयाजी यागं कृत्वा सोमं भक्षयति । यस्मादस्मिन्यज्ञे पूज्यपूजकभावेन च्छन्दोदेवताः सोमश्च समैधन्त संभूय वृद्धिं प्राप्तास्तस्मात्साकमेधन्ते वर्धन्त एभिर्हविर्विशे-षैरिति तेषां साकमेधनाम संपन्नम् ।

पितृयज्ञं प्रशंसति—

अथर्तवः पितरः प्रजापतिं पितरं पितृयज्ञेनायजन्त ।
त एतं लोकमजयन् । यस्मिन्नृतवः । यत्पितृयज्ञेन
यजते । एतमेव लोकं जयति । यस्मिन्नृतवः ।
ऋतूनामेव सायुज्यमुपैति । यदृतवः । पितरः प्रजा-
पतिं पितरं पितृयज्ञेनायजन्त । तत्पितृयज्ञस्य पितृ-
यज्ञत्वम् (८), इति ।

वसन्ताद्यृतुदेवताः प्राणिनां पितरः । प्राण्युत्पत्तेः कालाधीनत्वात् । तेषामृतूनां पिता प्रजापतिः । तथा च ऋतवः प्रजापतिं स्वपितरं पितृयज्ञेन पूजयित्वा यस्मिन्निदानीं वसन्तादयो देवा वर्तन्ते तं लोकमजयन् । एवमन्योऽपि तं लोकं जित्वा वसन्तादीनां सायुज्यं प्राप्नोति । ऋत्वात्मकाः पितरो यज-

न्त्यनेनेत्ययं पितृयज्ञः। अथवा प्रजापत्यात्मकः पितेज्यतेऽनेनेति पितृयज्ञः। पितृकर्तृकत्वेन पितृकर्मकत्वेन वा पितृसंबन्धी यज्ञ इत्यर्थः।

त्र्यम्बकहवींषि प्रशंसति—

अथौषधय इमं देवं त्र्यम्बकैरयजन्त प्रथेमहीति। ततो वै ता अप्रथन्त। य एवं विद्वाꣳस्त्र्यम्बकैर्यजते। प्रथते प्रजया पशुभिः, इति।

ओषधीदेवता वयं प्रथेमहि विस्तृता भवेमेत्यभिमेत्य त्र्यम्बकहविर्भिरिमं रुद्रं देवमिष्ट्वा प्रथिता अभवन्। एवमन्योऽपि तमिष्ट्वा प्रजया पशुभिः प्रथितो भवति। त्र्यम्बकस्य रुद्रस्य संबन्धेन हविषां त्र्यम्बकनामेत्युन्नेयम्।

चतुर्थं पर्व प्रशंसति—

अथ वायुः परमेष्ठिनꣳ शुनासीरीयेणायजत। स एतं लोकमजयत्। यस्मिन्वायुः। यच्छुनासीरीयेण यजते। एतमेव लोकं जयति। यस्मिन्वायुः (९)। वायोरेव सायुज्यमुपैति, इति।

वायुश्चतुर्थपर्वणा परमेष्ठिनमाराध्य यस्मिन्निदानीं वायुर्वर्तते तमेतं लोकं जितवान्। एवमन्योऽपि तं लोकं जित्वा वायोः सायुज्यं प्राप्नोति। "इन्द्राय शुनासीराय पुरोडाशं द्वादशकपालम्" इति शुनासीरसंबन्धस्योक्तत्वादस्य पर्वणः शुनासीरीयत्वम्। "आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुम्" इत्यनुवाकनिरूपितो वैश्वदेवः। "ऐन्द्राग्नमेकादशकपालं मारुतीमामिक्षाम्" इत्यनुवाकेन निरूपिता वरुणप्रघासाः। "अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति" इत्यनुवाकेन निरूपिता साकमेधाः। "सोमाय पितृमते पुरोडाशꣳ षट्कपालम्" इत्यनेन निरूपितः पितृयज्ञः। "प्रतिपूरुषमेककपालान्निर्वपति" इत्यनेन निरूपितानि त्र्यम्बकाणि। "ऐन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुम्" इत्यनुवाकैकदेशेन निरूपितः शुनासीरीयः। अनेन शुनासीरीयेण सह चत्वारि पर्वाणि चतुर्षु चतुर्षु निष्पाद्यमानत्वाच्चातुर्मास्यानीत्युच्यन्ते।

एते चातुर्मास्ययाजिनस्तेषां पुनरावृत्तिरहितं फलं विचारेण दर्शयति—

ब्रह्मवादिनो वदन्ति । प्र चातुर्मास्ययाजी मीयता३न प्रमीयता३ इति । जीवन्वा एष ऋतूनप्येति । यदि वसन्ता प्रमीयते । वसन्तो भवति । यदि ग्रीष्मे ग्रीष्मः । यदि वर्षासु वर्षाः । यदि शरदि शरत् । यदि हेमन्हेमन्तः । ऋतुर्भूत्वा संवत्सरमप्येति । संवत्सरः प्रजापतिः । प्रजापतिर्वावैषः ( १० ), इति ।

परिवत्सरमाप्नोति शुनासीरीयेण यजतेऽजयन्सहस्रयाजिनमाप्नोति वैश्वदेवत्वꣳ साकमेधैरयजत ऋ० . ऋतूयज्ञत्वं जयति यस्मिन्वायुर्हेमन्तस्त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके चतुर्थाध्याये दशमोऽनुवाकः ॥ १० ॥

---

उभये युवꣳ सुरामसुदस्थाग्निर्वै यस्य प्रातःसवन एकैकोऽसुर्यं पवमानः प्रजा वै सत्रमासताग्निर्वाव संवत्सरो दर्श । उभये वा उदस्थात्सर्वाभिर्मध्यतोऽत्र वाव ब्राह्मणेष्वथं गृहमेधिनꣳ षट्पष्टिः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके चतुर्थोऽध्यायः ॥ ४ ॥

दर्शपूर्णमासयाजिनस्तत्फलं प्राप्य तस्यानित्यत्वात्ततः प्रमीयन्ते पुनरावर्तन्ते । तथा चातुर्मास्ययाजी फलावस्थातः प्रच्यवते न वेति ब्रह्मवादिनां प्रश्नः । न प्रच्यवत इत्यभिप्रेत्याभिज्ञस्योत्तरम् । अयमनुष्ठाताऽनुष्ठानानन्तरमेवर्तुदेवताः प्राप्नोति । यद्यपि देवताशरीरमन्यैर्न दृश्यते तथाऽप्यन्तर्बीजरूपेणाङ्कुरितं वर्तते । अत एव देवताजन्मव्यतिरेकेण जन्मान्तरं न भवति । सामान्येनोक्तामृतुप्राप्तिमेव वसन्तादिवाक्यानि विस्पष्टी कुर्वन्ति । यस्मिन्नृतावस्य वर्तमानदेहपातस्तद्देवतादेहः पूर्वमङ्कुरितो विस्पष्टी भवति । एवमृतुदेहेन तद्रो-

गान्भुक्त्वा च संवत्सरदेवं प्रविशति । स च संवत्सरः प्रजापतिरूपः । स च प्रजापतिरेष एव शास्त्रैरिदानीमपि सर्वत्र वर्ण्यते । तस्मादयं फलावस्थातो न म्रियते ।

अस्य प्रपाठकस्यानुवाकार्थसंग्रह उच्यते—

दशानुवाका अत्र स्युराद्ये ग्रहविधिः स्मृतः ।
श्रुताः सौत्रामणीमन्त्रा द्वितीयेऽथ तृतीयके ॥
दोहप्रायश्चित्तिरग्निप्रायश्चित्तिश्चतुर्थके ।
सोमाधिक्ये प्रतीकारः पञ्चमे संसवे पुनः ॥
षष्ठे प्रायश्चित्तिरुक्ता यूपारोहादिकारिता ।
प्रायश्चित्तिः सप्तमे स्यात्पावमान्या जपोऽष्टमे ।
चातुर्मास्यान्युत्तरे स्युर्दशमे तत्प्रशंसनम् ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे चतुर्थप्रपाठकः समाप्तः ॥ ४ ॥

( मूलक्रमेण—अष्ट० १ अध्या० ४ अनु० १० ( ३६ ))
( भाष्यक्रमेण—कां० १ प्रपा० ४ अनु० १० ( ३६ ))

अथ प्रथमकाण्डे पञ्चमप्रपाठकारम्भः ।

तत्र प्रथमोऽनुवाकः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
सोमग्रहाद्या विहिताश्चतुर्थे हि प्रपाठके ।
नक्षत्रारूपेष्टका मन्त्रप्रमुखाः पञ्चमे श्रुताः ॥
अनारभ्योक्तितस्तेषां लिङ्गवाक्यानुसारतः ।
योजनीयास्तत्र तत्र न्यायाद्वा संप्रदायतः ॥

तत्र तु प्रथमानुवाके प्रोक्ता नक्षत्रेष्टकामन्त्राः । क्वचिद्विकृतिरूपे चयने

द्रष्टव्याः । यथाऽनारभ्याधीतं सामिधेनीसाप्तदश्यं प्रकृतौ प्रत्यक्षश्रुतेन पाञ्चदश्येनावरुद्धायामवकाशमलभमानं विकृतौ निविशत एवमेतेऽपि मन्त्राः प्रत्यक्षश्रुतैः "कृत्तिका नक्षत्रमग्निर्देवता" इत्यादिमन्त्रैरवरुद्धायां प्रकृतावकाशाभावाद्विकृतौ निविशन्ते । तत्र प्रथमं मन्त्रमाह—

अग्नेः कृत्तिकाः । शुक्रं परस्ताज्ज्योतिरवस्तात्, इति ।

अग्निर्नक्षत्रस्य स्वामी । तस्य स्वभूताः सप्त कृत्तिका अम्बादुलादयः । ताश्च मध्ये वर्तन्ते । शुक्रं तेजो दीप्तिसाधनं काष्ठं वा । तच्च परस्तात्परपार्श्वे वर्तते । ज्योतिर्ज्वाला सा चावस्तादपरपार्श्वे वर्तते । तासामुभयपार्श्वयोः शुक्रज्योतिषोरभिमानिदेवते अत्यन्तदीप्तिमत्यौ परं दीपयन्त्यौ वर्तेते । एवमुत्तरेष्वपि मन्त्रेषु योज्यम् ।

द्वितीयं मन्त्रमाह—

प्रजापते रोहिणी । आपः परस्तादोषधयोऽवस्तात्, इति ।

प्रजापतिर्नक्षत्रस्वामी देवस्तस्य स्वभूता रोहिणी मध्ये वर्तते । आप ओषधयश्च पार्श्वद्वये वर्तन्ते ।

तृतीयं मन्त्रमाह—

सोमस्येन्वका । विततानि परस्ताद्वयन्तोऽवस्तात्, इति ।

इन्वका मृगशीर्षसंघगतास्तारकाः । विततानि विस्तीर्णास्तन्तवः । वयन्तः पटस्य निर्मातारो देवताविशेषाः ।

चतुर्थं मन्त्रमाह—

रुद्रस्य बाहू । मृगयवः परस्ताद्विक्षारोऽवस्तात्, इति ।

बाहुशब्देन द्विवचनान्तेनाऽऽर्द्रानक्षत्रमुपलक्ष्यते । बाहुवत्प्रयत्नहेतुत्वात् । मृगयवो व्याधविशेषा देवाः । विक्षारो विशिष्टो लक्ष्यवेधः ।

पञ्चमं मन्त्रमाह—

अदित्यै पुनर्वसू । वातः परस्तादार्द्रमवस्तात् (१), इति ।

वातो वृष्टेः पूर्वभावी वायुः । आर्द्रं वृष्टिजन्यद्रवत्वम् ।

षष्ठं मन्त्रमाह—

बृहस्पतेस्तिष्यः। जुह्वतः परस्ताद्यजमाना अवस्तात्, इति।

जुह्वतो होमकर्तार ऋत्विजः। यजमानाः स्वामिनः।

सप्तमं मन्त्रमाह—

सर्पाणामाश्रेषाः। अभ्यागच्छन्तः

परस्तादभ्यानृत्यन्तोऽवस्तात्, इति।

अभ्यागच्छन्तः सर्पनृत्तदर्शनार्थमुत्सुका अभिमुखमागच्छन्तः पुरुषाः। अभ्यानृत्यन्तः फणानां प्रसारणनाभिमुखं नृत्तं कुर्वन्तः सर्पाः।

अष्टमं मन्त्रमाह—

पितृणां मघाः। रुदन्तः पर-

स्तादपभ्रंशोऽवस्तात्, इति।

रुदन्तो रोदनं कुर्वन्तो बन्धवः। अपभ्रंशो देहपातः।

नवमं मन्त्रमाह—

अर्यम्णः पूर्वे फल्गुनी। जाया

परस्तादृषभोऽवस्तात्, इति।

जाया प्रसिद्धा। ऋषभो भर्ता सेक्ता पुरुषः।

दशमं मन्त्रमाह—

भगस्योत्तरे। वहतवः परस्ताद्वह-

माना अवस्तात् (२), इति।

उत्तरे इत्यत्र फल्गुनी इत्यनुवर्तते। पितृगृहात्कन्यया नीयमाना धनविशेषा वहतवः। तेषां वोढारो वहमानाः।

एकादशं मन्त्रमाह—

देवस्य सवितुर्हस्तः। प्रसवः परस्तात्सनिरवस्तात्, इति।

---

१ ग. °माश्लेषाः।

प्रसवः कार्येषु प्रेरणम् । सनिर्धनदानम् ।

द्वादशं मन्त्रमाह—

इन्द्रस्य चित्रा । ऋतं परस्तात्सत्यमवस्तात्, इति ।

चिन्त्यमानं वस्तुतत्त्वमृतमुच्यते । वाच्यमानं वस्तुतत्त्वं सत्यम् ।

त्रयोदशं मन्त्रमाह—

वायोर्निष्ट्या । व्रततिः परस्तादसिद्धिरवस्तात्, इति ।

निष्ट्या स्वातिः । व्रततिर्वायुना चालयितुं शक्या वल्ली । असिद्धिर्वल्ल्या अधःपातः ।

चतुर्दशं मन्त्रमाह—

इन्द्राग्नियोर्विशाखे । युगानि पर-
स्तात्कृषमाणा अवस्तात्, इति ।

कर्षकेण बलीवर्दगलयोः स्थाप्यमानं काष्ठं युगम् । कृषमाणाः कृषिकर्तारः ।

पञ्चदशं मन्त्रमाह—

मित्रस्यानूराधाः । अभ्यारोहत्पर-
स्तादभ्यारूढमवस्तात् (३), इति ।

संमुखत्वेनावस्थितमुन्नतं देशमारोढुमुद्यतं पदमभ्यारोहत् । पूर्ववस्कृतारोहणं पदमभ्यारूढम् ।

षोडशं मन्त्रमाह—

इन्द्रस्य रोहिणी । शृणत्पर-
स्तात्प्रतिशृणदवस्तात्, इति ।

रोहिणीशब्देन ज्येष्ठोच्यते । संग्रामारोहणहेतुत्वात् । शृणुर्द्धिसनोद्युक्तं स्वकीयं बलम् । प्रतिशृणत्प्रतिकूलत्वेन हिंसोद्युक्तं परकीयं बलम् ।

सप्तदशं मन्त्रमाह—

निर्ऋत्यै मूलबर्हणी । प्रतिभञ्जन्तः

परस्तात्प्रतिशृणन्तोऽवस्तात्, इति ।

यन्मूलनक्षत्रं तदेव विरोधिपदार्थनिवर्हणशक्तित्वाद्बर्हणीत्युच्यते । प्रतिकूलां सेनां भग्नां कुर्वन्तः पुरुषाः प्रतिभञ्जन्तः । स्वात्मानं प्रातिकूल्येन हिंसन्तः पुरुषाः प्रतिशृणन्तः ।

अष्टादशं मन्त्रमाह—

अपां पूर्वा अषाढाः । वर्चः

परस्तात्समितिरवस्तात्, इति ।

परसैन्याभिभवक्षमं बलं वर्चः । समितिर्युद्धम् ।

एकोनविंशं मन्त्रमाह—

विश्वेषां देवानामुत्तराः । अभिज-

यत्परस्तादभिजितमवस्तात्, इति ।

जयाभिमुखं सैन्यमभिजयत् । लब्धजयमभिजितम् । अस्मिन्मन्त्र उत्तरा इत्यत्राषाढा इत्यनुवर्तते ।

विंशं मन्त्रमाह—

विष्णोः श्रोणा । पृच्छमानाः पर-

स्तात्पन्था अवस्तात् (४), इति ।

श्रवणनक्षत्रं श्रोणा । तल्लोकजिज्ञासवः पुरुषाः पृच्छमानाः । तल्लोकप्राप्त्युपायः पन्थाः ।

एकविंशं मन्त्रमाह—

वसूनाꣳ श्रविष्ठाः । भूतं परस्ताद्भूतिरवस्तात्, इति ।

धनिष्ठानक्षत्रं श्रविष्ठाः । पूर्वमनुभूतमैश्वर्यं भूतम् । अनुभूयमानमनुभविष्यमाणं च भूतिः ।

द्वाविंशं मन्त्रमाह—

इन्द्रस्य शतभिषक् । विश्वव्यचाः

परस्ताद्विश्वक्षितिरवस्तात्, इति ।

पूर्वं चित्रानक्षत्रस्वामी योऽयमिन्द्र उक्तः सोऽयं त्वष्टा परमैश्वर्ययोगादिन्द्र उच्यते । अन्यत्र "त्वष्टा नक्षत्रमभ्येति चित्राम्" इति मन्त्राम्नानात् । यत्त्वि-न्द्रस्य रोहिणीत्युक्तं तत्र ज्येष्ठानक्षत्राधिपतिः प्रसिद्ध एवेन्द्रः । "इन्द्रो ज्येष्ठा-मनुनक्षत्रमेति" इत्येवमाम्नानात् । अत्र त्विन्द्रशब्देन परमैश्वर्ययोगाद्वरुणो गृह्यते । "क्षत्रस्य राजा वरुणोऽधिराजो नक्षत्राणां शतभिषग्वसिष्ठः" इति मन्त्राम्नानात् । विश्वं व्यचति व्याप्नोतीति विश्वव्यचा वृष्टिः । विश्वेषां स-स्यानामाधारभूतः क्षेत्रविशेषो विश्वक्षितिः ।

त्रयोविंशं मन्त्रमाह—

अजस्यैकपद: पूर्वे प्रोष्ठपदा: । वैश्वानरं परस्ताद्वैश्वावसवमवस्तात्, इति ।

अजशब्देनैकपाच्छब्देन च सूर्योऽभिधीयते । "तं सूर्यं देवमजमेकपादम्" इति मन्त्राम्नानात् । जगदनुग्रहाय स्वेच्छागृहीतं शरीरं मुक्त्वा मनुष्यवत्कर्म-पारतन्त्र्येण जन्माभावादस्याजत्वम् । एक एव पद्यते संचरतीत्येकपात् । "सूर्य एकाकी चरति" इति मन्त्रान्तरविशेषात् । विश्वेषां नराणां हितं जगत्प्रका-शनं वैश्वानरम् "आदित्याज्जायते वृष्टिः" इति स्मृत्यभिहितम् । वृष्टिद्वारा विश्वेषां निवासहेतुत्वं वैश्वावसवम् ।

चतुर्विंशं मन्त्रमाह—

अहेर्बुध्नियस्योत्तरे । अभिषिञ्चन्तः परस्तादभिषुण्वन्तोऽवस्तात्, इति ।

अहिशब्देन बुध्नियशब्देन चाऽऽवसथ्याख्यः पञ्चमोऽग्निरुच्यते । अत एवाऽऽधानप्रकरणे "अहे बुध्निय मन्त्रं मे गोपाय" इत्याम्नातम् । सोऽयमहिंसकत्वादन्येन हिंसितुमशक्यत्वाच्चाहिः । बुध्ने मूले जगदा-दावुत्पन्नत्वाद्बुध्नियः । उत्तरे इत्यत्र प्रोष्ठपदा इत्यनुवर्तते । राज-सूयादियागविशेषेष्वभिषेककर्तारं ऋत्विजोऽभिषिञ्चन्तः । सोमयागेष्वभिषवं कुर्वन्तोऽभिषुण्वन्तः ।

पञ्चविंशं मन्त्रमाह—

पूष्णो रेवती । गाव: परस्ताद्वत्सा अवस्तात्, इति ।

१ ग. °षां शस्या° । २ ग. °सथः प° ।

गावः प्रसिद्धाः । वत्साश्च पोषणीयाः ।

षड्विंशं मन्त्रमाह—

अश्विनोरश्वयुजौ । ग्रामः

परस्तात्सेनाऽवस्तात्, इति ।

देवभिषग्भ्यामश्विभ्यां चिकित्सनीय एकस्थाननिवासो जनसंघो ग्रामः । परराष्ट्रे गच्छञ्जनसंघः सेना । साऽप्यश्विभ्यां चिकित्सनीयैव ।

सप्तविंशं मन्त्रमाह—

यमस्यापभरणीः । अपकर्षन्तः

परस्तादपवहन्तोऽवस्तात्, इति ।

पापिजनान्घातयितुं बलादानयन्तो दूता अपकर्षन्तः । आनीतानां यातनां कुर्वन्तोऽपवहन्तः । एतेषु सर्वेष्वपि मन्त्रेषु नक्षत्राधिपतिदेवताया अनुकूलौ पार्श्वद्वयवर्तिनावर्थौ योजनीयौ ।

अष्टाविंशैकोनत्रिंशयोर्मन्त्रयोः प्रतीके दर्शयति—

पूर्णा पश्चाद्यत्ते देवा अदधुः ( ५ ), इति ।

आर्द्रमवस्ताद्दहमाना अवस्तादभ्यारूढमवस्तात्पन्था अवस्ताद्वत्सा अवस्तात्पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके पञ्चमाध्याये प्रथमोऽनुवाकः ॥ १ ॥

पूर्णा पश्चादुत पूर्णा पुरस्तादित्यृगेका । यत्ते देवा अदधुर्भागधेयमित्यृगन्या । एतच्चोभयं संहितायां तृतीयकाण्डे व्याख्यातम् । एतैरेकोनत्रिंशन्मन्त्रैः क्वचिद्विकृतिविशेषे चयने प्रकृतिमन्त्रान्बाधित्वा नक्षत्रेष्टका उपदध्यात् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

अथ पञ्चमप्रपाठके द्वितीयोऽनुवाकः ।

प्रथमेऽनुवाके वैकृतिनक्षत्रेष्टकामन्त्रा उक्ताः । अथ द्वितीयतृतीययोरनुवाकयोः कर्मानुष्ठानाय पुण्यकालो निरूप्यते । तस्य चानारभ्याधीतत्वात्कर्मविशेषसंबन्धापादकस्य वाक्यादेरभावाच्च क्रत्वर्थत्वं नास्ति, किं तु पुरुषार्थत्वमित्यवगन्तव्यम् ।

तत्रास्मिन्ननुवाके नक्षत्रमुपजीव्य कालविशेषं विधत्ते—

यत्पुण्यं नक्षत्रम् । तद्बट् कुर्वीतोपव्युषम् । यदा वै सूर्य उदेति । अथ नक्षत्रं नैति । यावति तत्र सूर्यो गच्छेत् । यत्र जघन्यं पश्येत् । तावति कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते । एवꣳ ह वै यज्ञेषुं च शतद्युम्नं च मात्स्यो निरवसाययांचकार (१), इति ।

ज्योतिःशास्त्रप्रसिद्ध्या कर्तुः स्वस्य क्रियमाणस्य कर्मणश्चानुकूलत्वेन पुण्यं यन्नक्षत्रमस्ति, उपव्युषमुषःकालसमीपे तन्नक्षत्रं बट् कुर्वीत बाढं कुर्वीत। आकाशे सूर्योदयप्रदेशादूर्ध्वमेतावति दूरे तन्नक्षत्रं तिष्ठतीति बुद्धौ दृढनिश्चयं कुर्यात् । उपव्युषमित्यस्यैवाभिप्रायः स्पष्टी क्रियते । यस्मिन्काले सूर्य उदेति तस्मिन्काले तन्नक्षत्रं पुरुषो नैति न प्राप्नोति । सूर्यप्रकाशेन तिरोहितत्वाद्द्रष्टुं न शक्यत इत्युदयात्प्रागेव नक्षत्रदर्शनकाले तस्य स्थानविशेषं निश्चिनुयात् । तच्च नक्षत्रं यावत्प्राच्यामुदयं प्राप्य पश्चिमाभिमुखं गच्छति । तथा सति यस्मिन्देशे नक्षत्रस्थानं स्वेन निश्चितं तत्स्थानात्प्राचीनः समीपदेशस्तन्नक्षत्रापेक्षया जघन्यः । तस्मिञ्जघन्यदेशे यावति काले सूर्यो गच्छेत्तावति काले स्वेन कर्तव्यं कर्म कुर्यात् । यत्कर्म करोतीति यत्कारी । तादृशश्चिकीर्षुः पुरुषस्तस्मिन्काले प्रारभेत । तथा सति सत्स्वपि शास्त्रोक्तेषु कालदोषेषु तेषां दोषाणामुपशमादयं पुरुषः पुण्याह एव तत्कृतवान्भवति । तदेतत्सांप्रदायिकम् । यस्मान्मात्स्यो नाम कश्चिद्दषिर्यज्ञेषुनामकं शतद्युम्नं च पुरुषमीदृशे मुहूर्ते कारयित्वा निःशेषेण श्रेष्ठ्यं प्रापयामास ।

१ क. वाक्यभेदभा॰ ।

अथ प्रसङ्गाल्लोकद्वये श्रेयःसाधनं नक्षत्रसमूहरूपानविशेषं विधत्ते—

यो वै नक्षत्रियं प्रजापतिं वेद । उभयोरेनं लोकयोर्विदुः । हस्त एवास्य हस्तः । चित्रा शिरः । निष्ट्या हृदयम् । ऊरू विशाखे । प्रतिष्ठाऽनूराधाः । एष वै नक्षत्रियः प्रजापतिः । य एवं वेद । उभयोरेनं लोकयोर्विदुः (२) । अस्मिꣳश्चामुष्मिꣳश्च, इति ।

नक्षत्राण्येव शरीरं यस्य प्रजापतेस्तं प्रजापतिं यः पुरुषो वेदोपास्ते तं पुरुषं लोकद्वये देवा मनुष्याश्च जानन्ति । तथाविधख्यातियुक्तो भवतीत्यर्थः । यदिदं हस्तनक्षत्रं तदेव प्रजापतेर्हस्तस्थानीयम् । चित्रानक्षत्रं तु शिरःस्थानीयम् । निष्ट्या स्वातीनक्षत्रं तु हृदयस्थानीयम् । विशाखानक्षत्रमूरुस्थानीयम् । अनूराधानक्षत्रं पादस्थानीयम् । एवमुपास्यमानः प्रजापतिर्नक्षत्रियः । य एवं वेदेत्यादेः पुनरभिधानमुपसंहारार्थम् ।

अथ प्रासङ्गिकं किंचिल्लौकिकं काम्यं कर्म विधत्ते—

यां कामयेत दुहितरं प्रिया स्यादिति । तां निष्ट्यायां दद्यात् । प्रियैव भवति । नैव तु पुनरागच्छति, इति ।

निष्ट्या स्वातीनक्षत्रं तस्मिन्नक्षत्रे दत्ता दुहिता पत्युः प्रियैव भवति । किं त्वस्ति कश्चिदन्यो विशेषः । पितुर्गृहं नाऽऽगच्छत्येवाऽऽगन्तुं मनस्तु न कुरुते । नेयं नक्षत्रनिन्दा, किंतु प्रीत्यतिशयप्रापकत्वेन नक्षत्रस्तुतिरेव ।

अथान्यत्किंचिल्लौकिकं कर्म विधत्ते—

अभिजिन्नाम नक्षत्रम् । उपरिष्टादषाढानाम् । अवस्ताच्छ्रोणायै । देवासुराः संयत्ता आसन् । ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन् (३) । यदभ्यजयन् ।

तदभिजितोऽभिजित्त्वम् । यं कामयेतानपजय्यं जयेदिति । तमेतस्मिन्नक्षत्रे यातयेत् । अनपजय्यमेव जयति । पापपराजितमिव तु, इति ।

उत्तराषाढानक्षत्रस्य यश्चतुर्थः पादः श्रवणनक्षत्रस्य यः प्रथमः पादस्तदुभयं मिलित्वा नक्षत्रसंधिरूपमभिजिदाख्यं किंचिन्नक्षत्रम् । देवास्तस्मिन्नक्षत्रे युद्धं कृत्वाऽभितो जितवन्तः । तस्मादभिजिदिति नाम संपन्नम् । एवं सति केनापि जेतुमशक्यं सैन्यमयं राजा जयत्विति कामयमानोऽभिजिन्नक्षत्रे प्रयत्नं कारयेत्ततो जयत्येव । किं त्वरिः किंचिदन्यच्छत्रोः पापेन तदीयं सैन्यं पराजितमिव भवति । अस्य राज्ञो न कश्चित्प्रयासः । इयमपि पूर्ववन्नक्षत्रप्रशंसैव ।

अथ श्रौतकर्माङ्गत्वेन रेवतीं विधत्ते—

प्रजापतिः पशूनसृजत । ते नक्षत्रं नक्षत्रमुपातिष्ठन्त । ते समावन्त एवाभवन् । ते रेवतीमुपातिष्ठन्त(४) । ते रेवत्यां प्राभवन् । तस्माद्रेवत्यां पशूनां कुर्वीत । यत्किंचार्वाचीनꣳ सोमात् । प्रैव भवन्ति, इति ।

प्रजापतिना सृष्टाः पशवो रेवतीव्यतिरिक्ते तस्मिन्नक्षत्रे स्वकीयस्वामिगृहे समागतास्ते च समा एवाभवन् । समशब्दादुत्पन्न आवतुप्रत्ययः स्वार्थिकः । यावन्तः समागतास्तावन्त एव न तु वृद्धिं गताः । रेवत्यां तु स्वामिगृहं प्राप्ताः प्रभूता अभवन् । तस्मात्सोमभागादर्वाचीनं पशूनां संबन्धि यत्कर्म "वायव्यꣳ श्वेतमालभेत" इत्यादि तद्रेवत्यां कुर्वीत । तेन पशवः प्रभूता एव भवन्ति ।

नामनिरुक्त्या देवसंबन्धेन च नक्षत्राणि प्रशंसति—

सलिलं वा इदमन्तरासीत् । यदतरन् । तत्तारकाणां तारकत्वम् । यो वा इह यजते ।

अमुꣳ स लोकं नक्षते । तन्नक्षत्राणां नक्षत्रत्वम् (५) । देवगृहा वै नक्षत्राणि । य एवं वेद । गृह्येव भवति, इति ।

द्यावापृथिव्योरन्तर्मध्ये यदिदं स्थावरजंगमात्मकं जगद्दृश्यते तत्सर्वं पुरा प्रलयकाले सलिलमेवाऽऽसीत् । तदानीं कृत्तिकाद्याः सलिलं तीर्त्वा लोकान्तरेषु गताः । तस्मात्तरन्तीति व्युत्पत्त्या तारकत्वं संपन्नम् । यो यजमान इह नक्षत्रयुक्ते काले यागं करोति स यजमानोऽमुं स्वर्गं लोकं नक्षत्रे प्राप्नोति । नक्ष गताविति धातुः । अतो नक्षत इति व्युत्पत्त्या नक्षत्रत्वं संपन्नम् । किंच देवतागृहसदृशान्येतानि नक्षत्राणि । यथा मनुष्या गृहेषु दीपप्रकाशेन व्यवहरन्त्येवं देवा नक्षत्रप्रकाशेन व्यवहरन्ति । अतः प्रशस्तानि नक्षत्राणि । एवं वेदिता प्रशस्तगृहो बहुगृहो वा भवति ।

अथ प्रसङ्गाल्लौकिकं कंचिद्धर्मं विवक्ते—

यानि वा इमानि पृथिव्याश्चित्राणि । तानि नक्षत्राणि । तस्मादश्लीलनाम॑श्चित्रे । नावस्येन्न यजेत । यथा पापाहे कुरुते । तादृगेव तत्, इति ।

पृथिव्याः संबन्धीनि चित्राणि विविधानि ग्रामनगरादीनि स्थानानि यानि सन्ति तानि नक्षत्रसदृशानि । यथा द्युलोके नक्षत्राणि विविधान्युपकारकाणि च दृश्यन्ते तद्वद्ग्रामादीन्यपि । तस्माद्भूसंबन्धि चित्ररूपं यत्स्थानमश्लीलनामकं प्रतिकूलनक्षत्रसदृशं निन्दितं स्थानं म्लेच्छजनभूयिष्ठं तस्मिन्नश्लीलनाम्नि ग्रामे निवासं यागाद्यनुष्ठानं च न कुर्यात् । यथा पापाहे निषिद्धदिने कृतं नोपकारकं तथा निषिद्धदेशेऽपि कृतं तादृशमेव भवति ।

अथ नक्षत्राणामुत्तमाधमविभागं दर्शयितुं देवयमसंबन्धित्वेन नक्षत्राण्युपन्यस्य तत्संचारं दर्शयति—

देवनक्षत्राणि वा अन्यानि (६) । यमनक्षत्राण्यन्यानि । कृत्तिकाः प्रथमम् । विशाखे उत्तमम् । तानि देवनक्षत्राणि । अनूराधाः प्रथमम् । अपभ-

रणीरुत्तमम् । तानि यमनक्षत्राणि । यानि देवनक्षत्राणि । तानि दक्षिणेन परियन्ति । यानि यमनक्षत्राणि ( ७ ) । तान्युत्तरेण, इति ।

एनबन्यतरस्यामदूरेऽपञ्चम्या इति विहितस्यैनप्प्रत्ययस्यादूरार्थवाचित्वाद्देवलोकस्य समीपे दक्षिणपार्श्वे कृत्तिकादीनि परिभ्रमन्ति । अनूराधादीनि तु यमलोकस्य समीप उत्तरपार्श्वे परिभ्रमन्ति ।

अथ निर्वचनमुखेन यमनक्षत्राणामवमत्वं दर्शयति--

अन्वेषामराल्स्मेति । तदनूराधाः । ज्येष्ठमेषामवधिष्मेति । तज्ज्येष्ठघ्नी । मूलमेषामवृक्षामेति । तन्मूलबर्हणी । यन्नासहन्त । तदषाढाः । यदश्लोणत् ( ८ ) । तच्छ्रोणा । यदशृणोत् । तच्छ्रविष्ठाः । यच्छतमभिषज्यन् । तच्छतभिषक् । प्रोष्ठपदेषूदयच्छन्त । रेवत्यामरवन्त । अश्वयुजोरयुञ्जत । अपभरणीष्वपावहन् । तानि वा एतानि यमनक्षत्राणि, इति ।

पुरा कदाचिद्युयुत्सवो देवाः परस्परमिदमब्रुवन्नेषामसुराणां युद्धार्थं वयमनुकूलया सामग्र्याऽराल्स्म समृद्धा अभूमेति । यस्मिन्नक्षत्रे तदिदं वचनमब्रुवंस्तस्य नक्षत्रस्यानूराधा इति नाम संपन्नम् । तदनुकूलया सामग्र्या राद्धिः समृद्धिरत्रेति व्युत्पत्तेः । एषामसुराणां मध्ये ज्येष्ठं पुरुषं मुख्यमवधिष्मेति यस्मिन्नक्षत्रेऽब्रुवंस्तस्य नक्षत्रस्य ज्येष्ठघ्नीति नाम । तत्र नामैकदेशेन ज्येष्ठेति लौकिको व्यवहारः । भीमसेनो भीम इतिवत् । एवमसुराणां मूलं निवासस्थानमवृक्षाम विच्छिन्नं कृतवन्तो वयमिति यस्मिन्नक्षत्रेऽब्रुवंस्तस्य नक्षत्रस्य मूलबर्हणीति नाम । मूलस्य बर्हणमुद्यमनमुच्छेदनमत्रेति व्युत्पत्तेः । अत्राप्येकदेशेन लौकिको व्यवहारः । ययोर्नक्षत्रयोर्देवकृतमुपद्रवं सोढुम-

शक्ता असुरास्तस्य नक्षत्रद्वयस्याषाढा इति नाम। न सहन्तेऽत्रेति व्युत्पत्तेः। श्रोणेति धातुः संघवाची। यस्मिन्नक्षत्रे प्रहारसंघोऽसुरेष्वभूत्तस्य श्रोणेति नाम। श्रवणमिति लौकिकव्यवहारः। यस्मिन्नक्षत्रे देवैः स्वकर्मविक्षेपमसुरसंघोऽशृणो-त्तस्यश्रविष्ठा इति नाम। धनिष्ठेति लौकिकव्यवहारः। यस्मिन्नक्षत्रेऽसुरकृतं प्रहाराणां शतं देवा अभिषज्यन्ननायासेन चिकित्सितवन्तस्तस्य शतभिषगिति नाम। प्रोष्ठपदाख्ये नक्षत्रद्वये देवाः स्वकीयान्यायुधान्यसुरयोधनायोद्धतव-न्तस्तस्मान्नक्षत्रद्वयस्य प्रोष्ठपदनामत्वम्। यस्मिन्नक्षत्रे देवा अरवन्तासुरभीति-करं शब्दमकुर्वंस्तस्य रेवतीति नाम। यस्मिन्नक्षत्रे देवा रथेष्वश्वान्योजित-वन्तस्याश्वयुगिति नाम। यस्मिन्नक्षत्रे प्राणानामपहारमसुरा अबर्हंस्तस्याप-भरणीति नाम। प्राणभरणादपगतत्वात्। तान्येतान्यनूराधादीनि यमवद-सुराणां मरणहेतुत्वाद्यमनक्षत्राणि।

तत्र नामनिर्वचनादेव तेषामधमत्वेन वर्जनत्वमतीतेरितरनक्षत्रेषु कृत्तिका-दिषूत्तमत्वमाप्त्या तेषु लौकिकवैदिककार्म्यानुष्ठानं विधत्ते—

यान्येव दे॒वन॑क्षत्रा॒णि। तेषु॒ कुर्वी॑त

यत्का॒री स्या॑त्। पु॒ण्या॒ह ए॒व कु॑रुते (९), इति।

ए॒कारे॑वं वे॒दोभयो॑रिनं लो॒कयो॑र्विदुरज॒यन्रे॒वती॒मुपा॑तिष्ठन्त नक्षत्र॒त्वम॒न्या॒नि

यानि॑ यमनक्षत्रा॒ण्य॒श्लो॒णद्यमनक्षत्रा॒णि त्रीणि॑ च।

## इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके पञ्चमाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

यत्काम्यं कर्म करोतीति यत्कारी स पुरुषस्तत्कर्म देवनक्षत्रेषु कुर्वन्नित-रेषां कालदोषाणामुपशान्त्या पुण्याह एव कृतवान्भवति।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

अथ पञ्चमप्रपाठके तृतीयोऽनुवाकः ।

द्वितीयानुवाके नक्षत्रोपजीवनेन शुभकालो निरूपितः । तृतीये दिवसभागोपजीवनेन शुभकालो निरूप्यते । अह्नः पञ्च विभागाः । प्रातःसंगवमध्याह्नापराह्णसायाह्नशब्दाभिधेयाः । तत्राऽऽद्यन्तयोः स्वभावविशेषं दर्शयति—

देवस्य सवितुः प्रातः प्रसवः प्राणः ।

वरुणस्य सायमासवोऽपानः, इति ।

योऽयमुदयानन्तरभावी मुहूर्तत्रयात्मकः कालः प्रातःशब्दवाच्यः स च सवितुः प्रेरकस्य देवस्य प्रसवः प्रेरणयुक्तः । सूर्योदये सत्यनुष्ठातारः कर्षकाः सेवका वणिजश्च स्वस्वव्यापारेषु सूर्यप्रकाशेन प्रेर्यन्ते । तस्मात्प्रकर्षेणानितीति चेष्टते सर्वो लोकोऽत्रेत्ययं कालः प्राणरूपः । अह्नोऽन्तिमो मुहूर्तत्रयात्मकः कालः सायंशब्दाभिधेयः, स च वरुणसंबन्धी । तत ऊर्ध्वं तारकेण तमसा जगदावरणात् । स च प्राणिप्रेरणस्याऽऽसमन्ताच्छेदकत्वादासव इत्युच्यते । अस्तमयकाले हि सर्वे प्राणिनः स्वस्वव्यापारेभ्य उपरमन्ते । अतोऽपगतचेष्टत्वादपान इत्युच्यते ।

अथ प्रातःसंगवयोः प्रथमद्वितीययोर्भागयोः संधिरूपं कालं हेयतया निरूपयति—

यत्प्रतीचीनं प्रातस्तनात् । प्राचीनꣳ

संगवात् । ततो देवा अग्निष्टोमं निर-

मिमत । तत्तदात्तवीर्यं निर्मार्गः, इति ।

प्रातःकाले योऽयमन्तिमो मुहूर्तस्तं पृथक्कृत्य तत्स्वरूपं प्रातस्तनात्कालात्प्रतीचीनमित्युच्यते । मुहूर्तत्रयात्मकस्य संगवाख्यस्य द्वितीयभागस्य यः प्रथमो मुहूर्तस्तं पृथक्कृत्य तत्स्वरूपं संगवात्प्राचीनमिति व्यपदिश्यते । प्रातःकालात्प्रतीचीनं संगवात्प्राचीनं च मुहूर्तद्वयात्मकं संधिरूपं यत्कालरूपं भवति ततः संधिरूपात्कालादग्निष्टोमसंस्थारूपं सोमयागं देवा निर्मितवन्तः । यस्मात्कारणात्संधिरूपमात्तवीर्यं देवैर्गृहीतसारत्वान्निःसारं तस्मादयं निर्मार्गः कालः । मार्गो मार्जनं शुद्धिः, ततो निर्गतो निर्मार्गः ।

प्रातःकालवत्संगवकालं प्रशंसति—

मित्रस्य संगवः । तत्पुण्यं तेजस्व्यहः ।

तस्मात्तर्हि पशवः समायन्ति, इति ।

योऽयं संगवो द्वितीयो भागस्तस्य मित्रः स्वामी। मित्रस्य च सर्वानुग्राहकत्वात् । तदीयमह्नः स्वरूपं पुण्यमध्ययनादिपुण्यकर्मोपेतम् । अत एव तेजस्वित्वेन भासते । तस्मात्तेजस्वित्वादेव तस्मिन्काले पशवोऽरण्येषु सम्यगाचरन्ति ।

अथ द्वितीयतृतीयभागयोः संधिं पूर्वसंधिवन्निन्दति—

यत्प्रतीचीनꣳ संगवात् ( १ ) । प्राचीनं मध्यंदिनात् । ततो देवा उक्थ्यं निरमिमत । तत्तदात्तवीर्यं निर्मार्गः, इति ।

तृतीयभागं प्रशंसति—

बृहस्पतेर्मध्यंदिनः । तत्पुण्यं तेजस्व्यहः ।

तस्मात्तर्हि तेऽक्ष्णिष्ठं तपति, इति ।

मध्यंदिनभागस्य बृहस्पतिः स्वामी । तस्यातिशयेन ब्रह्मवर्चसित्वात्तदीयमह्नः स्वरूपं पुण्यमतस्तस्मिंस्ते पशवोऽक्ष्णिष्ठं नाशरहितमुद्वेगराहित्येनावस्थानरूपं तपः कुर्वन्ति । पशूनां तथाऽवस्थानमेव तपः । "गावो वा एतत्सत्रमासत" इत्यत्र तथा तत्तपःप्रतिपादनात् । वस्तुतस्तु तेक्ष्णिष्ठमित्येकमेव पदम् । तथा च तेक्ष्णिष्ठमतिशयेन तीक्ष्णं यथा स्यात्तथा तस्मिन्काले सूर्यस्तपति । ब्राह्मणश्च तथा तपेदिति । "मध्यंदिने प्रबलमधीयीत" इति श्रुतेः ।

तृतीयचतुर्थभागयोः संधिं निन्दति—

यत्प्रतीचीनं मध्यंदिनात् । प्राचीनमपराह्णात् । ततो देवाः षोडशिनं निरमिमत । तत्तदात्तवीर्यं निर्मार्गः (२), इति ।

चतुर्थभागं प्रशंसति—

भगस्यापराह्णः । तत्पुण्यं तेजस्व्यहः । तस्मा-

दपराह्णे कुमार्यो भगमिच्छमानाश्चरन्ति, इति ।

भगं सौभाग्यं शृङ्गारं गृहवर्तिनां सर्वेषां भोजनादिव्यापारेषु निष्पन्नेष्वपराह्णकाले मातरः पुत्रीणां कुमारीणामङ्गप्रक्षालनधम्मिल्लबन्धननयनाञ्जनादिभिः शृङ्गारं कुर्वन्ति । सौभाग्यदेवतायास्तत्कालस्वामित्वेन तदेतदुचितम् ।

अथ चतुर्थपञ्चमभागयोः संधिं निन्दति—

यत्प्रतीचीनमपराह्णात् । प्राचीनꣳ सायात् । ततो देवा अतिरात्रं निरमिमत । तत्तदात्तवीर्यं निर्मार्गः, इति ।

पञ्चमभागं प्रशंसति—

वरुणस्य सायम् । तत्पुण्यं तेजस्व्यहः । तस्मात्तर्हि नानृतं वदेत् ( ३ ), इति ।

वरुणस्योग्रदेवतात्वात्तस्मिन्पुण्यकालेऽनृतवादिनं वरुणो बाधते । अत एवान्यत्र श्रूयते—"अनृते खलु वै क्रियमाणे वरुणो गृह्णाति" इति । तस्मात्तस्मिन्कालेऽतिप्रयत्नेनानृतं वर्जयेत् ।

उत्तमाधमकालविभागज्ञानं प्रशंसति—

ब्राह्मणो वा अष्टाविꣳशो नक्षत्राणाम् । समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि । चत्वार्यश्लीलानि । तानि नव । यच्च परस्तान्नक्षत्राणां यच्चावस्तात् । तान्येकादश । ब्राह्मणो द्वादशः । य एवं विद्वान्संवत्सरं व्रतं चरति । संवत्सरेणैवास्य व्रतं गुप्तं भवति, इति ।

कृत्तिकादीनि भरण्यन्तानि सप्तविंशतिर्नक्षत्राणि तदपेक्षया ब्राह्मणोऽष्टाविंशो[2] नक्षत्रम् । यथा नक्षत्रयोगात्कालस्य कर्मयोग्यतैवं ब्राह्मणवचनादपि कालः कर्मयोग्यो भवति । अत एव शिष्टाः कर्मारम्भेषु पुण्याहं वाचयन्ति ।

१ ग. सायाह्नात् । २ ग. °विंशं न° ।

संवत्सरसंपादनेन प्रशंसति। एकस्याह्नः प्रास्ताः प्रातःसंगवादयः पञ्च भागा नक्षत्रांशोपेतत्वात्पञ्च नक्षत्राणि। तानि च पूर्वोक्तरीत्या प्रशस्तत्वात्पुण्यानि। यानि च संधिरूपाणि तान्यग्निष्टोमाद्युत्पादनेन निःसारत्वादश्लीलानि निन्दितानि। एवं पुण्यान्यश्लीलानि च मिलित्वा नवसंख्याकानि। यच्च नक्षत्रांशयुक्तेन नक्षत्राणामेतेषां नवसंख्याकानां परस्तादुपरि प्रदोषकाल-रूपं यच्चाधस्तादुषःकालरूपं ताभ्यां द्वाभ्यां सह तान्येकादश संपद्यन्ते। तदपेक्षया वचनेन पुण्याहत्वसंपादको ब्राह्मणो द्वादशः। एवमेते काल-विशेषा द्वादशमासत्वेन भाविताः संवत्सरतामापद्यन्ते। एवमनेन प्रकारेण यो विद्वान्संवत्सरत्वसंपादनेनैकस्मिन्दिने व्रतं कर्मविशेषमाचरति तस्य तद्व्रतं प्रसिद्धेनैव संवत्सरेण गुप्तं भवति। संवत्सरानुष्ठानेन यावत्फलं तावदाप्नोतीत्यर्थः। एवमेकेन प्रकारेण द्वादशभागानुसंधानमुक्तम्।

अथ प्रकारान्तरेण तदभिधत्ते—

समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि। चत्वा-र्यश्लीलानि। तानि नव। आग्नेयी रात्रिः। ऐन्द्रमहः। तान्येकादश। आदित्यो द्वादशः। य एवं विद्वान्संवत्सरं व्रतं चरति। संवत्स-रेणैवास्य व्रतं गुप्तं भवति (४), इति।

सङ्घ्वात्षोडशिनं निरमिमत तस्मादासीत्सर्वीर्य मिमीगो वदेद्भवति समान-स्याह्नः पञ्च पुण्यानि नक्षत्राण्यष्टौ च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके पञ्चमाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

पूर्वं प्रदोषकालोषःकालब्राह्मणैर्द्वादशसंख्या पूरिता। इदानीं तत्त्रयं परित्य-ज्याग्निदेवताकां रात्रिमिन्द्रदेवताकमहरादित्यं च तत्त्रयस्थाने निवेश्यानु-संधानमुच्यत इति विशेषः।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ पञ्चमप्रपाठके चतुर्थोऽनुवाकः ।

---

तृतीये हेयोपादेयकालविभागो निरूपितः । स च क्रतुविशेषसंबन्धाभावात्पुरुषार्थः । अतः सामान्येन सर्वकर्मसु संबध्यते । चतुर्थे सोमविषये विशेषोऽभिधीयते । यदुक्तं पूर्वप्रपाठके—"यद्दारुमयाणि पात्राणि भवन्ति" इति । तदेतत्प्रशंसति—

ब्रह्मवादिनो वदन्ति । कति पात्राणि यज्ञं
वहन्तीति । त्रयोदशेति ब्रूयात् । स यद्ब्रूयात् ।
कस्तानि निरमिमीतेति । प्रजापतिरिति ब्रूयात् ।
स यद्ब्रूयात् । कुतस्तानि निरमिमीतेति ।
आत्मन इति । प्राणापानाभ्यामेवोपाꣳश्वन्त-
र्यामौ निरमिमीत (१) । व्यानादुपाꣳशुस-
वनम् । वाच ऐन्द्रवायवम् । दक्षक्रतुभ्यां मैत्रा-
वरुणम् । श्रोत्रादाश्विनम् । चक्षुषः शुक्राम-
न्थिनौ । आत्मन आग्रयणम् । अङ्गेभ्य उक्थ्य-
म् । आयुषो ध्रुवम् । प्रतिष्ठाया ऋतुपात्रे, इति ।

सोमग्रहणसाधनत्वेन यज्ञनिर्वाहकाणां पात्राणां संख्याविशेषो निर्मातृविशेषो निर्माणसाधनं चेति त्रयं ब्रह्मवादिनां प्रश्नेनाभिज्ञपुरुषोत्तरेण च निर्णीतम् । प्रजापतिः स्वशरीरान्निरमिमीतेति सामान्येनोक्तस्य प्राणापानाभ्यामित्यादिना विशेषः कथितः । तत्र प्राणवायोरुपांशुपात्रं निर्मितम् । अपानवायोरन्तर्यामपात्रम् । व्यानवायोरुपांशुसवनाख्यः पाषाणः । वागिन्द्रियादैन्द्रवायवपात्रम् । दक्ष उत्साहः । क्रतुः संकल्पः । ताभ्यां मैत्रावरुणपात्रम् । श्रोत्रादाश्विनपात्रम् । चक्षुरिन्द्रियाच्छुक्रामन्थिपात्रद्वयम् । आत्मनो मध्यशरीरादाग्रयणपात्रम् । अङ्गेभ्यो हस्तपादादिभ्य उक्थ्यपात्रम् । स्वकीयादायुष्याद्ध्रुवपात्रम् । प्रतिष्ठाहेतुभ्यां पादाभ्यामृतुपात्रद्वयम् । प्रजापतेः सत्यसंकल्पत्वा-

दिदमेतस्माज्जायतामिति संकल्पमात्रेण तथैव जायते । यस्मादत्र प्राणादिभ्य एतानि निष्पन्नानि तस्मात्तत्तन्मन्त्रेष्वनेनैव क्रमेण प्राणादय एव दृश्यन्ते । तथा च ग्रहाभिवीक्षणमन्त्रा एवमाम्नायन्ते—“प्राणाय मे वर्चोदा वर्चसे पवस्वापानाय व्यानाय वाचे दक्षक्रतुभ्याम्” इत्याद्याः ।

सवनीयपुरोडाशान्प्रशंसति—

यज्ञं वाव तं प्रजापतिर्निरमिमीत । स निर्मितो नाध्रियत समम्लीयत । स एतान्प्रजापतिरपिवापानपश्यत् । तान्निरवपत् । तैर्वै स यज्ञमप्यवपत् । यदपिवापा भवन्ति । यज्ञस्य धृत्या असंम्लयाय ( २ ), इति ।

उपाꣳश्वन्तर्यामौ निरमिमीतामिमीत षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके पञ्चमाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

---

यथोक्तग्रहपात्रसाध्यः प्रजापतिनिर्मितः स सोमयज्ञो दृढो नाभवत्, किं तु विशीर्णोऽभूत् । अतस्तद्दार्ढ्यहेतूनपिवापान्सवनीयपुरोडाशान्दृष्ट्वा तन्निर्वापेण तं यज्ञमप्यवपद्दृढी चकार । अतोऽन्यस्यापि तन्निर्वापो यज्ञस्य दार्ढ्याय विशरणाभावाय भवति । सोमप्रकरणे षष्ठकाण्डे “प्रान्यानि पात्राणि युज्यन्ते” इत्यनुवाके पात्रस्तुतिस्तस्मादनुसवनं पुरोडाशा निरुप्यन्त इति निर्वापविधिश्चाऽऽम्नातः । अतस्तच्छेषोऽयमनुवाको द्रष्टव्यः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ पञ्चमप्रपाठके पञ्चमोऽनुवाकः ।

---

ऋतमेव परमेष्ठि । ऋतं नात्येति किंचन । ऋते समुद्र आहितः । ऋते भूमिरियꣳ श्रिता ।

अग्निस्तिग्मेन शोचिषा । तप आक्रान्तमु-
ष्णिहा । शिरस्तपस्याहितम् । वैश्वानरस्य तेज-
सा । ऋतेनास्य निवर्तये । सत्येन परिवर्तये
(१) । तपसाऽस्यानुवर्तये । शिवेनास्योपवर्तये ।
शग्मेनास्याभिवर्तये । तदृतं तत्सत्यम् । तद्व्रतं
तच्छकेयम् । तेन शकेयं तेन राध्यासम्, इति ।

चतुर्थे सोमशेषभूता पात्रस्तुतिरुक्ता । पञ्चमे चातुर्मास्यशेषा वपनमन्त्रा उच्यन्ते । तत्र वैश्वदेवस्यानुष्ठानान्ते यद्वपनं तत्राऽऽम्नान्मन्त्रान्सूत्रकारो विनियुङ्क्ते—"त्रेण्या शलल्येक्षुकाण्डेनेक्षुशलाकया लौहेन च क्षुरेणौदुम्बरेण च केशान्निवर्तयते वापयते श्मश्रूणि 'ऋतमेव परमेष्ठि, ऋतं नात्येति किंचन, ऋते समुद्र आहितः, ऋते भूमिरियꣳ श्रिता, अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा शिरस्तपस्याहितं वैश्वानरस्य तेजसा ऋतेनास्य निवर्तये सत्येन परिवर्तये तपसाऽस्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये' इति निवर्तयत इति, 'तदृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासम्' इति यजमानो जपति" इति । सूत्रगतत्रेण्यादिशब्दार्थ उपरितनानुवाके व्याख्यास्यते । ऋतमेवेत्यादिशग्मेनास्याभिवर्तयेइत्यन्ता मन्त्राः केशनिवर्तने विनियुक्ताः । तद्व्रतमित्यादि यजमानजपे । ऋतं सत्यवदनं तदेव परमेष्ठि जगत्स्रष्टुः प्रजापतेः स्वरूपम् । तस्माल्लोके किंचन वस्तुजातमतिक्रमितुं न भवति । तत्कथमिति तदेवोच्यते । योऽयं समुद्रो जलराशिरत्युन्नतः सोऽप्यृते समाहितः । प्रजापतिर्वेलां कृत्वा तामिमां नातिक्राम त्वमिति समुद्रमुवाच । स तस्मिन्नेव सत्यवाक्ये तथैव व्यवस्थितः । समुन्नतोऽपि जलराशिर्वेलामुल्लङ्घ्य भूमिं न प्लावयति । तथा खेदमन्तरेण सर्वान्प्राणिनो धारयेति प्रजापतिनोक्ते सत्यवाक्ये भूमिरियमाश्रिता वर्तते । तथा प्रजापतेः सत्यवाक्येनैवायमग्निस्तिग्मेन शोचिषा तीक्ष्णेन रश्मिना युक्तो वर्तते । तथा प्रजापतिवाक्येन सत्येन महर्षिभिस्तप्यमानं तप उष्णिहादिच्छन्दोविशेषयुक्तेन मन्त्रेणाऽऽक्रान्तम् । तपस्यमाना हि च्छन्दोयुक्तान्मन्त्राञ्जपन्ति । तथा प्रजापतिसत्यवाक्यादेव यजमानाः शिरोमुण्डनादिलक्षणे तपसि व्यवस्थिताः । तस्माद्वैश्वानरस्य स्वामिनः प्रजापतेस्तेजसर्तेनास्य यजमानस्य केशान्निवर्तये निवृत्तान्क-

रोमि । सत्येन तदीयेन परिवर्तये परितः परित्यक्तान्करोमि । मानसमृतं वाचिकं सत्यमिति तद्भेदः । तथाऽस्य यजमानस्य तपसा निमित्तभूतेनानुवर्तये केशाननुकूलान्करोमि । शिवेन शान्तेन प्रजापतिसत्यवाक्येनास्य केशानुपवर्तये समीपे केशमूले क्षुरस्य वर्तनं कुर्वे । शग्मेन सुखप्रापकेण प्रजापतेः सत्यवाक्येनास्य केशानभिवर्तयेऽभितः क्षुरं व्यापारयामि । सोऽयमध्वर्योर्वपनमन्त्रः । अथ यजमानस्य जपमन्त्रः । तत्प्रजापतेर्ऋतं मानसं तच्च वाचिकं सत्यं तदनेनानुष्ठेयं तद्व्रतं कर्मलक्षणं तत्सर्वं संपादयितुं शकेयं शक्तो भूयासम् । तेन प्रजापतिसत्येनैव शकेयं शक्तो भूयासं व्रतेन कर्मणा राध्यासं समृद्धो भूयासम् ।

अथ वरुणप्रघासपर्वानन्तरभाविवपनमन्त्रौ—

यद्घर्मः पर्यवर्तयत् । अन्तान्पृथिव्या दिवः । अग्निरीशान ओजसा । वरुणो धीतिभिः सह ( २ ) । इन्द्रो मरुद्भिः सखिभिः सह, इति ।

कल्पः—" अत्र पौर्णमास्येष्ट्योन्दनादिपूर्वकेशनिवर्तनं सर्वं वा वापयेत् । मन्त्रादिर्विक्रियते—यद्घर्मः पर्यवर्तयदन्तान्पृथिव्या दिवः, अग्निरीशान ओजसा, वरुणो धीतिभिः सह, इन्द्रो मरुद्भिः सखिभिः सहेत्यग्निस्तिग्मेनेत्यादि समानमिति । घर्मो दीप्यमानो य आदित्योऽस्ति सोऽयं पृथिव्या दिवश्चान्तान्प्रजापतिसत्यवाक्येनैव पर्यवर्तयत्परितः प्रकाशितवान् । अग्निश्चौजसा तेजोबलेनेशानः सर्वं दग्धुं प्रभुर्भवति । वरुणश्च धीतिभिर्बुद्धिविशेषैः सह स्वव्यापारे प्रभवति । इन्द्रश्च मरुद्भिः स्वकीयैः सखिभिः सह प्रजापतिसत्यवाक्येन स्वव्यापारे प्रभुर्भवति । एतावान्पूर्वस्मान्मन्त्राद्विशेषः । अवशिष्टस्तु समानः ।

तस्यावशिष्टस्य पाठस्तु—

अग्निस्तिग्मेन शोचिषा । तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितम् । वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये । सत्येन परिवर्तये । तपसाऽस्यानुवर्तये । शिवेनास्योपवर्तये । शग्मेनास्याभिवर्तये ( ३ ) । तदृतं तत्सत्यम् । तद्व्रतं

तच्छकेयम् । तेन शकेयं तेन राध्यासम्, इति ।

पूर्ववद्व्याख्येयम् । पूर्ववद्वैश्वदेवान्ते श्मश्रूणामेव वपनं केशानां तु कर्तनम् । इह तु केशानां वपनकर्तने विकल्प्येते ।

अथ साकमेधपर्वानन्तरभाविवपनमन्त्रौ—

यो अस्याः पृथिव्यास्त्वचि । निवर्तयत्योषधीः । अग्निरीशान ओजसा । वरुणो धीतिभिः सह । इन्द्रो मरुद्भिः सखिभिः सह ।

कल्पः—"पौर्णमास्येष्ट्योन्दनादिपूर्ववन्निवर्तनं सर्वं वा वापयेत् । मन्त्रादिर्विक्रियते—यो अस्याः पृथिव्यास्त्वचि निवर्तयत्योषधीरग्निरीशान ओजसा वरुणो धीतिभिः सहेन्द्रो मरुद्भिः सखिभिः सहाग्निस्तिग्मेनेति समानम्" इति । य आदित्योऽस्ति सोऽयं प्रजापतिसत्यवाक्येनास्याः पृथिव्यास्त्वच्युपरिभाग ओषधीर्निवर्तयति परिवापयति । अग्निरीशान इत्यादि पूर्ववद्व्याख्येयम् ।

मन्त्रस्तु—

अग्निस्तिग्मेन शोचिषा । तप आक्रान्तमुष्णिहा (४) । शिरस्तपस्याहितम् । वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये । सत्येन परिवर्तये । तपसाऽस्यानुवर्तये । शिवेनास्योपवर्तये । शग्मेनास्याभिवर्तये । तदृतं तत्सत्यम् । तद्व्रतं तच्छकेयम् । तेन शकेयं तेन राध्यासम् (५), इति ।

पूर्ववद्व्याख्येयम् ।

अथ शुनासीरीयपर्वानन्तरं क्षौरमन्त्रौ—

एकं मासमुदसृजत् । परमेष्ठी प्रजाभ्यः । तेनाऽऽभ्यो मह आवहत् । अमृतं मर्त्याभ्यः । प्रजामनु-

प्रजायसे । तदु ते मर्त्यामृतम् । येन मासा अर्ध-
मासाः । ऋतवः परिवत्सराः । येन ते ते प्रजापते ।
ईजानस्य न्यवर्तयन् ( ६ )। तेनाहमस्य ब्रह्मणा ।
निवर्तयामि जीवसे ।

कल्पः—" अत्र पौर्णमास्येष्टेन्दनादि पूर्ववन्निवर्तनं सर्वं वा वापयेत् । मन्त्रादिर्विक्रियते—एकं मासमुदसृजत्परमेष्ठी प्रजाभ्यस्तेनाऽऽभ्यो मह आवहदमृतं मर्त्याभ्यः प्रजामनुप्रजायसे तदु ते मर्त्यामृतं येन मासा अर्धमासा ऋतवः परिवत्सरा येन ते ते प्रजापत ईजानस्य न्यवर्तयन् । तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे, इत्यग्निस्तिग्मेन शोचिषेति समानम् " इति । परमेष्ठी प्रजापतिरेकं मासं मासोपलक्षितं चातुर्मास्यानुष्ठानयोग्यकालमुदसृजदुत्कर्षेण सृष्टवान् । मर्त्याभ्यो मनुष्यरूपाभ्य आभ्यो जगति दृश्यमानाभ्यः प्रजाभ्यस्तेन चातुर्मास्यानुष्ठानयोग्यकालेन महो महदमृतमविनाशिफलमावहत्संपादितवान् । तच्च फलं पूर्वप्रपाठके चातुर्मास्ययाजिनो मरणविचारे निर्णीतम् । सूत्रकारेणाप्येतदेवाभिप्रेत्योक्तम्—" अक्षय्यꣳ ह वै चातुर्मास्ययाजिनः सुकृतं भवति " इति । हे मर्त्य मनुष्यरूप यजमान प्रजां पुत्रपौत्रादिरूपामनुप्रजायसेऽनुक्रमेणोत्पादयसि । तदु तदेव पुत्रपौत्रादिरूपेणावस्थानं ते तव चामृतमविनाशिफलं मर्त्यत्वादेतस्य शरीरस्य नाशेऽपि पुत्रपौत्रादिसंततेरविच्छेदनाद्येन मन्त्रसामर्थ्येन मासार्धमासर्तुसंवत्सराविशेषाः स्वोचितकार्यकारिणः प्रवर्तन्ते । प्रजापतेः पुत्रपौत्रादिस्वरूपाणां प्रजानां पालक यजमान, ईजानस्य यागं कृतवतस्ते तव मासादिकास्ते कालविशेषा येन मन्त्रेण न्यवर्तयन्निरन्तरं संपादितास्तेन ब्रह्मणा मन्त्रेणाहमध्वर्युरस्य यजमानस्य जीवसे जीवनाय निवर्तयामि कुन्तनेन केशान्निवृत्तान्करोमि । एतावानत्र मन्त्रविशेषः । अवशिष्टस्तु समानः ।

तत्पाठस्तु—

अग्निस्तिग्मेन शोचिषा । तप आक्रान्तमुष्णिहा ।
शिरस्तपस्याहितम् । वैश्वानरस्य तेजसा । ऋते-
नास्य निवर्तये । सत्येन परिवर्तये । तपसाऽस्यानु-

वर्तये । शिवेनास्योपवर्तये । शग्मेनास्याभिवर्तये ।
तदृतं तत्सत्यम् । तद्व्रतं तच्छकेयम् । तेन शकेयं
तेन राध्यासम् (७), इति ।

परिवर्तये सहाभिवर्तय उष्णिहा राध्यासं न्यवर्तयन्नुपवर्तये चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके पञ्चमाध्याये
पञ्चमोऽनुवाकः ॥ ५ ॥

---

पूर्ववद्व्याख्येयम् । अथवा क्षुरपरत्वेन योजनीयम् । अग्निसमानोऽयं क्षुरः । स तीक्ष्णेन दीप्तिसमानेन धाराग्रेण सह वर्तते । उष्णिहा छन्दःसमानसामर्थ्ययुक्तेन क्षुरेण वपनरूपं तप आक्रान्तं प्रारब्धं यजमानस्य शिरस्तस्मिन्वपनरूपे तपस्याहितं समर्पितम् । वैश्वानरसमानस्य क्षुरस्य तेजःपरिमाणेन कृतेनावश्यंभाविव्यापारेणास्य यजमानस्य केशान्निवर्तये निवृत्तान्करोमि । निवृत्तिप्रकारविशेषा एव परिवर्तनानुवर्तनोपवर्तनाभिवर्तनशब्दैरुच्यन्ते । तृतीयान्तैः क्षुर एव विशेष्यते । यजमानमन्त्रस्त्वेवं व्याख्येयः । यदेतत्केशकृन्तनं तदेव वाचिकमानससत्यरूपमनुष्ठीयमानवपनरूपं तत्कृन्तनं संपादयितुं शक्नोमि । तेन च कृन्तनेन कर्म साङ्गं कर्तुं शक्नोमि । फलेन च समृद्धो भूयासमिति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ पञ्चमप्रपाठके षष्ठोऽनुवाकः ।

---

पञ्चमे चातुर्मास्ययाजिनां वपनमन्त्रा उक्ताः । षष्ठे तद्विधिरुच्यते । तत्राऽऽदावन्वयव्यतिरेकाभ्यां वपनक्रमं विधत्ते—

देवा वै यद्यज्ञेऽकुर्वत । तदसुरा अकुर्वत । तेऽसुरा ऊर्ध्वं पृष्ठेभ्यो नापश्यन् । ते केशानग्रेऽवपन्त । अथ श्मश्रूणि । अथोपपक्षौ । तत-

स्तेऽवाञ्च आयन् । पराभवन् । यस्यैवं वपन्ति । अवाङेति ( १ ) । अथो परैव भवति । अथ देवा ऊर्ध्वं पृष्ठेभ्योऽपश्यन् । त उपपक्षावग्रेऽवपन्त । अथ श्मश्रूणि । अथ केशान् । ततस्तेऽभवन् । सुवर्गं लोकमायन् । यस्यैवं वपन्ति । भवत्यात्मना । अथो सुवर्गं लोकमेति (२), इति ।

देवैर्यद्यदङ्गं यज्ञेऽनुष्ठितं तत्तदङ्गमसुरास्तथैवान्वतिष्ठन् । वपने तु स्वबुद्ध्यैव प्रवृत्ताः । पृष्ठशब्देन तत्समीपवर्तिनौ कक्षावुपलक्ष्येते । ते सर्वेऽप्यसुराः स्वकीयान्कक्षानारभ्योर्ध्वं वपनं कर्तव्यमिति शास्त्रार्थं नापश्यन्नाज्ञासिषुः । अज्ञात्वा च केशश्मश्रूपपक्षक्रमेणाधोमुखप्रवृत्तं वपनं कृत्वा स्वयमवाञ्चो नीचा भूत्वा लोके समागत्य पराभूताः । एवमन्योऽपि नीचो भूत्वा लोके समागत्य पराभवति । देवास्तु कक्षेभ्य ऊर्ध्वक्रमं ज्ञात्वा कक्षश्मश्रुकेशक्रमेण वपनं कृत्वा लोकेऽस्मिन्नैश्वर्यं प्राप्ता ऊर्ध्वक्रमेण स्वर्गं च प्राप्नुवन् । अन्योऽप्येवं कृत्वाऽत्र स्वयमेव प्रभुर्भवति स्वर्गं च प्राप्नोति ।

ऊर्ध्वक्रमेण सह विकल्पार्थं क्रमान्तरं विधत्ते—

अथैतन्मनुर्वप्त्रे मिथुनमपश्यत् । स श्मश्रूण्यग्रेऽवपत । अथोपपक्षौ । अथ केशान् । ततो वै स प्राजायत प्रजया पशुभिः । यस्यैवं वपन्ति । प्र प्रजया पशुभिर्मिथुनैर्जायते, इति ।

वप्त्रे यो वप्ताऽध्वर्युस्तदर्थं तस्यानुष्ठानार्थं तन्मिथुनमूर्ध्वमवाञ्चं चेति द्विविधं वनप्रकारं मनुरपश्यत् । दृष्ट्वा च मध्यवर्तीनि श्मश्रूण्यादावुप्त्वा ततोऽधोवर्तिनोः कक्षयोर्वपनं कृत्वा पश्चात्तदूर्ध्ववर्तिनां केशानां वपनं चकार । ततस्तादृशाद्वपनात्स मनुः प्रजया पशुभिश्च प्रभूतोऽभूत् अन्योऽप्येवं कृत्वा मनुष्यमिथुनैः पशुमिथुनैश्च प्रभूतो भवति ।

तदेतद्वपनं प्रशंसति—

देवासुराः संयत्ता आसन्। ते संवत्सरे व्यायच्छन्त। तान्देवाश्चातुर्मास्यैरेवाभिप्रायुञ्जत (३)। वैश्वदेवेन चतुरो मासोऽवृञ्जतेन्द्रराजानः। ताञ्छीर्षं नि चावर्तयन्त परि च। वरुणप्रघासैश्चतुरो मासोऽवृञ्जत वरुणराजानः। ताञ्छीर्षं नि चावर्तयन्त परि च। साकमेधैश्चतुरो मासोऽवृञ्जत सोमराजानः। ताञ्छीर्षं नि चावर्तयन्त परि च। या संवत्सर उपजीवाऽऽसीत्। तामेषामवृञ्जत। ततो देवा अभवन्। पराऽसुराः (४)। य एवं विद्वाꣳश्चातुर्मास्यैर्यजते। भ्रातृव्यस्यैव मासोऽवृङ्क्ते। शीर्षन्नि च वर्तयते परि च। यैषा संवत्सर उपजीवा। वृङ्क्ते तां भ्रातृव्यस्य। क्षुधाऽस्य भ्रातृव्यः पराभवति, इति।

देवाश्चासुराश्च युद्धोद्युक्ताः सन्तः संवत्सरानुष्ठानसाध्ये फले व्यायच्छन्त विरोधमारभन्त। अस्माकमेवेदं फलं भवत्विति परस्परं कलहं कृतवन्तः। तदानीं तानसुरानभिलक्ष्य तेषां फलं वारयितुं चातुर्मास्यैरेवानुष्ठानं कृतवन्तः। तेषु च देवेषु त्रयो व्यूहाः। इन्द्रस्वामिक एको व्यूहः। वरुणस्वामिको द्वितीयः। सोमस्वामिकस्तृतीयः। तत्रेन्द्रस्वामिका देवा वैश्वदेवेन पर्वणा चतुरो मासानसुरसंबन्धिनो विनाशितवन्तः। विनाशितानेव तन्मासानभिलक्ष्य ताञ्छीर्षं स्वकीये शिरसि निवर्तनं च परिवर्तनं च कृतवन्तः। वपनीयानां केशानां स्थापनीयेभ्यः शिखागतकेशेभ्यः पृथक्करणं निवर्तनम्। पृथक्कृतानां वपनं परिवर्तनम्। एवमुत्तरव्यूहद्वयेऽपि योजनीयम्। एवं

त्रिविधमासचतुष्टयानुष्ठानेनैकस्मिन्संवत्सरे तैरसुरैरुपजीवनाय या धनादिसंपत्संपादितैषामसुराणां तां संपदं विनाशितवन्तः। ततो देवाः संपन्ना अभवन्। असुराश्च पराभूताः। एवं ज्ञात्वा चातुर्मास्यानुष्ठानेन भ्रातृव्यसंबन्धिनो मासान्विनाश्य तद्विनाशनार्थं स्वशिरसि निवर्तनपरिवर्तने कृत्वा वैरिणः संवत्सरोपजीव्यां संपदं सम्यग्विनाशयति। स च शत्रुरन्नाभावेन क्षुत्पीडितो भवति।

अथ वपनसाधनं विधत्ते—

लोहितायसेन निवर्तयते। यद्वा इमामग्निर्ऋतावागते निवर्तयति। एतदेवैना॰ रूपं कृत्वा निवर्तयति। सा ततः श्वः श्वो भूयसी भवन्त्येति (५)। प्रजायते। य एवं विद्वाँल्लोहितायसेन निवर्तयते। एतदेव रूपं कृत्वा निवर्तयते। स ततः श्वः श्वो भूयान्भवन्नेति। प्रैव जायते, इति।

अयसा निर्मितः क्षुर आयसः। स च लोहितस्ताम्रमिश्रेणायसा निर्मितत्वात्। तादृशेन क्षुरेण केशान्निवर्तयेद्वपनं कुर्यादित्यर्थः। लोके संचरन्दावाग्निर्ऋतौ घर्मकालरूपे समागते सति यदेवोग्ररूपं धृत्वेमां भूमिं निवर्तयति शुष्कजलाशयां शातितपलाशपादपां लूनधान्यां मुण्डितामिव करोति तदानीमग्निरेतदेव लोहितक्षुरसमानरूपं कृत्वेमां निवृत्तजलादियुक्तां करोति। सा च भूमिर्दग्धतृणा सती तत ऊर्ध्वमुत्तरोत्तरदिवसे भूयसी भवन्ती प्रजायते वर्धमाना सती तृणादिकमुत्पादयति। एवमन्योऽपि लोहितायसेन क्षुरेण वपनं प्राप्नुवन्नग्निसमानरूपं तस्य कृत्वा वपनं प्राप्नोति। स च तत ऊर्ध्वं धनादिभिः समृद्धो भवँल्लोकं संचरति प्रजाश्चोत्पादयति।

वपनीयानामितरेषां च केशानां विभागकरणे साधनं विधत्ते—

त्रेण्या शलल्या निवर्तयेत। त्रीणि त्रीणि वै देवानामृद्धानि। त्रीणि च्छन्दा॰सि। त्रीणि सवनानि। त्रय इमे लोकाः (६)। ऋद्ध्या-

मेव तद्वीर्य एषु लोकेषु प्रतितिष्ठति, इति ।

तिस्र एण्यः श्वेतराजयो यस्याः शलल्याः सा त्रेणी । शललीशब्देन शललाख्यस्य क्षुद्रमृगस्य पुच्छभागवर्ती तीक्ष्णाग्रलोहशलाकासदृशो रोमविशेष उच्यते । तया श्वेतराजित्रययुक्तया शलल्या वपनीयान्केशानितरेभ्यः पृथक्कुर्यात् । तच्च श्वेतराजित्रयं प्रशस्तम् । यतो देवानां संबन्धीनि समृद्धवस्तूनि प्रत्येकं त्रिसंख्यायुक्तानि दृश्यन्ते । गायत्री त्रिष्टुब्जगतीत्येतानि च्छन्दांसि त्रिसंख्याकानि । प्रातर्माध्यंदिनतृतीयाख्यानि सवनानि च त्रिसंख्याकानि । लोकाश्च त्रिसंख्याकाः । अतो राजित्रययोगे सति देवसंबन्धिन्यां समृद्धौ वीर्ये लोकत्रये च प्रतितिष्ठति ।

वपनकर्म साधनं च विधाय वपनं विधत्ते—

यच्चातुर्मास्ययाज्यात्मनो नावद्येत । देवेभ्य आवृश्च्येत । चतृषु चतृषु मासेषु निर्वर्तयेत । परोक्षमेव तद्देवेभ्य आत्मनोऽवद्यत्यनाव्रस्काय, इति ।

चातुर्मास्ययाजी स्वशरीरांशं यदि देवेभ्यो नावद्येत्तदा देवेभ्यो विच्छिद्येत । अतो विच्छेदाभावाय तदा तदा मासचतुष्टये वपनं कुर्यात् । तथा सति वपनव्यवधानेन स्वशरीरावदानमेव देवार्थं करोति । तच्चाविच्छेदाय भवति ।

तदेतद्वपनं प्रशंसति—

देवानां वा एष आनीतः । यश्चातुर्मास्ययाजी । य एवं विद्वान्नि च वर्तयते परि च । देवता एवाप्येति । नास्य रुद्रः प्रजां पशूनभिमन्यते ( ७ ), इति ।

एत्येत्ययुञ्जतासुर एति लोका मन्यते ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके पञ्चमाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

योऽयं चातुर्मास्ययाजी स एष देवानां स्वभूतः सल्लोके समानीतः । तस्मा-

देवं विद्वान्पुरुषः शलल्या केशान्पृथक्कुर्यात् । लोहितायसेन वपेच्च । स देवता एव प्राप्नोति । अस्य प्रजां पशून्रुद्रो न हिनस्ति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

अथ पञ्चमप्रपाठके सप्तमोऽनुवाकः ।

षष्ठे चातुर्मास्यशेषो वपनविधिरुक्तः । सप्तमे त्वग्निचयनशेषा इष्टकोपधानमन्त्रा उच्यन्ते । "प्राची दिशाम्" इत्यादिभिर्मन्त्रैर्या अपानभृत इष्टका उक्तास्तदुपधानादूर्ध्वं "आयुषः" इत्यादिभिर्मन्त्रैर्द्वादशसंतत्याख्या इष्टका उपधेयाः । तन्मन्त्रपाठस्तु—

आयुषः प्राणꣳ संतनु । प्राणादपानꣳ संतनु ।
अपानाद्व्यानꣳ संतनु । व्यानाच्चक्षुः संतनु ।
चक्षुषः श्रोत्रꣳ संतनु । श्रोत्रान्मनः संतनु ।
मनसो वाचꣳ संतनु । वाच आत्मानꣳ
संतनु । आत्मनः पृथिवीꣳ संतनु । पृथिव्या
अन्तरिक्षꣳ संतनु । अन्तरिक्षाद्दिवꣳ संतनु ।
दिवः सुवः संतनु (१), इति ।

पृथिव्या अन्तरिक्षꣳ संतनु द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके पञ्चमाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

हे इष्टक आयुष्प्राणयोः परस्परं संततमविच्छेदं कुरु । आयुष इति तृतीयार्थे पञ्चमी । आयुषा सह प्राणं संयोजयेत्यर्थः । एवमुत्तरत्रापि योज्यम् । आत्मा परो जीवो वा । द्यौर्द्युलोकः । सुवःशब्देन तत्रत्यो भोगस्थानविशेष उच्यते ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

अथ पञ्चमप्रपाठकेऽष्टमोऽनुवाकः।

सप्तमे संतत्याख्येष्टकामन्त्रा उक्ताः। अष्टमेऽथर्वशिरोभिधानानामिष्टकानां दशानां मन्त्रा उच्यन्ते। ताश्चेष्टकाः "प्राच्या त्वा दिशा सादयामि" इत्येतैर्मन्त्रैरुपधेयाभ्य इष्टकाभ्य ऊर्ध्वं पञ्चम्यां चितावुपधेयाः। तत्र प्रथमामृचमाह—

इन्द्रो॑ दधी॒चो अ॒स्थभिः॑। वृ॒त्राण्य-

प्र॑तिष्कुतः। ज॒घान॑ नव॒तीर्नव॑, इति।

अथर्वणः पुत्रः कश्चिदृषिर्दध्यङ्नामा। तस्य यान्यस्थीनि वज्रसमानि तैरस्थिभिर्वृत्राणि निवारकाणि परबलानि जघान। कीदृश इन्द्रः। अप्रतिष्कुतः प्रतिकूलो भूत्वा कुतोऽयमित्येवं निराकर्ता वैरी यस्यासौ प्रतिष्कुः स्तथाविधशत्रुराहित्यादयमप्रतिष्कुतः। कियन्ति वृत्राणि नवसंख्याका नवतीर्दशाधिकान्यष्टशतानीत्यर्थः। हे इष्टके तथाविधेन्द्ररूपा त्वमसि तादृशमिन्द्रस्त्वामुपदधात्विति वाक्यशेषोऽध्याहर्तव्यम्।

अथ द्वितीयामाह—

इ॒च्छन्नश्व॑स्य॒ यच्छिरः॑। पर्व॑ते॒ष्वप॑-

श्रितम्। तद्वि॑दच्छर्य॒णाव॑ति, इति।

अग्निः कदाचिदश्वो भूत्वा देवेभ्योऽपक्रम्य पर्वतेषु निलीनः। तदानीमयमिन्द्रस्तस्याश्वस्य यच्छिरो द्रष्टुमिच्छन्पर्वतेषु चचार तदानीं पर्वतेष्वाश्रितं तदश्वस्य शिरः शर्यणावन्नामके कस्मिंश्चित्पर्वते विदल्लब्धवान्। हे इष्टके त्वं तथाविधाश्वशिरोरूपाऽसि।

अथ तृतीयामाह—

अत्राह॒ गोर॑मन्वत। नाम॒ त्वष्टु॑रपी॒-

च्य॑म्। इ॒त्था च॒न्द्रम॑सो गृ॒हे, इति।

त्वष्टुः सूर्यस्य गोशब्दाभिधेयो रश्मिर्योऽस्ति तस्य नामात्राहास्मिन्नेवाग्नौ विद्यत इत्येवं यजमाना अमन्वत, अग्निं दीप्तं दृष्ट्वा सूर्यरश्मिरित्येव भावितवन्त इत्यर्थः। कीदृशं रश्मिनाम। अपीच्यमप्यञ्चति पुनः पुनर्गच्छतीत्यपीच्यम्। यदा यदा वह्निज्वाला तदा तदा सूर्यरश्मिरित्येवं तेषां निश्चयः। एतच्च युक्तम्। एतस्यैव तेजसो रात्रावग्निप्रवेशस्य दिवसे सूर्यप्रवे-

शस्य चाग्निहोत्रब्राह्मणे प्रपञ्चयिष्यमाणत्वात् । इत्था चन्द्रमसो गृहे । एवमेव चन्द्रमण्डले यो रश्मिस्तन्नामाप्यस्मिन्नेवाग्नौ मन्यन्ते । सूर्यरश्मेरेव चन्द्रगतत्वात् । “ सुषुम्नः सूर्यरश्मिश्चन्द्रमाः ” इति श्रुत्यन्तरात् । यः सूर्यरश्मिर्यश्च चन्द्ररश्मिस्तदुभयरूपेयमग्निज्वालेति तात्पर्यार्थः । हे इष्टके तथाविधाग्निरूपा त्वमसि ।

अथ चतुर्थीमाह—

इन्द्रमिद्गाथिनो बृहत् ( १ ) । इन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत, इति ।

गाथिनः सामगा इन्द्रमिदिन्द्रमेव बृहद्यथा महद्भवति तथा गायन्तीति शेषः । अर्किणः शस्त्रिणो होतारः । अर्केभिरर्चनीयैः शस्त्रैरिन्द्रं शंसन्तीति शेषः । वाणीरध्वर्योर्वाच इन्द्रमनूषत स्तुवन्ति । हे इष्टके तथाविधेन्द्ररूपा त्वमसि ।

अथ पञ्चमीमाह—

इन्द्र इद्धर्योः सचा । संमिश्ल आ वचोयुजा । इन्द्रो वज्री हिरण्ययः, इति ।

हर्योरश्वयोरिन्द्र इदिन्द्र एव सचा सक्तः । संबद्धो हरिद्वययुक्ते रथेऽवस्थित इत्यर्थः । तथा वचोयुजा नानाविधवाक्यसंदर्भयुक्तेन स्तोत्रेण, आ समन्तात्संमिश्लः संयुक्तः । स एवेन्द्रो वज्री वज्रहस्तः । हिरण्ययः सुवर्णाभरणयुक्तः ।

अथ षष्ठीमाह—

इन्द्रो दीर्घाय चक्षसे । आ सूर्यꣳ रोहयद्दिवि । वि गोभिरद्रिमैरयत, इति ।

अथेन्द्रो दीर्घाय चक्षसे दूरवर्तिनो दर्शनाय दिवि द्युलोके सूर्यमारोहयदारोहं कृतवान् । स च सूर्यो गोभी रश्मिभिरद्रिं पर्वतादियुक्तां भूमिं विशेषेणैरयत्प्रेरितवान्प्रकाशितवानित्यर्थः ।

अथ सप्तमीमाह—

इन्द्र वाजेषु नो अव । सहस्रप्रधनेषु च

(२) । उग्र उग्राभिरूतिभिः, इति ।

हे इन्द्र त्वमुग्रः प्रतिकूलनिवारणे तीव्रः सन्वाजेष्वन्नेषु सहस्रप्रधनेषु सहस्रसंख्याकेषु प्रकृष्टधनेषु च निमित्तभूतेषूग्राभिरूतिभिः प्रतिबन्धनिवारणाय तीव्रै रक्षणैर्नोऽस्मानव रक्ष ।

अथाष्टमीमाह—

तमिन्द्रं वाजयामसि । महे वृत्राय हन्तवे ।

स वृषा वृषभोऽभुवत्, इति ।

तथाविधगुणयुक्तमिन्द्रं वयं वाजयामसि गमयामो भक्त्या प्रेरयाम इत्यर्थः । किमर्थम् । महे वृत्राय हन्तवे महान्तं पापरूपं वैरिणं हन्तुम् । स चेन्द्रो वृषाऽस्माकं कामानां वर्षयिता सन्वृषभोऽभुवच्छ्रेष्ठो भवतु ।

अथ नवमीमाह—

इन्द्रः स दामने कृतः । ओजिष्ठः स बले

हितः । द्युम्नी श्लोकी स सौम्यः, इति ।

स तादृश इन्द्रो दामने दामकृत्ये बन्धने कृतः पाशैर्वशीकृत इत्यर्थः । स चेन्द्र ओजिष्ठोऽतिबलवान् । अत एव बले हितो बलकृत्ये वैरिविनाशनेऽस्माभिर्भक्त्या प्रेरितः । स चेन्द्रो द्युम्नी धनवान् । श्लोकी कीर्तिमान् । सौम्यो रमणीयः ।

अथ दशमीमाह—

गिरा वज्रो न संभृतः । सबलो अनप-

च्युतः । ववक्षुरुग्रो अस्तृतः (३), इति ।

बृहच्चास्तृतः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके पञ्चमाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

सोऽयमिन्द्रो गिराऽस्मदीयया स्तुतिरूपया वाचा वज्रो न वज्र इव संभृतः सम्यगस्माभिर्वशीकृतः । सबलो बलेन सैन्येन युक्तः । अनपच्युतः कदाचिदप्यपलायितः । ववक्षुर्युद्धभारं वोढुमिच्छुः । उग्रः शत्रूणां भयंकरः ।

अस्तृतः केनाप्यहिंसितः । ह इष्ट्र इहगिन्द्ररूपा त्वमसि । ईहगिन्द्रस्त्वामुपदधातित्विति सर्वत्र शेषोऽध्याहर्तव्यः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ पञ्चमप्रपाठके नवमोऽनुवाकः ।

---

अष्टमेऽथर्वशिरोभिधानामिष्टकानां मन्त्रा उक्ताः । नवमे सोमशेषभूता इष्टयो विधीयन्ते । तत्राऽऽदौ शब्दनिर्वचनेनेष्टीः प्रशंसति—

देवासुराः संयत्ता आसन् । स प्रजापतिरिन्द्रं ज्येष्ठं पुत्रमपन्यधत्त । नेदेनमसुरा बलीयाꣳसोऽहनन्निति । प्रह्लादो ह वै कायाधवः । विरोचनꣳ स्वं पुत्रमपन्यधत्त । नेदेनं देवा अहनन्निति । ते देवाः प्रजापतिमुपसमेत्योचुः । नाराजकस्य युद्धमस्ति । इन्द्रमन्विच्छामेति । तं यज्ञक्रतुभिरन्वैच्छन् (१) । तं यज्ञक्रतुभिर्नान्वविन्दन् । तमिष्टिभिरन्वैच्छन् । तमिष्टिभिरन्वविन्दन् । तदिष्टीनामिष्टित्वम् । एष्टयो ह वै नाम । ता इष्टय इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः, इति ।

देवाश्चासुराश्च यदा युद्धार्थमुद्यतास्तदानीं प्रजापतिः स्वकीयं ज्येष्ठं पुत्रमिन्द्रं युद्धभूमेरपनीय क्वचिद्गूढे स्थाने निहितवान् । तस्याप्ययमभिप्रायः । बलीयांसोऽसुरा एनं दुर्बलमिन्द्रं नेदहनन्नैव घ्नन्त्विति । तथा कयाधुनाम्नीताया हिरण्यकशिपुभार्यायाः पुत्रः प्रह्लादः स्वकीयं पुत्रं विरोचनमसुरसैन्यस्वामिनं युद्धभूमेरपनीय क्वचिन्निहितवान् । तस्याप्ययमभिप्रायः । एनं विरोचनं

देवाः सर्वथा मा घ्नन्त्विति । एवं च राजद्वयरहितयोः सेनयोरवस्थितयोः सत्योर्देवाः प्रजापतिसमीपं प्राप्यैवमूचुः । राजरहितस्य सैन्यस्य न क्वचिदपि युद्धमस्ति । युयुत्सवः सर्वेऽपि राजानमन्तरेण पलायिष्यन्ते । तस्मादिन्द्रं राजानं तत्र तत्रान्विच्छाम इत्युक्त्वा प्रजापतिनाऽनुज्ञातास्तमिन्द्रं लब्धुं ज्योतिष्टोमोक्थ्यादिरूपान्क्रतूननुष्ठितवन्तः । अङ्गभूतेष्टिरहितैस्तैर्महाक्रतुभिरिन्द्रमलब्ध्वा तत्र कारणमङ्गेष्टिवैकल्यं निश्चित्य ता इष्टीरनुष्ठाय ताभिरिष्टिभिरेनं लब्धवन्तः । एवं च सत्यन्वेषणसाधनत्वादेष्टय इत्येतासां नाम । तथाऽपि मुख्यं नाम गोपयित्वा परोक्षेण तिरोहितेन नाम्ना व्यवहर्तुमिष्टय इत्याचक्षते । अन्वेषणसाधनत्वमेष्टित्वम् । यजनसाधत्वमिष्टित्वम् । अतस्तेन व्यवहारे सति मुख्यं नाम परोक्षं भवति । देवानां च परोक्षं नाम प्रियम् । अत एव लोकेऽपि देवदत्तादिनाम परित्यज्याऽऽचार्या उपाध्याया मिश्रा इत्यादिनामभिः पूज्याः परितुष्यन्ति । यद्यप्यन्वेषणार्थस्वीकारेऽपीच्छतिधातोः क्तिन्प्रत्यये सति यजिधातुवदिष्टिरित्येव रूपं संपद्यते । तथाऽप्यौणादिकं कंचित्ककाररहितं प्रत्ययमभिप्रेत्य रूपमीदृशं श्रुत्या विवक्षितम् ।

याभिरिष्टिभिरिन्द्रमैच्छंस्तासां मध्ये प्रथमामिष्टिं दर्शयति—

तस्मा एतमाग्नावैष्णवमेकादशकपालं दीक्षणीयं निरवपन् । तदपह्नुत्यातन्वत । तान्पत्नीसंयाजान्त उपानयन् (२) । ते तदन्तमेव कृत्वोदद्रवन्, इति ।

तस्मादिन्द्रलाभार्थमग्नाविष्णुदेवताकमेकादशकपालं पुरोडाशयुक्तं दीक्षणीयाख्यं कर्मानुष्ठितवन्तः । तेषु देवेषु मध्ये यावद्भिर्देवैर्यजमानैर्ऋत्विग्रूपैः कर्मानुष्ठातुं शक्यते तावन्तो देवाः कृत्स्न देवसैन्यसंघादपक्रम्य क्वचिद्देवयजनदेशे तद्दीक्षणीयाख्यं कर्म विस्तारितवन्तः । तदानीमितरे देवास्तमिन्द्रमन्विष्य तैर्ऋत्विग्भिः पत्नीसंयाजपर्यन्ते कर्मण्यनुष्ठिते सतिताननुष्ठातृन्देवान्प्रति समीपे समानयन् । ते चर्त्विग्रूपा देवाः स्वप्रयोजनस्य निष्पन्नत्वात्पत्नीसंयाजान्तमेव तत्कर्म कृत्वा तत्परित्यज्योद्गताः ।

तावताऽपीन्द्रस्थैर्याभावे पुनस्त ऋत्विजः प्रायणीयाख्यामिष्टिं कृतवन्त इत्येतद्दर्शयति—

ते प्रायणीयमभिसमारोहन् । तदपह्नुत्यातन्वत । ताञ्छं-

ष्वन्त उपाऽऽनयन् । ते तदन्तमेव कृत्वोदद्रवन्, इति ।

अभिसमारोहन्प्रायणीयाख्यं कर्माभिलक्ष्य देवा जनं प्रविष्टाः । अन्यत्पूर्ववत् ।

पुनरपीन्द्रस्थैर्यायाऽऽतिथ्याख्यामिष्टिं दर्शयति—

त आतिथ्यमभिसमारोहन् । तदप्युत्थातन्वत । तानिडान्त उपाऽऽनयन् । ते तदन्तमेव कृत्वोदद्रवन् । तस्माद्देता एतदन्ता इष्टयः संतिष्ठन्ते ( ३ ), इति ।

पत्नीसंयाजानामेकविधत्वान्नास्ति तत्र संदेहः । शंय्विडयोर्द्वैविध्यमस्ति । पत्नीसंयाजेभ्यः पूर्वं होत्रा शंयुवाकेऽनूच्यमान आहवनीये परिधीननुप्रहराति । सोऽयमेकः प्रकारः । आश्वलायनस्तु पत्नीसंयाजानभिधाय तदूर्ध्वं शंयुवाकविकल्पमुदाजहार—" शंयुवाको भवेन्न वा " इति । पुरोडाशेनाऽऽज्येनेत्येवमिडाऽपि द्विविधा । तत्र पूर्वमिडान्तत्वं द्रष्टव्यम् ।

एवमिष्टीः प्रशस्य तास्तिस्र इष्टीर्विधत्ते—

एवꣳ हि देवा अकुर्वत । इति देवा अकुर्वत । इत्यु वै मनुष्याः कुर्वते, इति ।

यस्मादेवमुक्तप्रकारेण देवा अकुर्वत तस्मान्मनुष्या अप्यनेनैव प्रकारेणेष्टीः कुर्युः । मध्ये पठितमिति देवा इति वाक्यं मनुष्यवक्तृकोऽनुवादः । इति देवा इत्यनेन प्रकारेण कृतवन्त इत्यनूद्य तत्सर्वं देवानुष्ठितप्रकारं हृदि निधाय पश्चात्तदनुतिष्ठन्ति ।

अथोपसदनुष्ठानप्रकारं विधातुं स्तौति—

ते देवा ऊचुः । यद्वा इदमुच्चैर्यज्ञेन चराम । तन्नोऽसुराः पाप्माऽनुविन्दन्ति । उपाꣳशूपसदा चराम । तथा नोऽसुराः पाप्मा नानुवेत्स्यन्तीति । त उपाꣳशूपसदमतन्वत । तिस्र

1 क. पूर्वं शंय्विडा° ।

एव सामिधेनीरनूच्य (४) । स्रुवेणाऽऽघारमाघार्य । तिस्रः पराचीराहुतीर्हुत्वा । स्रुवेणोपसदं जुहवांचक्रुः । उग्रं वचो अपावधीं त्वेषं वचो अपावधीꣳ स्वाहेति । अशनयापिपासे ह वा उग्रं वचः । एनश्च वैरहत्यं च त्वेषं वचः । एतꣳ ह वाव तच्चतुर्धा विहितं पाप्मानं देवा अपजघ्निरे, इति ।

असुराः सर्वत्र स्वयं प्रयोगमजानाना देवसमीपे कंचिद्गूढपुरुषमवस्थाप्य ततस्तेन ज्ञात्वा स्वयमप्यनुतिष्ठन्ति । एवं वृत्तान्तं विज्ञाय देवाः परस्परमिदमूचुः । यदि वयमुच्चध्वनिना यज्ञमनुतिष्ठामस्तर्ह्यस्माननु सर्वं प्रयोगं पापिष्ठा असुरा जानन्ति । अतस्तज्ज्ञाननिवारणायोपांशु यथा भवति तथोपसत्कर्मानुष्ठानं निष्पादयामः । तथा सति पापिष्ठा असुरा अस्माननुप्रयोगं न ज्ञास्यन्तीत्येवं निश्चित्योच्चध्वनिं परित्यज्योपांश्वेवोपसदमन्वातिष्ठन् । तत्प्रकारस्त्वेतादृशः । षोदकप्राप्ताः पञ्चदश सामिधेनीः परित्यज्य तिस्र एव सामिधेन्यस्तैरनूक्तास्तथा स्रुच्याऽऽघारं परित्यज्य स्रौवाघारमेवानुष्ठितवन्तः । तदूर्ध्वं तिस्रः प्रधानाहुतीरग्निं सोमं विष्णुं चोद्दिश्य हूयमानाः पराचीर्हुतवन्तः । प्रकृतौ तु प्रतिप्रधानं पृथगेव वेद्या उत्तरतो दक्षिणदेशमागत्य होमः क्रियते । इह तु सकृदेवाऽऽगत्य होमत्रयं क्रियते । तदिदं पुनरावृत्तिराहित्यं पराचीशब्देन विवक्षितम् । तदेतदाहुतित्रयं हुत्वा चतुर्थीमुपसद्रूपां प्रधानाहुतिं "या ते अग्नेऽयाशया" इति संहितायामाम्नातमन्त्रानुच्चार्य स्रुवेण हुतवन्तः । तस्य मन्त्रस्योत्तरभाग उग्रं वच इत्यादिवाक्यमस्ति । तत्र क्षुत्पिपासे एवोग्रं वच उच्यते । क्षुधिताः स्मः पिपासिताः स्मो नास्माकमन्नपाने विद्येते इत्येतद्वाक्यं घोरं कृपालवः श्रोतुं न सहन्ते । तदेतदुग्रत्वं यदेतद्गोवधादिरूपमुपपातकं यच्च वीरहत्यादिरूपं महापातकं तदेतत्त्वेषं वच इत्यनेनाभिधीयते । त्वेषशब्देन दीप्तिवाचिना चित्तक्लेशरूपा ज्वालोपचर्यते । उपपातकं महापातकं च निष्पन्नमिति शृण्वतश्चित्ते महान्क्लेशो भवति । क्षुत्पिपासे महापातकोपपातके इत्येवं फलरूपेण तत्साधनरूपेण चावस्थितं चतुर्विधं पाप्मानं

देवा उपसद्धोमेन विनाशितवन्तः । अयं देवैरनुष्ठितप्रकारः सर्वोऽपि सूत्रकारेण संगृहीतः—'ध्रौवाद्दष्टौ जुह्वां गृह्णाति चतुरुपभृति घृतवतीशब्दे जुहूपभृतावादाय दक्षिणा सकृदभिक्रान्त उपांशुयाजवत्प्रचरत्यर्धेन जौहवस्याग्निं यजत्यर्धेन सोममौपभृतं जुह्वामानीय विष्णुमिष्ट्वा प्रत्याक्रम्य या ते अग्नेऽयाशया तनूरिति स्रुवेणोपसदं जुहोति'' इति ।

तमिमं प्रकारं विधत्ते—

तथो एवैतद्यजमानः । तिस्र एव सामिधेनीरनूच्य । स्रुवेणाऽऽघारमाघार्य (५) । तिस्रः पराचीराहुतीर्हुत्वा । स्रुवेणोपसदं जुहोति । उग्रं वचो अपावधीं त्वेषं वचो अपावधीꣳ स्वाहेति । अशनयापिपासे ह वा उग्रं वचः । एनश्च वैरहत्यं च त्वेषं वचः । एतमेव तच्चतुर्धा विहितं पाप्मानं यजमानोऽपहते, इति ।

तदेतद्यजमानवाक्यं पूर्वोक्तदेववाक्यवद्व्याख्येयम् ।

उपसदनुष्ठानप्रकारं विधायानन्तरमग्नीषोमीयपश्वनुष्ठानं विधातुं प्रस्तौति—

तेऽभिनीयैवाह्नः पशुमालभन्त । अह्न एव तद्देवा अर्तिं पाप्मानं मृत्युमपजघ्निरे । तेनाभिनीयैव रात्रेः प्राचरन् । रात्रिया एव तद्देवा अर्तिं पाप्मानं मृत्युमपजघ्निरे (६), इति ।

अनुष्ठितोपसदस्ते देवा अहरभिनीयैवास्तमयात्प्रागह्नो विशिष्टं कालं प्राप्यैवाग्नीषोमीयं पशुमालभन्त । योऽयमर्तिं जीवनार्थवृत्तिप्रतिबन्धकं पाप्मानं मृत्युसदृशं तेन पश्वालम्भेनाह्नोऽपनीय देवा विनाशितवन्तः । अभिनीयैवाहानि पशुमुपक्रम्यैव तेन पशुना रात्रेः संबन्धिनि कालविशेषेऽनुष्ठितवन्तः । तेनानुष्ठानेन देवा रात्र्याः सकाशात्तं पाप्मानमपनीय नाशित-

वन्तः । अत्र प्रयाजपर्यन्तमहन्यनुष्ठेयं शेषो रात्रावनुष्ठेय इति । एतमर्थं सूत्रकारः स्पष्टमुदाजहार—“दिवा प्रयाजैः प्रचर्य” इति ।

तमिममनुष्ठानप्रकारं विधत्ते—

तस्मा॑दभि॒नी॒यैवाह्नः॑ प॒शुमाल॑भेत । अह्ना॑ ए॒व
तद्यज॑मा॒नोऽर्ति॑ पा॒प्मान॒म् भ्रातृ॑व्या॒नप॑नुदते ।
तेना॑भि॒नी॒यैव॒ रात्रेः॒ प्रच॑रेत । रात्रि॑या ए॒व
तद्यज॑मा॒नोऽर्ति॒ पा॒प्मान॑म् भ्रातृ॑व्या॒नप॑नुदते, इति ।

यस्माद्देवैरनुष्ठितं तस्माद्यजमानोऽपि तथाऽनुतिष्ठेत् । देववाक्यवद्यजमान-वाक्यं व्याख्येयम् । तत्र मृत्युरूपः पाप्माऽत्र तु भ्रातृव्यरूप इति विशेषः ।

उक्तस्य पशोर्देवतासंबन्धं विधत्ते—

स ए॒ष उ॑पव॒सथी॒येऽह॑न्द्विदेव॒त्यः॑ प॒शुराल॑भ्यते । द्व॒यं
वा अ॒स्मिँल्लो॒के यज॑मानः । अ॒स्थि च॑ मा॒ꣳसं च॑ ।
अ॒स्थि चै॒व तेन॑ मा॒ꣳसं च॒ यज॑मानः॒ सꣳस्कु॑रुते, इति ।

यस्मिन्नहनि देवता यजमानस्य समीपे निवसति तदहरुपवसथीयम् । अत एवान्यत्राऽऽम्नायते—“उपास्मिञ्छ्वो यक्ष्यमाणे देवता वसन्ति” इति । अत्राप्यग्नीषोमीयानुष्ठानदिनादूर्ध्वदिने यजमानः सोमेन यक्ष्यते । तस्मा-दिदमहरुपवसथीयम् । यस्मिन्नहनि यः पशुरालभ्यः स द्विदेवत्यः । तौ च देवावग्नीषोमौ । “यदग्नीषोमीयं पशुमालभते” इत्यन्यत्राऽऽम्नानात् । यज-मानस्य शरीरमप्यस्मिन्मनुष्यलोकेऽस्थिमांसद्वयात्मकं ततो द्विदेवत्येन पशु-ना यजमानः स्वकीयमस्थि मांसं च संस्कुरुते ।

एतत्पशुदेवताप्रसङ्गेन सवनीयपशुदेवतामग्निरूपामनूबन्ध्याख्यपशुदेवतां मित्रावरुणरूपां च मिलित्वा प्रशंसति—

ता वा ए॒ताः पञ्च॑ दे॒वताः॑ । अ॒ग्नीषोमा॑व॒ग्निर्मि॑-
त्रावरु॑णौ । पङ्क्त॑ पा॒ङ्क्तो वै यज॑मानः । त्वङ्मा॒ꣳ-
सꣳ स्ना॒वास्थि॑ म॒ज्जा । ए॒तमे॒व तत्प॑ञ्च॒धा

विहितमात्मानं वरुणपाशान्मुञ्चति ।

भेषजतायै निर्वरुणत्वाय, इति ।

ता वा एताः पशुदेवताः पञ्चसंख्याकाः । कास्ता इति ता उच्यन्ते । उपवसथीयेऽह्नि द्वावग्नीषोमावस्य पशोर्देवौ । परेद्युः सवनेष्वग्निः सवनीयपशोर्देवः । अन्ते मित्रावरुणावनूबन्ध्याख्यपशोर्देवौ । यजमानोऽप्यवयवपञ्चकोपेतत्वात्पञ्ची । पञ्चभिस्त्वगादिभिः पञ्चीति समासे सति पञ्चपञ्ची । अतः पशुत्रये पञ्चदेवता यजमानः पञ्चावयवोपेतं स्वदेहं वरुणपाशान्मोचयति । अतस्तद्भजनमौषधसिद्ध्ये भवति । सा च सिद्धिर्वरुणोपद्रवपरिहाराय भवति । तस्मादेताः पञ्च देवता भजनीयाः ।

अथ प्रातरनुवाकाख्यऋक्समूहे छन्दोविशेषान्विधत्ते—

तꣳ सप्तभिश्छन्दोभिः प्रातरह्वयन् । तस्मात्सप्तचतुरुत्तराणि च्छन्दाꣳसि प्रातरनुवाकेऽनूच्यन्ते, इति ।

देवास्तमिन्द्रं प्रातःकाले सप्तभिश्छन्दोभिराहूतवन्तः । तस्मात्कारणात्प्रातरनुवाके गायत्रीत्रिष्टुब्जगत्याख्यानि मुख्यानि च्छन्दांसि चतुर्भिरुत्तरैरुष्णिगनुष्टुब्बृहतीपङ्क्त्याख्यैश्छन्दोभिः सहितानि प्रैषमनुवक्तव्यानि । ताश्छन्दोविशेषयुक्ता ऋच ऐतरेयब्राह्मणेऽवगन्तव्याः ।

अथ बहिष्पवमानाख्यस्य स्तोत्रस्य प्रथमामृचं विधत्ते—

तमेतयोपसमेत्योपासीदन् । उपास्मै गायता नर इति । तस्मादेतया बहिष्पवमान उपसद्यः (७), इति ।

ऐच्छन्ननयꣳस्तिष्ठन्तेऽनूच्यानूच्य स्रुवेणाऽऽघारमाघार्य रात्रिया एव तद्वेवा अवर्तिं पाप्मानं मृत्युमपजघ्निरे मित्रावरुणौ नव च ।

[जुहवामितꣳ ह देवाथो जुहोत्येतमेव तद्यजमानस्तेऽभिनीय देवा यजमानो देवा देवा यजमानो यजमानः प्राचरन्प्राचरेदालभन्तालभेत मृत्युमपजघ्निरे मित्रावरुणौ भ्रातृव्यान् (१) ] ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके पञ्चमाध्याये नवमोऽनुवाकः ॥ ९ ॥

देवास्तमिन्द्रमुपास्मा इत्येतयर्चा समीपे प्राप्योपाविशन् । तस्मादेतयर्चा बहिष्पवमानाख्यः स्तोत्रविशेषः सामगैरारब्धव्यः ।

अथ मीमांसा । नवमाध्यायस्य प्रथमपादे चिन्तितम्—

मन्द्रादिकमपूर्वाय परायावान्तराय वा ।
फलादाद्यो नो समं तल्लक्षणा तु विशिष्यते ॥ [ इति ] ।

ज्योतिष्टोमे श्रूयते—" यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयान्मन्द्रं प्रायणीयायां मन्द्रतरमातिथ्यायामुपांशूपसत्सूच्चैरग्नीषोमीये " इति । अत्र ध्वनेरुच्चावचभावः । परमापूर्वप्रयुक्तस्तस्य फलवत्त्वादिति चेत् । मैवम् । अवान्तरापूर्वेऽपि समानं फलवत्त्वं परमापूर्वजननद्वारेण फलसंबन्धात् समाने च फलवत्त्वे संनिकृष्टलक्षणया निर्णयः । तथा हि—दीक्षणीयादिशब्दा अङ्गकर्मवाचिनः । न च मन्द्रत्वादिधर्माणां कर्मस्वरूपं प्रयोजकम् । अपूर्वप्रयुक्तेर्निर्णीतत्वात् । ततो दीक्षणीयादिशब्दैरपूर्वं लक्षणीयम् । तत्र स्ववाक्यगतमवान्तरापूर्वं संनिकृष्टं तद्द्वारकं परमापूर्वं विप्रकृष्टम् । तस्मादवान्तरापूर्वप्रयुक्ता एते धर्माः । अश्वमेधगतत्रैधातवीयायामूहाभावः फलम् । तथा ह्यश्वमेधे समाम्नायते—" त्रैधातवीया दीक्षणीया भवति " इति । यदि परमापूर्वप्रयुक्तं स्यात्ततस्तस्योपकारविशेषनिबन्धन इति तत्कार्यापन्नायां त्रैधातवीयायां भविष्यति । अथाऽऽग्नावैष्णवापूर्वप्रयुक्तस्तदा त्रैधातवीयायां तदपूर्वं न भवति किंत्वन्यदेवेति नास्त्यूहः ।

दशमाध्यायस्य सप्तमपादे चिन्तितम्—

प्रायणीयातिथ्ययोः किं विकल्पः शंय्विडान्तयोः ।
नियमो वा विकल्पः स्यान्निषेधपरिसंख्यया ॥
शंय्विडान्तत्ववाक्याच्च नियमो विधिमात्रतः ।
नित्यानुवादो नञ्वाक्यं दोषबाहुल्यमन्यथा ॥ [ इति ] ।

ज्योतिष्टोमे श्रूयते–"शंय्वन्ता प्रायणीया संतिष्ठते न पत्नीः संयाजयन्ति" इति । इडान्ता आतिथ्याः संतिष्ठन्ते नानूयाजान्यजति " इति । प्रकृतौ यदा होता " तच्छंयोः " इति मन्त्रं जपति तदानीमध्वर्युः परिधीनग्नौ प्रक्षिपति । तदाह कल्पसूत्रकारः—" अनूच्यमाने शंयुवाक आहवनीये परिधीन्प्रहरति " इति । ततो हविःशेषेषु भक्षितेषु पत्नीः संयाजयन्तीति क्रमः । तथा प्रधानयागनारिष्टहोमप्राशित्रादिभक्षणेडाभक्षणानूयाजसूक्तवाकशंयुवाका इत्यधस्तनः प्रयोगक्रमः । पत्नीसंयाजानामुपरि फलीकरणहोमप्रायश्चित्तहोमकपालोद्वासनैरिष्टिः समाप्यते । एवं स्थिते विकृति-

रूपायाः प्रायणीयेष्टेः शंयुवाकान्तत्वमातिथ्येष्टेरिडाभक्षणान्तत्वं च विकल्पितं स्यात् । कुतः । निषेधवाक्यविधिवाक्याभ्यां प्रकरणद्वयप्रतीतेः । तथा हि—शंय्वन्तत्वेडान्तत्वविधिनैवोपरितनपत्नीसंयाजानूयाजनिषेधे पुनर्निषेधवचनं परिसंख्यार्थम् । पत्नीसंयाजानूयाजव्यतिरिक्ते नास्ति निषेध इति परिसंख्या । तेन प्रकृतिवद्यथाप्राप्तं कपालोद्वासनान्तत्वमनयोरिष्ट्योः प्रतीयते । विधिवाक्येन च शंय्विडान्तत्वम् । तेन व्रीहियववद्विकल्प इति प्राप्ते ब्रूमः । विधिमात्रस्यात्र प्रवृत्तेः शंय्वन्तत्वमिडान्तत्वं च तयोः प्रतिनियतम् । पत्नीसंयाजाद्यभावस्त्वर्थसिद्धः । ततो नञ्पदयुक्तमुपरितनं प्रतिषेधवाक्यं नित्यानुवादः । पत्नीसंयाजाद्यकरणाल्लाघवं भवतीति । अन्यथा बहवो दोषाः प्रसज्येरन् । विकल्पे तावदष्टौ दोषाः प्रसिद्धाः । परिसंख्यायां च त्रयो दोषाः । विधिपरिसंख्याभ्यां वाक्यभेदोपसंहारोऽपरो दोषः । ततः शंय्विडान्तत्वं नियतम् ।

तत्रैवान्यच्चिन्तितम्—

तत्रैव शंय्विडे पूर्वे परे वा स्वेच्छयाऽथवा ।
परे एवाथवा पूर्वे एवाऽऽद्यो द्विविधश्रुतेः ॥
निषेधस्यार्थवत्त्वाय परे एवानुवादगीः ।
पूर्वैकवाक्यतां याति पूर्वे एवाविरोधतः ॥ [ इति ] ।

प्रायणीयातिथ्ययोरेवान्तत्वेन निर्णीते शंय्विडे पुनः संदिह्येते । प्रकृतौ द्विविधे शंय्विडे पत्नीसंयाजेभ्यः पुरस्तादुपरिष्टाच्च विहिते । ते चात्र चोदकप्राप्ते । तत्र द्विविधश्रुतेरर्थे चोदकेनातिदिष्टे सति विशेषनियामकाभावादिच्छया स्वीकार्ये इत्येकः पक्षः । यदि प्रायणीयापूर्वशंय्वन्ताऽऽतिथ्या च पूर्वेडान्ता स्यात्तदानीमन्तत्वविधिनैव ताभ्यां शंय्विडाभ्यामूर्ध्वमप्राप्तानां पत्नीसंयाजानामनूयाजानां च वारितत्वात्तन्निषेधो व्यर्थः स्यात् । परयोः शंय्विडयोरन्तत्वेन ताभ्यां शंय्विडाभ्यां पूर्वप्राप्तानां तेषामनिवारणात्तन्निवारणाय सार्थको निषेधः । तस्मात्परे एव शंय्विडे ग्राह्ये इति द्वितीयः पक्षः । निषेधोऽयं नित्यानुवाद इत्युक्तम् । स च पूर्वयोः शंय्विडयोरन्तत्वेऽप्येकवाक्यतामापाद्यार्थवादत्वेनोपपद्यते । असंजातविरोधिन्यौ हि पूर्वे शंय्विडे । तस्मात्ते एव ग्राह्ये इति राद्धान्तः । तत्रैवान्यच्चिन्तितम्—

उपसत्सु निषिद्धेभ्यः शिष्टं सर्वं किमाचरेत् ।
यावदुक्तमुताऽऽद्योऽस्तु चोदकस्यानिवारणात् ॥

स्रौवाघारे पुनः श्रुत्या क्लिष्टस्य परिसंख्यया ।
अपूर्वार्थत्वतो वाऽन्त्योऽनुवादोऽत्र निषेधगीः ॥ [ इति ] ।

ज्योतिष्टोमे विहितासूपसत्सु पठ्यते—“अप्रयाजास्ता अननूयाजाः” इति । तत्र निषिद्धान्प्रयाजानूयाजान्वर्जयित्वाऽवशिष्टं चोदकप्राप्तमङ्गजातं सर्वमाचरणीयमिति शाखे ब्रूमः । प्रकृतौ विहित एव स्रौवाघारः पुनरिह विधीयते । स च चोदकप्राप्तमन्यत्सर्वमङ्गजातं परिसंचष्टे । अन्यथा पुनर्विधानवैयर्थ्यात् । ननु पुनर्विधानं प्रतिप्रसवार्थम् । अत एव श्रुतिरत्र स्रौवाघारमभावशङ्कानिराकरणपूर्वकं विदधाति, “नान्यामाहुतिं पुरस्ताज्जुहुयाद्यदन्यामाहुतिं पुरस्ताज्जुहुयादन्यन्मुखं कुर्यात्स्रुवेणाऽऽघारमाघारयति” इति । अयमर्थः—स्रौवाघारः सर्वत्र यज्ञस्य मुखम् । तथा सति यदि कश्चिन्मन्द उपसत्प्रयोगादौ स्रौवाघारमहुत्वा तस्य स्थाने कांचिदन्यामाहुतिं जुहुयात्तदा मुखव्यत्यासेन प्रत्यवायं प्राप्नुयात् । तस्मात्स्रौवाघार आदौ कर्तव्य इति । नैतद्युक्तम् । चोदकप्राप्तस्याऽऽघारस्य कारणमन्तरेणाकस्मादभावशङ्काया अयुक्तत्वात् । तस्मात्परिसंख्यार्थ एव पुनर्विधिः । आहुत्यन्तरनिन्दा तु तच्छेषभूतोऽर्थवादः । यदि परिसंख्या त्रिदोषेत्युच्यते तर्हि गृहमेधीयवदपूर्वं कर्मास्तु । प्रयाजादिनिषेधो नित्यानुवादः । सर्वथा यावदुक्तमत्रानुष्ठेयम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

अथ पञ्चमप्रपाठके दशमोऽनुवाकः ।

---

नवमे दीक्षणीयादीनि बहिष्पवमानोपक्रमान्तानि सोमाङ्गान्युक्तानि । दशमे त्रिवृदादिस्तोमरूपाणि सोमाङ्गान्युच्यन्ते । तत्राऽऽदौ चात्वालखननं सप्रमाणं विधत्ते—

स स॒मु॒द्र उ॑त्तर॒तः प्रा॑ज्व॒लद्भू॒म्य॑न्ते॒न॑ । ए॒ष वाव स स॑मु॒द्रः । यच्चात्वा॑लः । ए॒ष उ॒ वेव स भू॒म्य॑न्तः । यद्वे॑द्य॒न्तः । तदे॒तत्त्रि॒श॑लं त्रि॒पू॒रु॒षम् । तस्मा॒त्तं त्रि॒वित॒स्तं ख॑नन्ति, इति ।

योऽयं प्रसिद्धो लवणसमुद्रः सोऽयमुत्तरस्यां दिशि भूमेरन्तिमभागेन सह कदाचित्प्रज्वलितोऽभूत् । सोऽयमत्र देवयजनभूमौ संपाद्यते । योऽयं चात्वालाख्यो गर्तोऽस्ति स एव एवात्र समुद्रस्थानीयः । योऽयं वेदेरवसानदेशः सोऽयं भूमेरवसानभागः । "एतावती वै पृथिवी यावती वेदिः" इति भूमित्वं वेदेराम्नातम् । यत्समुद्रस्य पुरुषत्रयपरिमाणमूर्ध्वं प्रज्वलनं तदेतदत्र चात्वाले त्रिशलं शललीमृगसंबन्धिरोमत्रयपरिमितं भवति । तस्य च रोम्णो वितस्तिः परिमाणं तद्रोमत्रयमत्र पुरुषत्रयरूपेणोपचर्यते । तस्माच्च चात्वालं वितस्तित्रयपरिमितं खनेयुः ।

तमेतं चात्वालमादित्यरूपेण प्रशंसति—

स सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत् ।

तं यदस्या अध्यजनयन् । तस्मादादित्यः ( १ )।

अथ यत्सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत

आसीत् । साऽस्य कौशिकता, इति ।

स चात्वालः परितः सुवर्णरजतनिर्मिताभ्यां शकलाभ्यां गृहीतोऽभवत् । स्तोत्रं कुर्वाणाः सामगाः स्तोत्रावृत्तिगणनार्थं यां काष्ठशलाकां प्रादेशमात्रपरिमितां भूमौ स्थापयन्ति सेयं कुशीत्युच्यते । तादृशं सुवर्णरजतनिर्मितं कुशीद्वयं चात्वालस्यान्तिके स्थापयित्वा तस्य चात्वालस्याहोरात्रनिष्पादकेनाऽऽदित्येन साम्यं संपादितवन्तः । यस्मादस्या भूमेरध्युपरि तं चात्वालमजनयंस्तस्मादयमदितेः संबन्धित्वादादित्य इत्युच्यते । कुशीद्वयपरिगृहीतत्वाच्च कौशिक इत्यपि नाम ।

इत्थं चात्वालं विधाय त्रिवृदादिस्तोमान्विधातुमादौ त्रिवृत्स्तोमं प्रशंसति—

तं त्रिवृताऽभिप्रास्तुवत । तं त्रिवृताऽऽददत । तं

त्रिवृताऽऽहरन् । यावती त्रिवृतो मात्रा, इति ।

त्रिवृता तिस्रो वृतस्तृचरूपावयवा यस्य स्तोमस्य सोऽयं स्तोमस्त्रिवृत् । तेन स्तोमेन देवास्तमादित्यं स्तुत्वा तं स्वाधीनत्वेन समादाय स्वापेक्षिते स्थाने समाहरन् । तस्य त्रिवृत्स्तोमस्य संबन्धिनी मीयतेऽनयेत्यवगम्यत इति मात्रा धनादिसंपद्यावती विद्यते तावती देवैर्लब्धेति शेषः ।

एवमन्यानपि त्रीन्स्तोमान्प्रशंसति—

तं पञ्चदशेनाभिप्रास्तुवत । तं पञ्चदशेनाऽऽददत । तं पञ्चदशेनाऽऽहरन् । यावती पञ्चदशस्य मात्रा (२) । तꣳ सप्तदशेनाभिप्रास्तुवत । तꣳ सप्तदशेनाऽऽददत । तꣳ सप्तदशेनाऽऽहरन् । यावती सप्तदशस्य मात्रा । तस्य सप्तदशेन ह्रियमाणस्य तेजो हरोऽपतत् । तमेकविꣳशेनाभिप्रास्तुवत । तमेकविꣳशेनाऽऽददत । तमेकविꣳशेनाऽऽहरन् । यावत्येकविꣳशस्य मात्रा, इति ।

एकस्मिंस्तृचे वर्तमानास्तिस्र ऋचो ब्राह्मणोक्तेनाऽऽवृत्तिविशेषेण पञ्चदशसंख्याका यस्मिन्स्तोमे संपाद्यन्ते सोऽयं स्तोमः पञ्चदशः । एवं सप्तदशैकविꣳशावपि । तत्र सप्तदशस्तोमेन स्तुत्वा यदाऽऽदित्य आह्रियते तदानीं तस्य तेजः कियदप्यधोऽपतत् । यद्यपि हरःशब्देनापि तेज एवाभिधीयते तथाऽपि पौनरुक्त्यपरिहाराय लेशो लक्ष्यते । अतः कियदपीति व्याख्यातम् । अन्यत्पूर्ववद्व्याख्येयम् ।

एवं स्तोमान्प्रशस्य त्रिवृत्स्तोमं विधत्ते—

ते यत्त्रिवृता स्तुवते (३) । त्रिवृतैव तद्यजमानमाददते । तं त्रिवृतैव हरन्ति । यावती त्रिवृतो मात्रा । अग्निर्वै त्रिवृत् । यावद्वा अग्नेर्दहतो धूम उदेत्यानुव्येति । तावती त्रिवृतो मात्रा । अग्नेरेवैनं तत् । मात्राꣳ सायुज्यꣳ सलोकतां गमयन्ति, इति ।

त उद्गातारो यदि सोमयागे त्रिवृता स्तोमेन स्तुवीरंस्तदानीं त्रिवृत्स्तोम-

सामर्थ्येनैव लोकविशेषे हरन्ति । तत्र त्रिवृत्स्तोमदेवताया यावती भोग्यवस्तुसंपत्तिस्तावतीमयं यजमानः प्राप्नोति । अयमेवार्थः संग्रहेण पुनरपि स्पष्टी क्रियते । अग्निरेव त्रिवृत्स्तोमाभिमानी देवः । तस्य चाग्नेररण्यादिकं दहतो दहनवेलायां धूम उद्गत्यानुक्रमेण यावन्तं देशं विविधं व्याप्नोति तावती त्रिवृत्संबन्धिनी भोगभूमिः । तस्मादुद्गातार एनं यजमानमग्नेर्मात्रामग्निदेवतासंबन्धिनीं भोग्यवस्तुसंपत्तिं प्रापयन्ति तथैवाग्नेः सायुज्यं सहावस्थानं प्रापयन्ति । तथैवाग्नेः संबन्धिनीं सलोकतामेकलोकावस्थानं प्रापयन्ति । अग्निसमानभोग्यवस्तुप्राप्तिरुत्तमं फलम् । अग्निसमीपेऽवस्थानं मध्यमम् । अग्निलोकेऽवस्थानमधमम् । एतच्चानुष्ठानश्रद्धातारतम्येन व्यवस्थापनीयम् ।

इत्थं त्रिवृत्स्तोमं विधायाथ त्रीनुत्तरान्स्तोमान्विधत्ते—

अथ यत्पञ्चदशेन स्तुवते । पञ्चदशेनैव तद्यजमानमाददते (४) । तं पञ्चदशेनैव हरन्ति । यावती पञ्चदशस्य मात्रा । चन्द्रमा वै पञ्चदशः । एष हि पञ्चदश्यामपक्षीयते । पञ्चदश्यामापूर्यते । चन्द्रमस एवैनं तत् । मात्राꣳ सायुज्यꣳ सलोकतां गमयन्ति । अथ यत्सप्तदशेन स्तुवते । सप्तदशेनैव तद्यजमानमाददते । तꣳ सप्तदशेनैव हरन्ति (५) । यावती सप्तदशस्य मात्रा । प्रजापतिर्वै सप्तदशः । प्रजापतेरेवैनं तत् । मात्राꣳ सायुज्यꣳ सलोकतां गमयन्ति । । अथ यदेकविꣳशेन स्तुवते । एकविꣳशेनैव तद्यजमानमाददते । तमेकविꣳशेनैव हरन्ति । यावत्येकविꣳशस्य मात्रा । असौ वा

आदित्य एकविꣳशः । आदित्यस्यैवैनं तत् (६ ।)
मात्राꣳ सायुज्यꣳ सलोकतां गमयन्ति, इति ।

यस्मादेष चन्द्रमाः कृष्णपक्षस्य पञ्चदश्याममावास्यायामपक्षीयते शुक्लपक्षस्य पञ्चदश्यां पौर्णमास्यामापूर्यते । चन्द्रमाः पञ्चदशस्तोमाभिमानी देवः । "प्रजापतेराश्रावय" इत्यादिसप्तदशाक्षरात्मकत्वात्सप्तदशस्तोमस्वामित्वम् । अन्यत्र "द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳशः" इत्येकविंशस्तोमपूरकत्वेनाऽऽदित्यस्याऽऽम्नातत्वादादित्य एकविंशस्तोमस्वामी । अन्यत्सर्वं पूर्ववद्व्याख्येयम् ।

पुरा याभ्यां कुशीभ्यां चात्वालो देवैः परिगृहीतस्तयोः कुश्योरपनयनं दर्शयति—

ते कुश्यौ । व्यघ्नन् । ते अहोरात्रे अभवताम् ।
अहरेव सुवर्णाऽभवत् । रजता रात्रिः । स यदा-
दित्य उदेति । एतामेव तत्सुवर्णां कुशीमनुसमेति ।
अथ यदस्तमेति । एतामेव तद्रजतां कुशीमनुसं-
विशति, इति ।

अथ ते देवाश्चात्वालसमीपे पूर्वं स्थापिते कुश्यौ वियुज्य हृतवन्तः । परित्यक्तवन्त इत्यर्थः । ते च त्यक्ते कुश्यावहोरात्ररूपे अभूताम् । तत्सुवर्णकुश्या अह्नो रूपत्वादयमादित्य उद्यंस्तां कुशीमनु सम्यक्प्रवर्तते । रजतकुश्या रात्रिरूपत्वादादित्योऽस्तं गच्छंस्तां कुशीमनुप्रविशति । तदेवमनया पूर्वोक्तया च कुशीस्तुत्या स्तुतिकाले स्तोत्रीयाणां गणनाय कुश्यः स्थापनीयाः पश्चादपनेया इति विधिरुन्नीयते ।

अथ चात्वालप्रसङ्गाद्बुद्धिस्थे प्रदरे कंचिन्निषेद्धुं पुरुषार्थं दर्शयति—

प्रह्लादो ह वै कायाधवः । विरोचनꣳ स्वं
पुत्रमुदास्यत् । स प्रदरोऽभवत् । तस्मा-

त्प्रदरादुदकं नाऽऽचामेत् ( ७ ), इति ।

आदित्यः पञ्चदशस्य मात्रां स्तुवते पञ्चदशेनैव तद्यजमानमाददते सप्तदशेनैव हरन्त्यादित्यस्यैवैनं तद्विंशति चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके पञ्चमाध्याये दशमोऽनुवाकः ॥ १० ॥

---

कयाधुसंज्ञायाः स्त्रियाः पुत्रः प्रह्लादः स्वकीयं पुत्रं विरोचनं केनापि निमित्तेन कुपितो हस्तेनोद्धृत्य क्वचिद्भूमावपातयत् । स भूमिप्रदेशः प्रदरश्छिद्ररूपोऽभूत् । तस्य प्रदरस्याऽऽसुरत्वात्तत्र प्रविष्टमुदकं पुरुषो नाऽऽचामेत् । तथा चाऽऽपस्तम्बः स्मरति—" न वर्षधारास्वाचामेत्तथा न प्रदरोदके " इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

अथ पञ्चमप्रपाठक एकादशोऽनुवाकः ।

---

दशमे त्रिवृदादिस्तोमा विहिताः । एकादशे सवनीयपशुपुरोडाशा उच्यन्ते । यदुक्तं संहितायाः षष्ठे काण्डे—" तस्मादनुसवनं पुरोडाशा निरूप्यन्ते " इति । ते पुरोडाशा अत्र प्रपञ्च्यन्ते । तत्राऽऽदौ तावज्ज्योतिष्टोमे स्तोमानाधिपत्तां दर्शयति—

ये वै चत्वारः स्तोमाः । कृतं तत् । अथ ये पञ्च । कलिः सः । तस्माच्चतुष्टोमः । तच्चतुष्टोमस्य चतुष्टोमत्वम्, इति ।

पूर्वोक्तास्त्रिवृत्पञ्चदशः सप्तदश एकविंश इत्येवंरूपाः स्तोमा ये सन्ति ते कृतयुगस्य स्वरूपभूताः । कृतयुगे हि धर्मस्य चत्वारः पादा विद्यन्ते । ये त्वन्येन केनचित्स्तोमेन सह पञ्च स्तोमास्तेषां कलियुगरूपत्वम् । तत्र जन्मध्यगतानां चतुर्णां कृतयुगार्थत्वेन विभागे सति कलेरसाधारणस्तोम एक एव परिशिष्यते । धर्मश्च कलियुग एकपादेव । ततः कलिस्वरूपत्वेन पञ्चस्तोमपक्षस्य निन्दितत्वाच्चतुष्टोमपक्षस्य कृतयुगस्वरूत्वेन प्रशस्तत्वादयं सोमया-

गश्चतुष्टोम एव कर्तव्यः । चत्वारः स्तोमा अत्रेति व्युत्पत्त्या सोमयागस्य चतुष्टोमत्वं संपन्नम् ।

अथ प्रश्नोत्तराभ्यां स्तोमानां ज्योतिष्टं संपादयति—

तदा॑हुः । क॒त॒मा॒नि॒ तानि॒ ज्योती॑ꣳषि । य

ए॒तस्य॒ स्तोमा॒ इति॑ । त्रि॒वृत्प॑ञ्चद॒शः स॑प्त-

द॒श ए॑कवि॒ꣳशः (१) । ए॒तानि॒ वाव तानि॒

ज्योती॑ꣳषि । य ए॒तस्य॒ स्तोमा॑ः, इति ।

ज्योतिष्टोमनाम्न्येतस्मिन्यागे यानि ज्योतींषि स्तोमाश्च प्रतीयन्ते । सामानाधिकरण्यात्तु स्तोमानामेव ज्योतिष्ट्वमत्र भासते । तत्र केचित्स्तोमाः पूर्वमुदाहृताः । इतः परं य एतस्य स्तोमा ज्योतिष्टार्हास्तेषु च स्तोमेषु ज्योतींषि कानीत्येवं जिज्ञासवः पप्रच्छुः । ये पूर्वमुक्तास्त्रिवृदाद्याश्चत्वारः स्तोमास्त एवैतस्य यागस्य ज्योतींषि । एतैर्हि स्तोमैर्निष्पाद्यत्वेन ज्योतिर्भिरेव यागोऽवभास्यते । अत एव सप्तमकाण्डे समाम्नातम्—"तस्मात्तज्ज्योतिरुच्यते द्वौ स्तोमौ प्रातःसवनं वहतः" इत्यादि ।

एवं चतुष्टोमत्वं स्तोमानां ज्योतिष्टोमत्वं चाभिधायाथाऽऽख्यायिकामुखेन सवनीयपुरोडाशान्प्रपञ्चयति—

सो॑ऽब्रवीत् । स॒प्त॒द॒शेन॑ ह्रि॒यमा॑णो॒ व्य॑ले-

शिषि । भि॒षज्य॑त॒मेति॑ । तम॒श्विनौ॑ धा॒ना-

भि॑रभिषज्यताम् । पू॒षा क॑र॒म्भेण॑ । भार॑ती

परि॒वापेण॑ । मि॒त्रावरु॑णौ पय॒स्यया, इति ।

पूर्वस्मिन्ननुवाके तस्य सप्तदशेन ह्रियमाणस्य तेजो हरोऽपतदित्यादित्यस्य तेजोहानिराम्नाता । स आदित्यो देवान्प्रत्येवमब्रवीत् । सप्तदशस्तोमेन ह्रियमाणोऽहं तेजोवियोगादलेशिषि, अल्पोऽभूवंस्तस्मान्मां भिषज्यत । एवमादित्येन प्रार्थिता देवा अश्विपूषादयः स्वस्वपरिचितेनौषधेन चिकित्सामकुर्वन् । धाना भृष्टयवाः । करम्भो यवपिष्टमाज्यसंयुक्तम् । परिवापो लाजाः । पयस्याऽऽमिक्षा ।

१ ग. 'तदश्वि' ।

अथ प्रश्नोत्तराभ्यां धानादीनां चतुर्णां द्रव्याणां हविषामिन्द्रदेवताकत्वं दर्शयति—

तदाहुः (२)। यदश्विभ्यां धानाः। पूष्णः करम्भः। भारत्यै परिवापः। मित्रावरुणयोः पयस्याऽथ। कस्मादेतेषाꣳ हविषामिन्द्रमेव यजन्तीति। एता ह्येनं देवता इति ब्रूयात्। एतैर्हविर्भिरभिषज्यꣳस्त-स्मादिति, इति।

पूर्वोक्तरीत्या धानादीन्यश्विन्यादिदेवसंबन्धीनि द्रव्याणि। तथा सति होमकालेऽश्विन्यादिदेवताः परित्यज्य कस्मात्कारणादेतेषां हविषामिन्द्रदेव-स्वामित्वं कृत्वा यजमाना यजन्तीत्येवं वेदवादिनः पप्रच्छुः। अत्राभिज्ञ उत्तरमेवं ब्रूयात्। यस्मादेताः सर्वा देवता एनमिन्द्रमुपजीवन्तीति शेषः। तस्मादिन्द्रस्यैव धानादिहविःस्वामित्वं युक्तम्। एतैरेवेन्द्रस्वामिकैर्हविर्भिरश्वि-पूषादिदेवा आदित्यस्य चिकित्सां कृतवन्तः। अत एव सूत्रकार इन्द्रविषय-मेव प्रैषमन्त्रमुदाजहार—सर्वेषां पुरोडाशानां जुह्वां दैवतानि समवद्यत्युप-भृति सौविष्टकृतानि प्रातः प्रातःसवस्येन्द्राय पुरोडाशानामनुब्रूहि" इति।

धानादिहविश्चतुष्टयं प्रशस्य पञ्चमं पुरोडाशाख्यं हविः प्रशंसति—

तं वसवोऽष्टाकपालेन प्रातःसवनेऽभिषज्यन्। रुद्रा एकादशकपालेन माध्यंदिने सवने। विश्वे देवा द्वादशकपालेन तृतीयसवने (३), इति।

तमादित्यम्। न चात्रेन्द्रस्य स्तोतव्यत्वे सति भैषज्येनाऽऽदित्यस्तुति-रयुक्तेति वाच्यम्। इन्द्रस्यैव मूर्त्यन्तरं स्वीकृत्याऽऽदित्यरूपेणावस्थितत्वात्। अथवाऽदितेः पुत्र इति व्युत्पत्त्याऽऽदित्यशब्देनेन्द्र एव विवक्षित इति गमयितव्यम्।

अत्रोक्तार्थवादानुसारेण सवनत्रये विलक्षणपुरोडाशप्राप्तावन्वयव्यतिरे-काभ्यां तद्वारयति—

स यदष्टाकपालान्प्रातःसवने कुर्यात्। एकाद-

शकपालान्माध्यंदिने सवने । द्वादशकपालाꣳ-
स्तृतीयसवने । विलोम तद्यज्ञस्य क्रियेत ।
एकादशकपालानेव प्रातःसवने कुर्यात् । एका-
दशकपालान्माध्यंदिने सवने । एकादशकपा-
लाꣳस्तृतीयसवने । यज्ञस्य सलोमत्वाय, इति ।

अत्र पुरोडाशार्थानि यानि कपालानि तेषां वैलक्षण्यं यज्ञस्य विलोमत्व-मेकविधत्वं सलोमत्वं तदिदं पक्षद्वयं सूत्रकार आह—"अष्टौ पुरोडाशकपा-लान्येकादश माध्यंदिने द्वादश तृतीयसवने सर्वानैन्द्रानेकादशकपालाननुस-वनमेके समामनन्ति" इति ।

पूर्ववदत्रापि प्रश्नोत्तराभ्यां पुरोडाशानामिन्द्रदेवताकत्वं दर्शयति—

तदाहुः । यद्वसूनां प्रातःसवनम् । रुद्राणां
माध्यंदिनꣳ सवनम् । विश्वेषां देवानां तृतीय-
सवनम् । अथ कस्मादेतेषाꣳ हविषामिन्द्रमेव
यजन्तीति । एता ह्येनं देवता इति ब्रूयात् ।
एतैर्हविर्भिरभिषज्यꣳस्तस्मादिति (४), इति ।

एकविꣳशत्याहुस्तृतीयसवने प्रातःसवनं पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके पञ्चमाध्याय
एकादशोऽनुवाकः ॥ ११ ॥

---

धानादिवाक्यात्पुरोडाशत्वाच्य व्याख्येयम् । यद्यपि न धानादयः पुरोडा-शास्तथाऽपि पुरोडाशसाहचर्याच्छत्रिन्यायेन पुरोडाशा इति व्यवहारः । यथैकस्मिन्नेव च्छत्रिणि सत्यपि च्छत्रिणो गच्छन्तीति सर्वेषु च्छत्रित्वव्यव-हारस्तद्वत् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये प्रथमकाण्डे पञ्चमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

अथ पञ्चमप्रपाठके द्वादशोऽनुवाकः ।

एकादशे सवनीयपुरोडाशाः प्रपञ्चिताः । अथ द्वादशे सप्त च्छन्दांसि प्रपञ्च्यन्ते । तत्राऽऽदौ श्रायन्तीयवारवन्तीयनामनिरुक्तिद्वारा प्रशंसति—

तस्या वाचोऽवपादादबिभयुः । तमेतेषु सप्तसु च्छन्दःस्वश्रयन् । यदश्रयन् । तच्छ्रायन्तीयस्य श्रायन्तीयत्वम् । यदवारयन् । तद्वारवन्तीयस्य वारवन्तीयत्वम्, इति ।

योऽयमादित्य आकाशमार्गे संचरति सोऽयमधस्तात्पतिष्यतीत्येवं तस्याऽऽदित्यस्याधोदेशविषयात्पाताद्भीता देवास्तत्पातपरिहाराय तमादित्यमेतेषु गायत्र्यादिषु सप्तसु च्छन्दःसु स्थापितवन्तः । यस्माद्देवाश्छन्दांस्याश्रितवन्तस्तस्मात्तेषु च्छन्दःसु गीयमानस्य सामविशेषस्य श्रायन्तीयं नाम संपन्नम् । यस्माच्छन्दःस्वादित्यं स्थापयित्वा तस्याधःपातं निवारितवन्तस्तस्मात्तेषु च्छन्दःसु गातव्यस्य सामविशेषस्य वारवन्तीयं नाम संपन्नम् । स्तोत्रकर्मसाधनानां श्रायन्तीयादिसाम्नामाधारत्वाच्छन्दांसि प्रशस्तानीत्यर्थः ।

तेषु च्छन्दःसु बृहतीं विशेषेण प्रशंसति—

तस्या वाच एवावपादादबिभयुः । तस्मा एतानि सप्त चतुरुत्तराणि च्छन्दांस्युपादधुः । तेषामति त्रीण्यरिच्यन्त । न त्रीण्युदभवन् (१) । स बृहतीमेवास्पृशत् । द्वाभ्यामक्षराभ्याम् । अहोरात्राभ्यामेव, इति ।

छन्दःस्वादित्यं स्थापयित्वाऽपि तेषां च्छन्दसां न्यूनाधिकभावेन कार्यक्षमत्वाभावमाशङ्कमाना देवाः पुनरादित्यपाताद्भीताः सन्तस्तेष्वेव च्छन्दःसु कार्यक्षममेकं छन्दोऽन्विच्छन्तस्तानि सप्तापि च्छन्दांस्यादित्यसमीपे स्थापितवन्तः । चत्वार्युष्णिगनुष्टुप्पङ्क्तिबृहतीत्येतान्युत्तराणि येषां गायत्री त्रिष्टुब्जगतीत्येषां प्रसिद्धानां मुख्यच्छन्दसां तानि मुख्यच्छन्दांसि चतुरुत्तराणि तानि च मिलित्वा सप्तसंख्याकानि तेषां सप्तानां मध्ये त्रीणि पङ्क्तित्रिष्टुब्ज-

गतीत्येतान्यत्यरिच्यन्त । यदा बृहतीं कृत्वा गानं क्रियते तदानीमेतेष्वप्यक्षराण्यधिकानि भवेयुः । तथा त्रीणि गायत्र्युष्णिगनुष्टुबित्येतानि नोदभवन्नोद्भूतानि बृहतीं पूरयितुं न समर्थानि । केश्चिदक्षरैर्न्यूनत्वात् । स च न्यूनाधिकभावः श्रुत्यैव दर्शयिष्यते । तदानीं स आदित्यस्तानि षडपि च्छन्दांसि परित्यज्य बृहतीमेव स्वकार्यक्षमेयमित्येवं स्पृष्टवान् । सा च बृहती स्वकार्येषु षट्त्रिंशदक्षरेषु द्वे एवाक्षरे अहोरात्ररूपतामापाद्य ताभ्यामादित्यस्योपकरोति । तावताऽधःपातभीतिर्निवृत्ता ।

अथ प्रश्नोत्तराभ्यां बृहतीमहिमानं दर्शयति—

तदाहुः । कतमा सा देवाक्षरा बृहती । यस्यां तत्प्रत्यतिष्ठत् । द्वादश पौर्णमास्यः । द्वादशाष्टकाः । द्वादशामावास्याः । एषा वाव सा देवाक्षरा बृहती (२) । यस्यां तत्प्रत्यतिष्ठदिति, इति ।

बृहती द्विविधा—शब्दात्मिका देवतात्मिका चेति । तस्या अवयवभूतान्यक्षराणि च द्विविधानि—शब्दात्मकानि देवतात्मकानि च । न क्षरत्येभिर्द्विविधैरवयवैरिति व्युत्पत्त्या द्विविधा अप्यवयवा अक्षरशब्दवाच्याः । तत्र शब्दात्मकाक्षरावयवाः "पुनानः सोम" इत्यादिष्वृक्षु प्रसिद्धाः । देवतारूपाक्षरावयवैर्युक्ता देवतारूपा या बृहती तस्यामादित्यमण्डलं प्रतिष्ठितम् । सा च बृहती तदवयवाश्च कीदृशीति पप्रच्छुः । तत्राभिज्ञ उत्तरं ब्रूते । पौर्णमास्यः कृष्णाष्टम्योऽमावास्याश्च संवत्सरगताः सर्वा मिलित्वा देवतारूपा अक्षरावयवाः । तत्संघरूपेयं बृहती देवताऽऽदित्यमण्डलस्याऽऽधारभूता । तया धारितमादित्यमण्डलमधो न पततीति स्तोत्रगानकाले भावनार्थमिदं देवतारूपं निरूप्यते ।

अथ देवतारूपाणां छन्दसां संवादमुखेन सर्वेषां मध्ये बृहतीरूपत्वं संपादयति—

यानि च च्छन्दाꣳस्यत्यरिच्यन्त । यानि च नोदभवन् । तानि निर्वीर्याणि हीनान्यमन्यन्त । साऽब्रवीद्बृहती । मामेव भूत्वा । मामुपसꣳश्र-

यतेति । चतुर्भिरक्षरैरनुष्टुब्बृहतीं नोदभवत् । चतुर्भिरक्षरैः पङ्क्तिर्बृहतीमत्यरिच्यत । तस्यामेतानि चत्वार्यक्षराण्यपच्छिद्याऽऽदधात् ( ३ ) । ते बृहतीं एव भूत्वा । बृहतीमुपसमश्रयताम्, इति ।

यानि पङ्क्त्यादीनि बृहत्या अधिकाक्षराणि यानि चानुष्टुबादीनि बृहतीं पूरयितुं न पर्याप्तानि तानि द्विविधान्यपि स्वमनस्येवममन्यन्त । वयं निर्वीर्याणि बृहतीकार्यं संपादयितुमसमर्थान्यतो हीनान्यधमानीति । तेषां खेदं दृष्ट्वा तत्परिहारोपायं सा बृहती देवताऽब्रवीत् । हे छन्दांसि यूयं मामेव भूत्वा माप्य मदीयामेवाक्षरसंख्यां धृत्वेत्यर्थः । ततो मामुपेत्य सम्यक्सेवध्वमिति । तत्रानुष्टुभो द्वात्रिंशदक्षरत्वाद्बृहत्याः षट्त्रिंशदक्षरत्वाच्चतुर्भिरक्षरैरियमनुष्टुब्बृहतीं पूरयितुं न समर्था । पङ्क्तेः पञ्चभिः पादैरुपेतत्वादेकैकस्य पादस्याष्टाक्षरत्वे सति चत्वारिंशदक्षरा पङ्क्तिः संपद्यते । चतुर्भिरक्षरैः पङ्क्तिर्बृहत्या अधिका । तस्यां पङ्क्तौ विद्यमानान्येतानि चत्वार्यधिकाक्षराण्यपच्छिद्येयं बृहती न्यूनायामनुष्टुभि स्थापितवती । ततस्ते पङ्क्त्यनुष्टुभौ बृहत्यावेव भूत्वा तां बृहतीमुपेत्य सम्यगसेवेताम् । एकस्य न्यूनाधिकयुग्मस्य बृहतीत्वं संपादितम् ।

अथान्ययोर्युग्मयोरपि तत्संपादयति—

अष्टाभिरक्षरैरुष्णिग्बृहतीं नोदभवत् । अष्टाभिरक्षरैस्त्रिष्टुग्बृहतीमत्यरिच्यत । तस्यामेतान्यष्टावक्षराण्यपच्छिद्याऽऽदधात् । ते बृहती एव भूत्वा । बृहतीमुपसमश्रयताम् । द्वादशभिरक्षरैर्गायत्री बृहतीं नोदभवत् । द्वादशभिरक्षरैर्जगती बृहतीमत्यरिच्यत । तस्यामेतानि द्वादशाक्षराण्यपच्छिद्याऽऽदधात् (४) । ते बृहती एव भूत्वा । बृहतीमुपसमश्रयताम्, इति ।

उष्णिगष्टाविंशत्यक्षरा । प्रसिद्धमन्यत् ।

अथानुसंधानार्थं रथरूपकं परिकल्पयति—

सोऽब्रवीत्प्रजापतिः । छन्दाꣳसि रथो मे भवत । युष्माभिरहमेतमध्वानमनुसंचराणीति । तस्य गायत्री च जगती च पक्षावभवताम् । उष्णिक्च त्रिष्टुप्च प्रष्टयौ । अनुष्टुप्च पङ्क्तिश्च धुर्यौ । बृहत्येवोद्धिरभवत । स एतं छन्दोरथमास्थाय । एतमध्वानमनुसमचरत् । एतꣳ ह वै छन्दोरथमास्थाय । एतमध्वानमनुसंचरति । येनैष एतत्संचरति । य एवं विद्वान्सोमेन यजते । य उ चैनमेवं वेद (५), इति ।

अभवन्वाव सा देवाक्षरा बृहत्यदधादुद्धादशाक्षराण्यपङ्क्तिश्चादधादास्थाय षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके पञ्चमाध्याये द्वादशोऽनुवाकः ॥ १२ ॥

---

अग्नेः कृत्तिका यत्पुण्यं देवस्य सवितुर्ब्रह्मवादिनः कत्यृतमेव देवा वा आयुष इन्द्रो दधीचो देवासुराः स प्रजापतिः स समुद्रो ये वै चत्वारस्तस्या वाचो द्वादश । अग्नेः कृत्तिका देवगृहा वा ऋतमेवध्यामेव तिस्रः पराचीर्ये वै चत्वारो नवपञ्चाशत् ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके पञ्चमोऽध्यायः ॥ ५ ॥

---

स प्रजापतिरादित्यरूपेणाऽऽकाशमार्गे गन्तुमेवमुवाच । हे छन्दांसि गायत्र्यादीनि यूयं मदर्थं रथाकारं प्राप्नुत । रथाकारैर्युष्माभिरहमेतमाकाशाध्वानमनुदिनं संचराणीति । ततस्तस्य प्रजापतेर्गमनार्थं गायत्रीजगत्यौ पक्षौ

रथस्य चक्रे अभवताम् । उष्णिक्त्रिष्टुभौ प्रष्टयावीषारूपे दीर्घकाष्ठे अभवताम् । अनुष्टुप्पङ्क्त्यौ धुरि योजनीयावश्वावभवताम् । बृहत्येवोद्धिरूर्ध्वस्थापनीया पीठसमानोपवेशनफलकरूपाऽभूत् । स प्रजापतिस्तादृशं रथमारुह्यानुदिनमेतन्मार्गे संचरति । यः पुमानेवं रथमनुसंदधानः सोमेन यजते यश्चैनं रथमेवं ध्यायति स एष उभयविधोऽपि पुरुषो येनाध्वनैष प्रजापतिरेतदृश्यमानं स्थानं संचरति तमेतमेवाध्वानं छन्दोरथमारूढोऽनुदिनं संचरति । अत्रैवं विद्वान्सोमेन यजत इति वाक्य एवंशब्देन देवासुरा इत्याद्यनुवाकचतुष्टयोक्तः साङ्गः सोमयागप्रकारः परामृश्यते । अतोऽयं सोमयागस्य प्रयोगविधिर्द्रष्टव्यः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

अथास्य प्रपाठकस्यानुवाकार्थः संगृह्यते—

नक्षत्राख्येष्टका मन्त्राः पञ्चमाद्ये समीरिताः ।
नक्षत्रद्वारकः पुण्यः काल उक्तो द्वितीयके ॥
हेयाहेयावहर्भागौ तृतीये समुदीरितौ ।
तुर्ये पात्रोक्तिरन्यस्मिन्मन्त्रा वपनगाः श्रुताः ॥
षष्ठे तद्ब्राह्मणं मन्त्रा इष्टकार्था द्वयोः श्रुताः ।
चतुर्षु नवमाद्येषु साङ्गः सोम उदीरितः ॥
औपानुवाक्यरूपः स्यात्पञ्चमोऽयं प्रपाठकः ।
ब्राह्मणं राजसूयस्य प्रोक्तं षष्ठे च सप्तमे ॥
अष्टमे संहितायां तु समन्त्रा विधयः श्रुताः ।
विधिव्याख्यानरूपत्वादनुब्राह्मणमुच्यते ॥
प्रतिप्रपाठकं तत्रानुवाका दश वर्णिताः ।
षष्ठस्याऽऽद्येऽनुमत्याद्या इष्टयोऽथ द्वितीयके ॥
वैश्वदेवहवींषि स्युस्तदङ्गानि तृतीयके ।
वरुणस्य प्रघासाः स्युस्तुर्ये शेषस्तु पञ्चमे ॥
साकमेधास्तु षष्ठे स्युस्तच्छेषः सप्तमे भवेत् ।
अष्टमे पितृयज्ञः स्यात्तच्छेषो नवमे स्मृतः ॥
दशमे त्र्यम्बकाणि स्युरिति षष्ठः समापितः ।
सप्तमाद्ये शुनासीरीयेन्द्रतुर्ये उभे तथा ॥
पञ्चाध्मीयमपामार्गहोमाश्चत्वार ईरिताः ।
द्वितीये देविकादीनि तृतीये रत्निनां हविः ॥

तुर्ये हविर्देवसुवां पञ्चमे तु जलाहृतिः ।
षष्ठे स्याज्जलसंस्कारो दिग्जयध्यानमुत्तरे ॥
अभिषेकोऽष्टमे प्रोक्तो रथारोहणमुत्तरे ।
दशमे सेव्यते सर्वैः सप्तमोऽयं प्रपाठकः ॥
अष्टमाद्ये हवींषि स्युः संसृपां दशपेयकः ।
द्वितीये वेष्टयोऽयस्मिंश्चतुर्थे प्रयुजां हविः ॥
सौत्रामणिर्द्वयोः प्रोक्तः पवित्राहस्तु सप्तमे ।
अभिषेच्योऽप्यष्टमे तु विशेषः साममन्त्रयोः ॥
शेषोऽभिषेकगेऽन्यस्मिन्दशमे तु द्विरात्रकः ।
क्षत्रस्य धृतिरित्येवमष्टमोऽयं प्रपाठकः ।
अक्षरार्थः संहितायां तन्मन्त्रविधिभिः सह ।
व्याख्यातोऽवेक्ष्यतां तत्र काण्डोऽतोऽत्र समापितः ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणे प्रथमकाण्डे पञ्चमषष्ठसप्तमाष्टमप्रपाठकाः समाप्ताः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

---

इति श्रीराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कराजाज्ञापालकेन माधवामात्येन विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डः समाप्तः ॥ १ ॥

---

( मूलक्रमेण—अष्ट०— १ अध्या० ९ अनु० १२ (४८) ।

( भाष्यक्रमेण—का० १ प्रपा० ८ अनु० ४२ (६८) ।

अथ प्रथमाष्टके षष्ठः प्रपाठकः ।

तत्र प्रथमोऽनुवाकः ।

अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति । ये प्रत्यञ्चः शम्यायां अवशीयन्ते । तन्नैर्ऋतमेककपालम् । इयं वा अनुमतिः । इयं निर्ऋतिः । नैर्ऋतेन पूर्वेण प्रचरति । पाप्मानमेव निर्ऋतिं पूर्वां निरवदयते । एककपालो भवति । एकधैव निर्ऋतिं निरवदयते । यदहुत्वा गार्हपत्य ईयुः ( १ )। रुद्रो भूत्वाऽग्निरनूत्थाय । अध्वर्युं च यजमानं च हन्यात् । वीहि स्वाहाऽऽहुतिं जुषाण इत्याह । आहुत्यैवैनꣳ शमयति । नार्तिमार्छत्यध्वर्युर्न यजमानः । एकोल्मुके नयन्ति । तद्धि निर्ऋत्यै भागधेयम् । इमां दिशं नयति । एषा वै निर्ऋत्यै दिक् । स्वायामेव दिशि निर्ऋतिं निरवदयते ( २ ) । स्वकृत इरिणे जुहोति प्रदरे वा । एतद्वै निर्ऋत्या आयतनम् । स्व एवाऽऽयतने निर्ऋतिं निरवदयते। एष ते निर्ऋते भाग इत्याह । निर्दिशत्यैवैनाम् । भूते हविष्मत्यसीत्याह । भूतिमेवोपावर्तते । मुञ्चेममꣳहस इत्याह । अꣳहस एवैनं मुञ्चति । अङ्गुष्ठाभ्यां जुहोति ( ३ )। अन्तत एव निर्ऋतिं निरवदयते । कृष्णं वासः कृष्णतूषं दक्षिणा । एतद्वै निर्ऋत्यै रूपम् । रूपेणैव निर्ऋतिं निरवदयते । अप्रतीक्षमायन्ति । निर्ऋत्या अन्तर्हित्यै । स्वाहा नमो य इदं चकारेति पुनरेत्य गार्हपत्ये जुहोति ।

आहुत्यैव नमस्यन्तो गार्हपत्यमुपावर्तन्ते । आनुमतेन प्रच॑-
रति । इयं वा अनुमतिः (४) । इयमेवास्मै राज्यमनुम-
न्यते । धेनुर्दक्षिणा । इमामेव धेनुं कुरुते । आदित्यं चरुं नि-
र्वपति । उभयीष्वेव प्रजास्वभिषिच्यते । दैवीषु च मानु-
षीषु च । वरो दक्षिणा । वरो हि राज्यꣳ समृद्ध्यै । आग्नावै-
ष्णवमेकादशकपालं निर्वपति । अग्निः सर्वा देवताः (५) ।
विष्णुर्यज्ञः । देवताश्चैव यज्ञं चावरुन्धे । वामनो वही दक्षिणा ।
यद्वही । तेनाऽऽग्नेयः । यद्वामनः । तेन वैष्णवः समृद्ध्यै ।
अग्नीषोमीयमेकादशकपालं निर्वपति । अग्नीषोमाभ्यां वा
इन्द्रो वृत्रमहन्निति । यदग्नीषोमीयमेकादशकपालं निर्वपति
(६) । वार्त्रघ्नमेव विजित्यै । हिरण्यं दक्षिणा समृद्ध्यै । इन्द्रो
वृत्रꣳ हत्वा । देवताभिश्चेन्द्रियेण च व्यार्ध्यत । स एतमैन्द्रा-
ग्नमेकादशकपालमपश्यत् । तं निरवपत् । तेन वै स देव-
ताश्चेन्द्रियं चावारुन्धे । यदैन्द्राग्नमेकादशकपालं निर्वपति ।
देवताश्चैव तेनेन्द्रियं च यजमानोऽवरुन्धे । ऋषभो वही दक्षिणा
(७) । यद्वही । तेनाऽऽग्नेयः । यदृषभः । तेनैन्द्रः समृद्ध्यै ।
आग्नेयमष्टाकपालं निर्वपति । ऐन्द्रं दधि । यदाऽऽग्नेयो भवति ।
अग्निर्वै यज्ञमुखम् । यज्ञमुखमेवर्धिं पुरस्ताद्धत्ते । यदैन्द्रं
दधि (८) । इन्द्रियमेवावरुन्धे । ऋषभो वही दक्षिणा ।
यद्वही । तेनाऽऽग्नेयः । यदृषभः । तेनैन्द्रः समृद्ध्यै । यावतीर्वै

प्रजा ओषधीनामहुतानामाश्नन् । ताः पराभवन् । आग्रयणं भवति हुताद्याय । यजमानस्यापराभावाय (९) । देवा वा ओषधीष्वाजिमयुः । ता इन्द्राग्नी उदजयताम् । तावेतमैन्द्राग्नं द्वादशकपालं निरवृणाताम् । यदैन्द्राग्नो भवत्युज्जित्यै । द्वादशकपालो भवति । द्वादश मासाः संवत्सरः । संवत्सरेणैवास्मा अन्नमवरुन्धे । वैश्वदेवश्चरुर्भवति । वैश्वदेवं वा अन्नम् । अन्नमेवास्मै स्वदयति (१०) । प्रथमजो वत्सो दक्षिणा समृद्ध्यै । सौम्यꣳ श्यामाकं चरुं निर्वपति । सोमो वा अकृष्टपच्यस्य राजा । अकृष्टपच्यमेवास्मै स्वदयति । वासो दक्षिणा । सौम्यꣳ हि देवतया वासः समृद्ध्यै । सरस्वत्यै चरुं निर्वपति । सरस्वते चरुम् । मिथुनमेवावरुन्धे । मिथुनौ गावौ दक्षिणा समृद्ध्यै । एति वा एष यज्ञमुखादृद्ध्याः । योऽग्नेर्देवताया एति । अष्टावेतानि हवीꣳषि भवन्ति । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । तेनैव यज्ञमुखादृद्ध्या अग्नेर्देवतायै नैति (११), [इति] ।

ईयुर्निरवदयतेऽङ्गुष्ठाभ्यां जुहोत्यनुमतिर्देवता निर्वपति वही दक्षिणा यदैन्द्रं दध्यपराभावाय स्वदयाति गावौ दक्षिणा समृद्ध्यै षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके षष्ठाध्याये प्रथमोऽनुवाकः ॥ १ ॥

अथ षष्ठप्रपाठके द्वितीयोऽनुवाकः ।

वैश्वदेवेन वै प्रजापतिः प्रजा असृजत । ताः सृष्टा न प्राजायन्त । सोऽग्निरकामयत । अहमिमाः प्रजनयेयमिति । स प्रजापतये शुचमदधात् । सोऽशोचत्प्रजामिच्छमानः । तस्माद्यं च प्रजा भुनक्ति यं च न । तावुभौ शोचतः प्रजामिच्छमानौ । तास्वग्निमप्यसृजत् । ता अग्निरध्यैत् ( १ ) सोमो रेतोऽदधात् । सविता प्राजनयत् । सरस्वती वाचमदधात् । पूषाऽपोषयत् । ते वा एते त्रिः संवत्सरस्य प्रयुज्यन्ते । ये देवाः पुष्टिपतयः । संवत्सरो वै प्रजापतिः । संवत्सरेणैवास्मै प्रजाः प्राजनयत् । ताः प्रजा जाता मरुतोऽघ्नन् । अस्मानपि न प्रायुक्षतेति (२) । स एतं प्रजापतिर्मारुतꣳ सप्तकपालमपश्यत् । तं निरवपत् । ततो वै प्रजाभ्योऽकल्पत । यन्मारुतो निरु(रु)प्यते । यज्ञस्य क्लृप्त्यै । प्रजानामघाताय । सप्तकपालो भवति । सप्त गणा वै मरुतः । गणश एवास्मै विशं कल्पयति । स प्रजापतिरशोचत ( ३ ) । याः पूर्वाः प्रजा असृक्षि । मरुतस्ता अवधिषुः । कथमपराः सृजेयेति । तस्य शुष्मआण्डं भूतं निरवर्तत । तद्व्युदहरत् । तदपोषयत् । तत्प्राजायत । आण्डस्य वा एतद्रूपम् । यदामिक्षा । यद्व्युद्धरति (४)। प्रजा एव तद्यजमानः पोषयति । वैश्वदेव्यामिक्षा भवति । वैश्वदेव्यो वै प्रजाः । प्रजा एवास्मै प्रजनयति । वाजिनमानयति ।

प्रजास्वेव प्रजातासु रेतो दधाति । द्यावापृथिव्य एककपालो भवति । प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परिगृह्णाति । देवासुराः संयत्ता आसन् । सोऽग्निरब्रवीत् (५)। मामग्रेऽयजत । मया मुखेनासुराञ्जेष्यथेति । मां द्वितीयमिति सोमोऽब्रवीत् । मया राज्ञा जेष्यथेति । मां तृतीयमिति सविता । मया प्रसूता जेष्यथेति । मां चतुर्थीमिति सरस्वती । इन्द्रियं वोऽहं धास्यामीति । मां पञ्चममिति पूषा । मया प्रतिष्ठया जेष्यथेति (६)। तेऽग्निना मुखेनासुरानजयन् । सोमेन राज्ञा । सवित्रा प्रसूताः । सरस्वतीन्द्रियमदधात् । पूषा प्रतिष्ठाऽऽसीत् । ततो वै देवा व्यजयन्त । यदेतानि हवीꣳषि निरुप्यन्ते विजित्यै । नोत्तरवेदिमुपवपति । पशवो वा उत्तरवेदिः । अजाता इव ह्येतर्हि पशवः (७)।

ऐदित्यशोचद्वाचुद्धरत्यब्रवीत्प्रतिष्ठया जेष्यथेत्येतर्हि पशवः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके षष्ठाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ षष्ठप्रपाठके तृतीयोऽनुवाकः ।

---

त्रिवृद्बर्हिर्भवति । माता पिता पुत्रः । तदेव तन्मिथुनम् । उल्वं गर्भो जरायु । तदेव तन्मिथुनम् । त्रेधा बर्हिः संनद्धं भवति । त्रय इमे लोकाः । एष्वेव लोकेषु प्रतितिष्ठति । एकधा पुनः संनद्धं भवति । एक इव ह्ययं लोकः (१)।

अस्मिन्नेव तेने लोके प्रतितिष्ठति । प्रसुवो भवन्ति । प्रथमजामेव पुष्टिमवरुन्धे । प्रथमजो वत्सो दक्षिणा समृद्ध्यै । पृषदाज्यं गृह्णाति । पशवो वै पृषदाज्यम् । पशूनेवावरुन्धे । पञ्चगृहीतं भवति । पाङ्क्ता हि पशवः । बहुरूपं भवति ( २ ) । बहुरूपा हि पशवः समृद्ध्यै । अग्निं मन्थन्ति । अग्निमुखा वै प्रजापतिः प्रजा असृजत । यदग्निं मन्थन्ति । अग्निमुखा एव तत्प्रजा यजमानः सृजते । नव प्रजाया(याजा) ईज्यन्ते । नवानूयाजाः । अष्टौ हवींᳪषि । द्वावाघारौ । द्वावाज्यभागौ (३) । त्रिᳪशत्संपद्यन्ते । त्रिᳪशदक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे । यजमानो वा एककपालः । तेज आज्यम् । यदेककपाल आज्यमानयति । यजमानमेव तेजसा समर्धयति । यजमानो वा एककपालः । पशव आज्यम् ( ४ ) । यदेककपाल आज्यमानयति । यजमानमेव पशुभिः समर्धयति । यदल्पमानयेत् । अल्पा एन पशवो भुञ्जन्त उपतिष्ठेरन् । यद्बह्वानयेत् । बहव एनं पशवो भुञ्जन्त उपतिष्ठेरन् । बह्वानीयाऽऽविःपृष्ठं कुर्यात् । बहव एवैनं पशवो भुञ्जन्त उपतिष्ठन्ते । यजमानो वा एककपालः । यदेककपालस्यावद्येत् ( ५ ) । यजमानस्यावद्येत् । उद्वा माद्येद्यजमानः । प्र वा मीयेत । सकृदेव होतव्यः । सकृदिव हि सुवर्गो लोकः । हुत्वाऽभिजुहोति । यजमानमेव सुवर्गं लोकं गमयित्वा । तेजसा

समर्धयति । यजमानो वा एककपालः । सुवर्गो लोक आहवनीयः (६)। यदेककपालमाहवनीये जुहोति । यजमानमेव सुवर्गं लोकं गमयति। यद्धस्तेन जुहुयात् । सुवर्गाल्लोकाद्यजमानमवविध्येत् । स्रुचा जुहोति । सुवर्गस्य लोकस्य समष्ट्यै । यत्प्राङ्पद्येत । देवलोकमभिजयेत् । यद्दक्षिणा पितृलोकम् । यत्प्रत्यक् ( ७ )। रक्षांसि यज्ञं हन्युः । यदुदङ् । मनुष्यलोकमभिजयेत् । प्रतिष्ठितो होतव्यः । एककपालं वै प्रतितिष्ठन्तं द्यावापृथिवी अनुप्रतितिष्ठतः । द्यावापृथिवी ऋतवः । ऋतून्यज्ञः । यज्ञं यजमानः । यजमानं प्रजाः । तस्मात्प्रतिष्ठितो होतव्यः ( ८ )। वाजिनो यजति । अग्निर्वायुः सूर्यः । ते वै वाजिनः । तानेव तद्यजति । अथो खल्वाहुः । छन्दांसि वै वाजिन इति । तान्येव तद्यजति । ऋक्सामे वा इन्द्रस्य हरी सोमपानौ । तयोः परिधय आधानम् । वाजिनं भागधेयम् । ( ९ )। यदप्रहृत्य परिधीञ्जुहुयात् । अन्तराधानाभ्यां घा संप्रयच्छेत् । प्रहृत्य परिधीञ्जुहोति । निराधानाभ्यामेव घा संप्रयच्छति । बर्हिषि विषिञ्चन्वाजिनमानयति । प्रजा वै बर्हिः । रेतो वाजिनम् । प्रजास्वेव रेतो दधाति । समुपहूय भक्षयन्ति । एतत्सोमपीथा ह्येत । अथो आत्मन्नेव रेतो दधते । यजमान

उत्तमो भक्षयति । पशवो वै वाजिनम् । यजमान एव पशू-न्प्रतिष्ठापयन्ति ( १० ) ।

लोको बहुरूपं भवत्याज्यभागौ पशव आज्यमवद्येदाहवनीयः प्रत्यक्त-स्मात्प्रतिष्ठितो होतव्यो भागधेयमेते चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके षष्ठाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ षष्ठप्रपाठके चतुर्थोऽनुवाकः ।

---

प्रजापतिः सविता भूत्वा प्रजा असृ(सृ)जत । ता एनमत्यम-न्यन्त । ता अस्मादपाक्रामन् । ता वरुणो भूत्वा प्रजा वरुणे-नाग्राहयत् । ताः प्रजा वरुणगृहीताः । प्रजापतिं पुनरु-पाधावन्नाथमिच्छमानाः । स एतान्प्रजापतिर्वरुणप्रघासान-पश्यत् । तां निरवपत् । तैर्वै स प्रजा वरुणपाशादमुञ्चत् । यद्वरुणप्रघासा निरुप्यन्ते ( १ ) । प्रजानामवरुणग्राहाय । तासां दक्षिणो बाहुर्न्यक्न आसीत् । सव्यः प्रसृतः । स एतां द्वितीयां दक्षिणतो वेदिमुदहन् । ततो वै स प्रजानां दक्षिण-बाहुं प्रासारयत । यद्द्वितीयां दक्षिणतो वेदिमुद्धन्ति । प्रजा-नामेव तद्यजमानो दक्षिणं बाहुं प्रसारयति । तस्माच्चातुर्मा-स्ययाज्यमुष्मिँल्लोक उभयाबाहुः । यज्ञाभिजितꣳ ह्यस्य । पृथमात्राद्वेदी असंभिन्ने भवतः ( २ ) । तस्मात्पृथमात्रं व्यꣳसौ । उत्तरस्यां वेद्यामुत्तरवेदिमुपवपति । पशवो वा

उत्तरवेदिः । पशूनेवावरुन्धे । अथो यज्ञपरुषोऽनन्तरित्यै । एतद्ब्राह्मणान्येव पञ्च हवींश्षि । अथैष ऐन्द्राग्नो भवति । प्राणापानौ वा एतौ देवानाम् । यदिन्द्राग्नी । यदैन्द्राग्नो भवति । ( ३ ) । प्राणापानावेवावरुन्धे । ओजो बलं वा एतौ देवानाम् । यदिन्द्राग्नी । यदैन्द्राग्नो भवति । ओजो बलमेवावरुन्धे । मारुत्यामिक्षा भवति । वारुण्यामिक्षा । मेषी च मेषश्च भवतः । मिथुना एव प्रजा वरुणपाशान्मुञ्चति । लोमशौ भवतो मेध्यत्वाय ( ४ ) । शमीपर्णान्युपवपति । घासमेवाभ्यामपियच्छति । प्रजापतिमन्नाद्यं नोपानमत् । स एतेन शतेध्मेन हविषाऽन्नाद्यमवारुन्ध । यत्परःशतानि शमीपर्णानि भवन्ति । अन्नाद्यस्यावरुद्ध्यै । सौम्यानि वै करीराणि । सौम्या खलु वा आहुतिर्दिवो वृष्टिं च्यावयति । यत्करीराणि भवन्ति । सौम्ययैवाऽऽहुत्या दिवो वृष्टिमवरुन्धे । काय एककपालो भवति । प्रजानां कन्त्वाय । प्रतिपूरुषं करम्भपात्राणि भवन्ति । जाता एव प्रजा वरुणपाशान्मुञ्चति । एकमतिरिक्तम् । जनिष्यमाणा एव प्रजा वरुणपाशान्मुञ्चति ( ५ ) ।

निरुप्यन्ते भवतो भवति मेध्यत्वाय रुन्धे षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके षष्ठाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

अथ षष्ठप्रपाठके पञ्चमोऽनुवाकः ।

उत्तरस्यां वेद्यामन्यानि हवीꣳषि सादयति । दक्षिणायां मारुतीम् । अपधुरमेवैनां युनक्ति । अथो ओज एवाऽऽसामवहरति । तस्माद्ब्राह्मणश्च क्षत्राच्च विशोऽन्यतोऽपक्रमिणीः । मारुत्या पूर्वया प्रचरति । अनृतमेवावयजते । वारुण्योत्तरया । अन्तत एवं वरुणमवयजते । यदेवाध्वर्युः करोति (१) । तत्प्रतिप्रस्थाता करोति । तस्माच्छ्रेयान्करोति । तत्पापीयान्करोति । पत्नीं वाचयति । मेध्यामेवैनां करोति । अथो तप एवैनामुप नयति । यज्जारꣳ सन्तं न प्रब्रूयात् । प्रियं ज्ञातिꣳ रुन्ध्यात् । असौ मे जार इति निर्दिशेत् । निर्दिश्यैवैनं वरुणपाशेन ग्राहयति (२) । प्रघास्यान्हवामह इति पत्नीमुदानयति । अह्वतैवैनाम् । यत्पत्नी पुरोनुवाक्यामनुब्रूयात् । निर्वीर्यो यजमानः स्यात् । यजमानोऽन्वाह । आत्मन्नेव वीर्यं धत्ते । उभौ याज्याꣳ सवीर्यत्वाय । यद्ग्रामे यदरण्य इत्याह । यथोदितमेव वरुणमवयजते । यजमानदेवत्यो वा आहवनीयः (३) । [*भ्रातृव्यदेवत्यो दक्षिणः । यदाहवनीये जुहुयात् । यजमानं वरुणपाशेन ग्राहयेत् । दक्षिणेऽग्नौ जुहोति । भ्रातृव्यमेव वरुणपाशेन ग्राहयति । शूर्पेण जुहोति । अन्नमेव वरुणमवयजते । शीर्ष-

* चतष्कोणमता कण्डिकेयं पदपातभ्रमेण दण्डपातभ्रमेण वाऽष्टपदा जाता ।

न्नधिनिधाय जुहोति । शीर्षत एव वरुणमवयजते । प्रत्यङ्तिष्ठञ्जुहोति ( ४ ) । ] प्रत्यङ्ङेव वरुणपाशान्निर्मुच्यते । अक्रन्कर्म कर्मकृत इत्याह । देवानृणं निरवदाय । अनृणा गृहानुपप्रेतेति वावैतदाह । वरुणगृहीतं वा एतद्यज्ञस्य । यद्यजुषा गृहीतस्यातिरिच्यते । तुषाश्च निष्कासश्च । तुषैश्च निष्कासेन चावभृथमवैति । वरुणगृहीतेनैव वरुणमवयजते । अपोऽवभृथमवैति ( ५ ) । अप्सु वै वरुणः । साक्षादेव वरुणमवयजते । प्रतियुतो वरुणस्य पाश इत्याह । वरुणपाशादेव निर्मुच्यते । अप्रतीक्षमायन्ति । वरुणस्यान्तर्हित्यै । एधोऽस्येधिषीमहीत्याह । समिधैवाग्निं नमस्यन्त उपायन्ति । तेजोऽसि तेजो मयि धेहीत्याह । तेज एवाऽऽत्मन्धत्ते ( ६ ) ।

करोति आइयत्याहवनीयस्तिष्ठञ्जुहोत्यपोऽवभृथमवैति षट् ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके षष्ठाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ षष्ठप्रपाठके षष्ठोऽनुवाकः ।

---

देवासुराः संयत्ता आसन् । सोऽग्निरब्रवीत् । ममेयमनीकवती तनूः । तां प्रीणीत । अथासुरानभिभविष्यथेति । ते देवा अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निरवपन् । सोऽग्निरनीकवान्स्वेन भागधेयेन प्रीतः । चतुर्धाऽनीकान्यजनयत । ततो देवा अभ-

वन् । पराऽसुराः ( १ ) । यदग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति । अग्निमेवानीकवन्तꣴ स्वेन भागधेयेन प्रीणाति । सोऽग्निरनीकवान्स्वेन भागधेयेन प्रीतः । चतुर्धाऽनीकानि जनयते । असौ वा आदित्योऽग्निरनीकवान् । तस्य रश्मयोऽनीकानि । साकꣴ सूर्येणोद्यता निर्वपति । साक्षादेवास्मा अनीकानि जनयति । ते सुराः पराजिता यन्तः । द्यावापृथिवी उपाश्रयन् ( २ ) । ते देवा मरुद्भ्यः सांतपनेभ्यश्चरुं निरवपन् । तान्द्यावापृथिवीभ्यामेवोभयतः समतपन् । यन्मरुद्भ्यः सांतपनेभ्यश्चरुं निर्वपति । द्यावापृथिवीभ्यामेव तदुभयतो यजमानो भ्रातृव्यात्संतपति । मध्यंदिने निर्वपति । तर्हि हितेऽक्षिष्ठं तपति । चरुर्भवति । सर्वत एवैनान्संतपति । ते देवाः श्वोविजयिनः सन्तः । सर्वासां दुग्धे गृहमेधीयं चरुं निरवपन् ( ३ ) । आशिता एवाद्योपवसाम । कस्य वा हेदम् । कस्य वा श्वो भवितेति । स शृतोऽभवत् । तस्याहुतस्य नाश्नन् । न हि देवा अहुतस्याश्नन्ति । तेऽब्रुवन् । कस्मा इमꣳ होष्याम इति । मरुद्भ्यो गृहमेधिभ्य इत्यब्रुवन् । तं मरुद्भ्यो गृहमेधिभ्योऽजुहवुः ( ४ ) । ततो देवा अभवन् । पराऽसुराः । यस्यैवं विदुषो मरुद्भ्यो गृहमेधिभ्यो गृहे जुह्वति । भवत्यात्मना । पराऽस्य भ्रातृव्यो भवति । यद्वै यज्ञस्य पाकत्रा क्रियते । पशु-

व्यं तत्। पाकत्रा वा एतत्क्रियते। यन्नेध्मा बर्हिर्भवति। न सामिधेनीरन्वाह ( ५ )। न प्रयाजा इज्यन्ते। नानूयाजाः। य एवं वेद। पशुमान्भवति। आज्यभागौ यजति। यज्ञस्यैव चक्षुषी नान्तरेति। मरुतो गृहमेधिनो यजति। भागधेयेनैवैनान्समर्धयति। अग्निꣳ स्विष्टकृतं यजति प्रतिष्ठित्यै। इडान्तो भवति। पशवो वा इडा। पशुष्वेवोपरिष्टात्प्रतितिष्ठति (६)।

असुरा अश्रयन्गृहमेधीयं चरुं निरवपन्नजुह्वुरन्वाहेडान्तो भवति द्वे च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके षष्ठाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ षष्ठप्रपाठके सप्तमोऽनुवाकः।

---

यत्पत्नी गृहमेधीयस्याश्नीयात्। गृहमेध्येव स्यात्। वि त्वस्य यज्ञ ऋध्येत। यन्नाश्नीयात्। अगृहमेधी स्यात्। नास्य यज्ञो व्यृध्येत। प्रतिवेशं पचेयुः। तस्याश्नीयात्। गृहमेध्येव भवति। नास्य यज्ञो व्यृध्यते ( १ )। ते देवा गृहमेधीयेनेष्ट्वा। आशिता अभवन्। आञ्जताभ्यञ्जत। अनु वत्सानवासयन्। तेभ्योऽसुराः क्षुधं प्राहिण्वन्। सा देवेषु लोकमवित्त्वा। असुरान्पुनरगच्छन्। गृहमेधीयेनेष्ट्वा। आशिता भवन्ति। आञ्जतेऽभ्यञ्जते ( २ )। अनु वत्सान्वासयन्ति। भ्रातृव्यायैव तद्यजमानः क्षुधं प्रहिणोति। ते देवा गृहमेधीयेनेष्ट्वा। इन्द्राय निष्कासं न्यदधुः। अस्मानेव श्व

इन्द्रो निहितभाग उपावर्तितेति । तानिन्द्रो निहितभाग उपावर्तत । गृहमेधीयेनेष्ट्वा । इन्द्राय निष्कासं निर्दधशात् । इन्द्र एवैनं निहितभाग उपावर्तते । गार्हपत्ये जुहोति ( ३ )। भागधेयेनैवैनꣳ समर्धयति । ऋषभमाह्वयति । वषट्कार एवास्य सः । अथो इन्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते । इन्द्रो वृत्रꣳ हत्वा । परां परावतमगच्छत् । अपाराधमिति मन्यमानः । सोऽब्रवीत् । क इदं वेदिष्यतीति । तेऽब्रुवन्मरुतो वरं वृणामहै ( ४ )। अथ वयं वेदाम । अस्मभ्यमेव प्रथमꣳ हविर्निरुप्याता इति । त एनमध्यक्रीडन् । तत्क्रीडिनां क्रीडित्वम् । यन्मरुद्भ्यः क्रीडिभ्यः प्रथमꣳ हविर्निरुप्यते विजित्यै । साकꣳ सूर्येणोद्यता निर्वपति । एतस्मिन्वै लोक इन्द्रो वृत्रमहन्समृद्ध्यै । एतद्ब्राह्मणान्येव पञ्च हवीꣳषि । एतद्ब्राह्मण ऐन्द्राग्नः । अथैष ऐन्द्रश्चरुर्भवति । उद्धारं वा एतमिन्द्र उदहरत । वृत्रꣳ हत्वा। अन्यासु देवतास्वधि। यदेष ऐन्द्रश्चरुर्भवति । उद्धारमेव तं यजमान उद्धरते । अन्यासु प्रजास्वधि । वैश्वकर्मण एककपालो भवति । विश्वान्येव तेन कर्माणि यजमानोऽवरुन्धे ( ५ )।

ऋध्यतेऽमथ्नते जुहोति वृणामहै मरुत्पञ्चाँ च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके षष्ठाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

अथ षष्ठप्रपाठकेऽष्टमोऽनुवाकः ।

वैश्वदेवेन वै प्रजापतिः प्रजा असृजत । ता वरुणप्रघासैर्वरुणपाशादमुञ्चत् । साकमेधैः प्रत्यस्थापयत् । त्र्यम्बकैरुद्रं निरवादयत । पितृयज्ञेन सुवर्गं लोकमगमयत् । यद्वैश्वदेवेन यजते । प्रजा एव तद्यजमानः सृजते । ता वरुणप्रघासैर्वरुणपाशान्मुञ्चति । साकमेधैः प्रतिष्ठापयति । त्र्यम्बकैरुद्रं निरवदयते ( १ ) । पितृयज्ञेन सुवर्गं लोकं गमयति । दक्षिणतः प्राचीनावीती निर्वपति । दक्षिणावृद्धि पितृणाम् । अनादृत्य तत् । उत्तरत एवोपवीय निर्वपेत् । उभये हि देवाश्च पितरश्चेज्यन्ते । अथो यदेव दक्षिणार्धेऽधिश्रयति । तेन दक्षिणावृत् । सोमाय पितृमते पुरोडाशꣳ षट्कपालं निर्वपति । संवत्सरो वै सोमः पितृमान् ( २ ) । संवत्सरमेव प्रीणाति । पितृभ्यो बर्हिषद्भ्यो धानाः । मासा वै पितरो बर्हिषदः । मासानेव प्रीणाति । यस्मिन्वा ऋतौ पुरुषः प्रमीयते । सोऽस्यामुष्मिँल्लोके भवति । बहुरूपा धाना भवन्ति । अहोरात्राणामभिजित्यै । पितृभ्योऽग्निष्वात्तेभ्यो मन्थम् । अर्धमासा वै पितरोऽग्निष्वात्ताः ( ३ ) । अर्धमासानेव प्रीणाति । अभिवान्यायै दुग्धे भवति । सा हि पितृदेवत्यं दुहे । यत्पूर्णम् । तन्मनुष्याणाम् । उपर्यर्धो देवानाम् । अर्धः पितृणाम् । अर्ध उपमन्थति । अर्धो हि पितृणाम् । एकयोपम-

न्थति ( ४ )। एका हि पितृणाम् । दक्षिणोपमन्थति । दक्षिणावृद्धि पितृणाम् । अनारभ्योपमन्थति । तद्धि पितृन्गच्छति । इमां दिशं वेदिमुद्धन्ति । उभये हि देवाश्च पितरश्चेज्यन्ते । चतुःस्रक्तिर्भवति । सर्वा ह्यनुदिशः पितरः । अखाता भवति ( ५ )। खाता हि देवानाम् । मध्यतोऽग्निराधीते । अन्ततो हि देवानामाधीयते । वर्षीयानिध्म इध्माद्भवति व्यावृत्त्यै । परिश्रयति । अन्तर्हितो हि पितृलोको मनुष्यलोकात् । यत्परुषि दिनम् । तद्देवानाम् । यदन्तरा । तन्मनुष्याणाम् ( ६ )। यत्समूलम् । तत्पितृणाम् । समूलं बर्हिर्भवति व्यावृत्त्यै । दक्षिणा स्तृणाति । दक्षिणावृद्धि पितृणाम् । त्रिः पर्येति । तृतीये वा इतो लोके पितरः । तानेव प्रीणाति । त्रिः पुनः पर्येति । षट् संपद्यन्ते ( ७ )। षड् वा ऋतवः । ऋतूनेव प्रीणाति । यत्प्रस्तरं यजुषा गृह्णीयात् । प्रमायुको यजमानः स्यात् । यन्न गृह्णीयात् । अनायतनः स्यात् । तूष्णीमेव न्यस्येत् । न प्रमायुको भवति । नानायतनः । यत्त्रीन्परिधीन्परिदध्यात् (८)। मृत्युना यजमानं परिगृह्णीयात् । यन्न परिदध्यात् । रक्षांसि यज्ञꣳ हन्युः । द्वौ परिधी परिदधाति । रक्षसामपहत्यै । अथो मृत्योरेव यजमानमुत्सृजति । यत्त्रीणि त्रीणि हवीꣳष्युदाहरेयुः । त्रयस्त्रय एषाꣳ साकं प्रमीयेरन् । एकैकमनूचीनान्युदाहरन्ति । एकैक एवैषामन्वञ्चः

प्रमीयते । कशिपु कशिपव्याय । उपबर्हणमुपबर्हण्याय । आञ्जनमाञ्जन्याय । अभ्यञ्जनमभ्यञ्जन्याय । यथाभागमेवैनान्प्रीणाति (९) ।

निरवदयते पितृमान्ज्ञिष्वात्ता एकयोपमन्थत्यखाता भवति मनुष्याणां पद्यन्ते परिदध्यान्मीयते पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके षष्ठाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ षष्ठप्रपाठके नवमोऽनुवाकः ।

---

अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीत्याह । उभये हि देवाश्च पितरश्चेज्यन्ते । एकामन्वाह । एका हि पितृणाम् । त्रिरन्वाह । त्रिर्हि देवानाम् । आघारावाघारयति । यज्ञपरुषोरनन्तरित्यै । नाऽऽर्षेयं वृणीते । न होतारम् (१) । यदार्षेयं वृणीते । यद्धोतारम् । प्रमायुको यजमानः स्यात् । प्रमायुको होता । तस्मान्न वृणीते । यजमानस्य होतुर्गोपीथाय । अपबर्हिषः प्रयाजान्यजति । प्रजा वै बर्हिः । प्रजा एव मृत्योरुत्सृजति । आज्यभागौ यजति (२) । यज्ञस्यैव चक्षुषी नान्तरेति । प्राचीनावीती सोमं यजति । पितृदेवत्या हि एषाऽऽहुतिः । पञ्चकृत्वोऽवद्यति । पञ्च होता देवताः । द्वे पुरोनुवाक्ये । याज्या देवता वषट्कारः । ता एव प्रीणाति । संततमवद्यति (३) । ऋतूनां संतत्यै । प्रैवेभ्यः पूर्वया पुरोनुवा-

क्यंयाऽऽह । प्रणयति द्वितीयया । गमयति याज्यया । तृतीये वा इतो लोके पितरः । अह्न एवैनां पूर्वया पुरोनुवाक्ययाऽत्यानयति । रात्रियै द्वितीयया । ऐवैनान्याज्यया गमयति । दक्षिणतोऽवदाय । उदङ्ङतिक्रामति व्यावृत्त्यै ( ४ )। आस्वधेत्याश्रावयति । अस्तु स्वधेति प्रत्याश्रावयति । स्वधा नम इति वषट्करोति । स्वधाकारो हि पितृणाम् । सोममग्रे यजति । सोमप्रयाजा हि पितरः । सोमं पितृमन्तं यजति । संवत्सरो वै सोमः पितृमान् । संवत्सरमेव तद्यजति । पितॄन्बर्हिषदो यजति ( ५ )। ये वै यज्वानः । ते पितरो बर्हिषदः । तानेव तद्यजति । पितॄनग्निष्वात्तान्यजति । ये वा अयज्वानो गृहमेधिनः । ते पितरोऽग्निष्वात्ताः । तानेव तद्यजति । अग्निं कव्यवाहनं यजति । य एव पितृणामग्निः । तमेव तद्यजति ( ६ )। अथो यथाऽग्निं स्विष्टकृतं यजति । तादृगेव तत् । एतत्ते तत ये च त्वामन्विति तिसृषु स्रक्तीषु निदधाति । तस्मादातृतीयात्पुरुषान्नामानि गृह्णन्ति । एतावन्तो हीज्यन्ते । अत्र पितरो यथाभागं मन्दध्वमित्याह । ह्रीका हि पितरः । उदञ्चो निष्क्रामन्ति । एषा वै मनुष्याणां दिक् । स्वामेव तद्दिशमनुनिष्क्रामन्ति ( ७ )। आहवनीयमुपातिष्ठन्ते । न्येवास्मै तद्ध्नुवते । यत्सत्याहवनीये । अथान्यत्र चरन्ति । आतमि-

तोरुपतिष्ठन्ते । अग्निमेवोपद्रष्टारं कृत्वा । पितॄन्निरवदयन्ते । अन्तं वा एते प्राणानां गच्छन्ति । य आतमितोरुपतिष्ठन्ते । सुसंदृशं त्वा वयमित्याह (८) । प्राणो वै सुसंदृक् । प्राणमेवाऽऽत्मन्दधते । योजान्विन्द्र ते हरी इत्याह । प्राणमेव पुनरयुङ्क्त । अक्षन्नमीमदन्त हीति गार्हपत्यमुपतिष्ठन्ते । अक्षन्नमीमदन्ताथ त्वोपतिष्ठामह इति वावैतदाह । अमीमदन्त पितरः सोम्या इत्यभिप्रपद्यन्ते । अमीमदन्त पितरोऽथ त्वाऽभिप्रपद्यामह इति वावैतदाह । अपः परिषिञ्चति । मार्जयत्येवैनान् (९) । अथो तर्पयत्येव । तृप्यति प्रजया पशुभिः । य एवं वेद । अपबर्हिषावनूयाजौ यजति । प्रजा वै बर्हिः । प्रजा एव मृत्योरुत्सृजति । चतुरः प्रयाजान्यजति । द्वावनूयाजौ । षट् संपद्यन्ते । षड्वा ऋतवः । ऋतूनेव प्रीणाति । न पत्न्यन्वास्ते । न संयाजयन्ति । यत्पत्न्यन्वासीत । यत्संयाजयेयुः । प्रमायुका स्यात् । तस्मान्नान्वास्ते । न संयाजयन्ति । पत्नियै गोपीथाय ( १० ) ।

होतारमाज्यभागौ यजति संततमवद्यति व्यावृत्त्यै बर्हिषदो यजति तमेव तद्यजत्यनुनिष्क्रामन्त्याहिनानृतवो नव च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके षष्ठाध्याये नवमोऽनुवाकः ॥ ९ ॥

अथ षष्ठप्रपाठके दशमोऽनुवाकः ।

प्रतिपूरुषमेककपालान्निर्वपति । जाता एव प्रजा रुद्रान्निरवदयते । एकमतिरिक्तम् । जनिष्यमाणा एव प्रजा रुद्रान्निरवदयते । एककपाला भवन्ति । एकधैव रुद्रं निरवदयते । नाभिघारयति । यदभिघारयेत् । अन्तरवचारिणꣳ रुद्रं कुर्यात् । एकोल्मुके नयन्ति (१)। तद्धि रुद्रस्य भागधेयम् । इमां दिशं यन्ति । एषा वै रुद्रस्य दिक् । स्वायामेव दिशि रुद्रं निरवदयते । रुद्रो वा अपशुकाया आहुत्यै नातिष्ठत । असौ ते पशुरिति निर्दिशेद्यं द्विष्यात् । यमेव द्वेष्टि । तमस्मै पशुं निर्दिशति । यदि न द्विष्यात् । आखुस्ते पशुरिति ब्रूयात् (२) । न ग्राम्यान्पशून्हिनस्ति । नाऽऽरण्यान् । चतुष्पथे जुहोति । एष वा अग्नीनां पड्बीशो नाम । अग्निवत्येव जुहोति । मध्यमेन पर्णेन जुहोति । स्रुग्घ्येषा । अथो खलु । अन्तमेनैव होतव्यम् । अन्तत एव रुद्रं निरवदयते (३)। एष ते रुद्र भागः सह स्वस्राऽम्बिकयेत्याह । शरद्वा अस्याम्बिका स्वसा । तया वा एष हिनस्ति । यꣳ हिनस्ति । तयैवैनꣳ सह शमयति । भेषजं गव इत्याह । यावन्त एव ग्राम्याः पशवः । तेभ्यो भेषजं करोति । अवाम्ब रुद्र मदिमहीत्याह । आशिषमेवैतामाशास्ते (४) । त्र्यम्बकं यजामह इत्याह । मृत्योर्मुक्षीय मामृतादिति वावैत-

दाह । उत्किरन्ति । भगस्य लीप्सन्ते । मूतं कृत्वा सजन्ति । यथा जनं यतेऽवसं करोति । तादृगेव तत् । एष ते रुद्र भाग इत्याह निरवत्त्यै । अप्रतीक्षमायन्ति । अपः परिषिञ्चति । रुद्रस्यान्तर्हित्यै । प्र वा एतेऽस्माल्लोकाच्च्यवन्ते । ये त्र्यम्बकैश्चरन्ति । आदित्यं चरुं पुनरेत्य निर्वपति । इयं वा अदितिः । अस्यामेव प्रतितिष्ठन्ति ( ५ ) ।

यन्ति ब्रूयान्निरवदयते शास्ते सिञ्चति षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके षष्ठाध्याये दशमोऽनुवाकः ॥ १० ॥

---

अनुमत्यै वैश्वदेवेन ताः सृष्टाख्रिवृत्प्रजापतिः सवितोत्तरस्यां देवासुराः सोऽग्निर्मम* यत्पत्नी वैश्वदेवेन ता वरुणप्रघासैरग्नये देवेभ्यः प्रतिपूरुषं दश ॥ १० ॥

अनुमत्यै प्रथमजो वत्सो बहुरूपा हि पशवस्तस्मात्प्रथमात्रं यदग्नयेऽनीकवत उद्धारं वा+ अग्नये देवेभ्यः प्रतिपुरुषं पञ्चसप्ततिः ॥ ७५ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके षष्ठोऽध्यायः ॥ ६ ॥

---

* सोऽग्निर्यत्पत्नीति क्वचित्पुस्तके पाठः । + वा एतमग्नये इति क्वचित्पुस्तके पाठः ।

## अथ प्रथमाष्टके सप्तमोऽध्यायः ।

### तत्र प्रथमोऽनुवाकः ।

एतद्ब्राह्मणान्येव पञ्च हवीꣳषि । अथेन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं निर्वपति । संवत्सरो वा इन्द्रः शुनासीरः । संवत्सरेणैवास्मा अन्नमवरुन्धे । वायव्यं पयो भवति । वायुर्वै वृष्ट्यै प्रदापयिता । स एवास्मै वृष्टिं प्रदापयति । सौर्य एककपालो भवति । सूर्येण वा अमुष्मिँल्लोके वृष्टिर्धृता । स एवास्मै वृष्टिं नियच्छति ( १ ) । द्वादशगवꣳ सीरं दक्षिणा समृद्ध्यै । देवासुराः संयत्ता आसन् । ते देवा अग्निमब्रुवन् । त्वया वीरेणासुरानभिभवामेति । सोऽब्रवीत् । त्रेधाऽहमात्मानं विकरिष्य इति । स त्रेधाऽऽत्मानं व्यकुरुत । अग्निं तृतीयम् । रुद्रं तृतीयम् । वरुणं तृतीयम् । ( २ ) । सोऽब्रवीत् । क इदं तुरीयमिति । अहमितीन्द्रोऽब्रवीत् । सं तु सृजावहा इति । तौ समसृजेताम् । स इन्द्रस्तुरीयमभवत् । यदिन्द्रस्तुरीयमभवत् । तदिन्द्रतुरीयस्येन्द्रतुरीयत्वम् । ततो वै देवा व्यजयन्त । यदिन्द्रतुरीयं निरुप्यते विजित्यै ( ३ ) । वहिनी धेनुर्दक्षिणा । यद्वहिनी । तेनाऽऽग्नेयी । यद्गौः । तेन रौद्री । यद्धेनुः । तेनैन्द्री । यत्स्त्री सती दान्ता । तेन वारुणी समृद्ध्यै । प्रजापतिर्यज्ञमसृजत । ( ४ ) । तꣳ सृष्टꣳ रक्षाꣳस्यजिघाꣳसन् । स एताः प्रजा-

पतिरात्मनो देवता निरमिमीत । ताभिर्वै स दिग्भ्यो रक्षाꣳसि प्राणुदत । यत्पश्चावचीयं जुहोति । दिग्भ्य एतद्यजमानो रक्षाꣳसि प्रणुदते । समूढꣳ रक्षः संदग्धꣳ रक्ष इत्याह । रक्षाꣳस्येव संदहति । अग्नये रक्षोघ्ने स्वाहेत्याह । देवताभ्य एव विजिग्यानाभ्यो भागधेयं करोति । प्रष्टिवाही रथो दक्षिणा समृद्ध्यै (५) । इन्द्रो वृत्रꣳ हत्वा । असुरान्पराभाव्य । नमुचिमासुरं नालभत । तꣳ शच्याऽगृह्णात् । तौ समलभेताम् । सोऽस्मादभिशुनतरोऽभवत् । सोऽब्रवीत् । संधाꣳ संदधावहै । अथ त्वा वꣳ स्रक्ष्यामि । न मा शुष्केण नाऽऽर्द्रेण हनः (६) । न दिवा न नक्तमिति । स एतमपां फेनमसिञ्चत् । न वा एष शुष्को नाऽऽर्द्रो व्युष्टासीत् । अनुदितः सूर्यः । न वा एतद्दिवा न नक्तम् । तस्यैतस्मिँल्लोके । अपां फेनेन शिर उदवर्तयत् । तदेनमन्ववर्तत । मित्रध्रुगिति (७) । स एतानपामार्गानजनयत् । तानजुहोत् । तैर्वै स रक्षाꣳस्यपाहत * । यदपामार्गहोमो भवति । रक्षसामपहत्यै । एकोल्मुकेन यन्ति । तद्धि रक्षसां भागधेयम् । इमां दिशं यन्ति । एषा वै रक्षसां दिक् । स्वायामेव दिशि रक्षाꣳसि हन्ति (८) । स्वकृत इरिणे जुहोति प्रदरे वा । एतद्वै रक्षसामायतनम् । स्व एवाऽऽयतने रक्षाꣳसि हन्ति । पर्णमयेन स्रुवेण जुहोति । ब्रह्म वै पर्णः । ब्रह्मणैव रक्षाꣳसि

* अपाहन्निति कुत्रचित्पुस्तके पाठः ।

हन्ति । देवस्यं त्वा सवितुः प्रसव इत्याह । सवितृप्रसूत एव रक्षाꣳसि हन्ति । हृतꣳ रक्षो वधिष्म रक्ष इत्याह । रक्षसाꣳ स्तृत्यै । यद्दस्ते तद्दक्षिणा निरवत्यै । अप्रतीक्षमायन्ति । रक्ष-सामन्तर्हित्यै ( ९ ) ।

यच्छति वर्शं तृतीयं विमिंत्या असृजत समृद्ध्यै हनो मित्रं- क्षुगिति हन्ति स्तृत्यै त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके सप्तमाध्याये प्रथमोऽनुवाकः ॥ १ ॥

---

अथ सप्तमप्रपाठके द्वितीयोऽनुवाकः ।

---

धात्रे पुरोडाशं द्वादशकपालं निर्वपति । संवत्सरो वै धाता । संवत्सरेणैवास्मै प्रजाः प्रजनयति । अन्वेवास्मा अनु-मतिर्मन्यते । राते राका । प्र सिनीवाली जनयति । प्रजास्वेव प्रजातासु कुह्वा वाचं दधाति । मिथुनौ गावौ दक्षिणा समृद्ध्यै । आग्नावैष्णवमेकादशकपालं निर्वपति । ऐन्द्रावैष्णवमेकादश-कपालम् ( १ ) । वैष्णवं त्रिकपालम् । वीर्यं वा अग्निः । वीर्य-मिन्द्रः । वीर्यं विष्णुः । प्रजा एव प्रजाता वीर्य प्रतिष्ठापयति । तस्मात्प्रजा वीर्यावतीः । वामन ऋषभो वही दक्षिणा । यद्वही । तेनाऽऽग्नेयः । यदृषभः ( २ ) । तेनैन्द्रः । यद्वामनः । तेन वैष्णवः समृद्ध्यै । अग्नीषोमीयमेकादशकपालं निर्व-पति । इन्द्रासोमीयमेकादशकपालम् । सौम्यं चरुम् ।

सोमो वै रेतोधाः । अग्निः प्रजानां प्रजनयिता । वृद्धानामिन्द्रः प्रदापयिता । सोम एवास्मै रेतो दधाति ( ३ ) । अग्निः प्रजां प्रजनयति । वृद्धामिन्द्रः प्रयच्छति । बभ्रुर्दक्षिणा समृद्ध्यै । सोमापौष्णं चरुं निर्वपति । ऐन्द्रापौष्णं चरुम् । सोमो वै रेतोधाः । पूषा पशूनां प्रजनयिता । वृद्धानामिन्द्रः प्रदापयिता । सोम एवास्मै रेतो दधाति । पूषा पशून्प्रजनयति ( ४ ) । वृद्धानिन्द्रः प्रयच्छति । पौष्णश्चरुर्भवति । इयं वै पूषा । अस्यामेव प्रतितिष्ठति । श्यामो दक्षिणा समृद्ध्यै । बहु वै पुरुषो मेध्यमुपगच्छति । वैश्वानरं द्वादशकपालं निर्वपति । संवत्सरो वा अग्निर्वैश्वानरः । संवत्सरेणैवैनꣳ स्वदयति । हिरण्यं दक्षिणा ( ५ ) । पवित्रं वै हिरण्यम् । पुनात्येवैनम् । बहु वै राजन्योऽनृतं करोति । उपजाम्यै हरते । जिनाति ब्राह्मणम् । वदत्यनृतम् । अनृते खलु वै क्रियमाणे वरुणो गृह्णाति । वारुणं यवमयं चरुं निर्वपति । वरुणपाशादेवैनं मुञ्चति । अश्वो दक्षिणा । वारुणो हि देवतयाऽश्वः समृद्ध्यै ( ६ ) ।

ऐन्द्रावैष्णवमेकादशकपालं सर्षभो दधाति पूषा पशून्प्रजनयति हिरण्यं दक्षिणा दक्षिणैकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके सप्तमाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

अथ सप्तमप्रपाठके तृतीयोऽनुवाकः ।

रत्निनामेतानि हवींषि भवन्ति । एते वै राष्ट्रस्य प्रदातारः । एते पादातारः । य एव राष्ट्रस्य प्रदातारः । ये पादातारः । त एवास्मै राष्ट्रं प्रयच्छन्ति । राष्ट्रमेव भवति । यत्समाहृत्य निर्वपेत् । अरत्निनः स्युः । यथायथं निर्वपति रत्नित्वाय ( १ ) । यत्सद्यो निर्वपेत् । यावतीमेकेन हविषाऽऽशिषमवरुन्धे । तावतीमवरुन्धीत । अन्वहं निर्वपति । भूयसीमेवाऽऽशिषमवरुन्धे । भूयसो यज्ञक्रतूनुपैति । बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे । मुखत एवास्मै ब्रह्म सꣳश्यति । अथो ब्रह्मन्नेव क्षत्रमन्वारम्भयति । शितिपृष्ठो दक्षिणा समृद्ध्यै ( २ ) । ऐन्द्रमेकादशकपालꣳ राजन्यस्य गृहे । इन्द्रियमेवावरुन्धे । ऋषभो दक्षिणा समृद्ध्यै । आदित्यं चरुं महिष्यै गृहे । इयं वा अदितिः । अस्यामेव प्रतितिष्ठति । धेनुर्दक्षिणा समृद्ध्यै । भगाय चरुं वावातायै गृहे । भगमेवास्मिन्दधाति । विचित्तगर्भा पष्ठौही दक्षिणा समृद्ध्यै ( ३ )। नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नम् । पाप्मानमेव निर्ऋतिं निरवदयते । कृष्णाकूटा दक्षिणा समृद्ध्यै । आग्नेयमष्टाकपालꣳ सेनान्यो गृहे । सेनामेवास्य सꣳश्यति । हिरण्यं दक्षिणा समृद्ध्यै । वारुणं दशकपालꣳ सूतस्य गृहे । वरुणसवमेवावरुन्धे । महानिरष्टो

दक्षिणा समृद्ध्यै । मारुतꣳ सप्तकपालं ग्रामण्यो गृहे ( ४ ) । अन्नं वै मरुतः । अन्नमेवावरुन्धे । पृश्निर्दक्षिणा समृद्ध्यै । सावित्रं द्वादशकपालं क्षत्तुर्गृहे प्रसूत्यै । उपध्वस्तो दक्षिणा समृद्ध्यै । आश्विनं द्विकपालꣳ संग्रहीतुर्गृहे । अश्विनौ वै देवानां भिषजौ । ताभ्यामेवास्मै भेषजं करोति । सबात्यौ दक्षिणा समृद्ध्यै । पौष्णं चरुं भागदुघस्य गृहे ( ५ ) । अन्नं वै पूषा । अन्नमेवावरुन्धे । श्यामो दक्षिणा समृद्ध्यै । रौद्रं गावीधुकं चरुमक्षावापस्य गृहे । अन्तत एव रुद्रं निरवदयते । शबल उद्वारो दक्षिणा समृद्ध्यै । द्वादशैतानि हवीꣳषि भवन्ति । द्वादश मासाः संवत्सरः । संवत्सरेणैवास्मै राष्ट्रमवरुन्धे । राष्ट्रमेव भवति ( ६ ) । यन्न प्रतिनिर्वपेत् । रत्निनं आशिषोऽवरुन्धीरन् । प्रतिनिर्वपति । इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालम् । इन्द्रायाꣳहोमुचे । आशिष एवावरुन्धे । अयन्नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादित्याह । आशिषमेवैतामाशास्ते । मैत्राबार्हस्पत्यं भवति । श्वेतायै श्वेतवत्सायै दुग्धे ( ७ ) । बार्हस्पत्ये मैत्रमपि दधाति । ब्रह्म चैवास्मै क्षत्रं च समीची दधाति । अथो ब्रह्मन्नेव क्षत्रं प्रतिष्ठापयति । बार्हस्पत्येन पूर्वेण प्रचरति । मुखत एवास्मै ब्रह्म सꣳश्यति । अथो ब्रह्मन्नेव क्षत्रमन्वारम्भयति । स्वयंकृता वेदिर्भवति । स्वयंदिनं बर्हिः । स्वयं-

कृत इध्मः । अनभिजितस्याभिजित्यै । तस्माद्ग्रामादरण्यमभिजितम् । सैव श्वेता श्वेतवत्सा दक्षिणा समृद्ध्यै (८) ।

रत्निन्त्वाय समृद्ध्यै पष्ठौही दक्षिणा समृद्ध्यै ग्रामण्यो गृहे मांगदुघस्य गृहे भवति दुर्वेडभिजित्यै द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके सप्तमाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ सप्तमप्रपाठके चतुर्थोऽनुवाकः ।

---

देवसुवामेतानि हवीꣳषि भवन्ति । एतावन्तो वै देवानाꣳ सवाः । त एवास्मै सवान्प्रयच्छन्ति । त एनꣳ सुवन्ते । अग्निरेवैनं गृहपतीनाꣳ सुवते सोमो वनस्पतीनाम् । रुद्रः पशूनाम् । बृहस्पतिर्वाचाम् । इन्द्रो ज्येष्ठानाम् । मित्रः सत्यानाम् (१) । वरुणो धर्मपतीनाम् । एतदेव सर्वं भवति । सविता त्वा प्रसवानाꣳ सुवतामिति हस्तं गृह्णाति प्रसूत्यै । ये देवा देवसुवः स्थेत्याह । यथा यजुरेवैतत् । महते क्षत्राय महत आधिपत्याय महते जानराज्यायेत्याह । आशिषमेवैतामाशास्ते । एष वो भरता राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजेत्याह । तस्मात्सोमराजानो ब्राह्मणाः । प्रति त्यन्नाम राज्यमधायीत्याह (२) । राज्यमेवास्मिन्प्रतिदधाति । स्वां तनुवं वरुणो अशिश्रेदित्याह । वरुणसवमेवावरुन्धे । शुचेर्मित्रस्य व्रत्या अभूमेत्याह । शुचिमेवैनं व्रत्यं करोति ।

अमन्महि महत ऋतस्य नामेत्याह । मनुत एवैनम् । सर्वे व्राता वरुणस्याभूवन्नित्याह । सर्वव्रातमेवैनं करोति । विमित्रावैररातिमतारीदित्याह ( ३ ) । अरातिमेवैनं तारयति । असूषुदन्त यज्ञिया ऋतेनेत्याह । स्वदयत्येवैनम् । व्युत्रितो जरिमाणं न आनडित्याह । आयुरेवास्मिन्दधाति । द्वाभ्यां विमृष्टे । द्विपाद्यजमानः प्रतिष्ठित्यै । अग्नीषोमीयस्य चैकादशकपालस्य देवसुवां च हविषामग्नये स्विष्टकृते समवद्यति । देवताभिरेवैनमुभयतः परिगृह्णाति । विष्णुक्रमान्क्रमते । विष्णुरेव भूत्वेमाँल्लोकानभिजयति ( ४ ) ।

सत्यानामवाथीत्याहातारीदित्याह क्रमत एकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके सप्तमाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ सप्तमप्रपाठके पञ्चमोऽनुवाकः ।

---

अर्थेतः स्थेति जुहोति । आहुत्यैवैना निष्क्रीय गृह्णाति । अथो हविष्कृतानामेवाभिघृतानां गृह्णाति । वहन्तीनां गृह्णाति । एता वा अपाꣳ राष्ट्रम् । राष्ट्रमेवास्मै गृह्णाति । अथो श्रियमेवैनमभिवहन्ति । अपां पतिरसीत्याह । मिथुनमेवाकः । वृषाऽस्यूर्मिरित्याह ( १ ) । ऊर्मिमन्तमेवैनं करोति । वृषसेनोऽसीत्याह । सेनामेवास्य सꣳश्यति । व्रजक्षितस्थेत्याह । एता वा अपां विशः । विशमेवास्मै पर्यूहति । मरुता-

मोजः स्थेत्याह । अन्नं वै मरुतः । अन्नमेवावरुन्धे । सूर्यवर्चसः स्थेत्याह ( २ ) । राष्ट्रमेव वर्चस्व्यकः । सूर्यत्वचसः स्थेत्याह । सत्यं वा एतत् । यद्वर्षति । अनृतं यदा तपति वर्षति । सत्यानृते एवावरुन्धे । नैनꣳ सत्यानृते उदिते हिꣳस्तः । य एवं वेद । मां दास्थेत्याह । राष्ट्रमेव ब्रह्मवर्चस्यकः ( ३ ) । वाशाः स्थेत्याह । राष्ट्रमेव वश्यकः । शक्वरीः स्थेत्याह । पशवो वै शक्वरीः । पशूनेवावरुन्धे । विश्वभृतस्थेत्याह । राष्ट्रमेव पयस्व्यकः । जनभृतः स्थेत्याह । राष्ट्रमेवेन्द्रियाव्यकः । अग्नेस्तेजस्यास्थेत्याह ( ४ ) । राष्ट्रमेव तेजस्व्यकः । अपामोषधीनाꣳ रसस्थेत्याह । राष्ट्रमेव मधव्यमकः । सारस्वतं ग्रहं गृह्णाति । एषा वा अपां पृष्ठम् । यत्सरस्वती । पृष्ठमेवैनꣳ समानानां करोति । षोडशाभिर्गृह्णाति । षोडशकलो वै पुरुषः । यावानेव पुरुषः । तस्मिन्वीर्यं दधाति । षोडशाभिर्जुहोति षोडशाभिर्गृह्णाति । द्वात्रिꣳशत्संपद्यन्ते । द्वात्रिꣳशदक्षराऽनुष्टुक् । वागनुष्टुप् सर्वाणि च्छन्दाꣳसि । वाचैवैनꣳ सर्वाभिश्छन्दोभिरभिषिञ्चति ( ५ ) ।

ऊर्मिरित्याह सूर्यवचसः स्थेत्याह ब्रह्मवर्चस्यकस्तेजस्याः स्थेत्याहैव पुरुषः षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके सप्तमाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

===

अथ सप्तमप्रपाठके षष्ठोऽनुवाकः ।

---

देवीरापः सं मधुमतीर्मधुमतीभिः सृज्यध्वमित्याह । ब्रह्मणैवैनाः सꣳसृजति । अनाधृष्टाः सीदतेत्याह । ब्रह्मणैवैनाः सादयति । अन्तरा होतुश्च धिष्णियं ब्राह्मणाच्छꣳसिनश्च सादयति । आग्नेयो वै होता । ऐन्द्रो ब्राह्मणाच्छꣳसी । तेजसा चैवेन्द्रियेण चोभयतो राष्ट्रं परिगृह्णाति । हिरण्येनोत्पुनाति । आहुत्यै हि पवित्राभ्यामुत्पुनन्ति व्यावृत्त्यै (१) । शतमानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । अनिभृष्टमसीत्याह । अनिभृष्टꣳ ह्येतत् । वाचो बन्धुरित्याह । वाचो ह्येष बन्धुः । तपोजा इत्याह । तपोजा ह्येतत् । सोमस्य दात्रमसीत्याह (२) । सोमस्य ह्येतद्दात्रम् । शुक्रा वः शुक्रेणोत्पुनामीत्याह । शुक्रा ह्यापः । शुक्रꣳ हिरण्यम् । चन्द्राश्चन्द्रेणेत्याह । चन्द्रा ह्यापः । चन्द्रꣳ हिरण्यम् । अमृता अमृतेनेत्याह । अमृता ह्यापः । अमृतꣳ हिरण्यम् (३) । स्वाहा राजसूयायेत्याह । राजसूयाय ह्येना उत्पुनाति । सधमादो द्युम्निनीरूर्ज एता इति वारुण्यर्चा गृह्णाति । वरुणसवमेवावरुन्धे । एकया गृह्णाति । एकधैव यजमाने वीर्यं दधाति । क्षत्रस्योल्बमसि क्षत्रस्य योनिरसीति

---

१ ग. ह्येता ।

तार्प्यं चोष्णीषं च प्रयच्छति सयोनित्वाय । एकशतेन दर्भ-पुञ्जीलैः पवयति । शतायुर्वै पुरुषः शतवीर्यः । आत्मैकशतः (४)। यावानेव पुरुषः । तस्मिन्वीर्यं दधाति । दध्याश-यति । इन्द्रियमेवावरुन्धे । उदुम्बरमाशयति । अन्नाद्यस्या-वरुद्ध्यै । शष्पाण्याशयति । सुरबलिमेवैनं करोति । आविद एता भवन्ति । आविदमेवैनं गमयन्ति (५)। अग्निरेवैनं गार्हपत्येनावति । इन्द्र इन्द्रियेण । पूषा पशुभिः । मित्रावरुणौ प्राणापानाभ्याम् । इन्द्रो वृत्राय वज्रमुदयच्छत् । स दिवमम-लिखत् । सोऽर्यम्णः पन्था अभवत् । स आविन्ने द्यावापृथिवी धृतव्रते इति द्यावापृथिवी उपाधावत् । स आभ्यामेव प्रसूत इन्द्रो वृत्राय वज्रं प्राहरत् । आविन्ने द्यावापृथिवी धृतव्रते इति यदाह (६)। आभ्यामेव प्रसूतो यजमानो वज्रं भ्रातृव्याय प्रहरति । आविन्ना देव्यदितिर्विश्वरूपीत्याह । इयं वै देव्य-दितिर्विश्वरूपी । अस्यामेव प्रतितिष्ठति । आविन्नोऽयमसा-वामुष्यायणोऽस्यां विश्यस्मिन्राष्ट्र इत्याह । विशैवैनꣳ राष्ट्रेण समर्धयति । महते क्षत्राय महत आधिपत्याय महते जान-राज्यायेत्याह । आशिषमेवैतामाशास्ते । एष वो भरता राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजेत्याह । तस्मात्सोमरा-जानो ब्राह्मणाः (७)। इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति धनुः प्रयच्छति विजित्यै । शत्रुबाधनाः स्थेतीषून् । शत्रूनेवास्य

बाधन्ते । पात मा प्रत्यञ्चं पात मा तिर्यञ्चमन्वञ्चं मा पातेत्याह । तिस्रो वै शरव्याः । प्रतीची तिरश्च्यनूची । ताभ्य एवैनं पान्ति । दिग्भ्यो मा पातेत्याह । दिग्भ्य एवैनं पान्ति । विश्वाभ्यो मा नाष्ट्राभ्यः पातेत्याह । अपरिमितादेवैनं पान्ति । हिरण्यवर्णावुषसां विरोक इति त्रिष्टुभा बाहू उद्गृह्णाति । इन्द्रियं वै वीर्यं त्रिष्टुक् । इन्द्रियमेव वीर्यमुपरिष्टादात्मन्धत्ते ( ८ ) ।

व्यावृत्त्यै दात्रमसीत्याहामृतश्च हिरण्यमेकशतो गमयन्त्याह ब्राह्मणा नाष्ट्राभ्यः पातेत्याह चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके सप्तमाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ सप्तमप्रपाठके सप्तमोऽनुवाकः ।

दिशो व्यास्थापयति । दिशामभिजित्यै । यदनुप्रक्रामेत् । अभिदिशो जयेत् । उत्तु माद्येत् । मनसाऽनुप्रक्रामति । अभिदिशो जयति । नोन्माद्यति । समिधमातिष्ठेत्याह । तेज एवावरुन्धे ( १ ) । उग्रा मा तिष्ठेत्याह । इन्द्रियमेवावरुन्धे । विराज मा तिष्ठेत्याह । अन्नाद्यमेवावरुन्धे । उदीची मा तिष्ठेत्याह । पशूनेवावरुन्धे । ऊर्ध्वा मा तिष्ठेत्याह । सुवर्गमेव लोकमभिजयति । अनूज्जिहीते सुवर्गस्य लोकस्य

समष्ट्यै ( २ ) । मारुत एष भवति । अन्नं वै मरुतः । अन्नमेवावरुन्धे । एकविंशतिकपालो भवति प्रतिष्ठित्यै । योऽरण्येऽनुवाक्यो गणः । तं मध्यत उपदधाति । ग्राम्यैरेव पशुभिरारण्यान्पशून्परिगृह्णाति । तस्माद्ग्राम्यैः पशुभिरारण्याः पशवः परिगृहीताः । पृथिर्वैन्यः । अभ्यषिच्यत ( ३ ) । स राष्ट्रं नाभवत । स एतानि पार्थान्यपश्यत् । तान्यजुहोत् । तैर्वै स राष्ट्रमभवत् । यत्पार्थानि जुहोति । राष्ट्रमेव भवति । बार्हस्पत्यं पूर्वेषामुत्तमं भवति । ऐन्द्रमुत्तरेषां प्रथमम् । ब्रह्म चैवास्मै क्षत्रं च समीची दधाति । अथो ब्रह्मन्नेव क्षत्रं प्रतिष्ठापयति ( ४ ) । षट् पुरस्तादाभिषेकस्य जुहोति । षडुपरिष्टात् । द्वादश संपद्यन्ते । द्वादश मासाः संवत्सरः । संवत्सरः खलु वै देवानां पूः । देवानामेव पुरं मध्यतो व्यवसर्पति । तस्य न कुतश्चनोपाव्याधो भवति । भूतानामेवेष्टीर्जुहोति । अत्रात्र वै मृत्युर्जायते । यत्रयत्रैव मृत्युर्जायते । तत एवैनमवयजते । तस्माद्राजसूयेनेजानः सर्वमायुरेति । सर्वे ह्यस्य मृत्यवोऽवेष्टाः । तस्माद्राजसूयेनेजानो नाभिचरितवै प्रत्यगेनमभिचारः स्तृणुते ( ५ ) ।

रुन्धे समष्ट्या असिच्यत स्थापयति जायते पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके सप्तमाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

अथ सप्तमप्रपाठकेऽष्टमोऽनुवाकः ।

सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादिति शार्दूलचर्मोपस्तृणाति । यैव सोमे त्विषिः । या शार्दूले । तामेवावरुन्धे । मृत्योर्वा एष वर्णः । यच्छार्दूलः । अमृतꣳ हिरण्यम् । अमृतमसि मृत्योर्मा पाहीति हिरण्यमुपास्यति । अमृतमेव मृत्योरन्तर्धत्ते । शतमानं भवति । ( १ ) । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । दिद्योन्मा पाहीत्युपरिष्टादधिनिदधाति । उभयत एवास्मै शर्म दधाति । अवेष्टा दन्दशूका इति क्लीबꣳ सीसेन विध्यति । दन्दशूकानेवावयजते । तस्मात्क्लीबं दन्दशूकादꣳशुकाः । निरस्तं नमुचेः शिर इति लोहितायसं निरस्यति । पाप्मानमेव नमुचिं निरवदयते । प्राणा आत्मनः पूर्वेऽभिषिच्या इत्याहुः ( २ ) । सोमो राजा वरुणः । देवा धर्मसुवश्च ये । ते ते वाचꣳ सुवन्तां ते ते प्राणꣳ सुवन्तामित्याह । प्राणानेवाऽऽत्मनः पूर्वानभिषिञ्चति । यद्ब्रूयात् । अग्नेस्त्वा तेजसाऽभिषिञ्चामीति । तेजस्व्येव स्यात् । दुश्चर्मा तु भवेत् । सोमस्य त्वा द्युम्नेनाऽभिषिञ्चामीत्याह । सौम्यो वै देवतया पुरुषः ( ३ ) । स्वयैवैनं देवतयाऽभिषिञ्चति । अग्नेस्तेजसेत्याह । तेज एवास्मिन्दधाति । सूर्यस्य वर्चसेत्याह । वर्च एवास्मिन्दधाति । इन्द्रस्येन्द्रियेणेत्याह । इन्द्रियमेवास्मिन्दधाति । मित्रावरुण-

यो॒र्वी॒र्ये॑णेत्या॑ह । वी॒र्य॑मे॒वास्मि॒न्दधाति । म॒रु॒ता॒मोज॑सेत्या॑ह (४) । ओज॑ ए॒वास्मि॒न्दधाति । क्ष॒त्राणां॑ क्ष॒त्रप॑तिरसीत्या॑ह । क्ष॒त्राण॑मे॒वैनं॑ क्ष॒त्रप॑तिं करोति । अति॑ दि॒वस्पा॑हीत्या॑ह । अत्य॒न्यान्पा॑हीति॒ वा॒वैतदा॑ह । स॒माव॑वृत्रन्नध॒रागुदी॑चीरि॒त्या॑ह । रा॒ष्ट्रमे॒वास्मि॒न्ध्रुवम॑कः । उ॒च्छेष॑णेन जुहोति । उ॒च्छेष॑णभागो॒ वै रु॒द्रः । भा॒ग॒धेये॑नै॒व रु॒द्रं निर॑वदयते (५) । उद॒ङ्परेत्या॒ग्नीध्रे॑ जुहोति । ए॒षा वै रु॒द्रस्य॒ दिक् । स्वाया॑मे॒व दि॒शि रु॒द्रं नि॒रव॑दयते । रुद्र॒ यत्ते॒ क्रयी॒परं॒ नामेत्या॑ह । यद्वा अ॒स्य॒ क्रयी॒परं॒ नाम॑ । तेन॒ वा ए॒ष हि॑नस्ति । यꣳ हि॒नस्ति॑ । तेनै॒वैनꣳ स॒ह श॑मयति । तस्मै॑ हु॒तम॑सि य॒मेष्ट॒मसी॒त्या॑ह । य॒मादे॒वास्य॑ मृ॒त्युमव॑यजते (६) । प्रजा॑पते॒ न त्वदे॒ता॒न्य॒न्य इ॒ति॒ तस्यै॑ गृ॒हे जु॑हुयात् । यां का॒मये॑त रा॒ष्ट्रम॑स्यै प्र॒जा स्या॒दिति॑ । रा॒ष्ट्रमे॒वास्यै॑ प्र॒जा भ॑वति । प॒र्णम॒ये॑नाध्व॒र्युर॒भि षि॑ञ्चति । ब्र॒ह्म॒व॒र्च॒सम॒वास्मि॒न्त्विषिं॑ दधाति । औदु॑म्बरेण राज॒न्यः॑ । ऊर्ज॑मे॒वास्मि॒न्नन्नाद्यं॑ दधाति । आश्व॑त्थेन॒ वैश्यः॑ । वि॒श॑मे॒वास्मि॒न्पुष्टिं॑ दधाति । नैय॑ग्रोधेन॒ जन्यः॑ । मि॒त्राण्ये॒वास्मै॑ कल्पयति । अथो॒ प्रति॑ष्ठित्यै (७) ।

भुवत्या॑हुः पुरु॑ष ओज॑सेत्या॑ह निर॑वदयते यजते जन्यो॒ द्वे च॑ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके सप्तमाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ सप्तमप्रपाठके नवमोऽनुवाकः ।

इन्द्र॑स्य॒ वज्रो॑ऽसि॒ वार्त्र॑घ्न॒ इति॑ रथ॒मुपाव॑हरति॒ विजि॑त्यै । मि॒त्रावरु॑णयोस्त्वा प्रशा॒स्त्रोः प्र॒शिषा॑ यु॒नज्मीत्या॑ह । ब्रह्म॑णै॒वैनं॑ दे॒वता॑भ्यां युनक्ति । प्र॒ष्टि॒वा॒हिनं॑ युनक्ति । प्र॒ष्टि॒वा॒ही वै दे॑वर॒थः । दे॒व॒र॒थमे॒वास्मै॑ युनक्ति । त्रयो॒ऽश्वा॑ भवन्ति । रथ॑श्चतु॒र्थः । द्वौ स॑व्येष्ठसार॒थी । षट्त्सं प॑द्यन्ते ( १ ) । षड्वा ऋ॒तवः॑ । ऋ॒तुभि॑रे॒वैनं॑ युनक्ति । वि॒ष्णु॒क्र॒मान्क्र॑मते । विष्णु॑रे॒व भू॒त्वेमाँल्लो॒काना॒भिज॑यति । यः क्ष॒त्रियः॑ प्रति॑हितः । सोऽन्वा॒र॑भते । रा॒ष्ट्रमे॒व भ॑वति । त्रि॒ष्टु॒भाऽन्वा॒र॑भते । इ॒न्द्रि॒यं वै त्रि॒ष्टुक् । इ॒न्द्रि॒यमे॒व यज॑माने दधाति ( २ ) । म॒रुतां॑ प्रस॒वेऽजे॑ष॒मित्या॑ह । म॒रुद्भि॑रे॒व प्रसू॑त॒ उज्ज॑यति । आ॒प्तं मन॒ इत्या॑ह । यदे॒व मन॑सै॒प्सीत् । तदा॑पत् । रा॒ज॒न्यं॑ जिनाति । अना॑क्रान्त ए॒वाऽऽक्र॑मते । वि वा ए॒ष इ॑न्द्रि॒येण॑ वी॒र्ये॑णर्ध्यते । यो रा॑ज॒न्यं॑ जिना॒ति॑ । सम॒हमि॑न्द्रि॒येण॑ वी॒र्ये॑णेत्या॑ह ( ३ ) । इ॒न्द्रि॒यमे॒व वी॒र्य॑मा॒त्मन्ध॑त्ते । प॒शू॒नां म॒न्युर॑सि॒ तवे॑व मे म॒न्युर्भू॑या॒दिति॑ वारा॑ही उपा॒नहा॒वुप॑मुञ्चते । प॒शू॒नां वा ए॒ष म॒न्युः । यद्व॑रा॒हः । तेनै॒व प॑शू॒नां म॒न्युमा॒त्मन्ध॑त्ते । अ॒भि वा इ॒यꣳ सु॑षुवा॒णं काम॑यते । तस्ये॑श्व॒रेन्द्रि॒यं वी॒र्य॑मादा॑तोः । वारा॑ही उपा॒नहा॒वुप॑मुञ्चते । अ॒स्या ए॒वान्तर्ध॑त्ते । इ॒न्द्रि॒यस्य॑ वी॒र्य॑स्याना॑त्यै ( ४ ) । नमो॑ मा॒त्रे पृ॑थि॒व्या इ॒त्या॒हाहि॑ꣳसायै । इ॒यद॒स्याऽऽयु॑र॒स्याऽऽयु॑म

धेहीत्याह । आयुरेवाऽऽत्मन्धत्ते । ऊर्गस्यूर्जं मे धेहीत्याह । ऊर्जमेवाऽऽत्मन्धत्ते । युङ्ङसि वर्चाऽसि वर्चो मयि धेहीत्याह । वर्च एवाऽऽत्मन्धत्ते । एकधा ब्रह्मण उपहरति । एकधैव यजमान आयुरूर्जं वर्चो दधाति । रथविमोचनीया जुहोति प्रतिष्ठित्यै (५) । त्रयोऽश्वा भवन्ति । रथश्चतुर्थः । तस्माच्चतुर्जुहोति । यदुभौ सहावतिष्ठेताम् । समानं लोकमियाताम् । सह संग्रहीत्रा रथवाहने रथमादधाति । सुवर्गादेवैनं लोकादन्तर्दधाति । हꣳसः शुचिषदित्यादधाति । ब्रह्मणैवैनमुपावहरति । ब्रह्मणा दधाति । अतिच्छन्दसा दधाति । अतिच्छन्दा वै सर्वाणि च्छन्दाꣳसि । सर्वैभिरेवैनं छन्दोभिरादधाति । वर्ष्म वा एषा छन्दसाम् । यदतिच्छन्दाः । यदतिच्छन्दसा दधाति । वर्ष्मैवैनꣳ समानानां करोति (६) ।

पद्यन्ते दधाति वीर्येणेत्याहानात्यै प्रतिष्ठित्यै ब्रह्मणा दधाति सह च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके सप्तमाध्याये नवमोऽनुवाकः ॥ ९ ॥

---

अथ सप्तमप्रपाठके दशमोऽनुवाकः ।

---

मित्रोऽसि वरुणोऽसीत्याह । मैत्रं वा अहः । वारुणी रात्रिः । अहोरात्राभ्यामेवैनमुपावहरति । मित्रोऽसि वरुणोऽसीत्याह । मैत्रो वै दक्षिणः । वारुणः सव्यः । वैश्वदेव्यामिक्षा । स्वमे-

वैनां भागधेयमुपावहरति । समहं विश्वैर्देवैरित्याह ( १ ) । वैश्वदेव्यो वै प्रजाः । ता एवाऽऽद्याः कुरुते । क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसीत्यधीवासमास्तृणाति सयोनित्वाय । स्योना मासीद सुषदा मासीदेत्याह । यथा यजुरेवैतत् । मा त्वा हिꣳसीन्मा मा हिꣳसीदित्याहाहिꣳसायै । निषसाद धृतव्रतो वरुणः पस्त्या स्वासाम्राज्याय सुक्रतुरित्याह । साम्राज्यमेवैनꣳ सुक्रतुं करोति । ब्रह्माँ३ त्वꣳ राजन्ब्रह्माऽसि सविताऽसि सत्यसव इत्याह । सवितारमेवैनꣳ सत्यसवं करोति ( २ ) । ब्रह्माँ३ त्वꣳ राजन्ब्रह्माऽसीन्द्रोऽसि सत्यौजा इत्याह । इन्द्रमेवैनꣳ सत्यौजसं करोति । ब्रह्माँ३ त्वꣳ राजन्ब्रह्माऽसि मित्रोऽसि सुशेव इत्याह । मित्रमेवैनꣳ सुशेवं करोति । ब्रह्माँ३ त्वꣳ राजन्ब्रह्माऽसि वरुणोऽसि सत्यधर्मेत्याह । वरुणमेवैनꣳ सत्यधर्माणं करोति । सविताऽसि सत्यसव इत्याह । गायत्रीमेवैतेनाभिव्याहरति । इन्द्रोऽसि सत्यौजा इत्याह । त्रिष्टुभमेवैतेनाभिव्याहरति ( ३ ) । मित्रोऽसि सुशेव इत्याह । जगतीमेवैतेनाभिव्याहरति । सत्यमेता देवताः । सत्यमेतानि च्छन्दाꣳसि । सत्यमेवावरुन्धे । वरुणोऽसि सत्यधर्मेत्याह । अनुष्टुभमेवैतेनाभिव्याहरति । सत्यानृते वा अनुष्टुप् । सत्यानृते वरुणः । सत्यानृते एवावरुन्धे ( ४ ) । नैनꣳ सत्यानृते उदिते हिꣳस्तः । य एवं वेद । इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति

स्फ्यं प्रयच्छति । वज्रो वै स्फ्यः । वज्रेणैवास्मा अवरपरꣳ रन्धयति । एवꣳ हि तच्छ्रेयः । यदस्मा एते रध्येयुः । दिशोऽभ्यर्यꣳ राजाऽभूदिति पञ्चाक्षान्प्रयच्छति । एते वै सर्वेयाः । अपराजयिनमेवैनं करोति ( ५ ) । ओदनमुद्ब्रुवते । परमेष्ठी वा एषः । यदोदनः । परमामेवैनꣳ श्रियं गमयति । सुश्लोकाꣳ३ सुमङ्गलाꣳ३ सत्यराजा३नित्याह । आशिषमेवैतामाशास्ते । श्यौनःशेपमाख्यापयते । वरुणपाशादेवैनं मुञ्चति । परःशतं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रति[ति]ष्ठति । मारुतस्य चैकविꣳशतिकपालस्य वैश्वदेव्यै चाऽऽमिक्षाया अग्नये स्विष्टकृते समवद्यति । देवताभिरेवैनमुभयतः परिगृह्णाति । अपांनप्त्रे स्वाहोर्जोनप्त्रे स्वाहाऽग्नये गृहपतये स्वाहेति तिस्र आहुतीर्जुहोति । त्रय इमे लोकाः । एष्वेव लोकेषु प्रतितिष्ठति ( ६ ) ।

देवीरित्याह सत्यसवं करोति त्रिष्टुभमेवैतेनाभिव्याहरति सत्यानृते एवावरुन्धे करोति शतेन्द्रियः षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके सप्तमाध्याये दशमोऽनुवाकः ॥ १० ॥

---

एतद्ब्राह्मणानि धात्रे रत्निनां देवसुवामर्धेऽन्तो देवीर्दिशः सोमस्येन्द्रस्य मित्रो दश ॥ १० ॥

एतद्ब्राह्मणानि वैष्णवं त्रिकपालमर्वं वै पूषा वाऽऽशाःस्थेत्याह दिश उदङ्ङ्पेत्यब्रह्मा३ त्व५ राजश्वतुःषष्टिः ॥ ६४ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टके सप्तमोऽध्यायः ॥ ७ ॥

अथ प्रथमाष्टकेऽष्टमोऽध्यायः ।

तत्र प्रथमोऽनुवाकः ।

वरुणस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत् । तत्सꣳसृद्भिरनुसमसर्पत् । तत्सꣳसृपाꣳ सꣳसृप्त्वम् । अग्निना देवेन प्रथमेऽहन्ननु प्रायुङ्क्त । सरस्वत्या वाचा द्वितीये । सवित्रा प्रसवेन तृतीये । पूष्णा पशुभिश्चतुर्थे । बृहस्पतिना ब्रह्मणा पञ्चमे । इन्द्रेण देवेन षष्ठे । वरुणेन स्वया देवतया सप्तमे (१) । सोमेन राज्ञाऽष्टमे । त्वष्ट्रा रूपेण नवमे । विष्णुना यज्ञेनाऽऽप्नोत् । यत्सꣳसृपो भवन्ति । इन्द्रियमेव तद्वीर्यं यजमान आप्नोति । पूर्वा पूर्वा वेदिर्भवति । इन्द्रियस्य वीर्यस्यावरुद्ध्यै । पुरस्तादुपसदाꣳ सौम्येन प्रचरति । सोमो वै रेतोधाः । रेत एव तद्दधाति । अन्तरा त्वाष्ट्रेण । रेत एव हितं त्वष्टा रूपाणि विकरोति । उपरिष्टाद्वैष्णवेन । यज्ञो वै विष्णुः । यज्ञ एवान्ततः प्रतितिष्ठति (२) ।

सप्तमे दधाति पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टकेऽष्टमाध्याये प्रथमोऽनुवाकः ॥ १ ॥

अथाष्टमप्रपाठके द्वितीयोऽनुवाकः ।

---

जामि वा एतत्कुर्वन्ति । यत्सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति । पुण्डरिस्रजां प्रयच्छत्यजामित्वाय । अङ्गिरसः सुवर्गं लोकं यन्तः । अप्सु दीक्षातपसी प्रावेशयन् । यत्पुण्डरीकमभवत् । यत्पुण्डरिस्रजां प्रयच्छति । साक्षादेव दीक्षातपसी अवरुन्धे । दशभिर्वत्सतरैः सोमं क्रीणाति । दशाक्षरा विराट् (१) । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे । मुष्करा भवन्ति सेन्द्रत्वाय । दशपेयो भवति । अन्नाद्यस्यावरुद्ध्यै । शतं ब्राह्मणाः पिबन्ति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । सप्तदशꣳ स्तोत्रं भवति । सप्तदशः प्रजापतिः (२) । प्रजापतेराप्त्यै । प्रकाशावध्वर्यवे ददाति । प्रकाशमेवैनं गमयति । स्रजमुद्गात्रे । व्येवास्मै वासयति । रुक्मꣳ होत्रे । आदित्यमेवास्मा उन्नयति । अश्वं प्रस्तोतृप्रतिहर्तृभ्याम् । प्राजापत्यो वा अश्वः । प्रजापतेराप्त्यै (३) । द्वादश पष्ठौहीर्ब्रह्मणे । आयुरेवावरुन्धे । वशां मैत्रावरुणाय । राष्ट्रमेव वश्यकः । ऋषभं ब्राह्मणाच्छꣳसिने । राष्ट्रमेवेन्द्रियाव्यकः । वाससी नेष्टापोतृभ्याम् । पवित्रे एवास्यैते । स्थूरियवाचितमच्छावाकाय । अन्तत एव वरुणमवयजते (४) । अनड्वाहमग्नीधे । वह्निर्वा अनड्वान् । वह्निरग्नीत । वह्निनैव वह्नियज्ञस्यावरुन्धे । इन्द्रस्य सुषुवा-

णस्यं त्रेधेन्द्रियं वीर्यं परापतत् । भृगुस्तृतीयमभवत् । श्रायन्तीयं तृतीयम् । सरस्वती तृतीयम् । भार्गवो होता भवति । श्रायन्तीयं ब्रह्मसामं भवति । वारवन्तीयमग्निष्टोमसामम् । सारस्वतीरपो गृह्णाति । इन्द्रियस्यं वीर्यस्यावरुद्ध्यै । श्रायन्तीयं ब्रह्मसामं भवति । इन्द्रियमेवास्मिन्वीर्यं श्रयति । वारवन्तीयमग्निष्टोमसामम् । इन्द्रियमेवास्मिन्वीर्यं वारयति (५) ।

विराट् प्रजापतिरर्धः प्रजापतेरात्यै यजते ब्रह्मसामं भवति सप्त च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टकेऽष्टमाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

अथाष्टमप्रपाठके तृतीयोऽनुवाकः ।

---

ईश्वरो वा एष दिशोऽनून्मदितोः । यं दिशोऽनुव्यास्थापयन्ति । दिशामवेष्टयो भवन्ति । दिक्ष्वेव प्रतितिष्ठत्यनुन्मादाय । पञ्च देवता यजति । पञ्च दिशः । दिक्ष्वेव प्रतितिष्ठति । हविषो हविष इष्ट्वा बार्हस्पत्यमभिघारयति । यजमानदेवत्यो वै बृहस्पतिः । यजमानमेव तेजसा समर्धयति (१) । आदित्यामह्यां गर्भिणीमालभते । मारुतीं पृश्निं पष्ठौहीम् । विशं चैवास्मै राष्ट्रं च समीची दधाति । आदित्यया पूर्वया प्रचरति । मारुत्योत्तरया । राष्ट्र एव विशमनुबध्नाति । उच्चैरादित्याया आश्रावयति । उपांशु मारुत्यै । तस्माद्राष्ट्रं विशमति-

वदति । गर्भिण्यादित्या भवति ( २ ) । इन्द्रियं वै गर्भः । राष्ट्रमेवेन्द्रियाव्यकः । अगर्भा मारुती । विड्वै मरुतः । विशमेव निरिन्द्रियामकः । देवासुराः संयत्ता आसन् । ते देवा अश्विनोः पूषन्वाचः सत्यꣳ संनिधाय । अनृतेनासुरानभ्यभवन् । तेऽश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निरवपन् । ततो वै ते वाचः सत्यमवारुन्धत ( ३ ) । यदश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति । अनृतेनैव भ्रातृव्यानभिभूय । वाचः सत्यमवरुन्धे । सरस्वते सत्यवाचे चरुम् । पूर्वमेवोदितम् । उत्तरेणाभिगृणाति । सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं प्रसूत्यै । दूतान्प्रहिणोति । आविद एता भवन्ति । आविदमेवैनं गमयन्ति । अथो दूतेभ्य एव न च्छिद्यते । तिसृधन्वꣳ शुष्कदृतिर्दक्षिणा समृद्ध्यै ( ४ ) ।

अर्धयति भवत्यरुन्धत गमयन्ति द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टकेऽष्टमाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

अथाष्टमप्रपाठके चतुर्थोऽनुवाकः ।

---

आग्नेयमष्टाकपालं निर्वपति । तस्माच्छिशिरे कुरुपञ्चालाः प्राञ्चो यान्ति । सौम्यं चरुम् । तस्माद्वसन्तं व्यवसायोदयन्ति । सावित्रं द्वादशकपालम् । तस्मात्पुरस्ताद्यवानाꣳ सवित्रा विरु-

न्धते । बार्हस्पत्यं चरुम् । सवित्रैव विरुध्य । ब्रह्मणा यवाना-दधते । त्वाष्ट्रमष्टाकपालम् ( १ ) । रूपाण्येव तेन कुर्वते । वैश्वानरं द्वादशकपालम् । तस्माज्जघन्ये नैदाघे प्रत्यञ्चः कुरुपञ्चाला यान्ति । सारस्वतं चरुं निर्वपति । तस्मात्प्रावृषि सर्वा वाचो वदन्ति । पौष्णेन व्यवस्यन्ति । मैत्रेण कृषन्ते । वारुणेन विधृता आसते । क्षैत्रपत्येन पाचयन्ते । आदित्येनाऽऽदधते ( २ ) । मासि मास्येतानि हवींषि निरुप्याणीत्याहुः । तेनैवर्तून्प्रयुङ्क्त इति । अथो खल्वाहुः । कः संवत्सरं जीविष्यतीति । षडेव पूर्वेद्युर्निरुप्याणि । षडुत्तरेद्युः । तेनैवर्तून्प्रयुङ्क्ते । दक्षिणो रथवाहनवाहः पूर्वेषां दक्षिणा । उत्तर उत्तरेषाम् । संवत्सरस्यैवान्तौ युनक्ति । सुवर्गस्य लोकस्य समष्ट्यै ( ३ ) ।

त्वाष्ट्रमष्टाकपालं दधते युनक्त्येकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथम केऽष्टमाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथाष्टमप्रपाठके पञ्चमोऽनुवाकः ।

---

इन्द्रस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत् । स यत्प्रथमं निरष्ठीवत् । तत्कुलमभवत् । यद्द्वितीयम् । तद्बदरम् । यत्तृतीयम् । तत्कर्कन्धु । यन्नस्तः । स सिंहः । यदक्ष्योः

( १ ) । स शार्दूलः । यत्कर्णयोः । स वृकः । य ऊर्ध्वः । स सोमः । याऽवाची । सा सुरा । त्रयाः सक्तवो भवन्ति । इन्द्रियस्यावरुद्ध्यै । त्रयाणि लोमानि ( २ ) । त्विषिमेवावरुन्धे । त्रयो ग्रहाः । वीर्यमेवावरुन्धे । नाम्ना दशमी । नव वै पुरुषे प्राणाः । नाभिर्दशमी । प्राणा इन्द्रियं वीर्यम् । प्राणानेवेन्द्रियं वीर्यं यजमान आत्मन्धत्ते । सीसेन क्लीबाच्छष्पाणि क्रीणाति । न वा एतदयो न हिरण्यम् ( ३ ) । यत्सीसम् । न स्त्री न पुमान् । यत्क्लीबः । न सोमो न सुरा । यत्सौत्रामणीसमृद्ध्यै । स्वाद्वीं त्वा स्वादुनेत्याह । सोममेवैनां करोति । सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेत्याह । एताभ्यो ह्येषा देवताभ्यः पच्यते । तिस्रः सꣳसृष्टा वसति ( ४ ) । तिस्रो हि रात्रीः क्रीतः सोमो वसति । पुनातु ते परिस्रुतमिति यजुषा पुनाति व्यावृत्त्यै । पवित्रेण पुनाति । पवित्रेण हि सोमं पुनन्ति । वारेण शश्वतातनेत्याह । वारेण हि सोमं पुनन्ति । वायुः पूतः पवित्रेणेति नैतया पुनीयात् । व्यृद्धा ह्येषा । अतिपवितस्यैतया पुनीयात् । कुविदङ्गेत्यनिरुक्तया प्राजापत्यया गृह्णाति ( ५ ) । अनिरुक्तः प्रजापतिः । प्रजापतेराप्त्यै । एकयर्चा गृह्णाति । एकधैव यजमाने वीर्यं दधाति । आश्विनं धूम्रमालभते । अश्विनौ वै देवानां भिषजौ । ताभ्यामेवास्मै भेषजं करोति । सारस्वतं

मेषम् । वाग्वै सरस्वती । वाचैवैनं भिषज्यति । ऐन्द्रमृषभꣳ सेन्द्रत्वाय ( ६ ) ।

अक्ष्योर्लोमानि हिरण्यं वसानि गृह्णाति भिषज्यत्येकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टकेऽष्टमाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथाष्टमप्रपाठके षष्ठोऽनुवाकः ।

---

यत्त्रिषु यूपेष्वालभेत । बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात् । भ्रातृव्यमस्मै जनयेत् । एकयूप आलभते । एकधैवास्मिन्नि- न्द्रियं वीर्यं दधाति । नास्मै भ्रातृव्यं जनयति । नैतेषां पशूनां पुरोडाशा भवन्ति । ग्रहपुरोडाशा ह्येते । युवꣳ सुरा- ममश्विनेति सर्वदेवत्ये याज्यानुवाक्ये भवतः । सर्वा एव देवताः प्रीणाति ( १ ) । ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम् । ब्राह्मणो ह्याहुत्या उच्छेषणस्य पाता । यदि ब्राह्मणं न विन्देत् । वल्मीकवपायामवनयेत् । सैव ततः प्रायश्चित्तिः । यद्वै सौत्रामण्यै व्यृद्धम् । तदस्यै समृद्धम् । नानादेवत्याः पश- वश्च पुरोडाशाश्च भवन्ति समृद्ध्यै । ऐन्द्रः पशूनामुत्तमो भवति । ऐन्द्रः पुरोडाशानां प्रथमः ( २ ) । इन्द्रिय एवास्मै

समीचीं दधाति । पुरस्तादनूयाजानां पुरोडाशैः प्रचरति । पशवो वै पुरोडाशाः । पशूनेवावरुन्धे । ऐन्द्रमेकादशकपालं निर्वपति । इन्द्रियमेवावरुन्धे । सावित्रं द्वादशकपालं प्रसूत्यै । वारुणं दशकपालम् । अन्तत एव वरुणमवयजते । वडवा दक्षिणा ( ३ ) । उत वा एषाऽश्वꣳ सूते । उताश्वतरम् । उत सोम उत सुरां । यत्सौत्रामणीसमृद्ध्यै । बार्हस्पत्यं पशुं चतुर्थमतिपवितस्याऽऽलभते । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैव यज्ञस्य व्यृद्धमपिवपति । पुरोडाशवानेष पशुर्भवति । न ह्येतस्य ग्रहं गृह्णन्ति । सोमप्रतीकाः पितरस्तृप्णुतेति । शतातृण्णायाꣳ समवनयति ( ४ ) । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । दक्षिणेऽग्नौ जुहोति । पापवस्यसस्य व्यावृत्त्यै । हिरण्यमन्तरा धारयति । पूतामेवैनां जुहोति । शतमानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । यत्रैव शतातृण्णां धारयति ( ५ ) । तन्निदधाति प्रतिष्ठित्यै । पितॄन्वा एतस्येन्द्रियं वीर्यं गच्छति । यꣳ सोमोऽतिपवते । पितृणां याज्यानुवाक्याभिरुपतिष्ठते । यदेवास्य पितॄनिन्द्रियं वीर्यं गच्छति । तदेवावरुन्धे । तिसृभिरुपतिष्ठते । तृतीये वा इतो लोके पितरः । तानेव प्रीणाति । अथो त्रीणि वै यज्ञस्येन्द्रियाणि । अध्वर्युर्होता

ब्रह्मा । त उपतिष्ठन्ते । यान्येव यज्ञस्येन्द्रियाणि । तैरेवास्मै भेषजं करोति (६) ।

प्रीणाति प्रथमो दक्षिणा समर्धयति धारयतीन्द्रियाणि चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टकेऽष्टमाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

अथाष्टमप्रपाठके सप्तमोऽनुवाकः ।

अग्निष्टोममग्र आहरति । यज्ञमुखं वा अग्निष्टोमः । यज्ञमुखमेवाऽऽरभ्य सवमाक्रमते । अथैषोऽभिषेचनीयश्चतुस्त्रिꣳशः पवमानो भवति । त्रयस्त्रिꣳशद्वै देवताः । ता एवाऽऽप्नोति । प्रजापतिश्चतुस्त्रिꣳशः । तमेवाऽऽप्नोति । सꣳशर एष स्तोमानामयथापूर्वम् । यद्विषमाः स्तोमाः (१) । एतावान्वै यज्ञः । यावान्पवमानाः । अन्तः श्लेषणं त्वा अन्यत् । यत्समाः पवमानाः । तेनासꣳशरः । तेन यथापूर्वम् । आत्मनैवाग्निष्टोमेनर्ध्नोति । आत्मना पुण्यो भवति । *प्रजा वा उक्थानि । पशव उक्थानि । यदुक्थ्यो भवत्यनुसंतत्यै (२) ।

स्तोमाः पशव उक्थान्येकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टकेऽष्टमाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

* क्वचित्पुस्तके—" पशव उक्थानि । प्रजा वा उक्थानि " इति पाठव्यत्ययो वर्तते ।

अथाष्टमप्रपाठकेऽष्टमोऽनुवाकः ।

उप त्वा जामयो गिर इति प्रतिपद्भवति । वाग्वै वायुः । वाच एवैषोऽभिषेकः । सर्वासामेव प्रजानाꣳ सूयते । सर्वा एनं प्रजा राजेति वदन्ति । एतमुत्यं दशाक्षिप इत्याह । आदित्या वै प्रजाः । प्रजानामेवैतेन सूयते । यन्ति वा एते यज्ञमुखात् । ये सं भार्या अक्रन् ( १ ) । यदाह पवस्व वाचो अग्रिय इति । तेनैव यज्ञमुखान्नयन्ति । अनुष्टुक्प्रथमा भवति । अनुष्टुगुत्तमा । वाग्वा अनुष्टुक् । वाचैव प्रयन्ति । वाचोद्यन्ति । उद्वतीर्भवन्ति । उद्वद्वा अनुष्टुभो रूपम् । आनुष्टुभो राजन्यः ( २ ) । तस्मादुद्वतीर्भवन्ति । सौर्यनुष्टुगुत्तमा भवति । सुवर्गस्य लोकस्य संतत्यै । यो वै सवादेति । नैनꣳ सव उपनमति । यः सामभ्य एति । पापीयान्सुषुवाणो भवति । एतानि खलु वै सामानि । यत्पृष्ठानि । यत्पृष्ठानि भवन्ति ( ३ ) । तैरेव सवान्नैति । यानि देवराजानाꣳ सामानि । तैरमुष्मिँल्लोक ऋध्नोति । यानि मनुष्यराजानाꣳ सामानि । तैरस्मिँल्लोक ऋध्नोति । उभयोरेव लोकयोर्ऋध्नोति । देवलोके च मनुष्यलोके च । एकविꣳशोऽभिषेचनीयस्योत्तमो भवति । एकविꣳशः केशवपनीयस्य प्रथमः । सप्तदशो दशपेयः ( ४ ) । विड्वा एकविꣳशः । राष्ट्रꣳ सप्तदशः । विश एवैतन्मध्यतोऽभिषिच्यत । तस्माद्वा एष विशां प्रियः । विशो हि मध्यतोऽभिषिच्यते ।

यद्वा एनमदो दिशोऽनुव्यास्थापयन्ति । तत्सुवर्गं लोकमभ्यारोहति । यदिमं लोकं न प्रत्यवरोहेत । अतिजनं वेयात् । उद्वा मायेत् । यदेष प्रतीचीनः स्तोमो भवति । इममेव तेन लोकं प्रत्यवरोहति । अथो अस्मिन्नेव लोके प्रतितिष्ठत्यनुन्मादाय (५) ।

अर्कं राजन्यो भवन्ति दशपेयो माद्येत्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टकेऽष्टमाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथाष्टमप्रपाठके नवमोऽनुवाकः ।

इयं वै रजता । असौ हरिणी । यद्रुक्मौ भवतः । आभ्यामेवैनमुभयतः परिगृह्णाति । वरुणस्य वा अभिषिच्यमानस्याऽऽपः । इन्द्रियं वीर्यं निरघ्नन् । तत्सुवर्णꣳ हिरण्यमभवत् । यद्रुक्ममन्तर्दधाति । इन्द्रियस्य वीर्यस्यानिर्घाताय । शतमानो भवति शतक्षरः । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । आयुर्वै हिरण्यम् । आयुष्या एवैनमभ्यतिक्षरन्ति । तेजो वै हिरण्यम् । तेजस्या एवैनमभ्यतिक्षरन्ति । वर्चो वै हिरण्यम् । वर्चस्या एवैनमभ्यतिक्षरन्ति (१) ।

शतक्षरोऽष्टौ च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टकेऽष्टमाध्याये नवमोऽनुवाकः ॥ ९ ॥

अथाष्टमप्रपाठके दशमोऽनुवाकः ।

अप्रतिष्ठितो वा एष इत्याहुः । यो राजसूयेन यजेत इति । यदा वा एष एतेन द्विरात्रेण यजेते । अथ प्रतिष्ठा । अथ संवत्सरमाप्नोति । यावन्ति संवत्सरस्याहोरात्राणि । तावतीरेतस्य स्तोत्रीयाः । अहोरात्रेष्वेव प्रतितिष्ठति । अग्निष्टोमः पूर्वमहर्भवति । अतिरात्र उत्तरम् ( १ ) । नानैवाहोरात्रयोः प्रतितिष्ठति । पौर्णमास्यां पूर्वमहर्भवति । व्यष्टकायामुत्तरम् । नानैवार्धमासयोः प्रतितिष्ठति । अमावास्यायां पूर्वमहर्भवति । उदृष्ट उत्तरम् । नानैव मासयोः प्रतितिष्ठति । अथो खलु । ये एव समानपक्षे पुण्याहे स्याताम् । तयोः कार्यं प्रतिष्ठित्यै ( २ )। अपशव्यो द्विरात्र इत्याहुः । द्वे ह्येते छन्दसी । गायत्रं च त्रैष्टुभं च । जगतीमन्तर्यन्ति । न तेन जगती कृतेत्याहुः । यदेनां तृतीयसवने कुर्वन्तीति । यदा वा एषाऽहीनस्याहर्भजते । साह्नस्य वा सवनम् । अथैव जगती कृता । अथ पशव्यः । व्युष्टिर्वा एष द्विरात्रः । य एवं विद्वान्द्विरात्रेण यजते । व्येवास्मा उच्छति । अथो तम एवापहते । अग्निष्टोममन्तत आहरति । अग्निः सर्वा देवताः । देवतास्वेव प्रतितिष्ठति ( ३ )।

उत्तरं प्रतिष्ठित्यै पशव्यः सप्त च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टकेऽष्टमाध्याये दशमोऽनुवाकः ॥ १० ॥

वरुणस्य जामीश्वर आग्नेयमिन्द्रस्य यज्ञिर्याग्निष्टोममुपं त्वेयं वै
रंजताऽप्रंतिष्ठितो दर्श ॥ १० ॥

वरुणस्य यदश्विभ्यां यज्ञिषु तस्मादुद्वतीः सप्तत्रिंशत् ॥ ३७ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टकेऽ-
ष्टमोऽध्यायः ॥ ८ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमाष्टकः (काण्डः)
समाप्तिमगमत् ॥

(मूलक्रमेण—अष्ट० १ अध्या० ८ अनु० १० (७८)।

(भाष्यक्रमेण—कां० १ प्रपा० ८ अनु० ७८)।

अथ सभाष्ये तैत्तिरीयब्राह्मणे

# द्वितीयं काण्डम् ।

( तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः ) ।

यस्य निश्वसितं[1] वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
आधानं वाजपेयश्च राजसूयस्तथाऽपरे ।
कर्मशेषाः केचिदत्र काण्डे प्रथम ईरिताः ॥
अग्निहोत्रं च होतार उपहोमा[2]ख्यमन्त्रकाः ।
सौत्रामणीसवाः सूक्तं वक्ष्यन्तेऽस्मिन्द्वितीयके ॥
काण्डे प्रपाठका अष्टाविहाऽऽद्ये तु प्रपाठके ।
अग्निहोत्र उपोद्घातोऽनुवाके प्रथमे भवेत् ॥

प्रतिपाद्यमर्थं बुद्धौ संगृह्य तदर्थमर्थान्तरवर्णनमुपोद्घातः । इह चाग्निहोत्रं प्रतिपाद्यं तद्बुद्धौ संगृह्य तत्प्रशंसा प्रथमं क्रियते । महाभागैः पितृभिरप्यस्मिन्नग्निहोत्रे भागधेयं प्रार्थितम् । किमु वक्तव्यमग्निहोत्रस्य माहात्म्यमित्येवं प्रशंसा । तदर्थमिमामाख्यायिकामाह—

अङ्गिरसो वै सत्रमासत । तेषां पृश्निर्घर्मधुगासीत् । सर्जीषेणाजीवत् । तेऽब्रुवन् । कस्मै नु सत्रमास्महे । येऽस्या ओषधीर्न जनयाम इति । ते दिवो वृष्टिमसृजन्त । यावन्तः स्तोका अवापद्यन्त । तावतीरोषधयोऽजायन्त, इति ।

अङ्गिराश्चतुर्थवेदप्रवर्तकाचार्यः । तस्य कुले समुत्पन्नाः सर्वेऽप्यङ्गिरसः । ते यदा सत्रमन्वतिष्ठंस्तदा तेषां पृश्निः काचिच्छ्वेता गौर्घर्मधुगासीत् । प्रव-

---

1 क. निःश्वसितं । 2 ग. °होमाः सम° ।

र्ग्येहविर्घर्मः। तं दोग्धीति घर्मधुक्। सा चारण्ये तृणमलब्ध्वा निष्पीडितरसस्य सोमस्य यदृजीषं तद्भक्षणेनाजीवत्। तदा कृपालवोऽङ्गिरसः परस्परमिदमब्रुवन्। ये वयमस्या गोर्भक्षणाय तृणविशेषानपि नोत्पादयामस्तादृशा असमर्था वयं कस्मै खलु प्रयोजनाय सत्रमनुतिष्ठामः। ऋद्धिकामैर्हि सत्रमनुष्ठेयम्। गोग्रासमपि संपादयितुमशक्तानामस्माकं का नामान्या समृद्धिर्भविष्यतीति। ततः कारीर्याद्यनुष्ठानेन वृष्टौ संपादितायां यावन्तो जलबिन्दवस्तावत्य ओषधय उत्पन्नाः।

अथाग्निहोत्रप्रशंसाप्रसङ्गेन पितृभ्यो लेपमार्जनं विधत्ते—

ता जाताः पितरो विषेणालिम्पन् (१)। तासां जग्ध्वा रुप्यन्त्यैत्। तेऽब्रुवन्। क इदमित्थमकरिति। वयं भागधेयमिच्छमाना इति पितरोऽब्रुवन्। किं वो भागधेयमिति। अग्निहोत्र एव नोऽप्यस्त्वित्यब्रुवन्। तेभ्य एतद्भागधेयं प्रायच्छन्। यद्धुत्वा निमार्ष्टि। ततो वै त ओषधीरस्वदयन्, इति।

या उत्पन्ना ओषधयस्ता एताः पितृभिर्विषेण लेपिताः। तासां मध्ये कियदपि तृणं भक्षयित्वा विषदोषेण पीडां प्राप्नुवती सत्रमागात्। तां दृष्ट्वा तेऽङ्गिरसः को नामेत्थं कृतवानिति विचारितवन्तः। तदानीं भागार्थिनो वयमिति पितृभिरुक्ते सति तदिच्छानुसारेणाप्यग्निहोत्र एव तेषां भागं दत्तवन्तः। तेन लेपमार्जनेन भागेन तुष्टाः पितरो विषमपनीय ता ओषधीः स्वादूकृतवन्तः। यदेतद्धोमानन्तरभावि लेपमार्जनं तत्सूत्रकारेण स्पष्टमुक्तम्— "प्राचीनावीति(ती) स्वधा पितृभ्यः पितॄञ्जिन्वेति दक्षिणेन वेदिं भूरु निमृज्य" इति।

तदेतद्विषापनयनवेदनं प्रशंसति—

य एवं वेद (२)। स्वदन्तेऽस्मा ओषधयः, इति।

अथैतद्धेनुप्रसङ्गाद्बुद्धिस्थं वत्सविषयं कंचिद्धर्मं सूचयति—

ते व॒त्समु॒पावा॑सृजन् । इ॒दं नो॑ ह॒व्यं प्रदा॑प॒येति॑ । सो॑ऽब्रवी॒द्वरं॑ वृणै । दश॑ मा॒ रात्री॒र्जा॑त॒ न दो॑हन् । आसं॒ग॒वं मा॒त्रा स॒ह च॑राणी॒ति । तस्मा॑द्व॒त्सं जा॒तं दश॒ रात्री॒र्न दु॑हन्ति । आसं॒ग॒वं मा॒त्रा स॒ह च॑रति । वारे॑ वृत॒ꣳ ह्य॑स्य । तस्मा॑द्व॒त्सꣳ स॒ꣳसृष्ट॒धय॒ꣳ रु॒द्रो घातु॑कः । अति॒ हि सं॒धां धय॑ति ( ३ ), इति ।

अ॒लि॒म्प॒न्वे॒द॒ घा॒तु॑क॒ एकं॑ च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयकाण्डे प्रथम-प्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

हे वत्स नोऽस्मदर्थं स्तनपानपूर्वकं गां दोहयित्वा प्रवर्ग्यार्थमिदं हव्यं प्रदापयेत्येवं वदन्तस्तेऽङ्गिरसो वत्सं पाशात्प्रमुच्य गोसमीपे प्रेरितवन्तः । स च वत्सो वरं वृतवान् । जातं मां दृष्ट्वा दशरात्रीर्भवन्तो गां न दुहन्तु प्रतिदिनं दोहादूर्ध्वं संगवकालपर्यन्तं मात्रा सह संचराणीति । यस्मादयं वत्सेन वरो वृतस्तस्माच्छ्रुतिस्मृत्यभिज्ञाः शिष्टा दशसु रात्रीषु गां न दुहन्ति । वत्सं संगवपर्यन्तं मात्रा सह मुञ्चन्ति । यस्मात्संगवपर्यन्तमेव वत्सेन वरो वृतस्तस्मात्संगवादूर्ध्वमग्निहोत्र्या धेन्वा सह संसृष्टः स्तनं पिबति यो वत्सस्तं वत्सं रुद्रः क्रूरोऽग्निर्हन्ति । अयं हि वत्सः संधां संगवपर्यन्तमित्येतादृशीं स्वकीयभाषामतिलङ्घ्य स्तनं पिबति तस्माद्रुद्रेण तस्य हननं युक्तम् । न ह्युत्तरकाले स्तने पीते सति रात्रावग्निहोत्रार्थं हविः संभवति । अत्रैतद्धर्मत्रय-मवगम्यते—दशसु रात्रिषु क्षीरं न ग्राह्यम्, प्रतिदिनमासंगवं मात्रा सह वत्सो मोचनीयः, पश्चान्मातुः सकाशादपाकर्तव्य इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

१ क. ख. प्रशंसति । २ क. ख. °दपक° ।

अथ प्रथमप्रपाठके द्वितीयोऽनुवाकः।

प्रथमेऽनुवाकेऽग्निहोत्रस्योपोद्घात उक्तः। द्वितीयेऽग्निहोत्रं निरूप्यते। तत्राऽऽदौ तावत्स्वाहाकारमन्त्रस्योत्पत्तिं वक्तुमाख्यायिकामाह—

प्रजापतिरग्निमसृजत। तं प्रजा अन्वसृज्यन्त। तमभाग उपास्त। सोऽस्य प्रजाभिरपाक्रामत्। तमवरुरुत्समानोऽन्वैत्। तमवरुधं नाशक्नोत्। स तपोऽतप्यत। सोऽग्निरुपारमतातापि वै स्य प्रजापतिरिति। स रराटादुदमृष्ट (१)। तद्घृतमभवत्। तस्माद्यस्य दक्षिणतः केशा उन्मृष्टाः। तां ज्येष्ठलक्ष्मी प्राजापत्येत्याहुः। यद्रराटादुदमृष्ट। तस्माद्रराटे केशा न सन्ति। तदग्नौ प्रागृह्णात्। तद्व्यचिकित्सत्। जुहवानी३माहौषा३मिति। तद्विचिकित्सायै जन्म, इति।

यदा प्रजापतिना सृष्टमग्निमनु प्रजा अन्या असृज्यन्त तदानीं सोऽग्निर्भागरहित एव तं प्रजापतिं कंचित्कालमुपास्य खिन्नः सन्प्रजाभिः सह तस्मात्प्रजापतेरपाक्रामत्। तमग्निमवरोद्धुमिच्छन्प्रजापतिः पृष्ठतो गत्वा पलायमानं तमवरोद्धुं नाशक्नोत्। अशक्तः स प्रजापतिः श्रमेण संतापं प्राप्तः। ततोऽग्निस्तं दृष्ट्वा स प्रजापतिस्तप्त इत्येवं वदन्पलायनादुपरतः। स च प्रजापतिः श्रमजन्यं स्वेदजलं स्वकीयललाटादुन्मृष्टवान्। तच्च जलं घृतरूपेण प्रादुरभूत्। यस्मात्प्रजापतिः स्वकीयललाटस्य दक्षिणभागे स्थितं स्वेदजलममङ्गलं मन्यमान उन्ममार्ज तस्माल्लोकेऽपि यस्य पुरुषस्य दक्षिणभागे केशा उन्मृष्टा इवोर्ध्वाः पृष्ठतोऽवनता उत्पद्यन्ते तस्य पुरुषस्य तां केशोत्पत्तिं प्रजापतिसंबन्धिनी ज्येष्ठलक्ष्मीत्येवमभिज्ञा आहुः। लक्ष्म्याः पूर्वमुत्पन्ना ज्येष्ठलक्ष्मीर्या दारिद्र्यस्वामिनीं देवतामुद्दिश्य ज्येष्ठाव्रतमाचरन्ति। तद्रूपत्वादेव

१ ग. °मत। ता°।

तथाविधं केशलक्षणं दृष्ट्वा मातापितृगतं तत्फलं व्यवहरन्ति । यस्मादयं प्रजापतिर्ललाटादुन्मार्जनं चकार तस्मात्कस्यापि ललाटे केशा न विद्यन्ते । तेन तदुत्पन्नं घृतं होतुं हस्ते गृहीत्वा स्वेदजलस्यापवित्रत्वसंदेहेन होमं कुर्यां न वेत्येवं व्यचिकित्सत्संदेहं कृतवान् । विविधस्य केतनस्य ज्ञानस्येच्छा विचिकित्सा । कोटिद्वयात्मकः संशय इत्यर्थः । तस्याश्च विचिकित्सायास्तदा जन्म संपन्नम् ।

एतद्वेदनं प्रशंसति—

य एवं विद्वान्विचिकित्सति ( २ ) ।

वसीय एव चेतयते, इति ।

यः पुमानेवं प्रजापतेर्विचिकित्सोत्पत्तिं विद्वान्स्वयं शास्त्रार्थं विचारयति स पुमान्वसीय एव चेतयते वस्तुतत्त्वमेव निश्चिनोति ।

इदानीं स्वाहाकारोत्पत्तिं दर्शयति—

तं वागभ्यवदज्जुहुधीति । सोऽब्रवीत् ।

कस्त्वमसीति । स्वैव ते वागित्यब्रवीत् । सोऽ-

जुहोत्स्वाहेति । तत्स्वाहाकारस्य जन्म, इति ।

तं होमविषये संदिहानं प्रजापतिं काचिददृश्या वाग्जुहुधीत्यब्रवीत् । ततः प्रजापतिना कस्त्वमिति पृष्टे सति तत्र स्वकीया या वागस्ति सैवाहमित्यब्रवीत् । ततः प्रजापतिः स्वाहेत्युच्चारयन्नजुहोत् । स्वकीया वाग्जुहुधीत्याहेत्यस्य मन्त्रस्यार्थः । तस्मात्पदद्वयं मिलित्वा स्वाहाकारमन्त्रस्य स्वरूपं संपन्नम् ।

एतद्वेदनं प्रशंसति—

य एवꣳ स्वाहाकारस्य जन्म वेद ।

करोति स्वाहाकारेण वीर्यम्, इति ।

तमेतं मन्त्रं होमे विनियुङ्क्ते—

यस्यैवं विदुषः स्वाहाकारेण जुह्वति ( ३ ) ।

---

१ ख. °त्युच्चरन्° ।

भोगायैवास्यं हुतं भवति, इति।

अथाग्निहोत्रशब्दार्थं निरूपयति—

तस्या आहुत्यै पुरुषमसृजत। द्वितीयमजुहोत्। सोऽश्वमसृजत। तृतीयमजुहोत्। स गामसृजत। चतुर्थमजुहोत्। सोऽविमसृजत। पञ्चममजुहोत्। सोऽजामसृजत (४)। सोऽग्निरबिभेत्। आहुतीभिर्वै माऽऽप्नोतीति। स प्रजापतिं पुनः प्राविशत्। तं प्रजापतिरब्रवीत्। जायस्वेति। सोऽब्रवीत्। किं भागधेयमभिजनिष्य इति। तुभ्यमेवेदꣳ हूयाता इत्यब्रवीत्। स एतद्भागधेयमभ्यजायत। यदग्निहोत्रम् (५)। तस्मादग्निहोत्रमुच्यते, इति।

पुरा प्रजापतेस्तापं दृष्ट्वा पलायनादुपरतोऽग्निः। प्रजास्त्वपक्रम्य गता एव। ततः प्रजापतिस्तस्मिन्नग्नौ पूर्वोक्तेन घृतेन स्वाहाकारेण यामाहुतिं प्रथममजुहोत्तदाहुतिसामर्थ्येन पुरुषमसृजत। तथा द्वितीयाद्याहुतिभिरश्वादीनसृजत। ततः प्रजानां पुनरुत्पत्तेः स्वस्य प्रजापतित्वं सुस्थितम्। तदानीमग्निर्भीतोऽभूत्तस्यायमभिप्रायः—प्रजापतिः पुनः पुनराहुतीभिरेव मां प्राप्नोति न तु भागं प्रयच्छति। तास्त्वाहुतीर्देवा एव गृह्णन्ति। तस्माद्भागराहितः सेवितुं न शक्नोमीति विचार्य पूर्ववत्पलायनमकृत्वा तस्मिन्प्रजापतावेव प्रविष्टः। स च प्रजापतिर्जायस्वेति पुनरग्निमब्रवीत्। स चाग्निस्तदुदर एव स्थित्वा भागराहितोऽहं क्षुधितः सेवितुं न शक्नोमि भागो मेऽपेक्षितः। कं भागमभिलक्ष्याहमुत्पत्स्य इत्यग्निनोक्तः प्रजापतिरिदमग्निहोत्रगतं हविस्तुभ्यमेव हूयत इति भागं दत्तवान्। ततोऽग्निहोत्रहविःस्वरूपं भागधेयमभिलक्ष्याग्निरुत्पन्नः। तस्मादग्नये होत्रं होमोऽस्मिन्कर्मणीति बहुव्रीहिव्युत्पत्त्याऽग्निहोत्रमिति कर्मनाम। अग्नये होत्रमिति तत्पुरुषव्युत्पत्त्या हविर्नाम।

अथास्य हविषः कालभेदेन व्यवस्थां विधत्ते—

तद्धूयमानमादित्योऽब्रवीत् । मा हौषीः । उभ- योर्वै नावेतदिति । सोऽग्निरब्रवीत् । कथं नौ होष्यन्तीति । सायमेव तुभ्यं जुहवन् । प्रात- र्मह्यमित्यब्रवीत् । तस्मादग्नये सायꣳ हूयते । सूर्याय प्रातः ( ६ ), इति ।

तद्धविरग्न्यर्थं प्रजापतिना हूयमानं दृष्ट्वा मा हौषीरित्येवमादित्यो निवा- रयामास । हेतुं चैवमवोचद्योऽयमग्निर्यश्चाहं तयोरावयोरेतद्धविर्न त्वेकस्याग्ने- रिति । तदानीमुभयोर्भागव्यवस्थायामग्निना पृष्टायां कालभेदेन व्यवस्थामु- वाच । तस्मादग्नये सायं जुहुयात्सूर्याय प्रातर्जुहुयात् । प्रातर्होमे द्वौ पक्षौ । उदितहोमोऽनुदितहोमश्चेति ।

तयोरुदितहोमपक्षमत्र विधत्ते—

आग्नेयी वै रात्रिः । ऐन्द्रमहः । यदनुदिते सूर्ये प्रातर्जुहुयात् । उभयमेवाऽऽग्नेयꣳ स्यात् । उदिते सूर्ये प्रातर्जुहोति । तथाऽग्नये सायꣳ हूयते । सूर्याय प्रातः, इति ।

रात्रावग्नेः प्रकाशाधिक्याद्रात्रिराग्नेयी । इन्द्रशब्देन परमैश्वर्ययोगात्सूर्योऽत्र विवक्षितः । तद्योगादहः सौर्यम् । एवं सत्युदयात्प्राचीनः सर्वोऽपि कालो रात्र्यन्तःपातीति कृत्वा तत्र सूर्याय हुतमपि हविराग्नेयमेव स्यात् । ततः कालद्वयवर्तिनो हविष आग्नेयत्वात्सूर्यो हविर्हीनो भवेत्तन्मा भूदित्युदयादूर्ध्वं प्रातर्होमः कार्यः । तथा सति कालद्वये द्वयोर्देवतयोर्होमौ व्यवस्थितौ भवतः ।

कालद्वयहोमं प्रशंसति—

रात्रिं वा अनु प्रजाः प्रजायन्ते । अह्ना प्रतिति-

---

१ ग. 'योरुभयो' ।

ष्ठन्ति । यत्सायं जुहोति (७) । प्रैव तेन जायते ।

उदिते सूर्ये प्रातर्जुहोति । प्रत्येव तेन तिष्ठति, इति ।

रात्रौ गर्भधारणात्प्रात्रिमनु प्रजा उत्पद्यन्ते । अह्नि जीवनहेतूनां कृषिवाणिज्यादीनां प्रवृत्तेरह्ना प्रतितिष्ठन्ति प्रतिष्ठिता भवन्ति । तस्मात्कालद्वयहोमेन प्रजोत्पादनं प्रतिष्ठां च प्राप्नोति ।

अथ प्रातःकाले मन्त्ररहितां द्वितीयामाहुतिं विधत्ते—

प्रजापतिरकामयत प्रजायेयेति । स एतदग्निहोत्रं

मिथुनमपश्यत् । तदुदिते सूर्येऽजुहोत् । यजुषाऽ-

न्यत । तूष्णीमन्यत् । ततो वै स प्राजायत ।

यस्यैवंविदुष उदिते सूर्येऽग्निहोत्रं जुह्वति (८) ।

प्रैव जायते । अथो यथा दिवा प्रजानन्नेति ।

तादृगेव तत, इति ।

प्रजोत्पत्तिसाधनमाहुतिद्वयोपेतत्वेन मिथुनरूपमग्निहोत्रमित्येवं प्रजापतिर्निश्चित्य सूर्योदयादूर्ध्वं मन्त्रेणैकममन्त्रकमपरं हविरित्याहुतिद्वयं हुत्वा प्रजा उत्पादयामास। तस्मादेवंविदुषः समन्त्रकोऽमन्त्रकश्चेत्याहुतिद्वयहोमेन प्रजोत्पत्तिर्भवति । अपि चोदयादूर्ध्वं होमे सति यथा लोके दिवा गच्छन्पुरुषो मार्गविशेषं चक्षुषा जानन्नेव गच्छति तादृगेव तदूर्ध्वमनुष्ठानम् ।

अत्र हि द्वौ पक्षौ । अग्निसूर्ययोरसंसृष्टहोम एकः पक्षः । सोऽयं पूर्वमुक्तः ।

अथ संसृष्टहोमं विधत्ते—

अथो खल्वाहुः । यस्य वै द्वौ पुण्यौ गृहे

वसतः । यस्तयोरन्यꣳ राधयत्यन्यं न । उभौ

वा वसतावृच्छतीति । अग्निं वावाऽऽदित्यः

सायं प्रविशति । तस्मादग्निर्दूरान्नक्तं ददृशे ।

1 क. द्वये हो ।

उभे हि तेजसी संपद्येते ( ९ ) । उद्यन्तं वावाऽऽदित्यमग्निरनुसमारोहति । तस्माद्धूम एवाग्नेर्दिवा ददृशे । यदग्नये सायं जुहुयात् । आ सूर्याय वृश्च्येत । यत्सूर्याय प्रातर्जुहुयात् । आऽग्नये वृश्च्येत । देवताभ्यः समदं दध्यात् । अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेत्येव साय होत- व्यम् । सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातः । तथोभाभ्या सायᳪं हूयते ( १० ) । उभाभ्यां प्रातः । न देवताभ्यः समदं दधाति, इति ।

अथोशब्दः पक्षान्तरोपक्रमार्थः । लोके यस्य गृहे द्वौ पुरुषौ पुण्यात्मानौ समानैश्वर्यौ समानविद्यौ वा परस्परस्नेहयुक्तौ निवसतस्तस्य गृहे तयोः पुण्यात्मनोर्मध्ये कंचित्पुण्यात्मानं यः पूजयित्वाऽन्यं न पूजयति स पूजक- स्तावुभौ पुण्यात्मानावुभावप्यृच्छति हिनस्तीत्यर्थः । पूजाराहित्यमेवैकस्य हिंसा । इतरस्य तु सत्यामपि पूजायां स्निग्धस्य द्वितीयस्य तदभावेन मनः क्लिश्नाति । एवमत्रापि परस्परस्निग्धयोरग्न्यादित्ययोर्मध्ये सायं प्रातर्वा कस्य- चिदेव होमे सत्युभावपि क्लिश्नीतः । परस्परस्नेहश्चैवमवगन्तव्यः । सायं- कालादूर्ध्वमादित्योऽग्निं प्रविशति । अत एव तेजोद्वयमेलनाद्रात्रौ दूरेऽप्यग्नि- र्दृश्यते । तथोद्यन्तमादित्यमग्निरनुकूलः समारोहति । तस्मादग्नितेजसः सूर्ये प्रविष्टत्वादहनि दूरे धूम एव दृश्यते न तु तेजः । एवं परस्परस्नेहे सति सायं- काले यदाऽग्न्यर्थमेव हुत्वा सूर्यार्थं न जुहुयात्तदानीमयं सूर्याद्विच्छिद्यते । एवं प्रातरपि सूर्यार्थमेव हुत्वा वह्न्यर्थमजुह्वत्पुमानग्नेर्विच्छिद्येत । अपि च देवतानां वह्न्यादित्यरूपाणां सपरिवाराणां कलहं संपादयेत् । अतस्तत्प- रिहाराय सायंकालेऽग्निना सह सूर्यं मिश्रयित्वा तादृशेन मन्त्रेण जुहुयात् । मन्त्रस्य चायमर्थः—अग्निरूपं यज्ज्योतिः सूर्यरूपं च यज्ज्योतिस्तदुभयं विधाय तस्मा इदं हविरिति स्वकीया वागाह । यद्वा स्वाहाशब्दस्य निपात- स्य दानार्थवाचित्वादिदं हविर्दत्तमिति । एवं प्रातःकालेऽपि सूर्येण सहाग्निं

मिश्रयित्वा " सूर्यः " इत्यादिमन्त्रेण जुहुयात् । तथा सति कालद्वयेऽपि पुण्यात्मनो रुभयोर्होमात्फलहं न संपादयति ।

सायंकालीनमन्त्रे पूर्वभागस्य तात्पर्यं दर्शयति—

अग्निर्ज्योतिरित्याह । अग्निर्वै रेतोधाः, इति ।

रेतसो गर्भाशये स्थापकोऽग्निरतस्तद्भागपाठेन यजमानो रेतो धारयति । अत्रोत्तरभागब्राह्मणमुन्नेयम् । तदुक्तं बौधायनेन—" द्विरङ्गुल्या प्राश्नाति जा ज्योतिरिति " इति ।

तमिमं मन्त्रं प्रसङ्गाद्बुद्धिस्थं व्याचष्टे—

प्रजा ज्योतिरित्याह । प्रजा एवास्मै प्रजनयति, इति ।

येयमुत्पादनीया प्रजा सा ज्योतिःस्वरूपोत्पद्यताम् । अनेन मन्त्रेण यजमानार्थं प्रजा उत्पादयति । अथवा सूर्यो ज्योतिः स्वाहेत्यस्योत्तरभागस्यार्थतो निर्देशः प्रजा ज्योतिरित्यनेन विवक्षितः । सूर्यात्मकं ज्योतिः प्रजा उत्पादयतीति तस्यार्थः । अनेनोपलक्षिते मन्त्रभागे पठिते सति यजमानार्थं प्रजा उत्पादयति । एतदे(मे)व श्रुत्यभिप्रायं हृदि निधायाऽऽपस्तम्बः—" प्रजा ज्योतिः" इत्येतं मन्त्रमुपेक्ष्य भक्षणे शाखान्तरमन्त्रमुदाजहार—"पूषाऽसीति लेपं प्राश्नाति " इति ।

प्रातःकालीनमन्त्रे पूर्वभागस्य तात्पर्यं दर्शयति—

सूर्यो ज्योतिरित्याह । प्रजास्वेव प्रजातासु रेतो दधाति, इति ।

पूर्वमन्त्रस्योत्तरभागे याः प्रजा उत्पादितास्तासु प्रजासु पुनरपत्योत्पादनार्थं सूर्यो ज्योतिरिति भागपाठेन रेतः स्थापयति । ज्योतीरूपः सूर्यो रेतः स्थापयत्विति तस्यार्थः ।

उत्तरभागस्य तात्पर्यं दर्शयति—

ज्योतिरग्निः स्वाहेत्याह । प्रजा एव प्रजाता अस्यां प्रतिष्ठापयति (११), इति ।

ज्योतीरूपोऽग्निरस्यां भूमावुत्पन्नाः प्रजाः प्रतिष्ठापयत्विति मन्त्रार्थः । तेन तथैव प्रतिष्ठापयतीति ।

कालद्वयेऽपि द्वितीयामाहुतिं विधत्ते—

तूष्णीमुत्तरामाहुतिं जुहोति ।

मिथुनत्वाय प्रजात्यै, इति ।

आहुत्योर्द्वित्वेन मिथुनहोमस्य मिथुनत्वम् ।

उदितहोमानुदितहोमरूपौ यौ द्वौ पक्षौ तयोरुदितहोमपक्षः पूर्वं विहितः । इदानीमनुदितहोमपक्षं विधत्ते—

यदुदिते सूर्ये प्रातर्जुहुयात् । यथाऽतिथये प्रद्रुताय शून्यायांऽऽवसथायांऽऽहार्यꣳ हरन्ति । तादृगेव तत् । काह ततस्तद्भवतीत्याहुः । यत्स न वेद । यस्मै तद्धरन्तीति । तस्माद्यदौषसं जुहोति । तदेव संप्रति । अथो यथा प्रार्थमौषसं परिवेवेष्टि । तादृगेव तत् ( १२ ), इति ।

अमृष्ट विचिकित्सति जुहुत्यजामसृजताग्निहोत्रꣳ सूर्याय प्रातर्जुहोति जुह्वति संपद्यते हूयते स्थापयति संप्रति द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमाध्यये द्वितीयोऽनुवाकः ॥ २ ॥

---

सूर्योऽयमतिथिरूपेणोदयकाले समागच्छति । अतस्तदागमनात्प्रागेवार्घ्यपाद्यादिस्थानीयमाहुतिरूपं सत्कारसाधनं संपादनीयम् । तत्परित्यज्योदयादूर्ध्वं होमे सति यथा लोके कश्चिन्मन्दः पुरुषोऽतिथौ प्रतिनिवृत्य गते सति पश्चादर्घ्यपाद्यादिकं संपादनीयं सत्कारसाधनं संपादयति तादृगेव तदनुष्ठानं भवति । तच्चायुक्तम् । यस्मा अतिथये यत्सत्कारद्रव्यं संपादयति सोऽतिथिर्यस्मात्कारणान्न जानाति तस्मात्कारणात्तत्सत्कारसाधनं द्रव्यं काह खलु भवति न काप्युपयुज्यत इत्येवमभिज्ञा आहुः । यस्मादेवमुदयादूर्ध्वं होमे दोषोऽस्ति तस्माद्दोषसमुषःकालसंबन्धि हव्यं जुहोतीति यत्तदेव संप्रति सम्य-

---

१ ख. °न्मत्तः पु° ।

गनुष्ठानम् । अपि च यथा लोके राजसेवको जनसमूह उषःकाले राज्ञः शयनोत्थानात्पूर्वमौषसमुषःकाले सेवोचितं प्राथ्र्यं प्रकृष्टेन प्रयोजनेनोपेतं पादप्रक्षालनार्थं जलपादुकादिकं पुरस्तात्स्थापितं परिवेष्ट्य राज्ञोऽवसरं प्रतीक्षमाणास्तिष्ठति तादृगेव तदुदयात्प्राचीनमनुष्ठानं द्रष्टव्यम् । अत्राग्निहोत्रशब्दः कर्मनामधेयं न तु देवताविधिपरमि( र इ )ति प्रथमाध्यायस्य चतुर्थपादे यन्मीमांसितं तदस्माभिराघारप्रतिपादके "भुवनमसि" इत्यनुवाक एवोदाहृतम् । आघाराग्निहोत्रशब्दयोर्नामत्वस्यैकेनैवाधिकरणेन निर्णीतत्वात् । अग्निहोत्रस्य मूलप्रकृतित्वमष्टमे चिन्तितम् । तदपि "वायव्यश्श्वेतमालभेत" इत्यादीनां काम्यपशूनां विकृतित्वप्रतिपादनप्रसङ्ग उदाहृतम् । इष्ट्यग्निहोत्रसोमानां मूलप्रकृतित्वस्यैकेनैवाधिकरणेन निर्णीतत्वाद्वायव्यादिपशूनामग्नीषोमीयपशुः प्रकृतिः । तस्य चावान्तरप्रकृतित्वेन मूलप्रकृतिसापेक्षत्वान्मूलविचारस्तत्र कृतः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ प्रथमप्रपाठके तृतीयोऽनुवाकः ।

---

द्वितीयेऽनुवाकेऽग्निहोत्रं निरूपितम् । तृतीयेऽधिश्रयणादिका हविःसंस्कारा उच्यन्ते । "गार्हपत्यादुदीचोऽङ्गारान्निरूह्य व्यन्तान्गार्हपत्येन कृत्वेत्युपक्रम्य तेष्वग्निहोत्रमधिश्रयति" इति यत्सूत्रकारेणोक्तं तदिदं विधत्ते—

रुद्रो वा एषः । यदग्निः । पत्नी स्थाली ।
यन्मध्येऽग्नेरधिश्रयेत् । रुद्राय पत्नीमपि
दध्यात् । प्रमायुका स्यात् । उदीचोऽङ्गारा-
न्निरूह्याधिश्रयति । पत्नियै गोपीथाय, इति ।

योऽयमग्निः स एष रुद्रः क्रूरो देवः । रुद्रो वै क्रूर इति श्रुत्यन्तरात् । येयं हविराधारभूता स्थाली सा पत्नीस्थानीया । एवं सत्यग्निमध्ये स्थाल्यामधिश्रितायां रुद्राय पत्नी समर्पिता स्यात् । ततः सा म्रियेत । अतस्तत्परिहारायोत्तरदिग्वर्तिनोऽङ्गारान्पृथक्कृत्वा तेषु स्थालीमधिश्रयेत् । तच्च पत्न्या रक्षार्थं भवति ।

---

१ क. परिविष्ट्या राजाऽव° । २ क. °येऽग्नि° । ३ ग. °रूह्यावन्ता° । ४ ग. °क्कृत्य ते° । ५ ग. रक्षणार्थं ।

अङ्गाराणां पृथक्करणे विशेषं विधत्ते—

व्यन्तान्करोति । तथा पत्न्य-

प्रमायुका भवति (१), इति ।

गार्हपत्यायतनेन वियुक्तं यत्स्थानं तत्स्थानं येषामङ्गाराणां ते व्यन्ताः । तथा सति रुद्रसंस्पर्शाभावात्पत्नी न म्रियते ।

संतापाधिक्यात्पात्रस्योर्ध्वमुद्गतस्य क्षीरस्य बहिष्पतनव्यावृत्तये जलेन प्रतिषेकं विधत्ते—

घर्मो वा एषोऽशान्तः । अहरहः प्रवृज्यते । यद-

ग्निहोत्रम् । प्रतिषिञ्चेत्पशुकामस्य । शान्तमिव हि

पशव्यम्, इति ।

अग्निहोत्रहविर्यदस्त्येषोऽशान्तो घर्मः । यथा घर्मशब्दवाच्यं प्रवर्ग्यहविर-शान्तमेवमिदमप्यशान्तम् । प्रतिदिनं प्रकर्षेण तप्यमानत्वात् । अतस्तच्छान्त्यर्थ-मुद्गतस्य क्षीरस्योपरि जलेन प्रतिषेकं पशुकामः कुर्याद्यस्माच्छान्तमेव हविः पशुभ्यो हितं भवति ।

अधिकारिविशेषेण प्रतिषेकं निषेधति—

न प्रतिषिञ्चेद्ब्रह्मवर्चसकामस्य । समि-

द्धमिव हि ब्रह्मवर्चसम्, इति ।

यस्माद्ब्रह्मवर्चसमुज्ज्वलं भासते, तस्मात्तत्कामी प्रतिषेकेण क्षीरोत्सेकं न शमयेत् ।

तमिमं पक्षं दूषयित्वा प्रतिषेकस्य प्रतिप्रसवं विधत्ते—

अथो खलु । प्रतिषिच्यमेव । यत्प्रति-

षिञ्चति (२)। तत्पशव्यम् । यज्जुहोति ।

तद्ब्रह्मवर्चसि । उभयमेवाकः, इति ।

अथोशब्दः पक्षान्तरार्थः । खल्वाहुरिति शेषः । प्रतिषेकेण पशव्यत्वं होमेन ब्रह्मवर्चसमित्युभयमपि करोत्येव ।

यदुक्तं सूत्रकारेण—"तृणेन ज्वलताऽवेक्षते" इति । तदिदं विधत्ते--

प्रच्युतं वा एतदस्माल्लोकात् । अगतं देवलोकम् । यच्छृतꣳ हविरनभिघारितम् । अभिद्योतयति । अथैवैनदुद्घारयति । अथो देवत्रैवैनद्गमयति ( ३ ), इति ।

शास्त्रीयश्रपणेन(?) हविषोऽस्माल्लोकात्प्रच्युतिः । अनभिघारितत्वात्स्वर्गप्राप्त्यभावः । अतस्तं(स्तां) वारयितुं ज्वलता तृणेनाभिद्योतिते सत्येतद्धविरभिघारितमेव भवति । अपि चैतद्धविर्देवेष्वेव गमयति ।

पर्यग्निकरणं विधत्ते—

पर्यग्नि करोति । रक्षसामपहत्यै, इति ।

ज्वलतस्तृणस्य परितः प्रदर्शनं पर्यग्निकरणम् । तेन रक्षांस्यपहन्यन्ते । तस्याऽऽवृत्तिं विधत्ते—

त्रिः पर्यग्नि करोति । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय, इति ।

तिस्र आवृत्तयो यस्य यज्ञस्य सोऽयं त्र्यावृत् । "त्रिषत्या हि देवाः" इति श्रुत्यन्तरेण त्रिवारानुष्ठाने देवानां सत्यत्वबुद्ध्युदयात्रिरावृत्तो यज्ञः प्रशस्तः । अपि च त्रिरावृत्त्या दोषाभावस्य पर्यालोचितत्वाद्धविर्यज्ञयोग्यं भवति ।

यदुक्तं सूत्रकारेण—"वर्त्म कुर्वन्प्रागुद्वासयत्युदक्प्रागुदग्वा" इति । तत्रोदगुद्वासनपक्षं विधत्ते--

यत्प्राचीनमुद्वासयेत् । यजमानꣳ शुचाऽर्पयेत् । यद्दक्षिणा । पितृदेवत्यꣳ स्यात् । यत्प्रत्यक् ( ४ ) । पत्नीꣳ शुचाऽर्पयेत् । उदीचीनमुद्वासयति । एषा वै देवमनुष्याणाꣳ शान्ता दिक् । तामेवैनदनूद्वासयति शान्त्यै, इति ।

प्राक्प्रतीच्योर्यजमानपत्नीस्थानत्वात्तत्र हविरुद्वासने तयोस्तापप्राप्तिः। दक्षिणादिशः पित्र्यधीनत्वात्तत्रोद्वासितं हविः पितृदेवत्यं भवेत्। देवमनुष्याणां चोपद्रवाभावेन शान्तेयमुत्तरा दिक्। अतस्तामनूद्वासितं हविः शान्त्यै भवति।

विधत्ते—

वर्त्म करोति। यज्ञस्य संतत्यै, इति।

पात्रस्य भूमावाकर्षणेन भस्मना च लाञ्छिता भूमिर्वर्त्मवदवलोक्यते। उद्वासनकाले तथा कुर्यात्। तेन यज्ञः संततो भवति।

यदुक्तं सूत्रकारेण—“स्रुक्स्रुवावादाय प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितपति” इति। तदिदं प्रतितपनं विधत्ते—

निष्टपति। उपैव तत्स्तृणाति, इति।

तत्तेन निःशेषतपनेन स्रुक्स्रुवयोरुपस्तरणं कृतं भवति।

निष्टप्तायां स्रुचि चतुर्वारं हविष्पूरणं स्रुवेण कुर्यादिति विधत्ते—

चतुरुन्नयति। चतुष्पादः पशवः

(५)। पशूनेवावरुन्धे, इति।

चतुर्वारावृत्त्या चतुष्पादः पशवो भवन्ति।

ग्रहणकाले तेषां पूरणं विधत्ते—

सर्वान्पूर्णानुन्नयति। सर्वे हि पुण्या राद्धाः, इति।

स्रुवाणां परिपूर्त्या यजमानसंबन्धिनः सर्वे पुरुषाः पुण्यात्मानो धनसमृद्धा भवन्ति।

चतुर्णां पर्यायाणां मध्ये व्यापारान्तरेण व्यवधानाभावं विधत्ते—

अनूच उन्नयति। प्रजाया अनूचीनत्वाय।

अनूच्येवास्य प्रजार्धुका भवति, इति।

एकं स्रुवमनु द्वितीयस्रुवोऽञ्चति प्रवर्तत इत्येते चत्वारोऽन्वञ्चः। तेन ज्येष्ठं पुत्रमनु द्वितीयः पुत्र इत्येवमनूचीना प्रजा भवति। सा च द्रव्यसमृद्ध्यै संपद्यते।

यदुक्तं सूत्रकारेण “गार्हपत्ये हस्तं प्रताप्य संमृशति” इति। तदिदं विधत्ते—

संमृशति व्यावृत्त्यै, इति।

संमर्शनेन चतुरुन्नीतस्य देवार्थस्येतरस्मात्पात्रस्थाद्द्रव्याद्व्यावृत्तिर्भवति । संमर्शनात्पूर्वमपरेण गार्हपत्यं समीपे हविःसादनं शाखान्तरसिद्धं सूत्रकारेणोदाहृतम्—" अपरेण गार्हपत्यमुन्नयनदेशेऽतितरां वा सादयित्वा गार्हपत्ये हस्तं प्रताप्य संमृशति " इति । तस्मात्सादनादुत्तरकालभाविसादनमुपसादनम् । तच्चोपसादनमादौ गार्हपत्यसमीपे कृत्वा पश्चादाहवनीयसमीपमुपसाद्यानन्तरं होतव्यमिति शाखान्तराध्यायिनां मतम् ।

तत्र गार्हपत्यसमीपे यदुपसादनं तदेतन्निषेधति—

नाहोष्यन्नुपसादयेत् । यदहोष्यन्नुपसादयेत् । यथाऽन्यस्मा उपनिधाय (६) । अन्यस्मै प्रयच्छति । तादृगेव तत् । आऽस्मै वृश्च्येत । यदेव गार्हपत्येऽधिश्रयति । तेन गार्हपत्यं प्रीणाति, इति ।

इदं हविराहवनीय एव होष्यति न तु गार्हपत्ये । तस्मादहोष्यन्गार्हपत्यसमीप उपसादनं न कुर्यात् । तत्करणेन गार्हपत्यार्थं समीपे निधाय तस्मिन्नहुत्वा पश्चादाहवनीये होमे सति यथा लोके देवदत्तार्थं पात्रेषु परिवेषणं कृत्वा यज्ञदत्ताय प्रयच्छति तादृगेव तद्भवेत् । ततो होमाभावेन क्षुब्धाद्गार्हपत्यादयं विच्छिद्येत । तस्मान्न तत्रोपसादनं कर्तव्यम् । गार्हपत्ये त्वधिश्रयणेनैव प्रीतो भवति ।

यदुक्तं सूत्रकारेण—" होष्यन्नप उपस्पृश्य पालाशीं समिधमादधाति " इति । तदेतद्विधत्ते—

अग्निरबिभेत् । आहुतयो माऽत्येष्यन्तीति । स एताꣳ समिधमपश्यत् । तामाधत्त । ततो वा अग्नावाहुतयोऽध्रियन्त (७) । यदेनꣳ समयच्छत् । तत्समिधः समित्त्वम् । समिधमादधाति । समेवैनं यच्छति । आहुतीनां धृत्यै । अथो अग्निहोत्रमेवेध्मवत्करोति ।

आहुतीनां प्रतिष्ठित्यै, इति ।

आहुत्यर्थं हविषि समीपमानीते सति सोऽग्निरबिभेत् । तस्यायमभिप्रायः—हूयमानास्त्वाहुतयो मामतिलङ्घ्यान्यत्र गमिष्यन्तीति । अतस्तन्निवारणसमर्थां कांचित्समिधं निश्चित्य तां स्वस्मिन्नाधत्त । तया समिधा नियमिता आहुतयोऽग्नावेवावस्थिताः । यस्मात्कारणादाहुतयो यथाऽतिलङ्घ्य नान्यत्र गच्छन्ति तथैनमग्निं समर्थं कृत्वा समिदियं नियच्छती । तस्मात्सममयच्छत्समगच्छादिति (?) व्युत्पत्त्या समिन्नाम संपन्नम् । अतः समिधमादध्यात्तेनाऽऽहुतिधारणाय सामर्थ्यं दत्त्वाऽग्निं नियच्छति । अपि च दर्शपूर्णमासयोरिवाग्निहोत्रे पूर्वमिध्मो नास्ति । इदानीं तदग्निहोत्रमिध्मवद्युक्तं करोति । तेनाऽऽहुतयः प्रतिष्ठिता भवन्ति । अत्र शाखान्तरमाश्रित्य समित्संख्याविकल्पं सूत्रकार उदाजहार—"एकां द्वे तिस्रो वा" इति ।

तत्राऽऽक्षेपसमाधानाभ्यां स्वकीयमेकत्वपक्षं द्रढयति—

ब्रह्मवादिनो वदन्ति । यदेकाᳩं समिधमाधाय द्वे आहुती जुहोति । अथ कस्याᳩं समिधि द्वितीयामाहुतिं जुहोतीति (८) । यद्द्वे समिधावादध्यात् । भ्रातृव्यमस्मै जनयेत् । एकाᳩं समिधमाधाय । यजुषाऽन्यामाहुतिं जुहोति । उभे एव समिद्वती आहुती जुहोति । नास्मै भ्रातृव्यं जनयति, इति ।

अत्रैतच्चिन्त्यते । द्वितीया समिदाधातव्या न वेति । नाऽऽद्यः । द्वितीयस्याः प्रतियोगिरूपत्वेन भ्रातृव्योत्पत्तिप्रसङ्गात् । न द्वितीयः । द्वितीयाहुतेः समिदभावत्वसंभवादिति ब्रह्मवादिनामाक्षेपः । तत्रैतदुत्तरम् । एकस्या एव समिध आधानान्नास्ति भ्रातृव्योत्पत्तिः । प्रथमाहुतिमन्त्रेण परितोष्य द्वितीयाहुतेः समिधा परितोषादुभयोः समिदाधारत्वं सिध्यति ।

समिदाधानादूर्ध्वं तस्याः प्रदीप्तिपर्यन्तं प्रतीक्ष्य तद्धोमं विधत्ते—

आदीप्तायां जुहोति । समिद्धमिव हि

ब्रह्मवर्चसम् । अथो यथाऽतिथिं ज्योति-
ष्कृत्वा परिवेवेष्टि । तादृगेव तत् , इति ।

आहितायां समिधि सर्वतो दीप्तायां सत्यां पश्चाज्जुहुयात्तस्यां ब्रह्मवर्चस-मुज्ज्वलमिव दृश्यते । तस्मात्तदा होमो युक्तः । अपि च यथा लोके समा-गतमतिथिं भोक्तुमुपवेश्य समीपे दीपं कृत्वा पश्चात्परिवेषणं क्रियते तादृ-गेवैतदादीप्तायामनुष्ठानम् ।

पूर्वोक्तामुन्नयनसंख्यामाहुतिसंख्यां च प्रशंसति—

चतुरुन्नयति । द्विर्जुहोति । तस्माद्द्विपाच्चतुष्पाद-
मत्ति । अथो द्विपद्येव चतुष्पदः प्रतिष्ठापयति, इति ।

भवति प्रतिषिञ्चति गमयति प्रत्यकूपशवं उपनिधायाद्भियन्तेति तच्चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमाध्याये
तृतीयोऽनुवाकः ॥ ३ ॥

---

येयं चतुःसंख्या या च द्वित्वसंख्या तयोः परस्परोपकार्योपकारित्वादे-कस्मिन्ननुष्ठाने सहावस्थानं युक्तम् । यस्मादेवं तस्माल्लोकेऽपि द्विपान्मनुष्यश्च-तुष्पदां गवां संबन्धि क्षीरादिकमुपभुङ्क्ते । तत्र चतुष्पदामुपकारकत्वम् । अपि च द्विपद्येव मनुष्ये चतुष्पदः प्रतिष्ठापयति । मनुष्यो हि शालानिर्मा-णादिना गवादिपशून्पालयति तत्र द्विपदामुपकारकत्वम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ प्रथमप्रपाठके चतुर्थोऽनुवाकः ।

---

तृतीये हविष उपयोक्ष्यमाणस्य संस्कारोऽभिहितः । चतुर्थे तूप[ युक्त ]-संस्कारोऽभिधीयते । तत्राऽऽदौ तावदन्वयव्यतिरेकाभ्यामाहुतिप्रकारं विव-क्षित्वा प्रथममन्वयं दर्शयति—

उत्तरावतीं वै देवा आहुतिमजुहवुः । अवाचीं-
मसुराः । ततो देवा अभवन् । पराऽसुराः । यं

कामयेत वसीयान्स्यादिति । कनीयस्तस्य पूर्वꣳ हुत्वा । उत्तरं भूयो जुहुयात् । एषा वा उत्तरावत्याहुतिः । तां देवा अजुहवुः । ततस्तेऽभवन् (१) । यस्यैवं जुहोति । भवत्येव, इति ।

प्रथमाहुतावल्पमेव द्रव्यं हुत्वा द्वितीयस्यामधिकद्रव्यहोमे सत्युत्तरमधिकमस्यामाहुतावित्युत्तरावती । तादृशहोमेन देवा धनिका अभवन् । एवमन्योऽपि धनिको भवति ।

अथ व्यतिरेकं दर्शयति—

यं कामयेत पापीयान्त्स्यादिति । भूयस्तस्य पूर्वꣳ हुत्वा । उत्तरं कनीयो जुहुयात् । एषा वा अवाच्याहुतिः । तामसुरा अजुहवुः । ततस्ते पराभवन् । यस्यैवं जुहोति । परैव भवति (२), इति ।

प्रथमाहुतावधिकं द्रव्यं हुत्वा द्वितीयाहुतावल्पद्रव्यहोमे सत्यवमं क्षीणं यथा भवति तथाऽञ्चति प्रवर्तत इत्यवाची । तादृशहोमादसुरवदन्योऽपि पराभवति ।

प्रथमाहुतेरूर्ध्वं स्रुचोऽधस्तादुपसादनं विधत्ते—

हुत्वोपसादयत्यजामित्वाय । अथो व्यावृत्त्यै, इति ।

नैरन्तर्येणाऽऽहुतिद्वये सत्यालस्यं भवेत् । मध्ये स्रुगुपसादनेन तत्परिहृतं भवति । अपि च नैरन्तर्येण होमे सत्याहुतिद्वयस्य मध्ये व्यावृत्तेरभीतेरेकैवाऽऽहुतिः स्यात् । अत उपसादनमिदमाहुत्योर्व्यावृत्तये भवति ।

उपसादनादूर्ध्वमाहवनीयसमीप एवावस्थितस्य पश्चिमाभिमुखत्वेन गार्हपत्यप्रतीक्षणं विधत्ते—

गार्हपत्यं प्रतीक्षते । अननुध्यायिनमेवैनं करोति, इति ।

स्वसेवां परित्यज्याऽऽहवनीयसेवायां कुपितो गार्हपत्य एनं यजमानं हिंसितुमनुध्यायति । तत्र प्रतीक्षणेन सेवित्वा ध्यानरहितं करोति ।

द्वितीयाहुतेर्होमदेशं विधत्ते—

अग्निहोत्रस्य वै स्थाणुरस्ति । तं य ऋच्छेत् ।
यज्ञस्थाणुमृच्छेत् । एष वा अग्निहोत्रस्य स्थाणुः ।
यत्पूर्वाऽऽहुतिः । तां यदुत्तरयाऽभिजुहुयात् (३) ।
यज्ञस्थाणुमृच्छेत् । अतिहाय पूर्वामाहुतिं जुहो-
ति । यज्ञस्थाणुमेव परिवृणक्ति । अथो भ्रातृव्य-
मेवाऽऽप्त्वाऽतिक्रामति, इति ।

स्थाणुः स्तम्भः । यथा गृहस्य स्तम्भ आधारभूत एवमग्निहोत्रस्यापि प्रथमाहुतिर्मूलस्तम्भः । यदि तां प्रथमाहुतिमभिलक्ष्य तस्या उपर्युत्तरयाऽऽहुत्याऽनुष्ठानं निष्पादयेत्तदानीं यज्ञसंबन्धिनं मूलस्तम्भमृच्छेत्प्राप्नुयादभिघातेन पातयेदित्यर्थः । अतस्तदाहुतिप्रदेशं परित्यज्य पूर्वभागे जुहुयात् । अत एव सूत्रकारः—" द्व्यङ्गुलेर्मूलात्समिधमभिजुहोति " इत्युक्त्वाऽनन्तरमिदमाह—" भूर्भुवः सुवरित्युत्तरामाहुतिं पूर्वार्धे समिधि जुहोति तूष्णीं वेति " । एवं सति यज्ञस्तम्भभूता पूर्वाऽऽहुती रक्षिता भवति । अपि चेयमाहुतिर्भ्रातृव्यमेव प्राप्यातिक्रामति । विनाशयतीत्यर्थः ।

यदुक्तं सूत्रकारेण—" इषे त्वेति स्रुङ्मुखादवाचीनं सायं लेपमवमार्ष्ट्यूर्जे त्वेत्यूर्ध्वं प्रातः " इति । तदिदं विधत्ते—

अवाचीनꣳ सायमुपमार्ष्टि । रेत एव तद्द-
धाति । ऊर्ध्वं प्रातः । प्रजनयत्येव तत्, इति ।

यदुक्तं स्रुग्लक्षणे—मुखमष्टाङ्गुलं प्रोक्तं बिलं तु चतुरङ्गुलम् ।
द्वादशाङ्गुलदण्डस्तु स्रुग्लक्षणमुदाहृतम् ॥ [ इति ] ।

तस्य मुखस्याग्रमारभ्य बिलपर्यन्तं होमादूर्ध्वं लेपमवाचीनं सायंकाले मृज्यात्तेन बिलमध्ये लेपापनयनाद्यजमानो रेतो धारयति । प्रातःकाले तु बिलमारभ्य मुखाग्रपर्यन्तमूर्ध्वं लेपमुपमृज्यात्तेन प्रजामुत्पादयति ।

अथ हविःशेषप्राशनं विधत्ते—

ब्रह्मवादिनो वदन्ति । चतुरुन्नयति (४) । द्विर्जु-

होति । अथ क्व द्वे आहुती भवत इति । अग्नौ वैश्वानर इति ब्रूयात् । एष वा अग्निर्वैश्वानरः । यद्ब्राह्मणः । हुत्वा द्विः प्राश्नाति । अग्नावेव वैश्वानरे द्वे आहुती जुहोति, इति ।

पूर्वं स्रुवेण चतुर्वारं स्रुचि द्रव्यपूरणं कृतम् । तच्चाऽऽहुतिचतुष्टयाय पर्याप्तम् । तत्र द्वे आहुती आहवनीये समाहितायां समिधि हुते इतः परं द्वयोराहुत्योः कुत्र होम इति ब्रह्मवादिनां प्रश्नः । विश्वेषां नराणां संबन्धी योऽग्निस्तस्मिन्नित्युत्तरं ब्रूयात् । ब्राह्मणश्च वैश्वानरोऽग्निर्हविर्दातुरग्निवत्फलप्रदत्वात् । अतो वह्नौ द्वे आहुती हुत्वा यजमानो द्विः प्राश्नीयात् । यदाऽन्यो जुहोति तदाऽन्यः प्राश्नीयात् । एवं सति ब्राह्मणरूपे वैश्वानराग्नावाहुतिद्वयं भवति ।

होममार्जनप्राशनसंख्यां प्रशंसति—

द्विर्जुहोति । द्विर्निमार्ष्टि । द्विः प्राश्नाति (५) । षट् संपद्यन्ते । षड् वा ऋतवः । ऋतूनेव प्रीणाति, इति ।

अथ प्रश्नोत्तराभ्यां सर्वदेवतासंबन्धित्वेनाग्निहोत्रं प्रशंसति—

ब्रह्मवादिनो वदन्ति । किंदेवत्यमग्निहोत्रमिति । वैश्वदेवमिति ब्रूयात् । यद्यजुषा जुहोति । तदैन्द्राग्नम् । यत्तूष्णीम् । तत्प्राजापत्यम् (६) । यन्निमार्ष्टि । तदोषधीनाम् । यद्द्वितीयम् । तत्पितॄणाम् । यत्प्राश्नाति । तद्गर्भाणाम् । तस्माद्गर्भा अनश्नन्तो वर्धन्ते । यदाचामति । तन्मनुष्याणाम्, इति ।

यद्यपि होमद्रव्यमग्निसूर्ययोर्भागस्तथाऽप्यग्निहोत्रप्रयोगेण कासां देवतानां प्रीतिरिति ब्रह्मवादिनां प्रश्नः । विश्वेषां सर्वेषां देवानां प्रीतिरित्युत्तरं

ब्रूयात् । तत्कथमिति तदुच्यते । समन्त्रकहोमेनेन्द्राग्न्योः प्रीतिः । इन्द्रशब्देन सूर्यो विवक्षित इत्युक्तम् । तूष्णीं होमेन प्रजापतेः प्रीतिः । अन्यत्र प्रजापतेराघारे तूष्णींहोमदर्शनात् । निमार्जनं द्विविधम् । तच्च सूत्रकारेणोदाहृतम्—“ ओषधीभ्यस्त्वौषधीर्जिन्वेति बर्हिषि लेपं निमृज्येति, प्राचीनावीती स्वधा पितृभ्यः पितॄञ्जिन्वेति दक्षिणेन वेदिं भूम्यां लेपं निमृज्य ” इति च । तेनोभयेनौषधीनां पितॄणां च प्रीतिः । ब्राह्मणप्राशनेन गर्भाणां तृप्तिः । यस्मादेवं तस्माद्गर्भाः स्वतन्त्रभोजनमन्तरेणैव वर्धन्ते । प्राशनव्यतिरिक्तं यच्छेषभक्षणं तेन मनुष्याणां प्रीतिः । प्राशनं भक्षणं च सूत्रकारः पृथगेव दर्शयति—पूषाऽसीति लेपं प्राश्नात्यशब्दं कुर्वन्नतिहाय दत्तोऽप आचम्यैवं पुनः प्राश्याऽऽचम्य बर्हिषोपयम्योदङ्ङावृत्यानिमृज्य गर्भेभ्यस्त्वेत्युदग्दण्डया प्राग्दण्डया वा स्रुचाऽऽचामति ” इति च । अत्र यत्प्राशनं तत्पूर्वमेव द्विः प्राश्नातीति वाक्येन विहितम् ।

यत्त्वाचामतीत्युक्तं भक्षणं तदिदं विधत्ते—

उदङ्पर्यावृत्याऽऽचामति (७) ।

आत्मनो गोपीथाय, इति ।

हविःशेषसहितां स्रुचं गृहीत्वोदङ्मुखः किंचिद्दूरं गत्वा तत्रैव स्रुचा हविःशेषं मुखे प्रक्षिप्य भक्षयेत् । अनेन स्वस्य रक्षा भवति ।

यदुक्तं सूत्रकारेण—“ अग्रेणाऽऽहवनीयं दर्भैरग्निहोत्रहवणीं प्रक्षालयति ” इति । तदिदं विधत्ते—

निर्णेनेक्ति शुद्ध्यै, इति ।

यदुक्तं सूत्रकारेण “ आहवनीये स्रुचं प्रताप्य हस्तोऽवधेयो हस्तौ वा प्रताप्य स्रुच्यवधेयस्तयोदङ्ङुद्दिशति सप्तर्षिभ्यस्त्वा सप्तर्षीञ्जिन्वेति ” इति । तदेतन्निष्टपनमुद्देशनं च क्रमेण विधत्ते—

निष्टपति स्वर्गाकृत्यै । उद्दिशति । सप्तर्षीनेव प्रीणाति, इति ।

निष्टपति नितरां तपनं स्वर्गाकृत्यै स्वर्गप्राप्त्यै भवति । स्रुचो हस्तस्य वा यत्प्रतपनं तेन हविः सर्वं स्वगतं करोति । स्रुचा यदुद्देशनं तेन सप्तर्षीन्प्रीणाति ।

१ क. ख. °स्योत्सृप्य ग° । २ ख. अन्यच्च य° ।

उद्देशादूर्ध्वं प्रदक्षिणाकारेण पर्यावृत्तिं विधत्ते—

दक्षिणा पर्यावर्तते । स्वमेव वीर्यमनुपर्यावर्तते । तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरः । अथो आदित्यस्यैवाऽऽवृतमनुपर्यावर्तते, इति ।

योऽयमुदङ्मुखः सप्तर्षीणामुद्देशं कृतवान्सोऽयं वामभागे पर्यावृत्तिं न कुर्यात् । किंतु दक्षिणभागमुद्दिश्य पर्यावृत्तिं कुर्यात् । तथा सति दक्षिणभागे विद्यमानां स्वशक्तिमनुपर्यावृत्तिं करोति । यस्मादेवं तस्मात्पुरुषस्य दक्षिणभागोऽतिशयेन शक्तिमान् । अपि चाऽऽदित्यो गोलोके प्रादक्षिण्येन वर्तते । अतस्तदीयामावृत्तिमन्वयं पर्यावृत्तो भवति ।

सूत्रकारेण—"दीदिहि दीदिदासि दीदायेत्येषोऽग्न्युपसमिन्धन आम्नातः" इति यस्मिन्समिन्धने मन्त्र उदाहृतस्तदिदं समिन्धनं विधत्ते—

हुत्वोपसमिन्धे (८) । ब्रह्मवर्चसस्य समिद्ध्यै, इति ।

सम्यक्प्रकाशनायेत्यर्थः ।

दर्शपूर्णमासादाविव बर्हिष्प्रहरणशङ्कां वारयितुं निषेधति—

न बर्हिरनुप्रहरेत् । असꣳस्थितो वा एष यज्ञः । यदग्निहोत्रम् । यदनुप्रहरेत् । यज्ञं विच्छिन्द्यात् । तस्मान्नानुप्रहृत्यम् । यज्ञस्य संतत्यै, इति ।

करिष्यमाणानां यज्ञानामग्न्याधारत्वात्तेषां चेदानीमप्यननुष्ठितत्वात्तस्य चाग्नेः सत्यग्निहोत्रेऽवस्थानात्सर्वयज्ञानुष्ठानमन्तरेणाग्निहोत्रारूयो यज्ञो न समाप्तः । तस्मात्समाप्तिद्योतकं बर्हिःप्रहरणं न कुर्यात् । तस्मिन्कृते स यज्ञो विच्छिद्येत । तस्माद्यज्ञसंतत्यर्थं प्रहरणं न कर्तव्यम् ।

यदुक्तं सूत्रकारेण—"अग्निहोत्रस्थालीं प्रक्षाल्याक्षितमक्षित्यै जुहोमि स्वाहेत्युत्क्रमयनक्ति निनयत्यन्तर्वेदि वा" इति । तदिदं विधत्ते—

अपो निनयति । अवभृथस्यैव रूपमकः (९) ।

अभवन्भवति जुहुयान्नयति मार्ष्टि द्वि प्राश्नाति प्राजापत्यमाचामतीन्धेऽकः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

सोमयाग इवावभृथस्य यत्स्वरूपं तदपां निनयनेन करोति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

अथ प्रथमप्रपाठके पञ्चमोऽनुवाकः ।

चतुर्थ उपयुक्तहविःसंस्कारा उक्ताः । पञ्चमे काम्यद्रव्याणामवशिष्टानामङ्गानि चोद्यन्ते । तत्राऽऽदौ तावत्प्रश्नोत्तराभ्यामग्निहोत्रहविःसंस्कारोपक्रमं निश्चिनोति—

ब्रह्मवादिनो वदन्ति । अग्निहोत्रप्रायणा यज्ञाः । किं प्रायणमग्निहोत्रमिति । वत्सो वा अग्निहोत्रस्य प्रायणम् । अग्निहोत्रं यज्ञानाम्, इति ।

सर्वेषां यज्ञानां मध्येऽग्निहोत्रं प्रथमभावि । तथा च सूत्रकारेणोदाहृतम्—"अग्नीनाधाय हस्तावनिज्य संवत्सरमग्निहोत्रं हुत्वा दर्शपूर्णमासावारभते । ताभ्यां संवत्सरमिष्ट्वा सोमेन पशुना वा यजते । तत ऊर्ध्वमन्यानि कर्माणि कुरुते" इति । यथा सर्वेषां यज्ञानामग्निहोत्रादित्वमेवमग्निहोत्रहविःसंस्काराणामपि कश्चिदादिर्वक्तव्य इति ब्रह्मवादिनां प्रश्नः । शाखान्तरानुसारेण "पूषाऽसीति वत्समुपसृज्य" इति यत्सूत्रकारेणोक्तं सोऽयमग्निहोत्रहविःसंस्कारस्याऽऽदिः । तच्चाग्निहोत्रमुक्तं क्रतूनामादिरित्युत्तरम् ।

यथा प्रतिमादिषु विष्ण्वादिबुद्धिः । यथा च श्राद्धे गोत्रान्तरोत्पन्ने ब्राह्मणे पितृपितामहादिबुद्धिः । एवमग्निहोत्रे सोमयागबुद्धिं प्रशंसार्थं भावनार्थं च संपादयति—

तस्य पृथिवी सदः । अन्तरिक्षमाग्नीध्रम् । द्यौर्हविर्धानम् । दिव्या आपः प्रोक्षणयः ।

---

१ क. °त्वाऽथ द° ।

ओषधयो बर्हिः ( १ ) । वनस्पतय इध्मः ।
दिशः परिधयः । आदित्यो यूपः । यजमानः
पशुः । समुद्रोऽवभृथः । संवत्सरः स्वगाकारः ।
तस्मादाहिताग्नेः सर्वमेव बर्हिष्यं दत्तं भवति ।
यत्सायं जुहोति । रात्रिमेव तेन दक्षिण्यां
कुरुते । यत्प्रातः ( २ ) । अहरेव तेन दक्षिण्यं
कुरुते । यत्ततो ददाति । सा दक्षिणा, इति ।

सोमयागरूपेण भाव्यमानस्य तस्याग्निहोत्रस्य सदःप्रभृति सोमयागाङ्गमवकल्पनीयम् । या पृथिवी सैव सदःस्थानीया । यदन्तरिक्षं तदाग्नीध्रीयधिष्ण्यस्थानीयम् । येयं द्यौः सा हविर्धानमण्डपस्थानीया । या वृष्टिजन्या दिव्या आपस्ताः प्रोक्षणार्थजलस्थानीयाः । या व्रीह्याद्या ओषधयस्ता बर्हिः । एवं वनस्पत्यादिषु द्रष्टव्यम् । स्वगा स्वगतं तत्तद्देवतानां हविः करोतीति स्वगाकारः । बृहस्पतिपुत्रः शंयुः—" ते शंयुं बार्हस्पत्यमब्रुवन्निमं नो यज्ञꣳ स्वगा कुर्विति " इति श्रुत्यन्तरात् । यस्मादेवं सोमाङ्गानि सर्वाणि संपन्नानि तस्मादाहिताग्नेरग्निहोत्रिणो बर्हिष्यं सोमयागार्हं सर्वमेव कृत्स्नमप्यङ्गजातं दत्तं संपादितं भवति । तत्र हि केचिद्दक्षिणार्हा विद्यन्ते—" यावन्तो वै सदस्यास्ते सर्वे दक्षिण्याः " इति श्रुतत्वात् । अत्रापि सायंप्रातर्होमेन रात्रेरह्नश्च दक्षिणार्हत्वं संपादनीयम् । अयमग्निहोत्री बन्धुभ्योऽन्येभ्यो वा यत्किंचिद्ददाति तत्सर्वं दक्षिणास्थानीयम् । तदेवमग्निहोत्रं प्रशस्य सोमयागत्वभावनया तत्र कश्चिदतिशयः संप( पा )द्यते । यथा विष्णवादिदृष्ट्या शिलायामतिशयः । यथा वा श्राद्धे पितृपितामहादिदृष्ट्या दौहित्रस्य नमस्कार्यत्वं तद्वत् ।

प्रकारान्तरेणाग्निहोत्रं प्रशंसति—

यावन्तो वै देवा अहुतमादन् । ते पराभवन् । त
एतदग्निहोत्रꣳ सर्वस्यैव समवदायाजुहवुः । तस्मा-
दाहुः । अग्निहोत्रं वै देवा गृहाणां निष्कृतिम्

१ क. ख. सोमयागाङ्गानि ।

पश्यन्निति । यत्सायं जुहोति । रात्रिया एव तद्धु-
ताद्याय ( ३ )। यजमानस्यापराभावाय । यत्प्रातः ।
अह्न एव तद्धुताद्याय । यजमानस्यापराभावाय ।
यत्ततोऽश्नाति । हुतमेव तत्, इति ।

देवानां मध्ये केचिदग्निहोत्रं हुत्वा तच्छेषं भक्षितवन्तः । अपरे तु होम-मन्तरेणाऽऽहुतिशेषमेव भक्षितवन्तः । यावन्त एतादृशस्तावन्तः पराभूताः । ते च देवाः पुनर्विचार्य तदेतदग्निहोत्राख्यं हविः सर्वस्यैवाग्नेः सूर्यस्य चेत्युभयस्यार्थे सम्यगवदानं कृत्वा होममकार्षुस्तस्मादभिज्ञा एवमाहुः । अग्निहोत्रमेव स्वगृहाणां निष्कृतिं पुनःप्राप्त्युपायं निश्चितवन्त इति । अथ सायंहोमो रात्रौ हुतशेषभक्षणाय प्रातर्होमोऽहनि हुतशेषभक्षणाय । तेन च कालद्वयेऽपि यजमानस्य पराभवो न भवति । ततो होमादूर्ध्वं यदश्नाति तत्सर्वं हुतमेव भवति ।

यदुक्तं सूत्रकारेण—"द्वयोः पयसा पशुकामस्य जुहुयात् । अग्निहोत्रस्थाल्यां पूर्वां दोग्धि दोहनेनोत्तरामधिश्रित्य पूर्वमुत्तरमानयति " इति । तदेतद्विधत्ते—

द्वयोः पयसा जुहुयात्पशुकामस्य । एतद्वा अग्नि-
होत्रं मिथुनम् । य एवं वेद । प्र प्रजया पशुभिर्मि-
थुनैर्जायते ( ४ ) । इमामेव पूर्वया दुहे । अमूमु-
त्तरया । अधिश्रित्योत्तरमानयति । योनावेव तद्रेतः
सिञ्चति प्रजनने, इति ।

गोद्वयक्षीरेण होमे सति द्वित्वादग्निहोत्रस्य मिथुनरूपत्वं तद्वेदितुर्मिथुनरूपाणां प्रजानां पशूनां चोत्पत्तिः । द्वयोर्गवोर्मध्ये पूर्वया गवा भूमिरेव दुग्धा भवति । उत्तरया गवा द्यौर्दुग्धा भवति । प्रथमगोक्षीरं वह्नावधिश्रित्य पश्चादुत्तरगोक्षीरमानयेत् । तेन पूर्वक्षीरे क्षीरान्तरसेचने कृते प्रजोत्पत्तौ योनौ रेतः सिक्तं भवति ।

---

१ क. °भयार्थे स° । २ क. ख. होमे । ३ क. ख. °र्होमेऽह° ।

अथ काम्यानि चत्वारि द्रव्याणि क्रमेण विधत्ते—

आज्येन जुहुयात्तेजस्कामस्य । तेजो वा आज्यम् । तेजस्व्येव भवति । पयसा पशुकामस्य । एतद्वै पशूनाꣳ रूपम् । रूपेणैवास्मै पशूनवरुन्धे (५) । पशुमानेव भवति । दध्नेन्द्रियकामस्य । इन्द्रियं वै दधि । इन्द्रियाव्येव भवति । यवाग्वा ग्रामकामस्यौषधा वै मनुष्याः । भागधेयेनैवास्मै सजातानवरुन्धे । ग्राम्येव भवति, इति ।

आज्यस्य स्निग्धत्वात्तेजस्त्वम् । यन्नित्यहोमद्रव्यं पयस्तदेव काम्यमाने पशुफलायापि कामुकस्य संपद्यते । न तु पयोन्तरं संपादनीयमिति दध्युदाहरणेन निर्णीयते । एकगोक्षीरेण पशुमात्रं फलम् । गोद्वयक्षीरेण पशुबाहुल्यम् । कर्मभूयस्त्वात्फलभूयस्त्वमिति न्यायात् । क्षीरार्थमेव पशूनां संपाद्यत्वात्पयसः पशुस्वरूपत्वम् । दध्न इन्द्रियवृद्धिहेतुत्वादिन्द्रियत्वम् । मनुष्या औषधा ओषधिमद्द्रव्यभोजिनः । अतो यवागूर्ग्रामेण सहोत्पन्नानां मनुष्याणामुचितं भागधेयम् ।

चतुरुन्नयनादिकमग्निहोत्रे यत्पूर्वमुक्तं तदत्र प्रशंसति—

अयज्ञो वा एषः । योऽसामा (६) । चतुरुन्नयति । चतुरक्षरꣳ रथंतरम् । रथंतरस्यैष वर्णः । उपरीव हरति । अन्तरिक्षं वामदेव्यम् । वामदेव्यस्यैष वर्णः । द्विर्जुहोति । द्व्यक्षरं बृहत् । बृहत एष वर्णः । अग्निहोत्रमेव तत्सामन्वत्करोति (७), इति ।

अग्निष्टोमादीनां प्रसिद्धयज्ञानां सामयुक्तत्वात्सामरहितस्याग्निहोत्रस्य यज्ञत्वं

---

१ ग. °षद्ध्यो वै ।

तदेतदमुख्यमिति चेत् । नैवम् । उपचरितानां साम्नां संपादयितुं शक्यत्वात् । उन्नयने या चतुःसंख्या पूर्वं विहिता सा रथंतरनामाक्षरेषु विद्यते । तेन साम्येनोन्नयनव्यापारो रथंतरस्य स्वरूपभूतः । उपरीवोन्नीतस्य हविष आहवनीयदेशं प्रति भूस्पर्शमन्तरेणोपर्येव यद्धरणं तस्य चान्तरिक्षवर्तित्वादन्तरिक्षद्वारा वामदेव्यसाम्नः स्वरूपत्वेनोपचरितुं शक्यम् । वामदेव्यसाम्नोऽन्तरिक्षत्वेन श्रुतिरन्यत्र श्रूयते—"अन्तरिक्षं वै वामदेव्यम्" इति । या त्वाहुतिविशेषगता द्वित्वसंख्या बृहदित्येतस्मिन्सामनाम्नि विद्यत इति बृहत्सामत्वोपचारः । तेनाग्निहोत्रं सामयुक्तमेव करोति ।

यत्वेतद्धविषो भूमावुपसादनं तदेतज्ज्योतिष्टोमगतोपसदुपचारेण प्रशंसति—

यो वा अग्निहोत्रस्योपसदो वेद । उपैनमुपसदो नमन्ति । विन्दत उपसत्तारम् । उन्नीयोपसादयति । पृथिवीमेव प्रीणाति । होष्यन्नुपसादयति । अन्तरिक्षमेव प्रीणाति । हुत्वोपसादयति । दिवमेव प्रीणाति । एता वा अग्निहोत्रस्योपसदः (८) । य एवं वेद । उपैनमुपसदो नमन्ति । विन्दत उपसत्तारम्, इति ।

अग्निहोत्रसंबन्धिनीरुपचरिता उपसदो यो वेद सोऽयमुपसत्तारं स्वसेवकं लभते । अत्र हविषस्त्रिवारमुपसादनं विधत्ते । उन्नयनानन्तरमभिमर्शनार्थं गार्हपत्यसमीपे प्रथममुपसादनम् । तत ऊर्ध्वमाहवनीयसमीपे होमात्प्राक्पश्चाच्च द्विरुपसादनम् । तेन त्रयेण लोकत्रयप्रीतिः । एता एव त्रिविधा उपसादनक्रिया अग्निहोत्रसंबन्धिन्य उपचरिता उपसदः । उपपूर्वस्य सदिधात्वर्थस्य समानत्वात् । उपैनमिति पुनरुक्तिर्वेदनफलोपसंहारार्था ।

अथोपचरिताश्र(श्रा)वणादिसंपादनेनाग्निहोत्रहोमं प्रशंसति—

यो वा अग्निहोत्रस्याऽऽश्रावितं प्रत्याश्रावितं[1] होतारं ब्रह्माणं वषट्कारं वेद । तस्य त्वेव

१ क. °दयुक्तमि° ।

हुतम् । प्राणो वा अग्निहोत्रस्याऽऽश्रावितम् ।
अपानः प्रत्याश्रावितम् । मनो होता । चक्षु-
र्ब्रह्मा । निमेषो वषट्कारः ( ९ ) । य एवं
वेद । तस्य त्वेव हुतम्, इति ।

यदुक्तं सूत्रकारेण—"समिधमाधाय प्राण्यापान्य निमील्य वीक्ष्य हुत्वा ध्यायेद्यत्कामः स्यात्" इति । तत्र प्राणो वा अग्निहोत्रमि( स्ये )त्यारभ्य तस्य त्वेव हुतमित्येतत्पर्यन्तं प्राणादीनामाश्रावितत्वादिरूपेण यो जानाति तस्यैव होमो मुख्यो भवति ।

अथ गृहगतातिथितर्पणं विधत्ते—

सायंयावानश्च वै देवाः प्रातर्यावाणश्चाग्नि-
होत्रिणो गृहमागच्छन्ति । तान्यन्न तर्पयेत् ।
प्रजयाऽस्य पशुभिर्वितिष्ठेरन् । यत्तर्पयेत् ।
तृप्ता एनं प्रजया पशुभिस्तर्पयेयुः, इति ।

सायंकाले यान्त्यग्निहोत्रिणो गृहं गच्छन्तीति सायंयावानः । एवं प्रातर्यावाणः । तेषामुभयेषामतृप्तौ प्रजापशुवियोगः । तत्तृप्तौ प्रजादिसंपत्तिः ।

अतस्तर्पणाय समन्त्रकं हविःस्पर्शनं विधत्ते—

सजूर्देवैः सायंयावभिरिति सायꣳ संमृशति ।
सजूर्देवैः प्रातर्यावभिरिति प्रातः । ये चैव
देवाः सायंयावानो ये च प्रातर्यावाणः (१०) ।
तानेवोभयाꣳस्तर्पयति । त एनं तृप्ताः प्रजया
पशुभिस्तर्पयन्ति, इति ।

अतस्त उभये तृप्ताः सन्तो यजमानं प्रजापशुयुक्तं कुर्वन्ति । अतस्तर्पणाय

१ क. °थ हविःस्पर्शनं वि° । ग. °थ समन्त्रकहविःस्पर्शनं वि° ।

मन्त्राभ्यां हविःस्पर्शनम् । हे हविः सायंयावभिर्देवैः सह तिष्ठेति मन्त्रार्थः । एवमितरत्रापि । पुनः फलोक्तिरुपसंहारार्था ।

अथाग्निहोत्रकर्मण्युन्नयनादिकं वज्रत्वकल्पनया प्रशंसति—

अरुणो ह स्माऽऽहौपवेशिः । अग्निहोत्र एवाहꣳ सायं प्रातर्वज्रं भ्रातृव्येभ्यः प्रहरामि । तस्मान्मत्पापीयाꣳसो भ्रातृव्या इति । चतुरुन्नयति । द्विर्जुहोति । समित्सप्तमी । सप्तपदा शक्वरी । शाक्वरो वज्रः । अग्निहोत्र एव तत्सायं प्रातर्वज्रं यजमानो भ्रातृव्याय प्रहरति । भवत्यात्मना । पराऽस्य भ्रातृव्यो भवति ( ११ ), इति ।

बर्हिः प्रातर्हुताद्यंय जायते रुन्धेऽसामा करोत्येता वा अग्निहोत्रस्योपसदो वषट्कारश्च प्रातर्यावाणो वज्रस्त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

अरुणो नाम कश्चिदृषिः स चोपवेशस्य पुत्रः । कदाचित्सभामध्ये स एवमुवाच । सायं प्रातश्च यदनुष्ठानं सोऽयं भ्रातृव्येभ्यो मदीयो वज्रप्रहारः । तस्मात्कारणाद्भ्रातृव्यो मत्तोऽप्यतिदरिद्र इति । कथं वज्रसंपादनमिति तदुच्यते । उन्नयनहोमसमिद्भिता या सप्तसंख्या सप्तभिः पादैरुपेता शक्वरी बुद्धिस्था वज्रश्च शाक्वरः । " वज्रो वै शाक्वरः " इत्यादिश्रुत्यन्तरप्रसिद्धेः । तस्मादीदृशाग्निहोत्रप्रयोगेण यजमानः स्वयं संपन्नो भवति । भ्रातृव्याः पराभवन्ति ।

अत्र मीमांसायां प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

आदित्यो यूप इत्यत्र स्तुतिरादित्यशब्दतः ।
द्वारं चाक्षुषसारूप्यं घृताक्ते तेजसेऽस्ति तत् ॥[ इति ] ।

आदित्ये यच्चक्षुर्गम्यं तेजस्वित्वं तद्यूपेऽप्यस्ति, घृताक्तस्य यूपस्य तेजस्वित्वावभासात् । तत आदित्यशब्देन यूपः स्तूयते । एवं " यजमानो यूपः " इत्यत्र चक्षुर्गम्ययोरूर्ध्वत्वस्य समानत्वाद्यजमानशब्देन यूपः स्तूयते ।

द्वितीयाध्यायस्य द्वितीयपादे चिन्तितम्—

दध्ना होमेऽन्यकर्मत्वं गुणो वाऽस्यत्तु पूर्ववत् ।
विगुणत्वादग्निहोत्रे युक्तो दध्यादिको गुणः ॥ [ इति ] ।

"दध्ना जुहोति" इति श्रूयते । तत्र "अग्निहोत्रं जुहोति" इत्येतस्मात्प्रकृतात्कर्मणोऽन्यद्दधिहोमरूपं कर्मेति पूर्वन्यायेनावगम्यते । यथा पूर्वत्र वाजिनद्रव्येण कर्म भिद्यते तथा दधिद्रव्येणेति चेन्न । वैषम्यात् । यथा वैश्वदेवयाग आमिक्षागुणावरुद्धस्तथाऽग्निहोत्रं न गुणान्तरावरुद्धम् । प्रत्युत निर्गुणत्वाद्गुणमाकाङ्क्षति । तस्मादयं गुणविधिः । एवं "पयसा जुहोति" इत्यादिषु द्रष्टव्यम् । पयोदध्यादीनां सर्वेषामुत्पन्नशिष्टतया समबलत्वादेकेनैव द्रव्येणाग्निहोत्रे निष्पन्ने व्रीहियववद्विकल्पः ।

तत्रैवान्यच्चिन्तितम्—

यद्दध्नेन्द्रियकामस्य जुहुयादिति तत्पृथक् ।
गुणो वा भिद्यते कर्म धात्वर्थस्य फलित्वतः ॥
मत्वर्थगौरवादिभ्यो नान्यत्कर्म फलाय तु ।
गुणो विधेयो धात्वर्थो विहितत्वादनूद्यते ॥ [ इति ] ।

"दध्नेन्द्रियकामस्य जुहुयात्" इति श्रूयते । तदिदं प्रकृतादग्निहोत्रादन्यत्कर्म न त्वत्र गुणविधिः । कुतः । इन्द्रियकामस्येत्युक्तस्य फलस्य धात्वर्थमन्तरेण द्रव्यमात्रादनिष्पत्तेरिति चेत् । मैवम् । कर्मान्तरविधौ दधिमता होमेनेन्द्रियं भावयेदिति मत्वर्थलक्षणाप्रसङ्गाद्गुणविशिष्टक्रियाविधौ गौरवात्प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गाच्च । गुणमात्रं तु फलाय विधीयते । यद्यपि "दध्ना जुहोति" इति दधि प्राप्तं तथाऽपि फलसंबन्धो न प्राप्तः । धात्वर्थाभावे फलासंभव इति चेन्न । "अग्निहोत्रं जुहोति" इति विहितस्य प्रकृतस्य धात्वर्थस्येहानूद्यमानत्वात् ।

चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

दध्ना त्विन्द्रियकामस्य नित्येऽन्यद्वुत तद्दधि ।
अन्यत्स्यात्पूर्ववन्मैवं संयोगस्य पृथक्त्वतः ॥ [ इति ] ।

अग्निहोत्रे श्रूयते "दध्नेन्द्रियकामस्य जुहुयात्" इति । तत्र दध्नः काम्यत्वं नित्येऽग्निहोत्रे पूर्वन्यायेन तद्दधि न प्रयोक्तव्यम् । किंत्वन्यदेव किंचिद्द्रव्यमिति चेत् । मैवम् । दध्ना जुहोतीत्यस्मिन्वाक्यान्तरे कामसंयोग-

१ क. ख. °होत्रनिष्पत्तेश्च व्री° ।

मनुपन्यस्य नित्यहोमसंयोगेन दधिविधानात् । तस्मादेकस्यापि दध्नो वाक्यद्वयेन नित्यत्वं काम्यत्वं चाविरुद्धम् । एवमग्नीषोमीयपशौ "खादिरे बध्नाति" "खादिरं वीर्यकामस्य यूपं कुर्वीत" इत्याद्युदाहरणीयम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ प्रथमप्रपाठके षष्ठोऽनुवाकः ।

---

पञ्चमे काम्यानि होमद्रव्याण्युक्तानि । षष्ठेऽभ्युद्रवणं होमाभावप्रतीकारश्चेत्युभयमभिधीयते । तत्राभ्युद्रवणं विधातुमादावुपाख्यानेनाग्निहोत्ररूपाया गोरुत्पत्तिं दर्शयति—

प्रजापतिरकामयताऽऽत्मन्वन्मे जायेतेति । सोऽजुहोत् । तस्यात्मन्वदजायत । अग्निर्वायुरादित्यः । तेऽब्रुवन् । प्रजापतिरहौषीदात्मन्वन्मे जायेतेति । तस्य वयमजनिष्महि । जायतां न आत्मन्वदिति तेऽजुहवुः । प्राणानामग्निः । तनुवै वायुः (१) । चक्षुष आदित्यः । तेषाꣳ हुतादजायत गौरेव, इति ।

पुरा कदाचित्प्रजापतिरचेतनं गिरिनद्यादिकमुत्पाद्याऽऽत्मन्वज्जीवात्मयुक्तं चेतनं वस्तुजातमप्यावुत्पद्यतामिति कामयित्वा तत्साधनहोमं कृतवान् । तेन होमेनाग्निवाय्वादित्यरूपं चेतनमजायत । तेऽप्यग्न्यादयः परस्परं विचार्य प्रजापतेर्होमाद्यथा वयमुत्पन्नास्तथाऽस्माकमपि चेतनं जायतामिति विचार्य होमं चक्रुः । तत्राग्निः प्राणेभ्यः स्वाहेत्येवं प्राणानामर्थे हुतवान् । तथा वायुस्तन्वर्थं आदित्यश्चक्षुरर्थे । तेषां त्रयाणां होमादूर्ध्वमेका गौरेवाजायत ।

अथ तस्या गोरग्निहोत्रशब्दाभिधेयत्वं संपाद्य प्रशंसां दर्शयति—

तस्यै पयसि व्यायच्छन्त । मम हुतादजनि ममेति ।

ते प्रजापतिं प्रश्नमायन् । स आदित्योऽग्निमब्रवीत् । यतरो नौ जयात् । तन्नौ सहासदिति । कस्यै कोऽहौषीदिति प्रजापतिरब्रवीत्कस्यै क इति । प्राणानामहमित्यग्निः ( २ ) । तनुवा अहमिति वायुः । चक्षुषोऽहमित्यादित्यः । य एव प्राणानामहौषीत् । तस्य हुतादजनीति । अग्नेर्हुतादजनीति । तदग्निहोत्रस्याग्निहोत्रत्वम् । गौर्वा अग्निहोत्रम् । य एवं वेद गौरग्निहोत्रमिति । प्राणापानाभ्यामेवाग्निः समर्धयति । अव्यर्धुकः प्राणापानाभ्यां भवति ( ३ ) । य एवं वेद, इति ।

त्रयाणां होमादेयं गौरुत्पन्ना तस्याः पयसि कलहरूपं विरोधं त्रयोऽप्याचरन् । तदीयं वचनं प्रदर्श्यते । मम होमादियं गौरजनीत्यग्निः । एवं वायुरादित्योऽपि । अतो वाक्यवीप्साद्योतनाय पुनर्ममेति शब्दः । ततस्ते सर्वे तन्निर्णयार्थं प्रजापतिं प्रति प्रश्नं कर्तुमागच्छन् । आगमनकाले स आदित्योऽग्निं प्रत्येवं समयं कृतवान् । आवयोर्मध्ये यतरस्य जयो भवत्यन्यतरस्य तद्वस्तु नौ सहाऽऽवयोर्भवत्विति । ततस्तैः पृष्टः प्रजापतिस्तेषां होमप्रकारं पप्रच्छ । युष्माकं मध्ये कः कस्यै देवतायै हुतवानिति । बहून्प्रति प्रश्नद्योतनाय वीप्सार्थं द्विरुक्तिः । तत्राग्निः प्राणानामर्थेऽहं हुतवानित्युवाच । वायुः शरीरार्थमुक्तवान् । आदित्यश्चक्षुरर्थमुक्तवान् । तदा प्रजापतिः शरीरचक्षुषोः प्राणाधीनत्वेन प्राणानां मुख्यत्वात्तद्विषयहोमाद्गौरुत्पन्नेत्युवाच । अग्निसंबन्धाद्धोमादुत्पन्नेति व्युत्पत्त्याऽग्निहोत्रमिति गोर्नाम संपन्नम् । गौरग्निहोत्रं यो जानाति सोऽग्निः(ग्नि) प्राणापानाभ्यामेव समृद्धं करोति । य एवं वेद सोऽयमायुषः पुरा केनाप्यपमृत्युना प्राणापानाभ्यां वियुक्तो न भवति ।

अथाभ्युद्द्रवणं विधत्ते—

तौ वायुरब्रवीत् । अनु मा भजतमिति । यदेव गार्हपत्येऽधिश्रित्याऽऽहवनीयमभ्युद्द्रवान् । तेन त्वां प्रीणानित्यब्रूताम् । तस्माद्यद्गार्हपत्येऽधिश्रित्याऽऽहवनीयमभ्युद्द्रवति । वायुमेव तेन प्रीणाति, इति ।

तावग्निसूर्यौ प्रति वायुः प्रार्थितवान् । युवामुभावनु पयस्यस्मिन्मामपि भागिनं कुरुतमिति । ततस्तावेवमब्रूतामिदं पयः पाकार्थं गार्हपत्येऽधिश्रित्य पश्चादाहवनीयमभिलक्ष्योद्द्रवानुद्द्रवन्त्यूर्ध्वं नयन्तीति । यत्तेन व्यापारेण त्वां प्रीणानग्निहोत्रिणः प्रीणयन्त्विति । यस्मादेवं तस्माद्गार्हपत्याधिश्रयणादूर्ध्वमाहवनीयमभिलक्ष्य तत्पय उद्द्रवेत् । तेन वायुः प्रीतो भवति । तदेतत्सूत्रकारेणोक्तम्—"वाताय त्वेत्युद्गृह्णाति" इति ।

अथ होमाभावप्रतीकारं दर्शयितुं प्रस्तौति—

प्रजापतिर्देवताः सृजमानः । अग्निमेव देवतानां प्रथममसृजत । सोऽन्यदालम्भ्यमवित्त्वा (४) । प्रजापतिमभिपर्यावर्तत । स मृत्योरबिभेत् । सोऽमुमादित्यमात्मनो निरमिमीत । तꣳ हुत्वा पराङ् पर्यावर्तत । ततो वै स मृत्युमपाजयत् । अपमृत्युं जयति । य एवं वेद, इति ।

पुरा प्रजापतिर्देवताः सर्वाः सिसृक्षुः प्रथममग्निमेवासृजत । सोऽग्निर्देवतान्तरस्यानुत्पन्नत्वात्स्वार्थमालम्भनीयं पशुस्थानीयं चेतनमन्यं किंचिदप्यलब्ध्वा प्रजापतिमेवाऽऽलब्धुमभिलक्ष्य तत्समीपे पर्यावृत्तः । स च प्रजापतिर्मृत्योर्भीतः सन्नात्मनः सकाशादादित्यं निर्माय तमादित्यमग्नौ हुत्वा स्वयं पराङ्मुखो जगाम । तेनापमृत्युं जितवानेवमन्यस्याप्येवंविदोऽपमृत्युजयो भवति ।

अथ होमाभावप्रतीकारं दर्शयति—

तस्माद्यस्यैवं विदुषः । उतैकाहमुत द्व्यहं न जह्वति ।

हुतमेवास्य भवति । असौ ह्यादित्योऽग्निहोत्रम् (५), इति ।

तनुवै वायुरग्निर्वीवत्यविरत्ना भवत्येकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

आदित्यो होमद्रव्यमित्येवं विदित्वा यो ध्यायति तस्यैवंविदुषा यद्यप्येकाहं द्व्यहं वा केनापि निमित्तेन प्रतिबद्धाः सन्तोऽग्निहोत्रं तदीयाः केऽपि न जुह्वति तथाऽपि तस्याग्निहोत्रिणो ध्यानशीलस्य तदेवाग्निहोत्रं भवति । यस्मादादित्यो होमद्रव्यं सर्वदा वर्तते यजमानोऽप्याहुतित्वेन ध्यायति तस्माद्होमप्रयुक्तः प्रत्यवायो नास्ति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

अथ प्रथमप्रपाठके सप्तमोऽनुवाकः ।

षष्ठे होमाभावप्रतीकारोऽभिहितः । सप्तमे होतव्यस्य हविषोऽवस्थाभेदेन सर्वदेवताप्रियत्वं प्रशंसार्थमनुसंधानार्थं च दर्शयति—

रौद्रं गवि । वायव्यमुपसृष्टम् । आश्विनं दुह्यमानम् । सौम्यं दुग्धम् । वारुणमधिश्रितम् । वैश्वदेवा बिन्दवः । पौष्णमुदन्तम् । सारस्वतं विष्यन्दमानम् । मैत्रꣳ शरः । धातुरुद्वासितम् । बृहस्पतेरुन्नीतम् । सवितुः प्रक्रान्तम् । द्यावापृथिव्यꣳ ह्रियमाणम् । ऐन्द्राग्नमुपसन्नम् । अग्नेः पूर्वाऽऽहुतिः ।

१ ख. °नार्थत्वं च ।

प्रजापतेरुत्तरा । ऐन्द्रꣳ हुतम् ( १ ), इति ।

उद्वासितꣳ सप्त च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

---

पयो यदा गावि तिष्ठति तदा रुद्रस्य प्रियम् । वत्सेनोपसृष्टं चोष्यमाणं वायोः प्रियम् । दोहनमापन्नमश्विनोः प्रियम् । दोहादूर्ध्वं सोमस्य प्रियम् । वह्नावधिश्रितं वरुणस्य प्रियम् । दर्व्यां क्षिप्यमाणस्य पयसो ये बिन्दवस्ते विश्वेषां देवानां प्रियाः । तापाधिक्येन पात्रस्यान्तपर्यन्तं यदुद्गमनं तत्पूष्णः प्रियम् । उत्सिक्तस्य पात्रगतप्रदेशेषु सर्वेषु विविधं स्यन्दनं प्रसर्पणं यत्तत्सरस्वत्याः प्रियम् । क्षीरमध्ये घनीभूतं यच्छरः सारं तन्मित्रस्य प्रियम् । पाकादूर्ध्वमुद्वासितं धातुः प्रियम् । स्रुच्युन्नीतं बृहस्पतेः प्रियम् । आहवनीयसमीपे गन्तुं यत्प्रक्रान्तं तत्सवितुः प्रियम् । तत्र ह्रियमाणं द्यावापृथिव्योः प्रियम् । नीत्वा तत्समीप उपसन्नमिन्द्राग्न्योः प्रियम् । प्रथमाहुतिरग्नेः प्रिया । द्वितीयाहुतिः प्रजापतेः प्रिया । होमादूर्ध्वमिन्द्रस्य प्रियम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथ प्रथमप्रपाठकेऽष्टमोऽनुवाकः ।

---

सप्तमे हविषः सर्वदेवतासंबन्धेन प्रशंसा कृता । अष्टमे दोहनप्रकारोऽभिधीयते । तत्राऽऽदौ गोसमीपे वत्सप्रेरणं विधत्ते—

दक्षिणत उपसृजति । पितृलोकमेव तेन जयति, इति ।

अग्निहोत्र्या धेनोर्दक्षिणपार्श्वे यथा वत्सं संबध्नाति तथा तं वत्समुपसृजेत् । तेन पितृलोकस्य जयो भवति ।

धेनोः प्राङ्मुखतामपि विकल्पेन विधत्ते—

प्राचीमावर्तयति । देवलोकमेव तेन जयति ।

---

१ ग. नीयमानं ।

उदीचीमावृत्य दोग्धि । मनुष्यलोकमेव तेन जयति, इति ।

देवलोकमनुष्यलोकयोः प्रागुदग्वर्तित्वेन तज्जयोऽनेकेष्वर्थवादेषु प्रसिद्धः । तथा च शाखाहरणे श्रूयते—"यत्प्राचीमाहरेत् । देवलोकमभिजयेत् । यदुदीचीं मनुष्यलोकम्" इति ।

अधिकारिभेदेन दोहनीयस्तनव्यवस्थां विधत्ते—

पूर्वौ दुह्याज्ज्येष्ठस्य ज्यैष्ठिनेयस्य । यो वाऽऽगतश्रीः स्यात् । अपरौ दुह्यात्कनिष्ठस्य कानिष्ठिनेयस्य । यो वा बुभूषेत् (१), इति ।

ज्येष्ठभार्यायाः पुत्रो ज्यैष्ठिनेयः । स्वयं च भ्रातृणां मध्ये ज्येष्ठः । तादृशस्य होमार्थं धेनुसंबन्धिपूर्वदिग्वर्तिनौ स्तनौ दुह्यात् । यस्तु प्राप्तश्रीः शुश्रुवान्ग्रामणी राजन्यो वा तस्यापि पूर्वौ दुह्यात् । कनिष्ठभार्यायाः पुत्रः कानिष्ठिनेयः । स्वयं भ्रातृणां मध्ये कनिष्ठस्तादृशस्य पश्चिमदिग्वर्तिनौ स्तनौ दुह्यात् । यो भवितुमितः परं श्रेयः प्राप्तुमिच्छति तस्याप्यपरौ दुह्यात् ।

लोके दोहनात्पूर्वं वत्सचोषणादूर्ध्वमविप्रस्रवणायाङ्गुलीभिः स्तनान्मर्दयन्ति । तदत्र निषेधति—

न संमृशति । पापवस्यसस्य व्यावृत्त्यै, इति ।

स्तनोपमर्देन प्राप्तं पापवस्यसं पापयुक्तं वस्तु तद्व्यावृत्त्यर्थं स्तनोपमर्दाभावः ।

पूर्वोक्तं सर्वदेवतासंबन्धमनुक्तैः कैश्चिद्विशेषैः सहानूद्य तेन हविषाऽग्निहोत्रहोमप्रयोगं विधत्ते—

वायव्यं वा एतदुपसृष्टम् । आश्विनं दुह्यमानम् । मैत्रं दुग्धम् । अर्यम्ण उद्वास्यमानम् । त्वाष्ट्रमुन्नीयमानम् । बृहस्पतेरुन्नीतम् । सवितुः प्रक्रान्तम् । द्यावापृथिव्यꣳ ह्रियमाणम् (२) ।

ऐन्द्राग्नमुपसादितम् । सर्वाभ्यो वा एष देव-
ताभ्यो जुहोति । योऽग्निहोत्रं जुहोति, इति ।

उक्तरीत्या हविषः सर्वदेवताप्रियत्वात्तादृशं हविर्जुहुयात्तेन सर्वाभ्यो देवताभ्यो हुतं भवति ।

तमेव होमं तद्वेदनबहुविधफलप्रदर्शनेन प्रशंसति—

यथा खलु वै धेनुं तीर्थे तर्पयति । एवमग्निहोत्री
यजमानं तर्पयति । तृप्यति प्रजया पशुभिः ।
प्र सुवर्गं लोकं जानाति । पश्यति पुत्रम् । पश्यति
पौत्रम् । प्र प्रजया पशुभिर्मिथुनैर्जायते । यस्यैवंवि-
दुषोऽग्निहोत्रं जुह्वति । य उ चैनदेवं वेद ( ३ ), इति ।

बुभूषेदाध्रियमाणं जायते द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमाध्या-
येऽष्टमोऽनुवाकः ॥ ८ ॥

---

लोके क्षीरप्रदां धेनुं विविधघासादिप्रदानेन तीर्थे स्वीयभोगस्थाने तर्पयति प्रीणयति । एवमियमग्निहोत्री धेनुर्होमद्रव्यं बहुक्षीरं प्रयच्छन्ती साङ्गकर्मसंपादनद्वारा यजमानं तर्पयति । अथवा धेनुमग्निहोत्रीं तीर्थेऽग्निहोत्राख्ये कर्मणि यजमानो यथा तर्पयति तथेयमग्निहोत्री कर्मफलेन यजमानं तर्पयति । स च यजमानः प्रजया पशुभिश्च तृप्तो देहपातादूर्ध्वं स्वर्गं प्रजानाति । ततः पूर्वं दीर्घायुष्येण युक्तः पुत्रं पौत्रं च पश्यति । एवमग्निहोत्रीमहिमानं जानतो यस्य यजमानस्याग्निहोत्रमध्वर्युः पुत्रादयो वा जुह्वति यश्च केवलमुक्तवृत्तान्तं जानाति तावुभावपि मिथुनरूपैः पुत्रादिभिश्च समृद्धौ भवतः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

अथ प्रथमप्रपाठके नवमोऽनुवाकः ।

---

अष्टमेऽग्निहोत्रविधिरुक्तः । नवमे तदीयमन्त्रा उच्यन्ते । यद्यपि द्वितीयानुवाके संसृष्टमन्त्रावुक्तौ तथाऽप्यसंसृष्टहोम एव तत्रोक्तो न तु तन्मन्त्रौ । तस्मात्तौ मन्त्रावत्र विधत्ते—

त्रयो वै प्रैयमेधा आसन् । तेषां त्रिरेकोऽग्निहोत्रमजुहोत् । द्विरेकः । सकृदेकः । तेषां यस्त्रिरजुहोत् । स ऋचाऽजुहोत् । यो द्विः । स यजुषा । यः सकृत् । स तूष्णीम् (१) । यश्च यजुषाऽजुहोद्यश्च तूष्णीम् । तावुभावार्ध्नुताम् । तस्माद्यजुषाऽऽहुतिः पूर्वा होतव्या । तूष्णीमुत्तरा । उभे एवर्द्धी अवरुन्धे । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति । रेत एव तद्दधाति । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः । रेत एव हितं प्रजनयति, इति ।

मेधा श्रुतग्रन्थतदर्थयोर्धारणाशक्तिः । प्रिया मेधा यस्यासौ प्रियमेधः कश्चिदृषिस्तस्य पुत्राः प्रैयमेधाः । तेषां त्रयाणां मध्ये ज्येष्ठः प्रतिदिनं त्रिवारमग्निहोत्रमृचा हुत्वाऽपि समृद्धिं न प्राप । द्वितीयो यजुषा द्विरजुहोत् । तृतीयस्तूष्णीं सकृदजुहोत् । तत्र यो यजुषाऽजुहोत् । यश्च तूष्णीं तावुभावृद्धिं प्राप्नुताम् । तस्मादन्येनापि प्रथमाहुतिरग्निर्ज्योतिरित्यादिना यजुषा होतव्या । द्वितीया तूष्णीं होतव्या । तथा सति समृद्धिं प्राप्नोति । मन्त्रस्य चायमर्थः । अग्निरङ्गारात्मकः । ज्योतिः प्रभाद्रव्यम् । योऽग्निरङ्गारात्मकः स एव प्रभाद्रव्यरूपः । यच्च प्रभाद्रव्यं तदेवाङ्गारात्मकम् । तयोरविनाभावस्य दृष्टत्वात् । तदेतत्स्वकीया वागाह । अनेन मन्त्रेण सायं हुते सति रेतोधारणं भवति । एवं सूर्यमण्डलं तत्प्रभयोरविनाभावो द्वितीयमन्त्र उच्यते । तेन प्रातर्होमे सत्याहितं रेतः प्रजोत्पत्तिं करोति । द्वितीयस्मिन्ननुवाक उदिता-

नुदितहोमपक्षौ विहितौ । तयोः प्रक्रमानुसारेण व्यवस्था द्रष्टव्या । "प्रक्रमे याथाकामी प्रक्रमात्तु नियम्यते" इति सूत्रकारेणोक्तन्यायात् ।

एवं सति योऽनुदितहोमं प्रक्रम्यानुतिष्ठति तस्य प्रमादाद्यदा होमात्प्रागेव सूर्योऽभ्युदियात् । तदानीं प्रायश्चित्तं विधत्ते—

रेतो वा एतस्य हितं न प्रजायते ( २ ) । यस्याग्निहोत्रमहुतꣳ सूर्योऽभ्युदेति । यद्यन्ते स्यात् । उन्नीय प्राङुदाद्रवेत् । स उपसाद्याऽऽतमितोरासीत । स यदाऽऽताम्येत् । अथ भूः स्वाहेति जुहुयात् । प्रजापतिर्वै भूतः । तमेवोपासरत् । स एवैनं तत उन्नयति । नार्तिमार्च्छति यजमानः ( ३ ), इति ।

तूष्णीं जायते यजमानः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमाध्याये नवमोऽनुवाकः ॥ ९ ॥

---

अनुदितहोमं प्रक्रम्यानुतिष्ठतो यस्य यजमानस्याग्निहोत्रमहुतमेवाभिलक्ष्य सूर्य उदेत्येतस्य गर्भाशये निषिक्तमपि रेतो न प्रजामुत्पादयति । तदानीं यदि यजमानोऽन्ते स्याद्ग्रामान्तरमगत्वा समीपे तिष्ठेत्तदानीं स्वयमेव हविरुन्नीय प्राङ्मुखमाहवनीयं प्रति उद्धृतहविष्क आद्रवेदागच्छेत् । स यजमान आहवनीयसमीपे हविरुपसाद्य स्वयं श्रमपर्यन्तं निरुद्धश्वासस्तिष्ठेत् । यदा श्रान्तो भवति तदा निरोधं परित्यज्य "भूः स्वाहा" इति मन्त्रेण जुहुयात् । प्रजापतिर्भूतो नित्यसिद्ध इति तन्मन्त्रगतस्य भूशब्दस्यार्थः । अतस्तेन मन्त्रेण तमेव प्रजापतिं प्राप्तवान्भवति । स एव प्रजापतिरेनं यजमानं ततः कालापराधदोषादुद्धृत्य सगुणं कर्म प्रापयति । यजमानो विनाशं न प्राप्नोति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

अथ प्रथमप्रपाठके दशमोऽनुवाकः ।

असंसृष्टहोममन्त्रौ नवमेऽभिहितौ । दशमे वह्नेरवस्थाविशेषानुसारेण होमो विधीयते । तत्र प्रथमामवस्थां दर्शयति—

यदग्निमुद्धरति । वसवस्तर्ह्यग्निः । तस्मिन्नस्य तथाविधे जुहोति । वसुष्वेवास्याग्निहोत्रꣳ हुतं भवति, इति ।

यदा यजमानो गार्हपत्यादाहवनीयेऽग्निमुद्धृत्य प्रतिष्ठापयति तदानीमुद्धरणावस्थाया वसुप्रियत्वाद्वसवोऽग्निरूपेण वर्तन्ते । यस्य यजमानस्य तथाविधे तस्मिन्नग्नावृत्विजो जुह्वति तस्य यजमानस्य तदग्निहोत्रं वसुष्वेव हुतं भवति । तेन वसवः प्रीयन्त इत्यर्थः । एवमुत्तरत्रापि योज्यम् ।

अथ द्वितीयावस्थामाह—

निहितो धूपायञ्छेते । रुद्रास्तर्ह्यग्निः । तस्मिन्नस्य तथाविधे जुहोति । रुद्रेष्वेवास्याग्निहोत्रꣳ हुतं भवति, इति ।

आहवनीये निहितोऽग्निर्धूपायन्निर्गच्छता धूमेन युक्तो यदाऽवतिष्ठते तदानीमयं रुद्रस्वरूपः ।

अथ तृतीयावस्थामाह—

प्रथममिध्ममर्चिरालभते । आदित्यास्तर्ह्यग्निः (१) । तस्मिन्नस्य तथाविधे जुहोति । आदित्येष्वेवास्याग्निहोत्रꣳ हुतं भवति, इति ।

अर्चिर्ज्वाला । सा यदेध्मकाष्ठं प्रथमं स्पृशति तदा सोऽग्निरादित्यरूपः ।

अथ चतुर्थीमवस्थामाह—

सर्व एव सर्वश इध्म आदीप्तो भवति । विश्वे देवास्तर्ह्यग्निः । तस्मिन्नस्य तथाविधे जुहोति ।

विश्वेष्वेवास्य देवेष्वग्निहोत्रꣳ हुतं भवति, इति।

सर्वोऽपि काष्ठसमूहः सर्वेषु प्रदेशेषु यस्मिन्काल आदीप्तो भवति तदा विश्वे देवा अग्निस्वरूपाः[1]।

अथ पञ्चमीमवस्थामाह—

नितरामर्चिरुपावैति लोहिनीकेव भवति। इन्द्र-स्तर्ह्यग्निः। तस्मिन्यस्य तथाविधे जुह्वति। इन्द्र एवास्याग्निहोत्रꣳ हुतं भवति (२), इति।

अर्चिर्ज्वाला सर्वाणि काष्ठानि यदा नितरामुपाप्नोति तेषु च काष्ठेषु लौहित्यमिव भवति तदानीमिन्द्रस्वरूपोऽग्निः।

अथ षष्ठीमवस्थामाह—

अङ्गारा भवन्ति। तेभ्योऽङ्गारेभ्योऽर्चिरुदेति। प्रजापतिस्तर्ह्यग्निः। तस्मिन्यस्य तथाविधे जुह्वति। प्रजापतावेवास्याग्निहोत्रꣳ हुतं भवति, इति।

प्रौढज्वालासु शान्तासु काष्ठान्यङ्गारा भवन्ति। तेभ्यश्चाङ्गारेभ्य ईषदेवार्चिरुदेति। तदा प्रजापतिरूपोऽयमग्निः।

अथ सप्तमीमवस्थामाह—

शरोऽङ्गारा अध्यूहन्ते। ब्रह्म तर्ह्यग्निः। तस्मिन्यस्य तथाविधे जुह्वति। ब्रह्मन्नेवा-स्याग्निहोत्रꣳ हुतं भवति, इति।

शरशब्देन क्षीरसारभूतं मण्डम्। अङ्गारशब्देन चाञ्चल्यमात्ररूपेणावभासमानो ज्वालालेशोऽभिधीयते। तादृशाः शरोऽङ्गारा यदाऽध्यूहन्त उपरि धावन्ति तदा परब्रह्मरूपोऽयमग्निः।

---

1 क. °देवस्वरूपः। अ°।

इदानीमेवंविधज्ञानपूर्वकानुष्ठानस्य तथाविधध्यानस्य च प्रशंसां दर्शयति—

वसुषु रुद्रेष्वादित्येषु विश्वेषु देवेषु । इन्द्रे प्रजापतौ ब्रह्मन् । अपरिवर्गमेवास्यैतासु देवतासु हुतं भवति । यस्यैवंविदुषोऽग्निहोत्रं जुह्वति । य उ चैनदेवं वेद, इति ।

आदित्यास्तन्नोऽग्निरिन्द्र एवास्याग्निहोत्र९ हुतं भवति देवेषु चत्वारि च ।
यदग्नि निहितः प्रथम९ सर्व एव नितरामङ्गाराः शरोऽङ्गारा वसुषु सप्त ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमाध्याये दशमोऽनुवाकः ॥ १० ॥

---

यस्य ज्ञानपूर्वको होमो यस्य च ध्यानं तयोरुभयोरप्यपरिवर्गमेकमपि दिनमवर्जयित्वा वस्वादिषु ब्रह्मान्तेषु देवेषु हुतं भवति । उ इत्यप्यर्थे । परिवर्गः परिवारः । इदं क्रियाविशेषणम् । एतासु पूर्वोक्तासु देवतास्वस्य यजमानस्याऽऽहुतं भवत्येव । अन्यत्स्पष्टम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

अथ प्रथमप्रपाठक एकादशोऽनुवाकः ।

---

दशमे वह्नेरवस्थाविशेषं होमप्राशस्त्यं दर्शितम् । एकादशे कालभेदेन परिषेचनं समन्त्रकं विधत्ते—

ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति । सत्यं त्वर्तेन परिषिञ्चामीति प्रातः । अग्निर्वा ऋतम् । असावादित्यः सत्यम् । अग्निमेव तदाऽऽदित्येन सायं परिषिञ्चति ।

---

१ क. होमे प्रा° ।

अग्निनाऽऽदित्यं प्रातः स्तः । यावदहोरात्रे भवतः । तावदस्य लोकस्य । नार्तिर्न रिष्टिः । नान्तो न पर्यन्तोऽस्ति । यस्यैवं विदुषोऽग्निहोत्रं जुह्वति । य उ चैनदेवं वेद (१), इति ।

अस्ति द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमाध्याये एकादशोऽनुवाकः ॥ ११ ॥

अङ्गिरसः प्रजापतिरग्निꣳ रुद्र उत्तरावती ब्रह्मवादिनोऽग्निहोत्रमायणा यज्ञाः प्रजापतिरकामयताऽऽत्मन्वद्रौद्रं गवि दक्षिणतस्त्रयो वै यदग्निमृतं त्वा सत्ये-नैकादश ॥ ११ ॥

अङ्गिरसः प्रैव तेन पशूनेव यत्त्रिमार्ष्टि यो वा अग्निहोत्रस्योपसदो दक्षिणतः षष्टिः ॥ ६० ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके प्रथमोऽध्यायः ॥ १ ॥

ऋतशब्देन मानससत्यवाचिनाऽग्निरत्र विवक्षितः । सत्यशब्देन वाचिकसत्यवाचिनाऽऽदित्योऽत्र विवक्षितः । तथा सति ऋतमग्निं त्वामादित्येन परितः सिञ्चामीति सायंकालीनमन्त्रस्यार्थः । सत्यमादित्यं त्वामृतेनाग्निना परितः सिञ्चामीति प्रातःकालीनमन्त्रस्यार्थः । एवंविधज्ञानपूर्वकानुष्ठाने तथाविधज्ञाने च यावन्तं कालमहोरात्रे उभे सुस्थिले वर्तेते तावन्तं कालमेतदीयपुत्रपौत्रादिपरम्परायामग्निहोत्रानुष्ठानोपयुक्तस्यास्य विघ्नकारिणी; कालार्तिर्न भवति । नापि सर्वात्मना नाशो भवति । तथा भोग्यवस्तूनां कदाऽप्यन्तपर्यन्तौ न स्तः । अन्तः प्रतिबन्धः । पर्यन्तः सर्वात्मना नाशः । तस्मादेतत्प्रशस्तमग्निहोत्रमनुष्ठेयमिति प्रपाठकस्य तात्पर्यार्थः ।

अथ प्रपाठकस्यानुवाकार्थः संगृह्यते—

उपोद्घातोऽग्निहोत्रं च संस्काराः प्राक्तनास्तथा ।
उदीच्या अपि संस्काराः काम्यद्रव्यविधिस्तथा ॥

अहोमस्य प्रतीकारो दोहनीयहविःस्तुतिः ।
दोहोऽसंसृष्टहोमश्च वह्निव्यवस्थाप्रशंसनम् ॥
परिषेचनमित्येवं प्रपाठक उदीरितः ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमः प्रपाठकः समाप्तः ॥ १ ॥

---

( मूलक्रमेण — अष्ट० २ अध्या० १ ( ९ ) अनु० ११ ( ८९ ) ।
( भाष्यक्रमेण — कां० २ प्रपा० १ ( ९ ) अनु० ११ ( ८९ ) ।

---

अथ द्वितीयकाण्डे द्वितीयप्रपाठकारम्भः ।

तत्र प्रथमोऽनुवाकः ।

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
अग्निहोत्रविधिः साङ्गप्रशंसाज्ञानसंयुतः ।
आद्ये प्रपाठके प्रोक्तो नित्यकाम्यविभेदतः ॥
आरण्यकाण्डगा मन्त्रा दशहोत्रादयः श्रुताः ।
तद्ब्राह्मणं स्पष्टमुक्तं द्वितीयेऽस्मिन्प्रपाठके ॥

आरण्यकाण्डस्य तृतीयप्रपाठके प्रथमानुवाके दशहोत्राख्यः " चित्तिः स्रुक् " इत्यादिहोममन्त्र आम्नातः । तस्य विधिरस्मिन्प्रथमानुवाकेऽभिधीयते । होतृमन्त्राणां च प्रयोगव्यवस्था सूत्रकारेण विस्पष्टं दर्शिता—" त इमे चतुर्होतारो यत्र होमार्थाः सग्रहाः सस्वाहाकारास्तत्र प्रयुञ्ज्येरन्, यत्राहोमार्था अग्रहा अस्वाहाकारा यत्र जपा याजमानास्तेषां ये विहारसंयुक्ता आहिताग्नेस्तान्प्रतीयादुभयोरितरान् " इति । चतुर्होतृशब्दः कृत्स्नहोतृमन्त्रविषयः । एतच्च प्रश्नोत्तराभ्यां विस्पष्टमाम्नास्यते । एतेषु चतुर्होतृमन्त्रेषु

---

१ ग. °उदाहृतः ।

यावन्ति पूर्वभागे होमसाधननामानि श्रूयन्ते तेषां प्राधान्येन दशहोतृमन्त्रत्वम् । उपरिभागो ग्रहशब्दवाच्यः । तस्यान्ते स्वाहाकारः पठितः । तौ ग्रहस्वाहाकारौ होमेष्वेव । जपादौ तद्रहितो होतृभाग एव प्रयोक्तव्यः । विहार आहवनीयादियुक्तं कर्म । तद्विषयविधिष्वाहिताग्निरेवाधिकारीतरेषु त्वनाहिताग्निरपि । अत एव तेषां क्रत्वर्थः पुरुषार्थश्चेत्युभयविधः प्रयोगो विद्यते । एवं सत्यत्र पुरुषार्थप्रयोगं तावदादौ विधत्ते—

प्रजापतिरकामयत प्रजाः सृजेयेति । स एतं दशहोतारमपश्यत् । तं मनसाऽनुद्रुत्य दर्भस्तम्बेऽजुहोत् । ततो वै स प्रजा असृजत । ता अस्मात्सृष्टा अपाक्रामन् । ता ग्रहेणागृह्णात् । तद्ग्रहस्य ग्रहत्वम् । यः कामयेत प्रजायेयेति । स दशहोतारं मनसाऽनुद्रुत्य दर्भस्तम्बे जुहुयात् । प्रजापतिर्वै दशहोता (१) । प्रजापतिरेव भूत्वा प्रजायते, इति ।

पुरा कदाचित्प्रजापतिः प्रजा उत्पादयितुं कामयमानस्तदुपायं वेदेषु परीक्ष्य दशहोत्राख्यं मन्त्रमपश्यत् । स च मन्त्र आरण्यककाण्ड एवं समाम्नातः— "चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः । विज्ञातमग्निः । वाक्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाध्वर्युः" इति । अत्र चित्तिचित्तशब्दाभ्यां निर्विकल्पकसविकल्पकभेदजनकावन्तःकरणभेदौ विवक्षितौ । वाक्प्रसिद्धा । आधीतग्रुवार्थमाणम् । केतविज्ञातशब्दाभ्यां निर्विकल्पसविकल्पकविज्ञानविषयावभिधीयेते । वाक्पतिशब्देन वाचः प्रवर्तकः कण्ठताल्वादिस्थानेषु संयुज्यमानो वायुरुच्यते । मनःप्राणौ प्रसिद्धौ । सामशब्देन तद्धेतुः स्वरोच्चारणशक्तिरुच्यते । एवं चित्त्यादयो दश शरीरगताः पदार्थविशेषाः । स्रुगादयो दश पदार्था होमनिष्पादकाः । अग्निशब्दद्वयेनाऽऽहवनीयगार्हपत्यौ विवक्षितौ । उपवक्तृशब्देनानुवचनकर्तुर्होतुः पुरा प्रैषवक्ता मैत्रावरुणो विवक्षितः । चित्त्यादयः शारीरपदार्थाः स्रुगादिरूपा इति वाक्यार्थः । अस्मिन्मन्त्रे स्रुगादीनां होमसाधनानां दशानामभिहितत्वादयं मन्त्रो

दशहोतेत्युच्यते । सोऽयं मन्त्रस्य पूर्वभागः । उत्तरभागस्तु ग्रहशब्दवाच्य एवमाम्नातः—"वाचस्पते विधे नामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम । वाचस्पतिः सोमं पिबतु । अस्मासु नृम्णं धात्स्वाहा" इति । हे वाचस्पते वाचः पालक हे विधे जगद्विधातर्हे नामन्सर्वस्य वशीकर्तस्ते तव नाम विधेमास्मदनुग्रहकारी देवोऽयमित्येवं प्रसिद्धिं कुर्मः । यद्वा नमनं प्रह्वीभावं संपादयामः । त्वमप्यस्माकं नाम विधेर्देवेषु मध्ये यजमानोऽयं यथाशास्त्रं हुतवानिति प्रसिद्धिं कुरु । अयं वाचस्पतिर्मदीयेषु यागेषु सोमसहशमाज्यं पिबतु । अस्मासु होमकर्तृषु नृम्णमपेक्षितं धनं धाद्वाचस्पतिः संपादयतु । इमं वृत्तान्तमुद्दिश्य जुहुधीति स्वकीया वागाह । अत्र वाचस्पते इत्यादि नृम्णं धादित्यन्तो ग्रहभागः । तेन ग्रहभागेन(ण) स्वाहाकारेण च सहितं तं दशहोतृमन्त्रं मनसोच्चार्य कस्मिंश्चिद्दर्भस्तम्ब आज्येन हुतवान् । ततो होमसामर्थ्यात्स प्रजापतिः कामिताः प्रजाः ससर्ज । ताः सृष्टाः प्रजा अनुरागरहिता अस्मात्प्रजापतेरपक्रान्ताः । स च प्रजापतिः "वाचस्पते" इत्यादिग्रहभागपठनसामर्थ्येन ताः प्रजाः पुनरगृह्णात् । ततो गृह्णात्यनेनेति व्युत्पत्त्या ग्रहत्वं संपन्नम् । प्रजापतिवदन्योऽपि होमं कृत्वा प्रजापतिसामर्थ्यं प्राप्य प्रजोत्पत्तिं करोति । सोऽयं विधिः सूत्रकारेण संगृहीतः—"यः कामयेत प्रजायेयेति स द्वादशगृहीतेन स्रुवं पूरयित्वा दशहोतारं मनसाऽनुद्रुत्य दर्भस्तम्बे सग्रहं जुहुयादर्धं वा पूर्वेण ग्रहेणार्धमुत्तरेण" इति ।

मानसं मन्त्रोच्चारणं प्रशंसति—

मनसा जुहोति । मन इव हि
प्रजापतिः । प्रजापतेराप्त्यै, इति ।

यथाऽस्मदीयं मनः संकल्पमात्रेण मनोराज्यगतान्गिरिनद्यादीन्सृजति, एवं प्रजापतिरपि संकल्पमात्रेण सृजतीति तत्साम्यतो मानसमुच्चारणं प्रजापतेः प्राप्त्यै भवति ।

विधत्ते—

पूर्णया जुहोति । पूर्ण इव हि
प्रजापतिः । प्रजापतेराप्त्यै, इति ।

द्वादशगृहीतेनाऽऽज्येन या स्रुक्पूर्णा तया जुहुयात् । सर्वात्मकत्वात्प्रजापतेः पूर्णत्वम् ।

पक्षान्तरं विधत्ते—

न्यूनया जुहोति । न्यूनाद्धि प्रजापतिः प्रजा असृजत । प्रजानाᳪ सृष्ट्यै ( २ ), इति ।

चतुर्गृहीतेनाऽऽज्येन युक्ता सेयमपूर्णा स्रुक्तया जुहुयात् । सृष्टेः प्राक्प्रजापतेः स्वरूपं सर्वजगद्बीजावस्थापन्नमव्याकृतं सर्वविशेषराहित्येन न्यूनं तस्मादेवाव्याकृताद्व्याकृतरूपाः प्रजाः सृष्टवान् । अतो न्यूनया होमः प्रजासृष्ट्यै भवति । पूर्णत्वन्यूनत्वपक्षौ समबलत्वाद्विकल्पितौ । ग्रहसहितेन होतृमन्त्रेण सर्वद्रव्यं सकृद्धोतव्यमित्येकः पक्षः । होतृभागेना(णा)र्धं हुत्वा पुनरर्धं ग्रहभागेन(ण) होतव्यमिति द्वितीयः पक्षः । ताविमौ पक्षौ सूत्रोक्तौ ।

अथ होमाधारं विधत्ते—

दर्भस्तम्बे जुहोति । एतस्माद्वै योनेः प्रजापतिः प्रजा असृजत । यस्मादेव योनेः प्रजापतिः प्रजा असृजत । तस्मादेव योनेः प्रजायते, इति ।

भूमिष्ठदर्भस्तम्बस्य प्रजायोनित्वम् । तथा च पञ्चमकाण्डे समाम्नातम्—"यद्वा अस्या अमृतं यद्वीर्यं तद्दर्भास्तस्मिञ्जुहोति प्रैव जायते" इति ।

विधत्ते—

ब्राह्मणो दक्षिणत उपास्ते । ब्राह्मणो वै प्रजानामुपद्रष्टा । उपद्रष्टुमत्येव प्रजायते, इति ।

होमकाले कश्चिद्ब्राह्मणो दक्षिणभागे स्थापनीयः । उपद्रष्टा हिताहितस्य प्रजानामुपदेष्टा । उपद्रष्टा उपद्रष्टुमतिहिताहितद्रष्टृयुक्ते देशे प्रजायते ।

ग्रहभागं प्रशंसति—

ग्रहो भवति । प्रजानाᳪ सृष्टानां धृत्यै, इति ।

यथा प्रजापतिरपक्रान्ताः प्रजा ग्रहभागेन(ण) धृतवानेवं यजमानोऽपि ।

इत्थं प्रजाकामस्य प्रयोगमभिधायाथ यशस्कामस्य प्रयोगं विधत्ते—

यं ब्राह्मणं विद्यां विद्वाᳪसं यशो नर्च्छेत् (३) ।

सोऽरण्यं परेत्य । दर्भस्तम्बमुद्ग्रथ्य । ब्राह्मणं दक्षिणतो निषाद्य । चतुर्होतॄन्व्याचक्षीत । एतद्वै देवानां परमं गुह्यं ब्रह्म । यच्चतुर्होतारः । तदेव प्रकाशं गमयति । तदेनं प्रकाशं गतम् । प्रकाशं प्रजानां गमयति, इति ।

वेदशास्त्रविद्यां तां जानन्तं ब्राह्मणं यदि तदनुरूपं यशो न प्राप्नुयात्तदा स ब्राह्मणोऽरण्यमनुप्रविश्य दर्भस्तम्बमूर्ध्वग्रन्थिकं बध्नीत । तत्राऽऽसीनः सन्कंचिद्विशिष्टं ब्राह्मणं दक्षिणभाग उपवेश्य तत्समीपे होतृमन्त्रान्विस्पष्टमु-च्चारयेत् । चित्तिः स्रुगित्यादिको दशहोता पृथिवी होतेत्यादिकश्चतुर्होताऽग्नि-र्होतेत्यादिकः पञ्चहोता सूर्यं ते चक्षुरित्यादिकः षड्ढोता महाहविर्हो-तेत्यादिकः सप्तहोता । एते सर्वेऽपि होतृमन्त्राश्चतुर्होतृशब्देन च्छत्रिन्यायेनोपलक्षिताः । अन्यथा बहुवचनानुपपत्तेः । चतुर्होतृशब्दस्यैव सर्वोपलक्ष-कत्वं, न तु दशहोत्रादिशब्दस्येत्ययमर्थ उपरिष्टाद्विस्पष्टी भविष्यति । अत्र होमविधानाभावाद्ग्रहभागस्वाहाकारभागौ न प्रयोक्तव्यौ । यत्ते चतु-र्होतारो मन्त्रा एतदेव देवानामुत्कृष्टं गोप्यं ब्रह्म । देवाः परस्मिन्ब्रह्मणि यादृशं गौरवं तादृशमेतेषु कुर्वन्ति । तदेव देवाभिमन्त्ररूपं ब्रह्म देवेषु मध्ये विद्वांसमेनं प्रकाशं गमयति । ततो देवेषु ख्यातिं गतमेनं ब्राह्मणं देवानु-ग्रहयुक्तं पुनः प्रजानां मध्ये प्रकाशं गमयति ततो लोकद्वयमख्यातो भवति ।

उक्तदर्भस्तम्बं प्रशंसति—

दर्भस्तम्बमुद्ग्रथ्य व्याचष्टे (४) । अग्निवान्वै दर्भस्तम्बः । अग्निवत्येव व्याचष्टे, इति ।

यथाऽग्निर्होमाधारस्तद्वद्दर्भस्तम्बोऽपि तत्र होमाधारत्वेन विहितः ।

ततोऽग्निमत्त्वं हिताहितसाक्षित्वेनोपवेशितं ब्राह्मणं प्रशंसति—

ब्राह्मणो दक्षिणत उपाऽऽस्ते । ब्राह्मणो वै प्रजा-

---

१ क. ख. मद्ब्र्वा । २ क ख. °द्विशेषं ब्रा° ।

नामुपद्रष्टा । उपद्रष्टुमत्येवैनं यश ऋच्छति, इति ।

इदं हितमिदमहितमिति ब्राह्मणः प्रजाभ्य उपदिशति तस्मादयमुपद्रष्टा । तथाविधब्राह्मणैर्युक्त एव देशे विद्वांसमेनं यशः प्राप्नोति ।

अथ साक्षिणे ब्राह्मणाय गोदानं विधत्ते—

ईश्वरं तं यशोऽर्तोरित्याहुः । यस्यां ते व्याचष्ट इति । वरस्तस्मै देयः । यदेवैनं तत्रोपनमति । तदेवावरुन्धे, इति ।

यं ब्राह्मणं संनिधाप्य होतॄन्पठति तमेव ब्राह्मणं तद्यशोऽर्तोरीश्वरं प्राप्तुं समर्थम् । अतस्तस्मै गोदानेन यद्यश एनं ब्राह्मणं प्राप्नोति तत्स्वयमेव स्वी करोति ।

तदेवं पुरुषार्थप्रयोगद्वयमभिधाय क्रत्वर्थं दशहोतृमन्त्रस्य प्रयोगचतुष्टयं क्रमेण विधत्ते—

अग्निमादधानो दशहोतारमवदध्यात् । प्रजातमेवैनमाधत्ते । तेनैवोद्धृत्याग्निहोत्रं जुहुयात् । प्रजातमेवैनज्जुहोति । हविर्निर्वप्स्यन्दशहोतारं व्याचक्षीत । प्रजातमेवैनं निर्वपति । सामिधेनीरनुवक्ष्यन्दशहोतारं व्याचक्षीत । सामिधेनीरेव सृष्ट्वाऽऽरभ्य प्रतनुते । अथो यज्ञो वै दशहोता । यज्ञमेव तनुते (६), इति ।

प्रजातं प्रभूतमाधेयोऽग्निर्होतव्यं निर्वपणीयं च हविर्दशहोतृमन्त्रेण वर्धते । तथा सामिधेनीरेव दशहोतृपाठेन सृष्ट्वा तदनुष्ठानं प्रारभ्य विस्तारयति । अपि च दशहोतृमन्त्रस्य यज्ञसाधनत्वेन यज्ञरूपत्वाद्यज्ञमेव विस्तारयति ।

---

१ क. ख. "नीरृचो द" ।

यदुक्तं सूत्रकारेण—"दशहोत्राऽभिचरन्यजेत स्वकृत इरिणे प्रदरे वा जुहुयात्" इति। तदिदं पुरुषार्थत्वेन विधत्ते—

अभिचरन्दशहोतारं जुहुयात्। नव वै पुरुषे प्राणाः। नाभिर्दशमी। सप्राणमेवैनमभिचरति। एतावद्वै पुरुषस्य स्वम्। यावत्प्राणाः। यावदेवास्यास्ति। तदभिचरति, इति।

शिरसि च्छिद्राणि सप्ताधस्तने द्वे छिद्रे तेषु संचरन्तः प्राणा नवसं॰ काः तदपेक्षया नाभेर्दशमत्वम्। एवं सति होतृमन्त्रगतया दशसंख्या(ख्य)या सर्वप्राणयुक्तमेवैनं शत्रुमुद्दिश्याभिचारः कृतो भवति। अपि च प्राणा इति यावदस्ति, एतावदेव पुरुषस्य मुख्यं स्वम्। अतस्तत्सर्वमुद्दिश्याभिचारः कृतो भवति।

होमदेशं विधत्ते—

स्वकृत इरिणे जुहोति प्रदरे वा। एतद्वा अस्यै निर्ऋतिगृहीतम्। निर्ऋतिगृहीत एवैनं निर्ऋत्या ग्राहयति, इति।

इरिणमु(मू)षरस्थानं तच्च स्वकृतं स्वयमेव सिद्धं न तु गार्हपत्याहवनीयाद्यायतनवदुपलिप्तपनेन संपादितम्। प्रदरो भूछिद्रम्। अनयोर्मध्य एकस्मिञ्जुहुयात्। एतच्चोभयं निर्ऋत्या राक्षसरूपया देवतया गृहीतं स्थानम्। अतस्तस्मिन्नेव स्थान एनं वैरिणं निर्ऋत्या ग्राहयति।

विधत्ते—

यद्वाचः क्रूरम्। तेन वषट् करोति। वाच एवैनं क्रूरेण प्रवृश्चति। ता जगार्तिमार्छति, इति।

दशहोता सुक्चा त्रश्च्छेदृचाचष्टे रुन्ध एव तनुते निर्ऋतिगृहीतं पञ्च च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयाध्याये प्रथमोऽनुवाकः ॥ १ ॥

---

आरण्यकाण्डे क्रूराणि समाम्नातानि—"खट् फट् जहि। छिन्धी भिन्धी

इन्धी कद्रू । इति वाचः क्रूराणि" इति । तेषां मध्ये केनचित्क्रूरेण दशहोतृमन्त्रान्ते वषट्कारकृत्यं संपादयेत् । ततस्तेन क्रूरेणैनं शत्रुं छिनत्ति । तदानीमेवासौ मरणं गच्छति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ द्वितीयप्रपाठके द्वितीयोऽनुवाकः ।

---

प्रथमे दशहोतृमन्त्रस्य क्रत्वर्थपुरुषार्थप्रयोगद्वयं दर्शितम् । द्वितीये चतुर्होत्रादिमन्त्राणां क्रत्वर्थप्रयोगः प्रदर्श्यते । तत्राऽऽदौ चतुर्होतुः प्रयोगं विधत्ते—

प्रजापतिरकामयत दर्शपूर्णमासौ सृजेयेति । स एतं चतुर्होतारमपश्यत् । तं मनसाऽनुद्रुत्याहवनीयेऽजुहोत् । ततो वै स दर्शपूर्णमासावसृजत । तावस्मात्सृष्टावपाक्रामताम् । तौ ग्रहेणागृह्णात् । तद्ग्रहस्य ग्रहत्वम् । दर्शपूर्णमासावालभमानः । चतुर्होतारं मनसाऽनुद्रुत्याऽऽहवनीये जहुयात् । दर्शपूर्णमासावेव सृष्ट्वाऽऽरभ्य प्रतनुते (१) । ग्रहो भवति । दर्शपूर्णमासयोः सृष्टयोर्धृत्यै, इति ।

चतुर्होतृमन्त्र आरण्यकाण्डे समाम्नातः—"पृथिवी होता । द्यौरध्वर्युः । रुद्रोऽग्नीत् । बृहस्पतिरुपवक्ता" इति । सोऽयं होतृभागः । तत्र पृथिव्यादयः प्रसिद्धाः । तथा होत्रादयश्च । उपवक्तृशब्देन समीपे स्थितत्वात्तत्कर्मानुजानानो ब्रह्मा विवक्षितः । ग्रहभागस्त्वेवमाम्नातः—"वाचस्पते वाचो वीर्येण । संभृततमेनाऽऽयक्ष्यसे । यजमानाय वार्यम् । आ सुवस्करस्मै । वाचस्पतिः सोमं पिबति । जजनदिन्द्रमिन्द्रियाय स्वाहा" इति । हे वाचस्पतेऽत्यन्तं संपादितेन मन्त्रात्मिकाया वाचः सामर्थ्येन त्वमासमन्तादयक्ष्यसे । अस्मै यजमानाय

वार्यं वरणीयं सुवः स्वर्गमाकः समन्तात्कुरु । अयं वाचस्पतिरस्मदीयेषु यागेषु सोमं पिबति । इन्द्रं देवमिन्द्रियायेन्द्रियसमृद्ध्यर्थं जजनज्जनयन्मे(तु मे)रयत्वित्यर्थः । तदेतदुद्दिश्य जुहुधीति स्वकीया वागाह । होमकाले यथोक्तग्रहेण स्वाहाकारेण च युक्तश्चतुर्होतृमन्त्रः प्रयोक्तव्यः । आलभमान उपक्रममाणः । अन्यत्सर्वं दशहोतृमन्त्रवद्व्याख्येयम् ।

अथ पञ्चहोतुः प्रयोगं विधत्ते—

सोऽकामयत चातुर्मास्यानि सृजेयेति । स एतं पञ्चहोतारमपश्यत् । तं मनसाऽनुद्रुत्याऽऽहवनीयेऽजुहोत् । ततो वै स चातुर्मास्यान्यसृजत । तान्यस्मात्सृष्टान्यपाक्रामन् । तानि ग्रहेणागृह्णात् । तद्ग्रहस्य ग्रहत्वम् । चातुर्मास्यान्यालभमानः ( २ )। पञ्चहोतारं मनसाऽनुद्रुत्याऽऽहवनीये जुहुयात् । चातुर्मास्यान्येव सृष्ट्वाऽऽरभ्य प्रतनुते । ग्रहो भवति । चातुर्मास्यानाꣳ सृष्टानां धृत्यै, इति ।

पञ्चहोतृमन्त्र आरण्यकाण्ड एवमाम्नातः—"अग्निर्होता । अश्विनाऽध्वर्यू । त्वष्टाऽग्नीत् । मित्र उपवक्ता " इति । अग्न्यादयः प्रसिद्धाः । अध्वर्युः प्रतिप्रस्थाता चेत्यध्वर्युद्वित्वेन होतृपञ्चकं पूरणीयम् । तत्र ग्रहभाग एवमाम्नातः—" सोमः सोमस्य पुरोगाः । शुक्रः शुक्रस्य पुरोगाः । श्रातास्त इन्द्रसोमाः । वातापेर्हवनश्रुतः स्वाहा " इति । योऽयं देवतात्मकः सोमः सोऽयं लतात्मकस्य सोमस्य यागदेशं प्रत्यागमने पुरतो गच्छति । शुक्रो भासको देवतादिप्रकाशको मन्त्रः शुक्रस्य गृह्यमाणतया भासमानस्य सोमस्य पुरतो गच्छति। आदौ मन्त्रं पठित्वा पश्चात्सोमा गृह्यन्ते। हे, इन्द्र त्वदर्थमेते सोमाः श्राताः पक्वा आश्रिता वा । कीदृशस्य ते वातापेर्वायुवदाप्नोति सहसा गच्छतीति वातापिः। तस्य हवनमाह्वानं शृणोतीति हवनश्रुत्तस्यैतदर्थं जुहुधीति स्वकीया वागाह ।

अत्र सर्वत्र दर्शपूर्णमासचातुर्मास्यादीनामुपक्रमणं तदभिमानिचेतनविषयं द्रष्टव्यम् । अन्यत्पूर्ववद्व्याख्येयम् ।

षड्ढोतृमन्त्रस्य प्रयोगं विधत्ते—

सोऽकामयत पशुबन्धꣳ सृजेयेति । स एतꣳ षड्ढो-
तारमपश्यत् । तं मनसाऽनुद्रुत्याऽऽहवनीयेऽजुहोत् ।
ततो वै स पशुबन्धमसृजत । सोऽस्मात्सृष्टोऽपाक्रा-
मत् । तं ग्रहेणागृह्णात् (३) । तद्ग्रहस्य ग्रहत्वम् ।
पशुबन्धेन यक्ष्यमाणः । षड्ढोतारं मनसाऽनुद्रु-
त्याऽऽहवनीये जुहुयात् । पशुबन्धमेव सृष्ट्वाऽऽ-
रभ्य प्रतनुते । ग्रहो भवति । पशुबन्धस्य सृष्टस्य
धृत्यै, इति ।

षड्ढोतृमन्त्र आरण्यकाण्ड एवमाम्नातः—"सूर्यं ते चक्षुः । वातं प्राणः । द्यां पृष्ठम् । अन्तरिक्षमात्मा । अङ्गैर्यज्ञम् । पृथिवीꣳ शरीरैः" इति । हे पशो योऽयं सूर्यः स च ते चक्षुः । यो वायुः स ते प्राणः । तथा च पशुविषयेऽध्रिगुप्रैषे समाम्नायते—"सूर्यं चक्षुर्गमयतात् । वातं प्राणमन्ववसृजतात्" इति । या द्यौस्ते पृष्ठभागः । उपरिवर्तित्वसाम्यात् । यदिदमन्तरिक्षं ते त्वदीयो जीवात्मा । मध्यवर्तित्वसाम्यात् । यानि हृदयादीन्यङ्गानि तैर्यज्ञं संपादयेति शेषः । यान्यन्यान्यस्थ्यादीनि शरीरगतानि तैः पृथिवीं प्राप्नुहीति शेषः । सूर्यं ते चक्षुरित्यादावपि त्वदीयं चक्षुः सूर्यं प्राप्नोत्विति वा योजनीयम् । षड्ढोमनिष्पादकस्य पशोः षडङ्गानि चक्षुरादीन्यत्रोक्तानीत्यस्य मन्त्रस्य षड्ढोतृत्वम् । ग्रहभाग एवमाम्नातः—"वाचस्पतेऽच्छिद्रया वाचा । अच्छिद्रया जुह्वा । दिवि देवावृधꣳ होत्रामेरयस्व स्वाहा" इति । हे वाचस्पतेऽच्छिद्रया वाचा स्वराक्षरपूर्णेन मन्त्रेणाच्छिद्रया जुह्वा घृतसंपूर्णया स्रुचा देवावृधं देवानां वर्धयित्रीं होत्रां होमक्रियां दिवि द्युलोके एरयस्व सर्वतः प्रेरय । एवमर्थमुद्दिश्य जुहुधीति स्वकीया वागाह । अन्यत्पूर्ववद्व्याख्येयम् ।

१ क. ख. °म्नातः—"सू° ।

सप्तहोतृमन्त्रस्य प्रयोगं विधत्ते—

सो॑ऽकामयत सौ॒म्यम॑ध्व॒रꣳ सृ॑जे॒येति॑ । स

ए॒तꣳ स॒प्तहो॑तारमपश्यत् । तं मन॑साऽनु॒द्रुत्या॑ऽऽ-

ह॒वनी॑येऽजुहोत् । त॒तो॒ वै स सौ॒म्यम॑ध्व॒रम॑सृ-

जत (४) । सो॑ऽस्मात्सृ॒ष्टोऽपा॑क्रामत् । तं ग्रहे॑-

णागृह्णात् । तद्ग्रह॑स्य ग्रह॒त्वम् । दी॒क्षि॒ष्यमा॑णः ।

स॒प्तहो॑तारं मन॑साऽनु॒द्रुत्या॑ऽऽहव॒नी॑ये जुहुयात् ।

सौ॒म्यमे॒वाध्व॒रꣳ सृ॒ष्ट्वाऽऽर॑भ्य॒ प्र॑तनुते । ग्रहो॑

भवति । सौ॒म्यस्या॑ध्व॒रस्य॑ सृ॒ष्टस्य॒ धृत्यै॑, इति ।

न विद्यते ध्वरो हिंसा यस्याग्निष्टोमादेः सोऽयमध्वरः । न हि तदनुष्ठा-यिनः काचिद्धिंसाऽस्ति । तस्य स्वर्गकामस्यापि हेतुत्वात् । स च सोमद्रव्येण निष्पाद्यत्वात्सौम्यः । सप्तहोतृमन्त्रश्चाऽऽरण्यकाण्ड एवमाम्नातः—"महाहवि-र्होता । सत्यहविरध्वर्युः । अच्युतपाजा अग्नीत् । अच्युतमना उपवक्ता । अना-धृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ । अयास्य उद्गाता" इति । महाहविः सत्यहविरित्याद्या अयास्यान्ताः सप्तसंख्याका महर्षयस्तन्महर्षिस्वरूपा मन्त्र-गता अस्त्या होत्रादयो यज्ञस्य सोमयागस्याभिगरावभित उद्गातुः पुरस्ता-त्पश्चाच्च गृणीतः प्रस्तारप्रतिहारभागौ गायत इति प्रस्तोतृप्रतिहर्तारावभिगरौ । होताऽध्वर्युराग्नीध्रो ब्रह्मा प्रस्तोता प्रतिहर्तोद्गातेति सप्तसंख्याका होमनिष्पा-दका अत्रोक्ता इत्ययं मन्त्रः सप्तहोतेत्युच्यते । अस्य ग्रहभागस्त्वेवमाम्नातः— "वाचस्पते हृद्विधे नामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम । वाचस्पतिः सोममपात् । मा दैव्यस्तन्तुश्छेदि मा मनुष्यः । नमो दिवे । नमः पृथिव्यै स्वाहा" इति । हे वाचस्पते हे हृद्विधे हृदयस्य विधातः । चित्तप्रेरकेत्यर्थः । हे नामन्सर्वजनसंबन्धिप्रणामयुक्त ते तुभ्यं नाम नमनं प्रणतिं विधेम कुर्मः । त्वं चास्माकं नाम विधेर्देवानां मध्ये सम्यगिष्टवानिति प्रसिद्धं नामधेयं कुरु । अयं वाचस्पतिः सोममपादितत्वाद्दैव्यस्तन्तुर्यज्ञरूपे हविःस्वीकारार्थमागतो देवसं-बन्धी संतानो मा च्छेदि कदाचिदपि विच्छिन्नो मा भूत् । तथा मम मनुष्य-स्तन्तुर्ऋत्विक्संघोऽपि विच्छिन्नो मा भूत् । द्यावापृथिवीभ्यां नमोऽस्तु ।

तमिममर्थमुद्दिश्य जुहुधीति स्वकीया वागाह । तेनानेन ग्रहस्वाहाकारसहितेन सप्तहोत्रा दीक्षार्थी जुहुयात् । सोमयागस्य दीक्षादित्वेन तदारम्भार्थ एवायं होमः । दीक्षाद्यङ्गेष्वग्नीषोमीयपशोरन्तर्भावात्तस्य यद्यपि पृथगुपक्रमो नास्ति तथाऽपि निरूढपशुबन्धवायव्यादीनामनन्तर्भावात्तदर्थः पूर्वो मन्त्रहोमः । अन्यत्पूर्ववद्व्याख्येयम् ।

तदेवं चतुर्होत्रादिमन्त्रचतुष्टयस्य क्रत्वर्थः प्रयोग उक्तः । अथ संभारयजुर्मन्त्राणां क्रत्वर्थप्रयोगं विधत्ते—

देवेभ्यो वै यज्ञो न प्राभवत् । तमेता-
वच्छः समभरन् (५) । यत्संभाराः ।
ततो वै तेभ्यो यज्ञः प्राभवत् । यत्सं-
भारा भवन्ति । यज्ञस्य प्रभूत्यै, इति ।

योऽयमग्निष्टोमादिर्यज्ञः स देवेभ्यः पर्याप्तो नाभूत् । तत्साधनेषु वैकल्यसंभवात् । तदा देवास्तं यज्ञं संभाराः संभारयजुराख्या मन्त्रा यावन्तः सन्ति तावद्भिः समभरन्संपूर्तिर्यथा भवति तथा पोषितवन्तः । ततस्तेभ्यो देवेभ्यः स यज्ञ पर्याप्तोऽभवत् । संभारयजूंषि चाऽऽरण्यकाण्ड एवमाम्नातानि—"अग्निर्यजुर्भिः । सविता स्तोमैः । इन्द्र उक्थामदैः । मित्रावरुणावाशिषा । अङ्गिरसोऽधिष्ण्यैरग्निभिः । मरुतः सदोहविर्धानाभ्याम् । आपः प्रोक्षणीभिः । ओषधयो बर्हिषा । अदितिर्वेद्या । सोमो दीक्षया । त्वष्टेध्मेन । विष्णुर्यज्ञेन । वसव आज्येन । आदित्या दक्षिणाभिः । विश्वे देवा ऊर्जा । पूषा स्वगाकारेण । बृहस्पतिः पुरोधया । प्रजापतिरुद्गीथेन । अन्तरिक्षं पवित्रेण । वायुः पात्रैः । अहꣳ श्रद्धया " इति । अत्राग्निसवित्रादयो देवा यजुस्तोमादीनि यज्ञे संभरणीयान्यङ्गानि । एते देवास्तैः संभरणीयैः सहास्मिन्कर्मण्यागच्छन्त्विति वाक्यार्थः । उक्थामदशब्दः शस्त्रवाची । यज्ञशब्दो हविष्प्रक्षेपवाची । स्वगाकारः शंयुवाकमन्त्रः । पुरोधा ग्रहणकाले पठनीया पुरोरुक् । पवित्रशब्दो दशापवित्रवाची । अहं यजमानः श्रद्धया सहाऽऽगच्छामि । त एते संभारमन्त्राः प्रयोक्तव्याः । तेन यज्ञस्य प्रभूतिः पर्याप्तिर्भवति ।

सामान्यतो यज्ञसंबन्धेन विहितानां संभारयजुषां पुनः स्थानविशेषं विधत्ते—

आतिथ्यमासाद्य व्याचष्टे । यज्ञमुखं वा आति-

थयम् । मुखत एव यज्ञꣳ संभृत्य प्रतनुते, इति ।

आतिथ्येष्टौ "अग्निरातिथ्यमसि" इत्यादिभिर्मन्त्रैर्निरुप्तं यद्धविस्तदेतद्वेदिमध्य आसाद्य पूर्वोक्तान्याग्नेर्यजुर्भिरित्यादीनि संभारयजूंषि पठनीयानि । आतिथ्यहविषोऽनुष्ठास्यमानस्य सोमयज्ञमुखत्वान्मुखत एव संपूर्णावयवयज्ञं संपाद्य विस्तारयति ।

अथ देवपत्न्याख्यान्मन्त्रान्क्रत्वर्थतया विधत्ते—

अयज्ञो वा एषः । योऽपत्नीकः । न प्रजाः प्रजायेरन् । पत्नीर्व्याचष्टे । यज्ञमेवाकः । प्रजानां प्रजननाय, इति ।

यो देवपत्नीमन्त्ररहितः स तावद्यज्ञ एव न भवति, कुतस्तस्य फलपर्यन्तता । तस्मात्ताहशानुष्ठाने प्रजा नोत्पद्येरन् । अतस्तत्परिहाराय देवपत्नीमन्त्रान्विस्पष्टं पठेत् । ते च मन्त्रा आरण्यकाण्ड एवमाम्नायन्ते—"सेनेन्द्रस्य । धेना बृहस्पतेः । पथ्या पूष्णः । वाग्वायोः । दीक्षा सोमस्य । पृथिव्यग्नेः । वसूनां गायत्री । रुद्राणां त्रिष्टुक् । आदित्यानां जगती । विष्णोरनुष्टुक् । वरुणस्य विराट् । यज्ञस्य पङ्क्तिः । प्रजापते रनुमतिः । मित्रस्य श्रद्धा । सवितुः प्रसूतिः । सूर्यस्य मरीचिः । चन्द्रमसो रोहिणी । ऋषीणामरुन्धती । पर्जन्यस्य विद्युत् । चतस्रो दिशः । चतस्रोवाऽन्तरदिशाः । अहश्च रात्रिश्च । कृषिश्च वृष्टिश्च । त्विषिश्चापचितिश्च । आपश्चौषधयश्च । ऊर्क्च सूनृता च देवानां पत्नयः" इति । देवता इन्द्रादयः पतयः । सेनादयः पत्न्यः । दिग्विदिगादयोऽपि केषांचिद्देवानां पत्न्यः । एताः सर्वा आगत्य यज्ञमविकलं कुर्वन्त्विति वाक्यार्थः । एतेषां देवपत्नीमन्त्राणां पाठेन वैकल्यकृतमयज्ञत्वं परिहृत्य संपूर्णमेव यज्ञं करोति । तत्र पत्नीसंबन्धात्प्रजानामुत्पत्तिर्भवति ।

देवपत्नीनां सामान्येन यज्ञसंबन्धं विधाय स्थानविशेषमभिधत्ते—

उपसत्सु व्याचष्टे । एतद्वै पत्नीनामायतनम् । स्व एवैना आयतनेऽवकल्पयति (६), इति ।

ततुत आलभमानोऽगृह्णादसृजताभरज्ञायेरन्षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

"या ते अग्ने याशया" इत्यादिमन्त्रसाध्या आहुतय उपसदस्तासां स्त्रीत्वविवक्षया स्त्रीलिङ्गेनोपलच्छब्देन निर्देशस्तत्सामीप्यं पत्नीनामुचितं स्थानम्। अत्र एता देवपत्नीः स्वोचित एव स्थाने यजमानः स्थापयति।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ द्वितीयप्रपाठके तृतीयोऽनुवाकः।

---

द्वितीये चतुर्होत्रादिमन्त्राणां क्रत्वर्थप्रयोगो दर्शितः। तत्राऽऽदौ तावदनुक्तकालविशेषाणां कर्मणां सामान्येन शुक्लपक्षमन्वयव्यतिरेकाभ्यां विधत्ते—

प्रजापतिरकामयत प्रजायेयेति। स तपोऽतप्यत। स त्रिवृत स्तोममसृजत। तं पञ्चदशस्तोमो मध्यत उदतृणत्। तौ पूर्वपक्षश्चापरपक्षश्चाभवताम्। पूर्वपक्षं देवा अन्वसृज्यन्त। अपरपक्षमन्वसुराः। ततो देवा अभवन्। पराऽसुराः। यं कामयेत वसीयान्त्स्यादिति (१)। तं पूर्वपक्षे याजयेत्। वसीयानेव भवति। यं कामयेत पापीयान्त्स्यादिति। तमपरपक्षे याजयेत्। पापीयानेव भवति। तस्मात्पूर्वपक्षोऽपरपक्षात्करुण्यतरः, इति।

सिसृक्षुः प्रजापतिस्तत्साधनं तपोऽनुष्ठाय तपःसामर्थ्येन नवसंख्याकाभिर्ऋग्भिरुपेतं त्रिवृन्नामकं स्तोममसृजत्, तं च सृष्टं स्तोममपरः पञ्चदशस्तोमः केनापि वैरेण मध्ये विच्छिन्नमकरोत्। तावेतौ त्रिवृत्स्तोमस्य पूर्वोत्तरभागौ शुक्लकृष्णपक्षरूपेण परिणतौ। तत्र शुक्लपक्षमनु देवानां सृष्टत्वात्तेषां चैश्वर्ययुक्तत्वात्पूर्वपक्षे यागं कुर्वाणो धनिको भवति। अपरपक्षे तु विपरीतः। तस्मादनुक्तकालविशेषेषु कर्मसु पूर्वपक्षः करुण्यतरोऽतिशयेन प्रशस्तः।

अथ प्रसङ्गात्स्रष्टुः प्रजापतेः सर्वात्मकत्वेन स्तुवंस्तदनुसंधानं पुरुषार्थतया विधत्ते —

प्रजापतिर्वै दशहोता । चतुर्होता पञ्चहोता ।
षड्ढोता सप्तहोता । ऋतवः संवत्सरः (२) ।
प्रजाः पशव इमे लोकाः । य एवं प्रजापतिं
बहोर्भूयाꣳसं वेद । बहोरेव भूयान्भवति, इति ।

प्रजापतेर्दशहोतृप्रभृतिलोकपर्यन्तसर्ववस्त्वात्मकत्वेनास्य बहोरप्यतिशयेन बहुत्वम् । तादृशं विदित्वा ध्यानं कुर्वन्स्वयमपि तादृशो भवति ।

अथ चतुर्होतृमन्त्रस्य पुरुषार्थप्रयोगं विधातुं प्रस्तौति—

प्रजापतिर्देवासुरानसृजत । स इन्द्रमपि नासृजत ।
तं देवा अब्रुवन् । इन्द्रं नो जनयेति । सोऽ-
ब्रवीत् । यथाऽहं युष्माꣳस्तपसाऽसृक्षि । एव-
मिन्द्रं जनयध्वमिति ( ३ ) । ते तपोऽतप्यन्त ।
त आत्मन्निन्द्रमपश्यन् । तमब्रुवन । जाय-
स्वेति । सोऽब्रवीत् । किं भागधेयमभिजनिष्य
इति । ऋतून्संवत्सरम् । प्रजाः पशून् । इमा-
ꣳल्लोकानित्यब्रुवन् । तं वै माऽऽहुत्या प्रजनयते-
त्यब्रवीत् ( ४ ) । तं चतुर्होत्रा प्राजनयन्, इति ।

प्रजापतिर्देवानसुरांश्च सृष्ट्वा देवस्वामिनमिन्द्रं नासृजत । अपिशब्दादसुरस्वामिनमपि नासृजत । तत इन्द्रसृष्ट्यर्थं देवैः प्रार्थितः सृष्टिसाधनं तप उपदिदेश । ततो देवास्तपस्तप्त्वा स्वहृदय एवावस्थितमिन्द्रं दृष्ट्वा जायस्वेति प्रार्थितवन्तः । इन्द्रश्च भागधेयमाकाङ्क्षन्, ऋत्वादिलोकपर्यन्तं जगत्स्वभोग्यत्वेन

१ क. ख. °र्शं निदिध्यासनं ।

देवेभ्यो लब्ध्वा स्वोत्पादनहेतुमाहुतिमुपादिदेश । ते च देवाश्चतुर्होत्राऽऽहुत्या तमिन्द्रमजनयन् ।

इदानीं विधत्ते—

यः कामयेत वीरो म आजायेतेति । स चतुर्होतारं जुहुयात् । प्रजापतिर्वै चतुर्होता । प्रजापतिरेव भूत्वा प्रजायते । अजनदिन्द्रमिन्द्रियाय स्वाहेति ग्रहेण जुहोति । आऽस्य वीरो जायते । वीरꣳ हि देवा एतयाऽऽहुत्या प्राजनयन्, इति ।

वीरो लौकिकवैदिककर्मसु शूरः पुत्रः । पृथिवी होतेत्यादिबृहस्पतिरुपवक्तेत्यन्तश्चतुर्होता । उपरितन इन्द्रियाय स्वाहेत्यन्तो ग्रहभागस्तेन सर्वेणापि चतुर्होतारं जुहुयादिति होमो विहितः । अजनदिन्द्रमित्यादिग्रहभागान्त एकहोम इत्येकः पक्षः ॥ होतृभागेन(ण) ग्रहभागेन(ण) चाऽऽहुतिद्वयं वाक्याभ्यां विधीयत इत्यपरः पक्षः । तदुभयं सूत्रकार आह—"यः कामयेत वीरो म आजायेतेति । स चतुर्होतारं जुहुयाच्चतुर्गृहीतेनाऽऽज्येनार्धं वा पूर्वेण ग्रहेणार्धमुत्तरेण" इति ।

अथ क्रतुमध्य एव गोदोहनेन पशुकामस्येत्यादिवत्पुरुषार्थं पञ्चहोतृमन्त्रेण ग्रहहोमं विधत्ते—

आदित्याश्चाङ्गिरसश्च सुवर्गे लोकेऽस्पर्धन्त । वयं पूर्वे सुवर्गं लोकमियाम वयं पूर्व इति ( ५ ) । त आदित्या एतं पञ्चहोतारमपश्यन् । तं पुरा प्रातरनुवाकादाग्नीध्रेऽजुहवुः । ततो वै ते पूर्वे सुवर्गं लोकमायन् । यः सुवर्गकामः स्यात् । स पञ्चहोतारं पुरा प्रातरनुवाकादाग्नीध्रे जुहुयात् । संवत्सरो वै पञ्च-

होता । संवत्सरः सुवर्गो लोकः । संवत्सर एवर्तुषु प्रतिष्ठाय । सुवर्गं लोकमेति, इति ।

प्रथमतः स्वर्गगमने मात्सर्यग्रस्ता आदित्या यागमध्ये प्रातरनुवाकस्य पाठात्पुरा पञ्चहोत्रा हुत्वा प्रतिस्पर्धिभ्योऽङ्गिरोभ्यः पूर्वमेव स्वर्गं प्राप्ताः । अतोऽन्योऽपि तथा हुत्वा स्वर्गं प्राप्नोति । संवत्सरस्य सर्वात्मकप्रजापतिरूपत्वेन पञ्चहोतृत्वं स्वर्गलोकरूपत्वं च द्रष्टव्यम् ।

अथोक्तहोमकर्त्रादित्यप्रशंसामुखेन तदादित्यध्यानं फलाय विधत्ते—

तेऽब्रुवन्नङ्गिरस आदित्यान् (६) । क्व स्थ । क्व वः सद्भ्यो हव्यं वक्ष्याम इति । छन्दःस्वित्यब्रुवन् । गायत्रियां त्रिष्टुभि जगत्यामिति । तस्माच्छन्दःसु सद्भ्य आदित्येभ्यः । आङ्गीरसीः प्रजा हव्यं वहन्ति । वहन्त्यस्मै प्रजा बलिम् । ऐनमप्रतिख्यातं गच्छति । य एवं वेद, इति ।

ते पूर्वोक्ताः प्रथमतः स्वर्गप्राप्तिरहिता अङ्गिरस आदित्यान्पप्रच्छुः । हे आदित्याः कुत्र यूयं स्थिता युष्मदर्थं हव्यं वोढुकामा वयं कुत्र स्थितेभ्यो युष्मभ्यं हविर्वहनं करिष्याम इति । ते चाऽऽदित्या गायत्र्यादिच्छन्दःसु वयं गूढाः स्थिता इत्यब्रुवन् । तस्मादाङ्गिरोगोत्रे समुत्पन्नाः प्रजा गायत्र्यादिच्छन्दांस्युच्चार्य तेष्वादित्यान्भावयन्तस्तेभ्यो हव्यं प्रयच्छन्ति । एवमादित्यवृत्तान्तं यो वेदास्मै वेदित्रे सर्वाः प्रजाः पूजां वहन्ति । केनाप्यप्रतिख्यातमेतमादित्यसमूहमसौ वेदिता प्राप्नोति । अत्र य एवं वेदेति ज्ञानविवक्षायामादित्यप्रशंसा । ध्यानविवक्षायामुक्तफलप्राप्तिः । एवं सर्वत्र द्रष्टव्यम् ।

प्रकारान्तरेणाऽऽदित्यप्रशंसामुखेन ध्यानं विधत्ते—

द्वादश मासाः पञ्चर्तवः । त्रय इमे लोकाः । असावादित्य एकविꣳशः । एतस्मिन्वा एष श्रितः ।

---

१ क. ख. 'त्स्वरूपम' ।

एतस्मिन्प्रतिष्ठितः । य एवमेत२ श्रितं प्रतिष्ठितं वेद । प्रत्येव तिष्ठति (७), इति ।

स्यादिति संवत्सरो जनयध्वमितीत्यब्रवीत्पूर्वं इत्यादित्यानृतवः षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

मासाद्यपेक्षया योऽयमेकविंश आदित्यः स एष एतस्मिन्प्रकृते पञ्चहोतृमन्त्रे श्रितः । तद्विषयानुष्ठानयुक्तत्वात् । किंचैतस्मिन्मन्त्रे प्रतिष्ठितस्तज्जन्यफलभागित्वात् । तमेतं पञ्चहोतृमन्त्रे श्रितं प्रतिष्ठितं चाऽऽदित्यं यो वेद स प्रतितिष्ठत्येव ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ द्वितीयप्रपाठके चतुर्थोऽनुवाकः ।

---

तृतीये चतुर्होतृपञ्चहोतृमन्त्रग्रहभागयोः पुरुषार्थप्रयोगो विहितः । चतुर्थे जगत्सृष्टिकथनमुखेन होतृमन्त्रप्रशंसा क्रियते । तत्र प्रथमं तावद्दशहोतारं प्रशंसति—

प्रजापतिरकामयत प्रजायेयेति । स एतं दशहोतारमपश्यत् । तेन दशधाऽऽत्मानं विधाय । दशहोत्राऽतप्यत । तस्य चित्तिः स्रुगासीत् । चित्तमाज्यम् । तस्यैतावत्येव वागासीत् । एतावान्यज्ञक्रतुः, इति ।

प्रजापतिः स्रष्टुकामस्तत्साधनं वेदेषु विचार्य दशहोतृमन्त्रं दृष्ट्वा तन्मन्त्रोक्तप्रकारेण स्वस्वरूपमेव चित्तिचित्तवागाद्यवयवैर्दशधा दशप्रकारजातेन दशहोतृमन्त्रेण तपः कृतवान् । तपःशब्दोऽयं पर्यालोचनवाची । पर्यालोचनरूपं

---

१ क. ख. 'धा विभज्य ते' ।

मानसं यज्ञं कृतवानित्यर्थः । तस्य मानसयज्ञे प्रवृत्तस्य बाह्यसाधनाभावाद्धेयं स्वकीया चित्तिर्निर्विकल्पकज्ञानहेतुभूताऽन्तःकरणवृत्तिः सैव स्रुगासीत् । यत्तु चित्तं सविकल्पकज्ञानसाधनमन्तःकरणं तदेवाऽऽज्यम् । एवमुत्तरत्रापि योज्यम् । तदेवं संगृह्य प्रदर्शितं । तस्य प्रजापतेस्तदानीं दशहोतृमन्त्ररूपा[1] यावत्युच्चारिता एतावत्येव वागासीत् । इमामेव पुनः पुनरावर्तयति । तत्रान्यं वाग्व्यापारं न करोतीत्यर्थः । तस्मिन्मन्त्रे यावानर्थः प्रतीयते एतावानेव तदीयो यः क्रतुः, न तु बाह्यानुष्ठानरूपः । यज्ञशब्दो हविस्त्यागवाची । क्रतुशब्दो हविस्त्यागयुक्तकृत्स्नप्रयोगं वक्ति । तदेवं प्रजापत्यनुष्ठानवाचित्वा-त्प्रशस्तोऽयं दशहोतृमन्त्रः ।

अथ चतुर्होतृमन्त्रं प्रशंसति—

स चतुर्होतारमसृजत । सोऽनन्दत् ( १ ) । असृक्षि वा इममिति । तस्य सोमो हविरासीत् । स चतुर्होत्राऽतप्यत । सोऽताम्यत् । स भूरिति व्याहरत् । स भूमिमसृजत । अग्निहोत्रं दर्शपूर्णमासौ यजूꣳषि । स द्वितीयमतप्यत । सोऽताम्यत् । स भुव इति व्याहरत् । ( २ ) । सोऽन्तरिक्षमसृजत । चातुर्मास्यानि सामानि । स तृतीयमतप्यत । सोऽताम्यत् । स सुवरिति व्याहरत् । स दिवमसृजत । अग्निष्टोममुक्थ्यमतिरात्रमृचः । एता वै व्याहृतय इमे लोकाः । इमान्खलु वै लोकाननु प्रजाः पशवश्छन्दाꣳसि प्राजायन्त । य एवमेताः प्रजापतेः प्रथमा व्याहृतीः प्रजाता वेद

१ क ख ºमन्त्राक्षररूपा ।

( ३ )। प्र प्रजया पशुभिर्मिथुनैर्जायते, इति।

स प्रजापतिर्दशहोतृमन्त्रानुष्ठानेन सत्यसंकल्पः सन्स्वसंकल्पेन चतुर्होतृमन्त्रमसृजत। स इमं मन्त्रं सृष्टवानस्मीत्येवं दृष्टवान्। तस्य संतोषयुक्तस्य प्रजापतेः संकल्पमात्रेण सोमवल्लीरसो हविरासीत्। स पुनश्चतुर्होतृमन्त्रेण सोमाख्यं हविः प्रक्षिप्य होमानुष्ठानरूपं तपोऽकुरुत। तेन स्वव्यापारेण श्रान्तो दीर्घश्वासं कृतवान्। तदनुकरणरूपो भूरिति शब्दः। स च प्रजापतिना व्याहृतत्वात्प्रथमलोकप्रकाशकव्याहृतिरूपो मन्त्र इत्युच्यते। तेन मन्त्रेण ज्ञातां तदर्थरूपां भूमिं संकल्प्यासृजत। ततः संकल्पादेवाग्निहोत्रादिकमसृजत। एवं द्वितीयतृतीयपर्यायौ व्याख्यातव्यौ। एवमुक्तेन प्रकारेणैता भूरादिव्याहृतय एव लोकत्रयरूपेण परिणताः। तानिमाँल्लोकाननुसृत्य प्रजादिकमुत्पन्नम्। एतद्वेदनस्य प्रजादिप्राप्तिः फलम्।

अथ पञ्चहोतृमन्त्रं प्रशंसति—

स पञ्चहोतारमसृजत। स हविर्नाविन्दत। तस्मै सोमस्तनुवं प्रायच्छत्। एतत्ते हविरिति। स पञ्चहोत्राऽयजत। सोऽताम्यत्। स प्रत्यङ्ङबाधत। सोऽसुरानसृजत। तदस्याप्रियमासीत् (४)। तद्दुर्वर्णꣳ हिरण्यमभवत्। तद्दुर्वर्णस्य हिरण्यस्य जन्म। स द्वितीयमयजत। सोऽताम्यत्। स प्राङ्ङबाधत। स देवानसृजत। तदस्य प्रियमासीत्। तत्सुवर्णꣳ हिरण्यमभवत्। तत्सुवर्णस्य हिरण्यस्य जन्म। य एवꣳ सुवर्णस्य हिरण्यस्य जन्म वेद (५)। सुवर्ण आत्मना भवति। दुर्वर्णोऽस्य भ्रातृव्यः। तस्मात्सुवर्णꣳ हिरण्यं भार्यम्॥ सुवर्ण एव

भवति । ऐनं प्रियं गच्छति नाप्रियम्, इति ।

स प्रजापतिः पञ्चहोतृमन्त्रं सृष्ट्वा तेन होतुमलब्धे हविषि सोमस्य शरीरं हविष्ट्वेन लब्ध्वा पञ्चहोतृमन्त्रेण तं सोमं हुत्वा श्रान्तवान् । श्रान्तः सन्नसौ प्रत्यङ्ङबाधत निरुद्धप्राणवृत्तिः सञ्शरीर एव महतीं पीडां प्राप्तवान् । तस्यामुपद्रववेलायामसुरानसृजत । तेषामसुराणां सृष्टिहेतुभूतं तत्पीडायुक्तं शरीरमस्य प्रजापतेरप्रियमासीत् । तच्चाप्रीयं शरीरं दुर्वर्णहिरण्यरूपेण निष्पन्नम् । हिरण्यशब्दः सर्वलोहवाच्यत्र । तत्र दुर्वर्णविशेषणाद्रजतसीसताम्रादिवाची भवति । तदेवं रजतताम्रादिरूपस्य लोहस्य लोके जन्म संपन्नम् । स प्रजापतिर्द्वितीयवारं पञ्चहोतृमन्त्रेण सोमद्रव्यं होमरूपं तपः कृत्वा श्रान्तः प्राङबाधत प्राङ्वृत्तिप्राणत्वाच्छ्वासनिरोधमन्तरेण तस्मिन्नवसरे देवानसृजत । श्रममात्रबाधां प्राप्तवान् । तदेव स्रष्टुः शरीरं प्रजापतेः प्रियं भूत्वा सुवर्णहिरण्यरूपेण परिणतम् । रजतादिव्यावृत्तये सुवर्णं विशेषणम् । तदेवं लोके सुवर्णजन्म प्रवृत्तम् । तज्जन्म वेदिता स्वशरीरसौन्दर्येण मणिमुक्ताद्याभरणेन सुवर्णो भवति । तद्वैपरीत्येन भ्रातृव्यो दुर्वर्णो भवति । यस्मादेवं सुवर्णं प्रशस्तं तस्मात्पुरुषेण हस्तकर्णादौ सुवर्णाभरणं धार्यते । तेन लोकद्वयेऽपि रमणीयो भवति । एनं सुवर्णधारिणं पुरुषं सत्काररूपं प्रियमेव प्राप्नोति न तु कदाचिदपि तिरस्कारादिरूपमप्रियं प्राप्नोति ।

अथ सप्तहोतृमन्त्रं प्रशंसति—

स सप्तहोतारमसृजत । स सप्त-
होत्रैव सुवर्गं लोकमैत, इति ।

स प्रजापतिः सप्तहोतृमन्त्रं सृष्ट्वा तेन हुत्वा स्वर्गं प्राप्तवान् । यद्यपि प्रजापतेर्नैतत्फलं युक्तं तथाऽप्याचारप्रवर्तकत्वेन स्वर्गं लोकं गतवानिति नास्ति विरोधः ।

होतृमन्त्रप्रशंसाप्रसङ्गेन सामवेदगतान्स्तोमान्प्रशंसति—

त्रिणवेन स्तोमेनैभ्यो लोकेभ्योऽसुरान्प्राणुदत ।
त्रयस्त्रिंशेन प्रत्यतिष्ठत् । एकविंशेन रुचं-
मधत्त (६) । सप्तदशेन प्राजायत । य एवं

१ क. ख. 'न तन्नटनमित्यपि' ।

विद्वान्त्सोमेन यजते । सप्तहोत्रैव सुवर्गं लोक-
मेति । त्रिणवेन स्तोमेनैभ्यो लोकेभ्यो भ्रातृ-
व्यान्प्रणुदते । त्रयस्त्रिꣳशेन प्रतितिष्ठति । एक-
विꣳशेन रुचं धत्ते । सप्तदशेन प्रजायते । तस्मा-
त्सप्तदशः स्तोमो न निर्हृत्यः । प्रजापतिर्वै सप्तदशः ।
प्रजापतिमेव मध्यतो धत्ते प्रजात्यै ( ७ ), इति ।

अनन्दद्ध्रुव इति व्याहरद्भ्रीदाऽऽसीद्भ्रीदाऽऽधत्त प्रजात्यै ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके द्विती-
याध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

---

स प्रजापतिस्त्रिणवादिस्तोमैरसुरान्मरणादिफलेनैव योजयामास । तस्माद-न्योऽप्येवं ज्ञात्वा सोमेन यजमानो दीक्षाकालीनसप्तहोतृहोमेन स्वर्गं प्राप्नोति । त्रिणवादिस्तोमैर्भ्रातृव्यनिराकरणादिफलं च प्राप्नोति । यस्मात्सप्तदशस्तोमः प्रजोत्पत्तिहेतुस्तस्मादयं सोमयागाद्बहिर्न निःसारणीयः । किंतु यागमध्य एव प्रयोक्तव्यः । तस्य च सप्तदशस्तोमस्य सप्तदशाक्षरात्मकप्रजापतिसाम्या-त्प्रजापतिमेव मध्ये स्थापयति । तच्च प्रजोत्पत्त्यर्थं भवति ।

अत्र मीमांसा । तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

हिरण्यं वर्णवद्धार्यं क्रत्वङ्गं भरणं भवेत् ।
हिरण्यसंस्कृतिर्वाऽत्र वर्णो वोत पुमर्थता ॥
वैदिकत्वात्क्रतुस्मृत्या तदङ्गं कर्मकारके ।
प्राधान्यात्संस्कृतिर्वर्णो गुणोऽस्तु विधिलाघवात् ॥
अनारभ्य श्रुतत्वेन नियमो न क्रतुस्मृतिः ।
अतः पुमर्थता वर्णः कल्प्योऽन्यत्राऽस्तु रात्रिवत् ॥ [ इति ]

अनारभ्य श्रूयते—"तस्मात्सुवर्णꣳ हिरण्यं भार्यम् । सुवर्ण एव भवति" इति । तत्र यदेतच्छोभनवर्णोपेतं हिरण्यधारणं तस्य वैदिकक्रियारूपत्वेन क्रतुस्मारकत्वात्क्रत्वङ्गं धारणमित्येकः पक्षः । क्रत्वङ्गत्वेऽपि नाऽऽरादुप-कारकं किंतु क्रतुगतं हिरण्यं धारणेन संस्क्रियते भार्यमित्यत्र ण्यत्प्रत्ययस्य कर्मणि विहितत्वेन कर्मकारकस्य हिरण्यस्य प्राधान्यावगमादिति द्वितीयः

पक्षः। श्रुणावाशब्दधारणाविधाने गौरवाद्धारणसहितं हिरण्यमनूद्य शोभनवर्णमात्रं विधेयमिति तृतीयः पक्षः । त्रेधाऽपि क्रत्वर्थो विधिः । न तु पुरुषार्थ इति प्राप्ते ब्रूमः। यद्धि क्रतुप्रकरणे श्रुतं तस्यास्ति नियमेन क्रतुस्मारकत्वम्। इदं त्वनारभ्याधीतम्। न चात्र हिरण्यं जुह्वादिवत्क्रतावव्यभिचरितम्। येन क्रतुस्मृतिर्निश्चीयेत। ननु संस्कार्यत्वान्यथानुपपत्त्या क्रतुप्रवेशः स्यात्। न हि धारणेन संस्कृतस्य हिरण्यस्य लौकिकः कश्चिदुपयोगोऽस्तीति चेत्। न। क्रतावप्युपयोगाभावात्। क्रतूपयोगोऽपि कल्प्यत इति चेत्। न। क्रतूपयोगित्वेन संस्कार्यत्वं तेन च क्रतूपयोग इत्यन्योन्याश्रयत्वात्। न च कर्मकारकत्वात्संस्कार्यत्वम्। परसमवेतक्रियाफलशालित्वमात्रस्य कर्मलक्षणत्वात्। अतः क्रतौ नियन्तुमशक्यत्वात्पुरुषार्थमिदं धारणम्। न चात्र फलाभावः। विश्वजिन्न्यायेन स्वर्गस्य कल्प्यत्वात्। अथवा रात्रिसत्रे यथा वाक्यशेषेणार्थवादेन श्रुता प्रतिष्ठा फलत्वेन कल्पिता तथाऽत्रापि "सुवर्ण एव भवति। दुर्वर्णोऽस्य भ्रातृव्यः" इत्यर्थवादगतं फलमस्तु। तस्मात्पुरुषार्थो धारणविधिः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ।

---

अथ द्वितीयप्रपाठके पञ्चमोऽनुवाकः ।

चतुर्थे होतृमन्त्रप्रशंसा कृता । पञ्चमे दक्षिणाप्रतिग्रहमन्त्रानुवाकव्याख्यानं क्रियते। स चानुवाक आरण्यकाण्ड एवमाम्नातः—"देवस्य त्वा सवितुः प्रसवे। अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि। राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यम्। तेनामृतत्वमश्याम्। वयो दात्रे। मयो मह्यमस्तु प्रतिग्रहीत्रे। क इदं कस्मा अदात्। कामः कामाय। कामो दाता। कामः प्रतिग्रहीता। कामꣳ समुद्रमाविश। कामेन त्वा प्रतिगृह्णामि। कामैतत्ते। एषा ते काम दक्षिणा। उत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णातु" इति। सोऽयं तस्मिन्ननुवाक एको मन्त्रः। हे प्रतिगृह्यमाण द्रव्य सवितुर्देवस्य प्रसवे प्रेरणे सत्यश्विसंबन्धिभ्यां बाहुदण्डाभ्यां पूषसंबन्धिभ्यां हस्ताभ्यां त्वां प्रतिगृह्णामि। हे दक्षिणे देवि वरुणो राजा हिरण्यरूपां त्वामग्नये प्रापयतु। तेनाग्निप्रापणेन प्रतिग्रहदोषाभावादहममृतत्वमरणं नरकाभावरूपं प्राप्नुयाम्। इदं च दक्षिणादात्रे वयोऽस्तु। पक्षी भूत्वा दातारं स्वर्गं नयत्वित्यर्थः। प्रतिग्रहीत्रे मह्यं मयः सुखकरमस्तु। कः प्रजापतिरिदं द्रव्यं कस्मै प्रजापतये दत्तवान्। अन्तर्यामि-

रूपेण दातृप्रतिग्रहीत्रोः प्रेरकत्वात् । तथा कामः कामाय दत्तवान् । यथा प्रजापतिरदृष्टः प्रेरकस्तथा कामस्याऽदृष्टप्रेरकत्वात् । तस्मात्काम एव दाता प्रतिग्रहीता च । स्वर्गादिफलविषयः कामो दाता । ऐहिकसुखविषयः कामः प्रतिग्रहीता । ततो हे दक्षिणे समुद्रसमानं कामं प्रविश । कामेन निमित्तेन त्वां प्रतिगृह्णामि । हे मद्धृदयवर्तिकामदेव तद्द्रव्यं तुभ्यं भवतु । हे काम ते त्वदर्थमेवैषा दक्षिणा प्रवृत्ता । अङ्गिरोगोत्रे समुत्पन्न उत्तानाख्यो महर्षिस्त्वां प्रतिगृह्णातु ।

अथ वस्त्रादिद्रव्यविषयाः षोडश मन्त्रास्तस्मिन्ननुवाक एवमाम्नाताः— "सोमाय वासः । रुद्राय गाम् । वरुणायाश्वम् । प्रजापतये पुरुषम् । मनवे तल्पम् । त्वष्ट्रेऽजाम् । पूष्णेऽविम् । निर्ऋत्या अश्वतरगर्दभौ । हिमवतो हस्तिनम् । गन्धर्वाप्सरोभ्यः स्रगलंकरणे । विश्वेभ्यो देवेभ्यो धान्यम् । वाचेऽन्नम् । ब्रह्मण ओदनम् । समुद्रायाऽऽपः । उत्तानायाऽऽङ्गीरसायानः । वैश्वानराय रथम् " इति । एतेषु सर्वेषु मन्त्रेषु देवि दक्षिण इत्यन्तः पूर्वानुषङ्गः । तेनामृतत्वमित्यादिरुत्तरानुषङ्गः ।

तत्र च रथप्रतिग्रहमन्त्रस्योत्तरानुषङ्गात्पूर्वं काचिदृगेवमाम्नाता—

वैश्वनारः प्रत्नथा नाकमारुहत् । दिवः पृष्ठं भन्दमानः सुमन्मभिः ।
स पूर्ववज्जनयज्जन्तवे धनम् । समानमज्मा परियाति जागृविः ॥ इति ।

वैश्वानराख्यो देवः प्रत्नथा पुरातनशरीरधारी सन्स्वर्गमारूढवान् । स च दिवः पृष्ठं द्युलोकस्योपरिभागं मन्मभिर्मननविशेषैर्भन्दमानः कल्याणं कुर्वन्वर्तते । अयं यजमान इमां दक्षिणां दत्तवानित्येवं देवानामग्रे स्मारयतीत्यर्थः । स वैश्वानरो जन्तवे प्राणिरूपाय यजमानाय धनं पूर्ववज्जनयत् । यत्र यजमानः पुरा यथा दक्षिणां दत्तवांस्तथैव तदनुरूपं फलं जनयति । स वैश्वानरो जागृविः सावधानः सन्नज्मा स्वर्गे गमनशीलः समानं परियाति यावद्दक्षिणार्थं द्रव्यं दत्तं तेन सदृशं तद्योग्यं फलं परितः प्रापयति । अस्या ऋच उपर्यनुषङ्गाभ्यां सह पूर्वोक्त एव रथविषयो मन्त्रस्तस्मिन्ननुवाक एवमाम्नातः—"राजा त्वा वरुणो नयतु देवि दक्षिणे वैश्वानराय रथम् । तेनामृतत्वमश्याम् । वयो दात्रे । मयो मह्यमस्तु प्रतिग्रहीत्रे । क इदं कस्मा अदात् । कामः कामाय । कामो दाता । कामः प्रतिग्रहीता । कामः समुद्रमाविश । कामेन त्वा प्रतिगृह्णामि । कामैतत्ते । एषा ते काम दक्षिणा । उत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णातु " इति । अनुषङ्गं योजयित्वा प्रदर्शयितुं पुनः पाठः । सोऽयमनुवाकोऽत्र व्याख्येयः ।

तत्राऽऽदौ प्रतिग्रहप्रकारं विधत्ते—

देवा वै वरुणमयाजयन् । स यस्यै यस्यै देवतायै दक्षिणामनयत् । तामव्लीनात् । तेऽब्रुवन् । व्यावृत्य प्रतिगृह्णाम । तथा नो दक्षिणा न व्लेष्यतीति । ते व्यावृत्य प्रत्यगृह्णन् । ततो वै तान्दक्षिणा नाव्लीनात् । य एवं विद्वान्व्यावृत्य दक्षिणां प्रतिगृह्णाति । नैनं दक्षिणा व्लीनाति ( १ ), इति ।

यदा देवाः स्वयमृत्विजो भूत्वा वरुणं याजितवन्तस्तदा वरुण एकैकस्यै देवतायै दक्षिणां दत्त्वा तां देवतां विशीर्णामकरोत् । ते च देवास्तत्परिहारोपायमन्यव्यवधानं निश्चित्याग्नये हिरण्यं सोमाय वास इत्येवं तत्तद्द्रव्येषु देवतान्तरव्यवधानेन स्वयं व्यावृत्ता भूत्वा प्रत्यगृह्णन् । ततो व्यवधानादियं दक्षिणा तान्देवान्शीर्णान्नाकरोत् । अत्रान्योऽप्येतैर्मन्त्रैर्देवतान्तरव्यवधानं कृत्वा प्रतिगृह्णन्विशीर्णो नैव भवेत् ।

अथ मन्त्रेषु द्रव्याधिपतीनां देवानामेव प्रतिग्रहीतृत्वेन निर्देशात्तद्व्यवधानेन प्रतिग्रहो न तु साक्षादित्यमुं मन्त्राणामभिप्रायं दर्शयति—

राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यमित्याह । आग्नेयं वै हिरण्यम् । स्वयैवैनद्देवतया प्रतिगृह्णाति । सोमाय वास इत्याह । सौम्यं वै वासः । स्वयैवैनद्देवतया प्रतिगृह्णाति । रुद्राय गामित्याह । रौद्री वै गौः । स्वयैवैनां देवतया प्रतिगृह्णाति । वरुणायाश्वमित्याह ( २ ) । वारुणो

वा अश्वः । स्वयैवैनं देवतया प्रतिगृह्णाति । प्रजाप-
तये पुरुषमित्याह । प्राजापत्यो वै पुरुषः । स्वयै-
वैनं देवतया प्रतिगृह्णाति । मनवे तल्पमित्याह ।
मानवो वै तल्पः । स्वयैवैनं देवतया प्रतिगृह्णाति ।
उत्तानायाऽऽङ्गीरसायान इत्याह । इयं वा उत्तान
आङ्गीरसः ( ३ ) । अनयैवैनत्प्रतिगृह्णाति, इति ।

हिरण्यस्याग्निरेतोरूपत्वमाधानप्रकरणे श्रुतम् । तस्मात्तदाग्नेयम् । वस्त्रादीनां सोमादिसंबन्धः शाखान्तरगतार्थवादेषु प्रसिद्ध इत्येवं वैशब्देन सूच्यते । केषुचिन्मन्त्रेषु व्याख्यानस्य व्युत्पादितत्वादन्येष्वपि त्वष्ट्रेऽजामित्यादिषु व्याख्यानमुन्नेयम् । शकटमन्त्रे योऽयमुत्तानाख्यो देवस्तस्य भूमित्वेन प्रशंसनाद्भूम्यैव शकटं परिगृहीतं भवति ।

रथप्रतिग्रहे—" वैश्वानरः प्रत्नथा " इत्येतामृचं विधत्ते—

वैश्वानर्यर्चा रथं प्रतिगृह्णाति । वैश्वानरो वै देवतया
रथः । स्वयैवैनं देवतया प्रतिगृह्णाति, इति ।

अश्यामित्यस्योत्तमपुरुषस्य तात्पर्यं दर्शयति—

तेनामृतत्वमश्यामित्याह । अमृतमेवाऽऽत्मन्धत्ते, इति ।

पक्षिवाचकस्य वयःशब्दस्य तात्पर्यं दर्शयति—

वयो दात्र इत्याह । वय एवैनं कृत्वा ।
सुवर्गं लोकं गमयति, इति ।

पक्षिवदुत्पतनसमर्थमेनं यजमानं कृत्वेत्यर्थः ।

मयःशब्दवाच्यस्य मङ्गलस्य सुखस्य स्वसंबन्धप्रार्थनया स्वस्य परिरक्षा क्रियत इत्येतत्तात्पर्यं दर्शयति—

मयो मह्यमस्तु प्रतिग्रहीत्र इत्याह (४)। यद्वै

शिवम्। तन्मयः। आत्मन एवैषा परीत्तिः, इति।

परीत्तिः परिदानं रक्षा।

कशब्दस्य प्रजापतिवाचकत्वं दर्शयति—

क इदं कस्मा अदादित्याह। प्रजाप-

तिर्वै कः। स प्रजापतये ददाति, इति।

दातृप्रतिग्रहीत्रोः काम एव प्रेरक इत्येतत्प्रसिद्धमिति दर्शयति—

कामः कामायेत्याह। कामेन हि

ददाति। कामेन प्रतिगृह्णाति, इति।

कामस्य प्रेरकत्वे सत्यन्वयव्यतिरेकाभ्यां दातृत्वं प्रतिग्रहीतृत्वं च कामस्यैव पर्यवस्यतीत्येतद्दर्शयति—

कामो दाता कामः प्रतिग्रहीतेत्याह (५)।

कामो हि दाता। कामः प्रतिग्रहीता, इति।

अवसानराहित्येन समुद्रसाम्यं दर्शयति—

कामꣳ समुद्रमाविशेत्याह। समुद्र इव हि कामः।

नेव हि कामस्यान्तोऽस्ति। न समुद्रस्य, इति।

कामेनेति निमित्तनिर्देशः परलोके काम्यमानफलसिद्ध्यर्थं इत्येतद्दर्शयति—

कामेन त्वा प्रतिगृह्णामीत्याह। येन

कामेन प्रतिगृह्णाति। स एवैनम-

मुष्मिँल्लोके काम आगच्छति, इति।

कामं संबोध्य द्रव्यसमर्पणं दक्षिणानिर्देशश्च परलोके कामदेवतायामेव दक्षिणाफलवाञ्छयेत्येतद्दर्शयति—

कामैतत्त एषा ते काम दक्षिणेत्याह । कामं एव तद्यजमानोऽमुष्मिँल्लोके दक्षिणामिच्छति । न प्रतिग्रहीतरि, इति ।

न हि यजमानेन सह प्रतिग्रहीता स्वर्गं वाञ्छति । येन यजमानः प्रतिग्रहीतरि फलमिच्छेत् । कामदेवतायास्तु तत्र विद्यमानतया यजमानस्य दक्षिणाफलेच्छा युक्ता ।

अत्र प्रतिग्रहमन्त्रतात्पर्यं संक्षिप्य दर्शयति—

य एवं विद्वान्दक्षिणां प्रतिगृह्णाति । अनृणामेवैनां प्रतिगृह्णाति (६), इति ।

वृलीनात्यश्वमित्याहाऽऽङ्गीरसः प्रतिग्रहीत्र इत्याह प्रतिग्रहीतेत्याह दक्षिणेत्याह चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

य एवमुक्तप्रकारं विद्वानेतैर्मन्त्रैर्देवतान्तरव्यवधानं कृत्वा यः प्रतिगृह्णाति स एनां दक्षिणामृणरहितामेव प्रतिगृह्णाति । अन्यथा परद्रव्यस्वीकारादृणवती दक्षिणा स्यात् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

अथ द्वितीयप्रपाठके षष्ठोऽनुवाकः ।

पञ्चमे प्रतिग्रहमन्त्रा व्याख्याताः । षष्ठे द्वादशाहर्भागगतस्य दशरात्रस्य दशमेऽहनि होतुर्मन्त्रान्विधित्सुरादौ तावत्सर्पराज्ञीभिर्ऋग्भिः स्तुतिं विधत्ते—

अन्तो वा एष यज्ञस्य । यद्दशममहः । दश-

मेऽहन्त्सर्पराज्ञिया ऋग्भिः स्तुवन्ति । यज्ञस्यैवान्तं गत्वा । अन्नाद्यमवरुन्धते, इति ।

यद्यपि दशमादह्न ऊर्ध्वमप्युदयनीयाख्यमहर्द्वादशाहयज्ञस्यान्तस्तथाऽप्युपान्त्यत्वादन्तत्वोपचारः । सर्पराज्ञी भूमिः, तस्याः संबन्धिन्य ऋचो "भूमिर्भूम्ना" इत्याद्यास्ताभिः स्तुतौ सत्यां द्वादशाहयज्ञस्यान्तं प्राप्य समीचीनमन्नं प्राप्नोति । तस्यामृचि "अग्निमन्नाद्यायाऽऽदधे" इत्याम्नानात् ।

ऋक्संख्यां विधत्ते—

तिसृभिः स्तुवन्ति । त्रयं इमे लोकाः । एभ्य एव लोकेभ्योऽन्नाद्यमवरुन्धते । पृश्निवतीर्भवन्ति । अन्नं वै पृश्नि (१) । अन्नमेवावरुन्धते, इति ।

पृश्निशब्द आस्वृक्षु विद्यत इति पृश्निवत्यः । अन्नस्य श्वेतवर्णत्वात्पृश्निशब्दवाच्यत्वम् ।

आस्वृक्षु गानवेलायां प्रस्तावोद्गीथप्रतिहारभागेषु मानसगानं विधत्ते—

मनसा प्रस्तौति । मनसोद्गायति । मनसा प्रतिहरति । मन इव हि प्रजापतिः । प्रजापतेराप्त्यै, इति ।

जगत्सृष्टेः पूर्वमव्यक्तरूपत्वात्प्रजापतेर्मनःसाम्यम् ।

ऋचां सर्पराज्ञीसंबन्धं प्रशंसति—

देवा वै सर्पाः । तेषामियꣳ राज्ञी । यत्सर्पराज्ञिया ऋग्भिः स्तुवन्ति । अस्यामेव प्रतितिष्ठन्ति (२), इति ।

सर्पन्ति गच्छन्तीति देवाः सर्पास्तेषां सर्पाणां देवानां राज्ञी भूमिः । भूमौ हि सर्पणं सुशकम् । अतस्तदीयाभिर्ऋग्भिः स्तुतौ भूम्यां प्रतिष्ठा भवति ।

यथोक्तस्तुतेरूर्ध्वं होतृमन्त्रपाठं विधत्ते—

चतुर्होतॄन्होता व्याचष्टे। स्तुतमनुशꣳसति शान्त्यै, इति।

स्तोत्रानुभाविशंसनेन देवाः शान्ता अनुग्रहकरा भवन्ति।

अहर्विशेषमन्त्रविशेषयोः संबन्धं प्रशंसति—

अन्तो वा एष यज्ञस्य। यद्दशममहः। एतत्खलु वै देवानां परमं गुह्यं ब्रह्म। यच्चतुर्होतारः। दशमेऽहꣳश्चतुर्होतॄन्व्याचष्टे। यज्ञस्यैवान्तं गत्वा। परमं देवानां गुह्यं ब्रह्मावरुन्धे। तदेव प्रकाशं गमयति (३)। तदेनं प्रकाशं गतम्। प्रकाशं प्रजानां गमयति, इति।

प्रथमानुवाकोक्तवद्व्याख्येयम्।

यदुक्तं सूत्रकारेण—"औदुम्बरीं परिष्वज्योदरैरुपस्पृशन्तो वाग्यतास्तिष्ठन्ति" इति। तदेतद्विधत्ते—

वाचं यच्छति। यज्ञस्य धृत्यै, इति।

यदप्यन्यत्सूत्रकारेणोक्तम्—"भूर्भुवः सुवरित्यह्ना रात्रिं ध्यात्वाऽधिवृक्षसूर्ये सुब्रह्मण्यया वाचं विसृजेत्" इति। तत्र ध्यानवाग्विसर्जने क्रमेण विधत्ते—

यजमानदेवत्यं वा अहः। भ्रातृव्यदेवत्या रात्रिः। अह्ना रात्रिं ध्यायेत्। भ्रातृव्यस्यैव तल्लोकं वृङ्क्ते। यद्दिवा वाचं विसृजेत्। अहर्भ्रातृव्यायोच्छिꣳषेत्। यन्नक्तं विसृजेत्। रात्रिं भ्रातृव्यायोच्छिꣳषेत्। अधिवृक्षसूर्ये वाचं विसृजति। एतावन्तमेवास्मै

---

१ क. ख. °त्रानन्तरभाविना श°। २ क. ख. °हपरा।

लोकमुच्छिꣳषति । यावदादित्योऽस्तमेति

(४), इति ।

पृश्निं तिष्ठन्ति गमयति शिꣳषेत्पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

अहर्यथा प्रकाशं करोति तथा यजमानो देवताभ्यो हविः प्रकाशयतीत्यह्नो यजमानो देवता । "पाप्मा भ्रातृव्यः" इति श्रुत्यन्तरात्पाप्मनश्च देवहविर्विरोधाद्रात्रेश्च प्रकाशराहित्याद्रात्रिर्भ्रातृव्यो देवता । एवं सत्यहोरूपेण रात्रेर्धद्ध्यानं तेन रात्रिस्वरूपं भ्रातृव्यस्य तल्लोकवर्जितं भवति । दिवा रात्रौ वा वाग्विसर्गे स कालो भ्रातृव्यायावशेषितः स्यात् । अतस्तत्परिहारायाविवृक्षसूर्ये वाचं विसृजेत् । सूर्यशब्देनाऽऽतप उपलक्ष्यते । स चाऽऽतपो भूमिं परित्यज्य वृक्षमधिरुह्य तदग्र एव यदा दृश्यते तदा वाग्विसर्गे सति तत आरभ्यास्तमयादर्वागेतावन्तमल्पमेव कालमस्मै भ्रातृव्यायावशेषयति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

अथ द्वितीयप्रपाठके सप्तमोऽनुवाकः ।

षष्ठे द्वादशाहदशमेऽहनि होतृमन्त्रा विहिताः । सप्तमे काम्यफलसाधनत्वमभिप्रेत्य सप्तहोतृमन्त्रं प्रशंसितुमुपाख्यानमाह—

प्रजापतिः प्रजा असृजत । ताः सृष्टाः समश्लिष्यन् । ता रूपेणानुप्राविशत् । तस्मादाहुः । रूपं वै प्रजापतिरिति । ता नाम्नाऽनुप्राविशत् । तस्मादाहुः । नाम वै प्रजापतिरिति । तस्मादप्यामित्रौ संगत्य । नाम्ना चेद्ध्वयेते (१) । मित्रमेव भवतः, इति ।

प्रजापतिना याः प्रजाः सृष्टास्ताः सर्वाः संश्लिष्टा अभवन् । रूपविशेषस्य नामविशेषस्य चासृष्टत्वादेकविधैव भूत्वा देवोऽयं मनुष्योऽयं पशुरयमित्येवं विशेषव्यवहारयोग्या नाभूवन् । तदा प्रजापतिर्विचार्य स्वयमेव रूपविशेषाकारेण नामविशेषाकारेण तासु प्रजासु प्रविष्टः । अत एव शास्त्रज्ञा नामरूपयोः सर्ववस्तुव्याप्तिं दृष्ट्वा प्रजापत्यात्मकत्वं तयोराहुः । यस्मान्नाम प्रजापतिरेव तस्मात्पूर्वममित्रावपि द्वौ पुरुषौ कदाचिन्मार्गे ग्रामान्तरे वा संगत्य भो देवदत्त भो यज्ञदत्तेत्येवं तत्तन्नाम्ना परस्परमाह्वयेते चेत्तदानीमेव मित्रौ भवतः । प्रजापतेः सर्वमित्रत्वेन तदात्मकस्य नाम्नो मित्रत्वसंपादकत्वं युक्तम् । अत एव लौकिकाः साप्तपदीनं सख्यमित्याहुः ।

नामरूपसृष्टिमुक्त्वा विशेषाकारेणेन्द्रसृष्टिमाह—

प्रजापतिर्देवासुरानसृजत । स इन्द्रमपि नासृजत । तं देवा अब्रुवन् । इन्द्रं नो जनयेति । स आत्मन्निन्द्रमपश्यत् । तमसृजत । तं त्रिष्टुग्वीर्यं भूत्वाऽनुप्राविशत् । तस्य वज्रः पञ्चदशो हस्त आपद्यत । तेनोदयत्यासुरानभ्यभवत् ( २ ), इति ।

यदा देवानसुरांश्चासृजत तदा प्रजापतिर्देवस्वामिनमिन्द्रमपिशब्दादसुरस्वामिनं च नासृजत । ततो देवैः प्रार्थितः स्वात्मन्येवावस्थितमिन्द्रं दृष्ट्वा तं बहिरसृजत । तं च सृष्टमिन्द्रं त्रिष्टुब्देवता वीर्यरूपा भूत्वा प्राविशत् । तस्य वीर्यवत इन्द्रस्य हस्ते पञ्चदशभिर्धाराभिर्युक्तः कश्चिद्वज्रः प्रादुरभूत् । तेन वज्रेण युक्तं हस्तमुद्यम्यासुरानभिभूतवान् ।

एतद्वेदनं प्रशंसति—

य एवं वेद । अभि भ्रातृव्यान्भवति, इति ।

अथ सप्तहोतृमन्त्रं प्रशंसति—

ते देवा असुरैर्विजित्य । सुवर्गं लोकमायन् ।

तेऽमुष्मिँल्लोके व्यक्षुध्यन् । तेऽब्रुवन् ।
अमुतः प्रदानं वा उपजिजीविमेति । ते सप्त-
होतारं यज्ञं विधायायास्यम् । आङ्गीरसं
प्राहिण्वन् । एतेनामुत्र कल्पयेति (३) ।
तस्य वा इयं क्लृप्तिः । यदिदं किंच । य
एवं वेद । कल्पतेऽस्मै । स वा अयं मनु-
ष्येषु यज्ञः सप्तहोता । अमुत्र सद्भ्यो दे-
वेभ्यो हव्यं वहति । य एवं वेद । उपैनं
यज्ञो नमति, इति ।

ते देवा इन्द्रसाहाय्यवशादसुरैः सह युद्धे विजित्य स्वर्गं प्राप्य तत्र विशे-षेण क्षुधिताः सन्तः परस्परमिदमब्रुवन्नयं स्वर्गो भोग्यवस्तुसंपादनस्थानं न भवति । तस्य कर्मभूमित्वाभावात् । कस्मादमुतः प्रदानं मनुष्यलोके प्रदीय-मानं हविरुपजीव्य तिष्ठामेति । अमुतःशब्दः परोक्षवाचित्वाद्भूम्यपेक्षया परोक्षं स्वर्गं ब्रूते, तथा स्वर्गापेक्षया परोक्षं भूलोकमपि ब्रूते । अत्र तु स्वर्ग-वासिभिः प्रयुज्यमानत्वाद्भूलोकवाची । ते देवा इत्थं विचार्य सप्तहोतृमन्त्र-साध्यं कंचिद्यागं निर्मायाङ्गिरोगोत्रोत्पन्नमयास्यनामकमृषिं मनुष्यलोके प्रे-षितवन्तः । भो, अयास्यैतेन सप्तहोतृयज्ञेनामुत्र मनुष्यलोकेऽनुष्ठानं निष्पाद-येति । ततो यदिदं किंचिदनुष्ठानं लोके दृश्यते सेयं सर्वाऽपि तस्यैवा-यास्यनामकस्य महर्षेः क्लृप्तिः प्रवर्तना । य एवं मुनेः क्लृप्तिं वेद तदर्थ-मनुष्ठानं सम्यक्प्रवर्तते । सप्तहोतृयज्ञो मनुष्येषु प्रवृत्तः सत्स्वमुत्रसद्भ्यः स्वर्गनिवासिभ्यो देवेभ्यो हव्यं प्रापयति । य एवं सप्तहोतृयज्ञमाहात्म्यं वेद तमेतं वेदितारं स यज्ञः प्राप्नोति । यज्ञानुष्ठानसमर्थो भवतीत्यर्थः ।

सप्तहोतृमन्त्रे—“ वाचस्पते हृद्विधे नामन् ” इति योऽयं ग्रहभागस्तं प्रशंसति—

सोऽमन्यत । अभि वा इमेऽस्माँल्लोकादमुं

१ क ०ममाया० । २ क. भो, अया० ।

लोकं कमिष्यन्त इति । स वाचस्पते हृ-
दिति व्याहरत् । तस्मात्पुत्रो हृदयम् ।
तस्मादस्माल्लोकादमुं लोकं नाभिकाम-
यन्ते । पुत्रो हि हृदयम् ( ४ ), इति ।

हृदयते अभवत्कल्पयेतीति चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

---

मनुष्यलोके यज्ञप्रवर्तकः सोऽयास्यो मुनिर्मनस्येवमचिन्तयदिमे सर्वे मनुष्या अस्माद्भूलोकादमुं स्वर्गलोकमभिकमिष्यन्तः स्वर्गो मे भूयादित्येवं कामयमाना यज्ञाननुष्ठास्यन्ति न तु पुत्रानुत्पादयिष्यन्ति । ततः संततिविच्छेदे सति स्वर्गवासिनां देवानां भागोऽपि विच्छिद्येतेति विचार्य तत्परिहाराय " वाचस्पते हृद्विधे " इत्यादिग्रहभागमुच्चारितवान् । तत्र मनोवाचिना हृच्छब्देन मनस्कार्यः पुत्रो विवक्षितः । मनस्कार्यत्वं च वाजसनेयिनः समामनन्ति—" मनसा वै सम्यक्स्त्रियमभिहार्यते, तस्यां वै प्रतिरूपः पुत्रो जायते, स आनन्दः " इति । यस्मादत्र पुत्रविवक्षया हृच्छब्दः प्रयुक्तस्तस्माल्लोके पुत्रो हृदयं पुत्रविषयमेव चित्तं सर्वदा प्रवर्तत इत्यर्थः । यस्मात्पुत्रासक्तचित्ता मनुष्यास्तस्मात्तत्प्राधान्येन पुत्रानेव कामयमाना अस्मान्मनुष्यलोकादमुं स्वर्गलोकं नात्यन्तं कामयन्ते । यस्मात्पुत्राश्चित्तस्वरूपास्तस्मान्मनुष्याणां तदुचितम् । अत एव संतानविच्छेदो देवहविर्विच्छेदश्च न भविष्यति । तथा च तस्मिन्मन्त्रशेषे समाम्नातम्—" मा दैव्यस्तन्तुश्छेदि मा मनुष्यः " इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथ द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ।

---

सप्तमे सप्तहोतृमन्त्रसाध्ययज्ञप्रशंसा कृता । अष्टमे होतृमन्त्राणां सोमयागाङ्गत्वमभिधीयते । तत्राऽऽदौ सामान्येन यज्ञसंबन्धं विधत्ते—

देवा वै चतुर्होतृभिर्यज्ञमतन्वत । ते वि

पाप्मना भ्रातृव्येणाजयन्त । अभि सुवर्गं लोक-मंजयन् । य एवं विद्वाःश्चतुर्होतृभिर्यज्ञं तनुते । वि पाप्मना भ्रातृव्येण जयते । अभि सुवर्गं लोकं जंयति, इति ।

चतुर्होतृशब्द एकवचनान्तः पृथिवी होतेत्यमुमेव मन्त्रं ब्रूते । बहुवचनान्तस्तु सर्वानपि होतृमन्त्रान् । तैर्मन्त्रैर्यज्ञं तन्वानास्ते देवाः पापरूपेण भ्रातृव्येण वियुक्ता इह लोके जयं प्राप्य स्वर्गमपि जितवन्तः । तथाऽन्योऽपि लोकद्वयं जयति ।

प्रतिमन्त्रं विशेषेण यज्ञसंबन्धं विधत्ते—

षड्ढोत्रा प्रायणीयमासादयति । अमुष्मै वै लोकाय षड्ढोता । घ्नन्ति खलु वा एतत्सोमम् । यदभिषुण्वन्ति (१) । ऋजुधैवैनममुं लोकं गमयति । चतुर्होत्राऽऽतिथ्यम् । यशो वै चतुर्होता । यश एवाऽऽत्मन्धत्ते । पञ्चहोत्रा पशुमुपसादयति । सुवर्गो वै पञ्चहोता । यजमानः पशुः । यजमानमेव सुवर्गं लोकं गमयति । ग्रहान्गृहीत्वा सप्तहोतारं जुहोति । इन्द्रियं वै सप्तहोता (२) । इन्द्रियमेवाऽऽत्मन्धत्ते, इति ।

प्रायणीयायामिष्टौ यद्धविस्तत्—"सूर्यं ते चक्षुः" इति मन्त्रेण वेद्यामासादयेत् । अयं षड्ढोतृमन्त्रः स्वर्गार्थे प्रवृत्तः । तत्कथमिति तदुच्यते । सोमाभिषवरूपं हननं यत्कृतं तत्प्रत्यवायं परिहृत्य ऋजुधैव नरकलोकरूपं वक्रमार्गं परित्यज्यैनं यजमानमृजुनैव मार्गेण प्रापयति । आतिथ्येष्टौ यद्धवि-

स्तत्—" पृथिवी होता " इत्यनेन चतुर्होतृमन्त्रेण वेद्यामासादयेत् । तस्य मन्त्रस्य यशोहेतुत्वात्स्वात्मनि यशः संपादयति । अग्नीषोमीयपशोर्थद्धावि- स्तत्—" अग्निर्होता " इत्यनेन पञ्चहोतृमन्त्रेण वेद्यामुपसादयेत् । तस्य मन्त्रस्य स्वर्गसाधनत्वात्पशोश्च यजमाननिष्क्रयणार्थत्वाद्यजमानं स्वर्गं प्रापयति । ऐन्द्रवायवादिग्रहग्रहणादूर्ध्वं " महाहविर्होता " इत्यनेन सप्तहोतृमन्त्रेण जुहुयात् । तस्येन्द्रियसाधनत्वादिन्द्रियं स्वस्मिन्संपादयति ।

सवनेषु होतृमन्त्रप्रयोगं विधत्ते—

यो वै चतुर्होतॄननुसवनं तर्पयति । तृप्यति प्रजया पशुभिः । उपैन॰ सोमपीथो नमति । बहिष्पवमाने दशहोतारं व्याचक्षीत । माध्यंदिने पवमाने चतुर्होतारम् । आर्भवे पवमाने पञ्चहोतारम् । पितृयज्ञे षड्ढोतारम् । यज्ञायज्ञियस्य स्तोत्रे सप्तहोतारम् । अनुसवनमेवैना॰स्तर्पयति (३)। तृप्यति प्रजया पशुभिः । उपैन॰ सोमपीथो नमति, इति ।

चतुर्होतृमन्त्राभिमानिनां देवानां तत्तन्मन्त्रप्रयोगेण तृप्तिर्भवति । तथा यजमानोऽपि प्रजया पशुभिस्तृप्त उत्तरक्रतुगतं सोमपानं प्राप्नोति । तस्माद्बहिष्पवमानादिस्तोत्रादिकाले होतृमन्त्रान्सग्रहान्यजमानः पठेत् । एतच्च सूत्रकारेण स्पष्टमुक्तम्—"सन्नेषु नाराश॰सेषु चमासिनः स्व॰ स्वं चमसमनून्यन्ते(?) त्री॰स्त्रीन्पुरोडाशशकलानुपवपन्त एतत्ते तत पौ ये च त्वामन्वित्येतैः प्रतिमन्त्रं नमो वः पितरो रसायेति नमस्काराञ्जपन्त षड्ढोतारं यजमानो व्याचष्टे " इति । सोऽयं सूत्रोक्तः प्रयोगोऽत्र पितृयज्ञशब्देन व्यवहृतः ।

अनुसवनमित्यादिरुपसंहारार्था पुनरुक्तिः । यज्ञाङ्गत्वेन विहितान्होतृमन्त्रान्प्रशंसति—

देवा वै चतुर्होतृभिः सत्रमासत । ऋद्धिपरि-

मितं यशस्कामाः । तेऽब्रुवन् । यन्नः प्रथमं यश ऋच्छात् । सर्वेषां नस्तत्सहाऽऽसदिति । सोमश्चतुर्होत्रा । अग्निः पञ्चहोत्रा । धाता षड्ढोत्रा (४) । इन्द्रः सप्तहोत्रा । प्रजापतिर्दशहोत्रा । तेषाꣳ सोमꣳ राजानं यश आर्च्छत, इति ।

सोमाग्न्यादयो देवा धनादिसमृद्धया युक्तं यशः कामयमानाः सत्रमनुष्ठातुं प्रारब्धवन्तः । तदानीमेवं परस्परं भाषां कृतवन्तोऽस्माकं मध्ये यं पुरुषमादौ धनसमृद्धियुक्तं यशः प्राप्नुयात्तस्य पुरुषस्य तद्यशः सर्वेषामस्माकं साधारणमस्त्विति । ततः सोमादयो यथायथं सत्रे होतृमन्त्राननुष्ठितवन्तस्तदा तेषां मध्ये सोममेवाऽऽदौ यशः प्राप्नोत् ।

अथ प्रसङ्गाद्यज्ञाङ्गभूतान्प्रैषनिविदाप्रीग्रहानत्र प्रशंसति—

तन्न्यकामयत । तेनापाक्रामत् । तेन प्रलायमचरत् । तं देवाः प्रैषैः प्रैषमैच्छन् । तत्प्रैषाणां प्रैषत्वम् । निविद्भिर्न्यवेदयन् । तन्निविदां निवित्त्वम् (५) । आप्रीभिराप्नुवन् । तदाप्रीणामाप्रित्वम् । तमघ्नन् । तस्य यशो व्यगृह्णत । ते ग्रहा अभवन् । तद्ग्रहाणां ग्रहत्वम् । यस्यैवं विदुषो ग्रहा गृह्यन्ते । तस्य त्वेव गृहीताः, इति ।

तद्धनसमृद्धियुक्तं यशो ममैव भूयादिति सोमो नितरां कामयित्वा तेन धनेन सहापक्रम्य पुनस्तेन युक्तः सन्प्रकर्षेण लीनो भूत्वा यथा देवा न जानन्ति तथैव व्यचरत् । ततो देवाः " होता यक्षत् " इत्यादिभिः प्रैषमन्त्रैः प्रैषं प्रकृष्टं सोमस्यान्वेषणमैच्छन् । ततः प्रेष्यत एभिरिति व्युत्पत्त्या मन्त्राणां प्रैषनाम संपन्नम् । ततः " अग्ने महानसि " इत्यादिभिर्निविन्मन्त्रैरिमं हन्तारं तत्र तत्र नितरामावेदयन् । निवेद्यत एभिरिति व्युत्पत्त्या मन्त्राणां

निविन्नाम संपन्नम् । "समिद्धो अद्य मनुषो दुरोणे" इत्याप्रीमन्त्रैस्तं सोम-माप्नुवन् । आप्य(प्री ग)त एभिरिति व्युत्पत्त्या मन्त्राणामाप्रीनाम संपन्नम् । ततः सोमं हत्वा तस्याधीनं यशोहेतुं धनं प्रत्येकं विभज्य गृहीतवन्तः । ते च भागा ऐन्द्रवायवादिग्रहा अभवन् । तस्माद्गृह्यन्त इति व्युत्पत्त्या ग्रहनाम संपन्नम् । य एवं वृत्तान्तं जानाति तस्यैव यागे ग्रहा मुख्यत्वेन गृहीता भवन्ति । इतरस्य तु यागे गृहीता अप्यधिकफलत्वाभावादगृहीता एव ।

अथ ग्रहप्रसङ्गाच्छन्दःसामोक्थानि प्रशंसति—

तेऽब्रुवन् । यो वै नः श्रेष्ठोऽभूत् (६) । तमंव-धिष्म । पुनरिमꣳ सुवामहा इति । तं छन्दोभि-रसुवन् । तच्छन्दसां छन्दस्त्वम् । साम्ना समानयन् । तत्साम्नः सामत्वम् । उक्थैरुदस्था-पयन् । तदुक्थानामुक्थत्वम् । य एवं वेद । प्रत्येव तिष्ठति (७) । सर्वमायुरेति, इति ।

ते देवाः परस्परमिदं विचारितवन्तो यः सोमोऽस्माकं मध्ये श्रेष्ठोऽभूत्तं वयमवधिष्म । तदेतन्महदनुचितम् । तस्मात्पुनरिमं सोममुत्पादयाम इति विचार्य गायत्र्यादिच्छन्दांस्यनुष्ठाय तत्सामर्थ्यात्सोममुदपादयन् । उत्पा-दनविषया छन्दसीच्छा सिध्यत्येभिरिति व्युत्पत्त्या छन्दोनाम संपन्नम् । ततः सामगानसामर्थ्येन तं सोमं समानयन् । समानीयतेऽनेनेति व्युत्पत्त्या सामनाम संपन्नम् । उक्थनामकशस्त्रसामर्थ्येन तं सोमं भूमावुपविष्टमुत्थापित-वन्तः । उत्थाप्यते सोमोऽनेनेति व्युत्पत्त्योक्थनाम संपन्नम् । य एवं सोमवृ-त्तान्तं वेद स भूमौ प्रतिष्ठितो भूत्वा संपूर्णमायुः प्राप्नोति ।

अथ सोमयागप्रशंसाप्रसङ्गात्पुरुषार्थं सोमयागसमीपगमनं विधत्ते—

सोमो वै यशः । य एवं विद्वान्त्सोममागच्छति । यश एवैनमृच्छति । तस्मादाहुः । यश्चैवं वेद यश्च न । तावुभौ सोममागच्छतः । सोमो हि

यशः । तं त्वा व यश ऋच्छतीत्याहुः । यः सोमे सोमं प्राहेति । तस्मात्सोमे सोमः प्रोच्यः । यश एवैनमृच्छति (८), इति ।

अभिषुण्वन्ति सप्तहोता तर्पयति षड्ढोत्रा निविदश्चमर्मूत्तिष्ठति प्राहेति द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

यः सोमयागः स एव यशोहेतुत्वात्त्वाद्यशः । तस्मात्सोमस्य यशोहेतुत्वं यो विद्वान्स सोमयागस्थानं प्रत्यागच्छेत् । तं तदनुष्ठानप्रकारोपन्यासेन तमेनं यश ऋच्छति प्राप्नोति । यस्मादेवं तस्मादभिज्ञोऽयं महात्मेत्येवं सर्वे जना आहुः । किंच यः सोमप्रयोगं यशोहेतुं वेद यश्च न वेद तावुभौ सोमयागस्थानमागच्छतः । सोमयागस्य यशोहेतुत्वात् । अस्ति त्वनयोर्मध्य एकस्य विशेषः । न हि सोमे सोमयागे सोमं सोमप्रयोगं विशेषात्विज्ञाय स्वकीयवाक्पाण्डित्यप्रकटनाय वा यः प्राह तमभिज्ञास्त्वा व त्वामेव यश ऋच्छति प्राप्नोतीत्याहुः । यस्मादेवं तस्मादभिज्ञः सोमे सोमयागे सोमः सोमप्रयोगः प्रोच्यः प्रकर्षेण वाच्यः । यश एनमभिज्ञमृच्छत्येव प्राप्नोत्येव ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ द्वितीयप्रपाठके नवमोऽनुवाकः ।

---

अष्टमे होतृमन्त्राणां सोमाङ्गत्वेन प्रयोग उक्तः । अथ होतृमन्त्रोत्पत्तिकथनप्रसङ्गेन जगत्सृष्टिर्नवमेऽभिधीयते —

इदं वा अग्रे नैव किंचनाऽऽसीत् । न द्यौरासीत् । न पृथिवी । नान्तरिक्षम् । तदसदेव सन्मनोऽकुरुत स्यामिति । तदतप्यत । तस्मा-

---

१ क. ख. तत्र तद° ।

त्तेपानाद्धूमोऽजायत । तद्भूयोऽतप्यत । तस्मात्तेपा-
नादग्निरजायत । तद्भूयोऽतप्यत (१) । तस्मात्तेपा-
नाज्ज्योतिरजायत । तद्भूयोऽतप्यत । तस्मात्तेपा-
नादर्चिरजायत । तद्भूयोऽतप्यत । तस्मात्तेपाना-
न्मरीचयोऽजायन्त । तद्भूयोऽतप्यत । तस्मात्तेपा-
नादुदारा अजायन्त । तद्भूयोऽतप्यत । तदभ्रमिव
समहन्यत, इति ।

यदिदं स्थावरजंगमरूपं भूलोकादिरूपं च जगदिदानीं दृश्यते तत्किमपि सृष्टेः पूर्वं नैवाऽऽसीत् । तत्तादृशमसद्रूपमेव वर्तमानं सद्रूपतां प्राप्नुयामित्येतादृशं मनोऽकुरुत । तथा चोपनिषदि पूर्वमसद्रूपं पश्चात्सद्रूपतोत्पत्तिश्च विस्पष्टमाम्नायते—“ असद्वा इदमग्र आसीत् । ततो वै सदजायत ” इति । अत्रासच्छब्देन न शशविषाणादिसमानं शून्यत्वं विवक्षितं किं तर्ह्यनभिव्यक्तनामरूपत्वम् । अत एव वाजसनेयिनः समामनन्ति—“ तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यामेव व्याक्रियत ” इति । भूमिराप इत्यादिकं नाम । काठिन्यद्रवत्वादिकं रूपम् । तत्स्व( स्य भू )तत्त्वयाकारेण विस्पष्टमासमन्तान्निष्पादनं व्याकरणम् । तद्राहित्येनाविस्पष्टदशापन्नत्वमव्याकृतत्वम् । तदेवं मनुना स्मर्यते—

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ इति ।

शून्यत्वविवक्षायां छन्दोगश्रुतिर्विरुध्येत । छन्दोगा ह्येवमामनन्ति—“ सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ” इति । पुनरपि—“ तद्धैक आहुरसदेवेदमग्र आसीत् ” इति शून्यत्वपक्षमुपन्यस्य तन्निराकरणमेवमामनन्ति—“ कुतस्तु खलु सोम्येदꣳ स्यादिति होवाच कथमसतः सज्जायेतेति सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ” इति । ऐतरेयिणस्त्वधीयते—“आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्” इति । तस्मान्नैव किंचनाऽऽसीदित्ययं निषेधः परमात्मनिर्मितनामरूपात्मकजगद्विषयो न तु कृत्स्नविषयः । नामरूपराहित्येनासच्छब्दवाच्यं सदेवात्र कथितं परमात्मतत्त्वं स्वात्मन्यन्तर्हितं प्राणिकर्मप्रेरितं सन्नामरूपाकारेणाऽऽविर्भवेयमिति पर्या-

लोचनरूपं मनोऽकुरुत । यथा गाढनिद्रां प्राप्तस्य पुरुषस्य कर्मफलभोगाय प्रबोध उत्पद्यते तथा सर्वान्प्राणिनः स्वस्वकर्मफलं भोजयितुमीदृशो विचारः परमात्मनः प्रादुरभूत् । तथाविधविचारयुक्तं तत्परमात्मतत्त्वरूपं नामरूपात्मसृष्टिसाधनरूपं तपोऽकुरुत । नात्र तपः कृच्छ्रचान्द्रायणादिरूपम् । किंतु स्रष्टव्यपदार्थविशेषविषयं पर्यालोचनम् । अत एवाऽऽथर्वणिका आमनन्ति—"यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः" इति । कृच्छ्रादिरूपत्वाभावादशरीरस्यापि सर्वशक्तियुक्तस्य पर्यालोचनमुपपन्नम् । तादृशीं शक्तिं च श्वेताश्वतरा आमनन्ति—"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति । तच्छक्तिवशादेवेन्द्रियनिरपेक्षव्यवहारं चात एवाऽऽमनन्ति—"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इति । तस्मादचिन्त्यशक्तिपरमेश्वरस्य लीलाविशेषो यथावचनमवबोद्धव्यः । वचनं चात्राऽऽरण्यक आम्नायते—" स तं मणिमविन्दत् । सोऽङ्गुलिरावयत् । सोऽग्नीवाः प्रत्यमुञ्चत् " इति । तेन मानसं तपः कृतवानित्यर्थः । तादृशात्तस्मात्परमेश्वरात्स्वसंकल्पानुसारेण कश्चिद्धूम उदपद्यत । एवमग्न्यादयोऽपि संकल्पादुत्पन्नाः । अग्निरङ्गारवान् । ज्योतिरङ्गाररहितप्रकाशः । अर्चिर्ज्वाला । मरीचयः सर्वत्र प्रसृतप्रभाद्रव्यम् । उदारा उल्बणज्वालाः । तत्सर्वं धूमज्वालादिकं संघातरूपं कठिनमभूत् । यथा—" धूमज्योतिःसलिलमरुतां संनिपातः क्व मेघः " इति तद्वत् । तच्च घनीभूतं वस्तु परमात्मनो बस्तिस्थानमसीत् । बस्तिशब्दार्थश्चाऽऽत्रेयैर्दर्शितः—" मूत्राशयो धनुर्वक्रो बस्तिरित्यभिधीयते " [इति]।

अथ समुद्रोत्पत्तिं दर्शयति—

तद्बस्तिमभिनत् (२) । स समुद्रोऽभवत् । तस्मात्समुद्रस्य न पिबन्ति । प्रजननमिव हि मन्यन्ते । तस्मात्पशोर्जायमानादापः पुरस्तायन्ति, इति ।

यदेतत्समुद्रपर्यन्तस्य वस्तुनः स्रष्टुः परमात्मनो रूपं बस्तिस्थानीयं तस्य भेदमकरोत् । परितो मूत्राशये पूर्णे सति यथा लोके मेहनद्वारान्मुञ्चति तद्वत् । स च प्रभिन्नबस्तिगतो जलसंघः समुद्ररूपेण प्रादुरभूत् । यस्मात्समुद्रस्य जलं प्रजननमिव गर्भाशयगतमुदकमिवास्पृश्यं मन्यन्ते तस्मात्शिष्टाः समुद्रस्य जलं

न पिबन्ति । यस्मादस्ति प्रजनने गर्भाशये जलं तस्माल्लोके जायमानात्पशोः पुरस्तादाप एव निर्गच्छन्ति ।

अथ प्रकृतस्य होतृमन्त्रस्य सृष्टिमाह—

तद्दशहोताऽन्वसृज्यत । प्रजापतिर्वै दशहोता, इति ।

ततस्तत्समुद्रपर्यन्तं सृष्टं जगत्तत्पश्चाच्चित्तिः स्रुगित्यादिर्दशहोताऽसृज्यत । तन्मन्त्रप्रतिपाद्याकारयुक्तप्रजापतिरेवात्र दशहोता ।

यथोक्तस्य परमात्मतपसो वेदनं प्रशंसति—

य एवं तपसो वीर्यं विद्वाꣳस्तप्यते । भवत्येव, इति ।

पूर्वोक्तस्य तपःसामर्थ्यं विद्वान्यः स्वयं तपः करोति सोऽयमैश्वर्यं प्राप्नोत्येव ।

अथ लोकत्रयसृष्टिं दर्शयति—

तद्वा इदमापः सलिलमासीत् । सोऽरोदीत्प्रजाप-
तिः (३) । स कस्मा अज्ञि । यद्यस्या अप्रति-
ष्ठाया इति । यदप्स्ववापद्यत । सा पृथिव्यभवत् ।
यद्व्यमृष्ट । तदन्तरिक्षमभवत् । यदूर्ध्वमुदमृष्ट । सा
द्यौरभवत् । यदरोदीत् । तदनयो रोदस्त्वम् (४) ।
य एवं वेद । नास्य गृहे रुदन्ति । एतद्वा एषां
लोकानां जन्म । य एवमेषां लोकानां जन्म वेद ।
नैषु लोकेष्वार्तिमार्च्छति । स इमां प्रतिष्ठामविन्दत, इति ।

तदिदं परमात्मना सृष्टं जगत्समुद्ररूपेण सलिलमासीत् । तस्मिन्सलिले पृथिवीमिश्रणं वारयितुमाप इत्युक्तम् । केवलं जलमेवाऽऽसीदित्यर्थः । तदिदं निरन्तरं जलं दृष्ट्वा दशहोतृरूपः स प्रजापतिररोदीत् । रुदतस्तस्यायमभिप्रायः- यद्यहमप्रतिष्ठाया अवस्थातुमयोग्याया अविद्यमानाया अस्याः पृथिव्याः सकाशात्किमपि प्राणिजातं स्रष्टुं न शक्नोमि तर्हि तादृशः सोऽहं कस्मा अज्ञि किमर्थमुत्पादितोऽस्मीति रुदतस्तस्य यदश्रुजलादिकं समुद्ररूपास्वप्सु पतितं तद्व्य

नीभूतं पृथिव्यभवत्। तस्याः पृथिव्या उपर्युच्चावचभावं वारयितुं विविधं मार्जनं कृतवान्। तच्च मृष्टं स्थानमन्तरिक्षमभूत्। ततो हस्तमूर्ध्वं प्रसार्य यत्स्थानममृष्ट सा द्यौरभवत्। यस्मात्प्रजापतिररोदीत्तेन च रोदनेन द्याव-पृथिव्यावुत्पन्नौ। तस्माद्रोदःशब्दशाभिधेयत्वं तयोः संपन्नम्। तं प्रकारं वेदितुर्गृहे बन्धुमरणाभावान्न केऽपि रुदन्ति। योऽयं लोकत्रयजन्मप्रकारं वेद तद्वेत्ता लोकत्रये नाशं न प्राप्नोति। स प्रजापतिरिमां पृथिवीं प्रतिष्ठां स्रक्ष्यमाणप्राण्याधारभूतामालभत।

अथ तस्यां पृथिव्यामसुरसृष्टिं दर्शयति—

स इमां प्रतिष्ठां विन्त्वाऽकामयत प्रजायेयेति। स तपोऽतप्यत। सोऽन्तर्वानभवत्। स जघनादसुरा-नसृजत (५)। तेभ्यो मृन्मये पात्रेऽन्नमदुहत्। याऽस्य सा तनूरासीत्। तामपाहत। सा तमि-स्राऽभवत्, इति।

प्रजापतिरिमां भूमिं स्रक्ष्यमाणप्राण्याधारयोग्यां लब्ध्वा प्रजोत्पादनं कामयमानस्तदुपायपर्यालोचनरूपं तपः कृत्वा स्वयमेव देहान्तरेण गर्भवा-नभूत्। तस्य गर्भयुक्तस्य जघनभागादसुरानसृजत। तेभ्यः कस्मिंश्चिन्मृ-त्पात्रे भोजनार्थमन्नं प्रक्षिप्य दत्तवान्। ततोऽसुराणामुत्पादिका या स्वकीया तनूस्तां विनाशितवान्। सा तनूः शरीराकारं परित्यज्य तमोयुक्ता रात्रि-रभवत्।

अथ मनुष्यादिसृष्टिं दर्शयति—

सोऽकामयत प्रजायेयेति। स तपोऽतप्यत। सोऽन्त-र्वानभवत्। स प्रजननादेव प्रजा असृजत। तस्मा-दिमा भूयिष्ठाः। प्रजननाद्ध्येना असृजत (६)। ताभ्यो दारुमये पात्रे पयोऽदुहत्। याऽस्य सा तनूरासीत्। तामपाहत। सा ज्योत्स्नाऽभवत्, इति।

प्रजननात्प्रजोत्पादनसमर्थाद्द्वाराद्धि यस्मादुत्पादनसामर्थ्यं कारणं तस्मात्प्रजा अत्यन्तबहुलाः। ज्योत्स्ना चन्द्रप्रकाशा। अन्यत्पूर्ववद्व्याख्येयम्।

अथ वसन्तादिकालाभिमानिपुरुषस्य सृष्टिं दर्शयति—

सोऽकामयत प्रजायेयेति। स तपोऽतप्यत। सोऽन्तर्वानभवत्। स उपपक्षाभ्यामेवर्तूनसृजत। तेभ्यो रजते पात्रे घृतमदुहत्। याऽस्य सा तनूरासीत्(७)। तामपाहत। सोऽहोरात्रयोः संधिरभवत, इति।

पूर्ववद्व्याख्येयम्।

अथ देवसृष्टिं दर्शयति—

सोऽकामयत प्रजायेयेति। स तपोऽतप्यत। सोऽन्तर्वानभवत्। स मुखाद्देवानसृजत। तेभ्यो हरिते पात्रे सोममदुहत्। याऽस्य सा तनूरासीत्। तामपाहत। तदहरभवत् (८), इति।

पूर्ववद्व्याख्येयम्।

अथोक्तानामन्नपयोघृतसोमानां वेदनं प्रशंसति—

एते वै प्रजापतेर्दोहाः। य एवं वेद। दुह एव प्रजाः, इति।

गोभ्यः क्षीरमिव प्रजाभ्यो धनं लभत इत्यर्थः।

देवतावेदनं प्रशंसति—

दिवा वै नोऽभूदिति। तद्देवानां देवत्वम्। य एवं देवानां देवत्वं वेद। देववानेव भवति, इति।

देवानामुत्पादिका या प्रजापतेस्तनुः सेयमहोरूपेण निष्पन्ना। अतो देवा

हर्षादस्माकं दिवैवाभूदित्युच्चारितवन्तः । अतो दिवायोगेन देवत्वं संपन्नम् । तद्वदिता देववान्प्रकाशवान्भवति ।

तदेतद्देवासुरोत्पादकतनूभ्यामहोरात्रयोर्जन्म, तस्य वेदनं प्रशंसति—

एतद्वा अहोरात्राणां जन्म । य एवमहोरात्राणां जन्म वेद । नाहोरात्रेष्वार्तिमार्च्छति (९), इति ।

“ तदसदेव सन्मनोऽकुरुत स्याम् ” इति प्रथमशाखे परमात्मनो यन्मनः पूर्वमुक्तं तदेतन्मनः प्रशंसति—

असतोऽधि मनोऽसृज्यत । मनः प्रजापतिमसृजत । प्रजापतिः प्रजा असृजत । तद्वा इदं मनस्येव परमं प्रतिष्ठितम् । यदिदं किंच । तदेतच्छ्वोवस्यसं नाम ब्रह्म, इति ।

यत्किंचिदिदं जगदिदानीं दृश्यते तदिदं सर्वं मूलकारणे परमात्ममनस्येव सम्यक्प्रतिष्ठितम् । सत्संकल्पाधीना असतः सृष्टिस्थितिप्रलयाः । तदेतत्संकल्पितार्थं मनः श्वोवस्यसनामकं ब्रह्म । यदुत्तरोत्तरदिने वसीयोऽतिशयेन श्रेष्ठं श्वोवस्यसम् । द्विविधं हि ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मेत्येवंलक्षणं सजातीयविजातीयस्वगतभेदरहितत्वान्निजस्वरूपमात्रे पर्यवसितं सर्वजनैकरूपमेकं ब्रह्म । अत एव तदेतच्छ्वोवस्यसं न भवति । निर्विकारत्वेन तस्य स्रष्टृत्वाभावात् । तदेव सर्वसृष्टिगोचरशक्तियुक्तं सत्सोपाधिकत्वेनान्यद्ब्रह्म भवति । संकल्पपरम्परया प्रतिक्षणमुत्तरोत्तराधिकजगत्स्रष्टृत्वादीदृग्ब्रह्मरूपत्वान्मनः प्रशस्तम् ।

तदेतद्वृत्तान्तवेदनं प्रशंसति—

व्युच्छन्ती व्युच्छन्त्यस्मै वस्यसी वस्यसी व्युच्छति । प्रजायते प्रजया पशुभिः । प्र परमेष्ठिनो मात्रामाप्नोति । य एवं वेद ( १० ), इति ।

अग्निरजायत तद्धृदयेऽतप्यताभिनद्रोदीत्प्रजापती रोदस्त्वमसृजतास्तनत घृतमदुह्याऽस्य सा तनूरासीद्दह्यमवद्दच्छति वेद ॥

इदं धूमोऽग्निर्ज्योतिरर्चिर्मरीचय उदारास्तदभ्रं जघनात्सा तमिस्रा समज- नंनात्सा जोत्स्ना स उपपक्षाभ्या१ँ सोऽहोरात्रयोः संधिः स मुखात्तदहर्देव- वानसतोऽधिसृन्मये दारुमये रजते हरिते तेभ्यस्ताभ्यो द्वे तेऽन्नं पयो घृ१ँ सोमं य एवं वेदोपैनं तस्य तावाभिभ्रातृव्यान्नमदुहत्पयोऽदुहद्घृतमदुहत्सो- ममदुहत् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयाध्याये नवमोऽनुवाकः ॥ ९ ॥

यथोक्तं ब्रह्म सृष्टिप्रकारं विदित्वोपास्तेऽस्मै वेदित्रे प्रतिदिनं प्रभातं कुर्वती देवता पुनरधिकश्रेयस्करा सती प्रभातं करोति । दिने दिने श्रेयो वर्धत इत्यर्थः । इह लोके प्रजापशुसंपन्नः परलोके परमेष्ठिनः प्रजापतेरैश्व- र्यस्य या मात्रा परिच्छित्तिस्तां सर्वामपि प्राप्नोति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय- ब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

अथ द्वितीयप्रपाठके दशमोऽनुवाकः ।

नवमेऽनुवाके होतृसृष्टिप्रसङ्गेन सर्वजगत्सृष्टिरुक्ता । दशमे देवसृष्टिमध्येऽ- वस्थितस्येन्द्रस्य देवताधिपतित्वमुच्यते । तदर्थमाख्यायिकामाह—

प्रजापतिरिन्द्रमसृजताऽऽनुजावरं देवानाम् । तं प्राहिणोत् । परेहि । एतेषां देवानामधिपतिरे- धीति । तं देवा अब्रुवन् । कस्त्वमसि । वयं वै त्वच्छ्रेयाꣳसः स्म इति । सोऽब्रवीत् । कस्त्वमसि वयं वै त्वच्छ्रेयाꣳसः स्म इति मा देवा अवो- चन्निति, इति ।

प्रजापतिर्देवान्सृष्ट्वा तेषां देवानां मध्य आनुजावरमिन्द्रमसृजत । यथा भ्रातॄणां मध्येऽनुजः पश्चाज्जातोऽवरो निकृष्टस्तद्वदयमित्यनुजावरः । आनुजा-

वरशब्दस्यापि स एवार्थः । सृष्टं तमिन्द्रं देवलोके प्रेषितवान् । हे इन्द्र स्वर्गं गच्छैतेषां मया सृष्टानामधिपतिर्भव । प्रेषितमिन्द्रं देवाः पृच्छां कृतवन्तः । प्रजापतिनाऽहं प्रेषितोऽस्मीत्युत्तरे दत्ते ते देवा अब्रुवन्वयं वै त्वच्छ्रेयांसः स्मेति त्वया कल्याणयुक्ता भवेमेति । तदानीमेवेन्द्रः परावृत्य प्रजापतिसमीपं गतवान् । प्रजापतिना पृष्टे सति स इन्द्रोऽब्रवीत् । कस्त्वमसि वयं वै त्वच्छ्रेयांसः स्मेति मा मां देवा अवोचन्नब्रुवन्निति ।

कनामवेत्तुरिन्द्रादधिपतित्वप्राप्तिरूपफलाख्यायिकापुरःसरं वेदनफलं दर्शयति—

अथ वा इदं तर्हि प्रजापतौ हर आसीत् ।(१)। यदस्मिन्नादित्ये । तदेनमब्रवीत् । एतन्मे प्रयच्छ । अथाहमेतेषां देवानामधिपतिर्भविष्यामीति । कोऽहꣳ स्यामित्यब्रवीत । एतत्प्रदायेति । एतत्स्या इत्यब्रवीत् । यदेतद्ब्रवीषीति । को ह वै नाम प्रजापतिः । य एवं वेद ( २ ) । विदुरेनं नाम्ना । तदस्मै रुक्मं कृत्वा प्रत्यमुञ्चत् । ततो वा इन्द्रो देवानामधिपतिरभवत् । य एवं वेद । अधिपतिरेव समानानां भवति, इति ।

अथ प्रजापतेरग्रे स्वकीयतिरस्करणादूर्ध्वमेवं वृत्तान्त आसीत् । यदिदमिदानीमस्मिन्नादित्ये संतापकं तेजो दृश्यते तदिदं हरस्तस्मिन्काले प्रजापतावासीत् । यादृश आदित्योऽन्धकारादिभर्त्सने समर्थस्तथा प्रजापतिरपि दुष्टशिक्षायां समर्थ आसीत् । तत्तेज उद्दिश्येन्द्र एनं प्रजापतिमब्रवीत् । हे प्रजापते, एतत्तेजो मह्यं प्रयच्छ । अथाहं तेजस्वी सन्नेतेषां देवानामधिपतिर्भविष्यामीति । ततः प्रजापतिरिदमब्रवीत् । एतत्तेजस्तुभ्यं प्रदाय कोऽहं स्यामक्षमं मां को वा गणयेदित्यभिप्रायः । अथेन्द्रः प्रजापतिं प्रत्यब्रवीत्कोऽहमित्यत्र क इत्यनेन शब्देन यदेतद्ब्रवीषीत्येतदेव त्वम् । अत्र यदेतदिन्द्रेणोक्तं तदेतद्युक्तम् । क इत्येतस्य प्रजापतिनामत्वात् । अत्र किंशब्दः कशब्दश्चेति मकारान्ताकारान्तौ द्वौ शब्दौ तयोरुभयोरपि पुंलिङ्गैकवचनं क इत्येवं रूपं वा ब्रूते ।

अकारान्तस्तु प्रजापतिवाचकः। तत्र मकारान्तमभिप्रेत्य प्रजापतिः प्रायुङ्क्त। तेजोबलादेव प्राणिनामपि गौरवम्। तस्मिंश्च तुभ्यं दत्ते सति प्रजापतित्वगौरवस्य गतत्वात्को नामाहं स्यामिति प्रजापतिप्रश्नः। न कोऽहं स्यामिति प्रजापतित्वमेव विनश्यतीत्याक्षेपः। इन्द्रस्तु शब्दच्छलादकारान्तत्वमाश्रित्य प्रजापतिरहं स्यामिति यदेतद्ब्रूषे तदेतस्याः प्रजापतिरेव भवेत्यर्थः। न हि तेजोनिमित्तं तव प्रजापतित्वं प्रजाजनकत्वम्। तेजसोऽनुपादानत्वात्। यतो तेजसोऽपि प्रजास्रष्टृत्वात्। किंतु स्वाभाविकम्। अतस्तेजसि दत्ते तव स्वभावो नापगच्छतीत्यब्रवीत्। य एवं प्रजापतेः क इति नाम वेदैनं सर्वेऽपि नाम्ना विदुः। प्रख्यातो भवतीत्यर्थः। ततः प्रजापतिस्तत्तेजो रुक्मं पट्टाख्यमाभरणं कृत्वा प्रत्यमुञ्चत्। ललाटे बबन्धेत्यर्थः। ततः पट्टबन्धनादिन्द्रो देवानामधिपतिरभवत्। तदेतदाधिपत्यं विद्वान्पुरुषः समानानां पुरुषाणां स्वयमधिपतिर्भवति।

अथेन्द्रं बहुधा स्तोतुमादौ तावत्तदुपयुक्तं चन्द्रमःशब्दस्य निर्वचनं दर्शयति—

सोऽमन्यत। किं किं वा अकरमिति। स चन्द्रं म आहरेति प्रालपत्। तच्चन्द्रमसश्चन्द्रमस्त्वम्। य एवं वेद (३)। चन्द्रवानेव भवति, इति।

स प्रजापतिरेवममन्यत। देवाधिपत्ये स्थापितस्येन्द्रस्यापेक्षितं कार्यं किं किं महत्कार्यं यन्मया कृतं न पर्याप्तं पुनरपि करिष्यामीत्यभिप्रायः। तथाविधं प्रजापतिं दृष्ट्वा स इन्द्रश्चन्द्रमाह्लादकं तेजो मदर्थमाहरेत्येवं बालवत्प्रलापं कृतवान्। तत आह्लादवाची चन्द्रशब्दोच्चारणात्स्ववाच्यस्मच्छब्दोच्चारणाच्च तदक्षरसदृशं चन्द्रमा इति नाम संपन्नम्। चन्द्रमाह्लादकरं तेजो मीयतेऽत्रेति चन्द्रमाः। एवं वेदिताऽप्याह्लादवानेव भवति।

अथ सूर्यनामनिर्वचनं दर्शयति—

तं देवा अब्रुवन्। सुवीर्यो मर्या यथा गोपायत इति। तत्सूर्यस्य सूर्यत्वम्। य एवं वेद। नैनं दभ्नोति, इति।

---

१ क. ख. रुक्मपुट्टाख्य°।

दुष्टशिक्षणक्षमेण सौर्यतेजसा शिष्टपरिपालनक्षमेण चान्द्रतेजसा च युक्तमिन्द्रं दृष्ट्वा देवाः परस्परमिदमब्रुवन्। हे, अपर्या मरणरहिता देवाः शोभनवीर्योपेतोऽयमिन्द्रोऽस्मान्यथा गोपायते सम्यग्रक्षितुं प्रभवतीत्यर्थः। ततः सुवीर्यशब्दाक्षरसादृश्यात्सूर्यनाम संपन्नम्। तन्नामवेदिनं पुरुषं वैरी न हिनस्ति।

इन्द्रशब्दनिर्वचनं दर्शयति—

कश्चनास्मिन्वा इदमिन्द्रियं प्रत्यस्थादिति। तदिन्द्रस्येन्द्रत्वम्। य एवं वेद। इन्द्रियाव्येव भवति (४), इति।

अस्मिन्नधिपतौ स्थितमिन्द्रियं सामर्थ्यं कश्च कोऽपि न प्रत्यस्थात्प्रत्यवस्थातुं निराकर्तुं न शक्नोतीति देवाः परस्परमूचुः। तत्रेदमिन्द्रियमित्यक्षरसाम्यादिन्द्रनाम संपन्नम्। तन्नामाभिज्ञः सामर्थ्यातिशयवान्भवति।

परमेष्ठिनामनिर्वचनं दर्शयति—

अयं वा इदं परमोऽभूदिति। तत्परमेष्ठिनः परमेष्ठित्वम्। य एवं वेद। परमामेव काष्ठां गच्छति, इति।

परमः सर्वोत्तमः प्रजापतिरेवेदमिन्द्ररूपोऽभूदिति देवा अब्रुवन्। तस्मात्परमे स्थित इत्यक्षरसाम्यात्परमेष्ठिनाम संपन्नम्। एतन्नामवेदितैश्वर्यस्य काष्ठां प्राप्नोति।

अथेन्द्रस्य सर्वदेवसेव्यत्वं दर्शयति—

तं देवाः समन्तं पर्यविशन्। वसवः पुरस्तात्। रुद्रा दक्षिणतः। आदित्याः पश्चात्। विश्वे देवा उत्तरतः। अङ्गिरसः प्रत्यञ्चम् (५)। साध्याः पराञ्चम्। य एवं वेद। उपैनꣳ समानाः संविशन्ति, इति।

सभायामुपविष्टं तमिन्द्रं देवाः सर्वतः परिवेष्ट्य सेवन्त । वस्वादयो गणा श्चतसृषु दिक्षु व्यवस्थिता उपविष्टाः । अङ्गिरःप्रभृतयो महर्षयः क्वचिदप्युपवेशनमकृत्वा यदा यन्मुखमिन्द्रं प्रत्यञ्चं संमुखं कृत्वा सेवन्ते । साध्याख्या देवविशेषास्तमिन्द्रं पराञ्चं विमुखं कृत्वा पृष्ठतः कृत्वा सेवन्ते । एवं वेदितारमेनं पुरुषं समानाः सर्वे पुरुषा उपेत्य समीप उपविश्य सेवन्ते ।

अथेन्द्रस्य राजनीत्या प्रजाभ्यः संपादनप्रकारं दर्शयति—

स प्रजापतिरेव भूत्वा प्रजा आवयत् । ता अस्मै नातिष्ठन्तान्नाद्याय । ता मुखं पुरस्तात्पश्यन्तीः । दक्षिणतः पर्यायन् । स दक्षिणतः पर्यवर्तयत । ता मुखं पुरस्तात्पश्यन्तीः । मुखं दक्षिणतः ( ६ ) । पश्चात्पर्यायन् । स पश्चात्पर्यवर्तयत । ता मुखं पुरस्तात्पश्यन्तीः । मुखं दक्षिणतः । मुखं पश्चात् । उत्तरतः पर्यायन् । स उत्तरतः पर्यवर्तयत । ता मुखं पुरस्तात्पश्यन्तीः । मुखं दक्षिणतः । मुखं पश्चात् । मुखमुत्तरतः । ऊर्ध्वा उदायन् । स उपरिष्टान्न्यवर्तयत । ताः सर्वतोमुखो भूत्वाऽऽवयत् । ततो वै तस्मै प्रजा अतिष्ठन्तान्नाद्याय, इति ।

स इन्द्रः स्वयं प्रजापतिरेव प्रजापतिसमानसामर्थ्ययुक्त एव भूत्वा ताः प्रजा आवयत्स्वाधीना अकरोत् । स्वस्वोचितं करं दातुमाज्ञापितवानित्यर्थः । ताः सर्वाः प्रजा अस्मा अस्येन्द्रस्यान्नाद्याय नातिष्ठन्त । अन्नभोगकरं दातुं नाङ्गीकृतवन्त इत्यर्थः । तास्तथाविधाः पूर्वस्यां दिशि वर्तमाना इन्द्रस्य मुखं मुख्यं कंचिदिन्द्रप्रेषितं करस्वीकारक्षमं पूर्वस्यां दिशि पश्यन्त्यस्ततः पलाय्य दक्षिणस्यां दिशि पर्यायन्गताः । ततः स इन्द्रस्तदवगत्य स्वमुख्यसमानं प्रबलं

पुरुषं दक्षिणस्यां दिशि प्रेरितवान् । ततस्ताः प्रजा दिग्द्वयेऽपि मुखं पश्यन्त्यः पश्चिमां दिशं प्राविशन् । एवं पश्चिमोत्तरोर्ध्वदिक्षु योज्यम् । ततः स इन्द्रः पञ्चस्वपि दिक्षु स्वकार्ये भृत्यानवस्थाप्य तद्द्वारा स्वयं सर्वतोमुखो भूत्वा सर्वाः प्रजा वशीकृतवान् । ततः प्रजाः पलायितुं दिगन्तरमलभमाना अस्येन्द्रस्यान्नाद्यरूपं करं दातुमङ्गीकृतवन्तः ।

एतद्विज्ञानं प्रशंसति—

य एवं विद्वान्परि च वर्तयते नि च । प्रजापतिरेव भूत्वा प्रजा अत्ति । तिष्ठन्तेऽस्मै प्रजा अन्नाद्याय । अन्नाद एव भवति (७), इति ।

आसीद्वेदं चन्द्रमस्त्वं य एवं वेदेन्द्रियाव्येव भवति प्रत्यञ्चं मुखं दक्षिणतो मुखं पश्चान्नवं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयाध्याये दशमोऽनुवाकः ॥ १० ॥

---

यः पुमानेवमिन्द्रस्य परिपालनप्रकारं विद्वान्परिवर्तयते निवर्तयते च शिक्षकस्य प्रेरणं परिवर्तनं शिक्षिताभ्यः प्रजाभ्यः स्वपुरुषनिवारणं निवर्तनं तदुभयकुशलः स्वयं प्रजानां पालको भूत्वा सर्वाः प्रजा अत्त्यनुभवतीत्यर्थः । ताश्च प्रजा अस्मै करं दातुमभ्युपगच्छन्त्यसावप्यसंशयं भोगसंपन्नो भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

—:०⊙:०—

अथ द्वितीयप्रपाठके एकादशोऽनुवाकः ।

—○*○—

दशमेऽनुवाक इन्द्रस्याऽऽधिपत्यं प्रपञ्चितम् । तमेवं होतृमन्त्रस्तुतिप्रसक्तानुप्रसक्तं प्रसङ्गं परित्यज्यैकादशे प्रकृतानां होतृमन्त्राणामेव पुरुषार्थाः केचित्प्रयोगा अभिधीयन्ते । तत्राऽऽदौ दशहोतृमन्त्रस्य प्रयोगं विधत्ते—

प्रजापतिरकामयत बहोर्भूयान्त्स्यामिति । स एतं दशहोतारमपश्यत् । तं प्रायुङ्क्त । तस्य

प्रयुक्ति बहोर्भूयानभवत् । यः कामयेत बहोर्भूया-
न्त्स्यामिति । स दशहोतारं प्रयुञ्जीत । बहोरेव
भूयान्भवति, इति ।

लोके विद्यैश्वर्यादिसंपन्नः पुरुषो बहुरित्युच्यते । ततोऽपि भूयस्त्वं कामयमानः प्रजापतिः "चित्तिः स्रुक्" इत्यादिमन्त्रेण जपहोमरूपं प्रयोगं कृत्वा तया प्रयुक्त्या भूयानभवत् ।

अथ "पृथिवी होता" इति मन्त्रस्य प्रयोगं विधत्ते—

सोऽकामयत वीरो म आजायेतेति । स दशहोतु-
श्चतुर्होतारं निरमिमीत । तं प्रायुङ्क्त (१) ।
तस्य प्रयुक्तीन्द्रोऽजायत । यः कामयेत वीरो म
आजायेतेति । स चतुर्होतारं प्रयुञ्जीत । आऽस्य
वीरो जायते, इति ।

वीरो वैदिकलौकिककर्मसु शूरः पुत्रः । दशहोतुः "चित्तिः स्रुक्" इत्यादिमन्त्राच्चतुर्होतारं "पृथिवी होता" इति मन्त्रं प्रायुङ्क्त । मन्त्रप्रयोगं गेत्यर्थः ।

अथ "अग्निर्होता" इति मन्त्रस्य प्रयोगं विधत्ते—

सोऽकामयत पशुमान्त्स्यामिति । स चतुर्होतुः पञ्च-
होतारं निरमिमीत । तं प्रायुङ्क्त । तस्य प्रयुक्ति
पशुमानभवत् । यः कामयेत पशुमान्त्स्यामिति ।
स पञ्चहोतारं प्रयुञ्जीत (२) । पशुमानेव
भवति, इति ।

एकस्य मन्त्रस्यानुष्ठानान्मन्त्रान्तरं सृष्ट्वा तदनुष्ठानेन पश्वादिफलप्राप्तौ प्रजापतेरिच्छैव नियामिका ।

"सूर्यं ते चक्षुः" इति मन्त्रस्य प्रयोगं विधत्ते—

सोऽकामयतर्तवो मे कल्पेरन्निति । स पञ्चहोतुः षड्ढोतारं निरमिमीत । तं प्रायुङ्क्त । तस्य प्रयुक्त्यृतवोऽस्मा अकल्पन्त । यः कामयेतर्तवो मे कल्पेरन्निति । स षड्ढोतारं प्रयुञ्जीत । कल्पन्तेऽस्मा ऋतवः, इति ।

कल्पेरन्स्वस्वोचितफलप्रदा भूयासुरित्यर्थः ।

अथ "महाहविर्होता" इत्यस्य मन्त्रस्य प्रयोगं विधत्ते—

सोऽकामयत सोमपः सोमयाजी स्याम् । आ मे सोमपः सोमयाजी जायेतेति ( ३ ) । स षड्ढोतुः सप्तहोतारं निरमिमीत । तं प्रायुङ्क्त । तस्य प्रयुक्ति सोमपः सोमयाज्यभवत् । आऽस्य सोमपः सोमयाज्यजायत । यः कामयेत सोमपः सोमयाजी स्याम् । आ मे सोमपः सोमयाजी जायेतेति । स सप्तहोतारं प्रयुञ्जीत । सोमप एव सोमयाजी भवति । आऽस्य सोमपः सोमयाजी जायते, इति ।

परकीययज्ञे स्वयमृत्विक्त्वेन सोमस्य पाता सोमपः । स्वयं यागस्य कर्ता सोमयाजी । स्वयं तादृश उभयविधो भूयासम् । स्वपुत्रोऽप्युभयविधो भूयादित्यत्र कामनाभेदः ।

अथ मन्त्रपञ्चकस्य कामधेनुरूपत्वविवक्षया पशुत्वं संपाद्य प्रशंसति—

स वा एष पशुः पञ्चधा प्रति-

तिष्ठति (४) । पद्भिर्मुखेन, इति ।

यथा लौकिकपशुश्चतुर्भिः पादैरेकेन मुखेन च प्रतिष्ठितो भवति तथाऽयं पञ्चमन्त्रसंघः पशुरूपः । तत्र चत्वारो मन्त्राश्चत्वारः पादाः । पञ्चमो मन्त्रो मुखम् । सोऽयं पशुः पञ्चभिः प्रकारैः फलप्रदो लोके प्रतिष्ठितः ।

अथ कामधेनुरूपान्पशून्स्वर्गप्राप्तिहेतुतया प्रशंसति—

ते देवाः पशून्वित्त्वा । सुवर्गं लोकमायन्, इति ।

अथ सप्तहोतृमन्त्रं स्वर्गवासप्रदत्वेन विशेषतः प्रशंसति—

तेऽमुष्मिँल्लोके व्यक्षुध्यन् । तेऽब्रुवन् । अमुतः प्रदानं वा उपजिजीविमेति । ते सप्तहोतारं यज्ञं विधायायास्यम् । आङ्गीरसं प्राहिण्वन् । एतेनामुत्र कल्पयेति । तस्य वा इयं क्लृप्तिः (५) । यदिदं किंच । य एवं वेद । कल्पतेऽस्मै । स वा अयं मनुष्येषु यज्ञः सप्तहोता । अमुत्र सद्भ्यो देवेभ्यो हव्यं वहति । य एवं वेद । उपैनं यज्ञो नमति, इति ।

तदेतद्वाक्यं सप्तमानुवाके व्याख्यातम् ।

होतृमन्त्राणामग्निहोत्रादिषु यः प्रयोगो विवक्षितस्तद्वेदनं प्रशंसति—

यो वै चतुर्होतृणां निदानं वेद । निदानवान्भवति । अग्निहोत्रं वै दशहोतुर्निदानम् । दर्शपूर्णमासौ चतुर्होतुः । चातुर्मास्यानि पञ्चहोतुः । पशुबन्धः षड्ढोतुः । सौम्योऽध्वरः सप्तहोतुः । एतद्वै चतुर्होतृणां निदानम् । य एवं वेद । निदानवान्भवति (६), इति ।

अमिमीत तं प्रायुङ्क्त पञ्चहोतारं प्रयुञ्जीत जायेतेति तिष्ठति क्लृप्तिर्दशहोतुर्निदानं सप्त च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयाध्याय एकादशोऽनुवाकः ॥ ११ ॥

प्रजापतिरकामयत प्रजाः सृजेयेति प्रजापतिरकामयत दर्शपूर्णमासौ सृजेयेति । प्रजापतिरकामयत प्रजायेयेति स तपः स त्रिवृतं प्रजापतिरेनं दशधाऽऽत्मानं देवा वै वरुणमन्तो वै प्रजापतिस्ताः सृष्टाः समश्लिष्यन्देवा वै चतुर्होतृभिरिदं वा अग्रे प्रजापतिरिन्द्रं प्रजापतिरकामयत बहोर्भूयानेकादश ॥ ११ ॥

प्रजापतिस्तद्ग्रहस्य ग्रहत्वं प्रजापतिरकामयतानयैवैनत्तस्य वा इयं तस्याः सेपानायत्तस्मिन्नादित्ये स षड्ढोतुः सप्तहोतारं त्रिसप्ततिः ॥ ७३ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके द्वितीयोऽध्यायः ॥ २ ॥

नितरां दीयते प्रयुज्यतेऽस्मिन्निति निदानं तन्मन्त्रप्रयोगस्थानम् । तत्र सूत्रकारेण विशदीकृतम्—"अग्निहोत्रमारभ्यमाणो दशहोतारं मनसाऽनुद्रुत्याऽऽहवनीये हुत्वा सायमग्निहोत्रं जुहोति । दर्शपूर्णमासावारप्स्यमानश्चतुर्होतारं मनसाऽनुद्रुत्य" इत्यादिना । तदेतदग्निहोत्रादिरूपं होतॄणां निदानं यो वेद निदानवान्भवत्युपजीवनस्थानवान्भवति ।

अथास्य प्रश्नस्यानुवाकार्थसंग्रहः—

दशहोतुर्द्वितीयाद्ये पुरुषार्थत्वमीरितम् ।
चतुर्होत्रादिमन्त्राणां क्रत्वर्थत्वं द्वितीयके ॥
तृतीये शुक्लपक्षश्च चतुर्थे होतृमन्त्रनः ।
लोकसृष्टिः पञ्चमे तु ब्राह्मणं स्यात्प्रतिग्रहे ॥
दशमेऽहनि होतॄणां प्रयोगः षष्ठ ईरितः ।
सप्तहोतोत्तरे शस्तो यज्ञः सोमाङ्गताऽष्टमे ॥
नवमे स्याज्जगत्सृष्टिर्दशमे त्विन्द्रराजता ।
अन्ते पुमर्थो होतॄणां प्रयोगश्च समीरितः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते[1] माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयप्रपाठकः समाप्तः ॥ २ ॥

---

( मूलक्रमेण—अष्ट० २ अया० २ ( १० ) अनु० ११ ( १०० ) ।
( भाष्यक्रमेण—कां० २ प्रपा० २ ( १० ) अनु० ११ ( १०० ) ।

===

अथ द्वितीयकाण्डे तृतीयप्रपाठकारम्भः ।

---

तत्र प्रथमोऽनुवाकः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
प्रपाठके द्वितीये हि होतृब्राह्मणमीरितम् ।
तद्ब्राह्मणस्य शेषोऽथ तृतीये समुदीर्यते ॥

तत्र प्रथमानुवाके सर्वेषां होतृमन्त्राणां चतुर्होतृमन्त्रेण व्यवहारं प्रश्नोत्तराभ्यां प्रतिपादयति—

ब्रह्मवादिनो वदन्ति । किं चतुर्होतॄणां चतुर्होतृत्वमिति । यदेवैषु चतुर्धा होतारः । तेन चतुर्होतारः । तस्माच्चतुर्होतार उच्यन्ते । तच्चतुर्होतॄणां चतुर्होतृत्वम्, इति ।

चतुर्होतृशब्देन व्यवह्रियमाणानां "चित्तिः स्रुक्" इत्यादिमन्त्राणां चतुर्होतृशब्दवाच्यत्वं कथमित्येवं ब्रह्मवादिनां प्रश्नः । तत्रोत्तरमेतत् । होताऽध्वर्युराग्नीध्रो ब्रह्मेत्येवं चतुर्धा होमकर्तारो यस्मादेषु मन्त्रेषु श्रूयन्ते तेन कारणेनैते मन्त्राश्चतुर्होतारः । तत्र पृथिवी होता । द्यौरध्वर्युः । रुद्रोऽग्नीत् ।

---

१ क. °मद्विद्यायोगीन्द्रश्रीमद्राजाधिराजमहाराजश्रीवीरबुक्कमहीपालस्याऽऽज्ञापरिपालकेन श्रीमाधवाचा° ।

बृहस्पतिरुपवक्ता" इत्येतस्मिन्मुख्ये चतुर्होतृमन्त्रे यथा होत्रादय एवं "अग्निर्होता । अश्विनावध्वर्यू । त्वष्टाऽग्नीत् । मित्र उपवक्ता" इत्यादिष्वपि मन्त्रेषु होत्रादयः श्रुताः । तत्रोपवक्ता ब्रह्मा । "चित्तिः स्रुक्" इति मन्त्रे यद्यप्याग्नीध्रो न श्रुतस्तथाऽपि होत्रादिभिरसावुपलक्षणीयः । यद्यपि "सूर्यं ते चक्षुः" इति मन्त्रे होत्रादयो न श्रुतास्तथाऽपि सृष्टिन्यायेन बाहुल्याच्चेऽप्युपलक्षयितुं शक्यन्ते । यथा "सृष्टीरुपदधाति" इत्येकस्मिन्मन्त्रे सृष्टिलिङ्गाभावेऽप्यन्येषु सृष्टिलिङ्गानां सद्भावात्तत्र हि तेनापि सह सृष्टिशब्दार्थत्वं निर्णीतम्, एवमत्रापि होतृप्रतिपादनरहितेनापि मन्त्रेण सह तत्सहितोत्तरे सर्वे मन्त्राश्चतुर्होतृशब्देन व्यवहर्तुं शक्यन्ते । अस्ति चात्र लौकिको दृष्टान्तः "एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः" इति । यस्मादेवं तस्माद्वैदिकैः सर्व एते मन्त्राश्चतुर्होतार इत्युच्यन्ते । चत्वारो होमकर्तारो येषु मन्त्रेष्विति व्युत्पत्त्या तेषां मन्त्राणां चतुर्होतृनाम संपन्नम् ।

एतेषां मन्त्राणां तदभिमानिदेवतातादात्म्यज्ञानेन समृद्धिफलं दर्शयति—

सोमो वै चतुर्होता । अग्निः पञ्चहोता । धाता षड्ढोता । इन्द्रः सप्तहोता (१) । प्रजापतिर्दशहोता । य एवं चतुर्होतॄणामृद्धिं वेद । ऋध्नोत्येव, इति ।

यथोक्तसोमादिदेवतारूपत्वमेव मन्त्राणां समृद्धिः ।

पुनरपि चतुर्धा फलप्रदर्शनेन प्रशंसति—

य एषामेवं बन्धुतां वेद । बन्धुमान्भवति । य एषामेवं क्लृप्तिं वेद । कल्पतेऽस्मै । य एषामेवमायतनं वेद । आयतनवान्भवति । य एषामेवं प्रतिष्ठां वेद (२) । प्रत्येव तिष्ठति, इति ।

बन्धूनां समूहो बन्धुता । यथा लोके ब्राह्मणाः क्षत्रिया भारद्वाजगोत्रीया इत्येकैकेनोपाधिना व्यवह्रियमाणाः परस्परं बन्धवः । एवमेतेऽपि मन्त्रा एकेन होतृत्वोपाधिना व्यवह्रियमाणत्वात्परस्परं बन्धवः । तत्समूहे बन्धुभावं यो

वेद सोऽयं बहुभिर्बन्धुभिर्युक्तो भवति । क्लृप्तिरनुष्ठानजपहोमादिकम् । तद्वेदनेन स्वाभिमतमन्त्रक्रिया कल्प्यते निष्पाद्यते । आयतनं तदनुष्ठानाधारभूतमग्निहोत्रादिकं कर्म । तच्च पूर्वमेवोदाहृतम्—"अग्निहोत्रं वै दशहोतुर्निदानम्" इत्यादिना । तद्वेदिता निवासस्थानं लभते । प्रतिष्ठाफलम्—"आऽस्य वीरो जायते" इत्यादिकम् । तद्वेदिता धनादिभिः प्रतिष्ठितो भवति ।

पूर्वं चतुर्होतृशब्देन सर्वेषां व्यवहारकारणमुक्तम् । इदानीं दशहोत्रादिशब्दैः सर्वत्रव्यवहाराभावे कारणं प्रश्नोत्तराभ्यां दर्शयति—

ब्रह्मवादिनो वदन्ति । दशहोता चतुर्होता । पञ्चहोता षड्ढोता सप्तहोता । अथ कस्माच्चतुर्होतार उच्यन्त इति । इन्द्रो वै चतुर्होता । इन्द्रः खलु वै श्रेष्ठो देवतानामुपदेशनात् । य एवमिन्द्रꣳ श्रेष्ठं देवतानामुपदेशनाद्वेद । वसिष्ठः समानानां भवति । तस्माच्छ्रेष्ठमायन्तं प्रथमेनैवानुबुध्यन्ते । अयमागन् । अयमवासादिति । कीर्तिरस्य पूर्वाऽऽगच्छति जनतामायतः । अथो एनं प्रथमेनैवानुबुध्यन्ते । अयमागन् । अयमवासादिति ( २ ), इति ।

सप्तहोता प्रतिष्ठां वेद बुध्यन्ते षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयाध्याये प्रथमोऽनुवाकः ॥ १ ॥

---

दशहोत्रादयः पञ्च शब्दा विद्यन्ते तेषां मध्ये चतुर्होतृशब्देन यथा सर्वेषामुपलक्षणम्, एवं दशहोत्रादिशब्देनापि च्छत्रिन्यायेनोपलक्षयितुं शक्यत्वात्कुतः शब्दान्तरैर्नोपलक्ष्यन्ते । चतुर्होतृशब्देनैव तदुपलक्षणनियमे किं कारणमिति ब्रह्मवादिनां प्रश्नः । तत्रेदमुत्तरम् । चतुर्होतृमन्त्राणां कारणत्वादयं मन्त्र

इन्द्रस्वरूपः । तत्कारणत्वं च पूर्वोक्तम्–" तं चतुर्होत्रा प्राजनयन् " इति । इन्द्रश्च देवतानां मध्ये प्रशस्ततमः । कुतः । उपदेशनात् । उपदिष्टं किं पूर्वस्मि-न्मपाठक इन्द्रस्य देवाधिपत्यम् । इन्द्ररूपत्वेन चतुर्होता सर्वेषु श्रेष्ठः । ततः श्रेष्ठेनैव सर्वस्य व्यपदेशो युक्तो न त्वन्येन । यः पुमानिन्द्रश्रेष्ठत्वं श्रुत्युप-दिष्टं वेद स पुमान्समानानां स्वकीयानां निवासहेतुर्भवति । यस्मादत्र श्रेष्ठे-नैव चतुर्होत्रा सर्वेषां व्यपदेशो नेतरेण तस्माल्लोकेऽपि सहस्रसंख्याकैर्जनैः सह समागच्छन्तं श्रेष्ठं राजानममात्यं वा दृष्ट्वा प्रजाः सर्वाः प्रथमेनैव श्रेष्ठ-पुरुषनाम्नाऽनुबुध्यन्ते व्यवहरन्ति । अयमागन्ता अयं राजाऽऽगन्नागच्छति । अयममात्यः समागच्छतीति । अथापि तेन सह सर्वेऽप्यन्ये समागच्छन्ति तथाऽपि छत्रधारी समागच्छति चामरधारी समागच्छतीत्येवं श्रेष्ठनाम्ना संघं व्यवहरन्ति । तथा तस्मिन्ग्रामेऽयमवात्सीत् । ग्रामस्वामी देवदत्तोऽत्र निवसतीत्येवं श्रेष्ठनाम्ना व्यवहरन्ति । न त्वस्मिन्नगारे दासो निवसति दासी निवसतीति वा कदाऽप्यश्रेष्ठनाम्ना व्यवहरन्ति । किंच दूरदेशादागच्छतो राज्ञः कीर्तिः पूर्वभाविनी सती देशविशेषेऽवस्थितं जनसमूहं प्राप्नोति तदाऽपि मुख्यस्यैव कीर्तिर्न चाश्रेष्ठस्य भृत्यादेः । अतोऽपि कारणादेनं जनसंघमा-यन्तं मुख्यस्य नाम्नैव व्यवहरन्ति–अयं राजा समागच्छतीति । तथाऽस्मि-न्ग्रामेऽयं स्वामी निवसतीति । तस्माल्लोकवदेवात्रापि श्रेष्ठेन चतुर्होत्रा सर्व-मन्त्रव्यवहारो न त्वितरैर्दशहोत्रादिभिरित्यर्थः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ तृतीयप्रपाठके द्वितीयोऽनुवाकः ।

---

प्रथमानुवाके चतुर्होतृशब्देन सर्वहोतृमन्त्रव्यवहार उपपादितः । द्वितीये होतृमन्त्रेण नैमित्तिका अभिधीयन्ते । तत्राऽऽदौ तावद्दक्षिणाप्रतिग्रहे कंचिद्वि-शेषं विधत्ते––

दक्षिणां प्रतिग्रहीष्यन्त्सप्तदशकृत्वोऽपान्यात् । आत्मा-नमेव समिन्धे । तेजसे वीर्याय । अथो प्रजापतिरेवैनां भूत्वा प्रतिगृह्णाति । आत्मनोऽनार्त्यै, इति ।

अपान्याद्वायोरन्तराकर्षणरूपं निःश्वासं कुर्यात्। तेन शरीरमध्ये स्थितो भवति। तेजः प्रतिग्रहयोग्यता। वीर्यं प्रतिग्रहप्रयुक्तदोषनिवारणसामर्थ्यम्। तदुभयमनेन निःश्वासेन मध्ये तिष्ठति अपि च प्रजापतेः सप्तदशाक्षरात्मकत्वात्संख्यासाम्येन तद्रूप एव भूत्वा दक्षिणां प्रतिगृह्णाति ततस्त्वात्मन आर्तिः प्रत्यवायरूपो न भवति।

अथ होतृमन्त्रेण नैमित्तिकं विधत्ते—

यद्येनमार्त्विज्याद्वृतः सन्तं निर्हरेरन्। आग्नीध्रे जुहुयाद्दशहोतारम्। चतुर्गृहीतेनाऽऽज्येन। पुरस्तात्प्रत्यङ्तिष्ठन्। प्रतिलोमं विग्राहम् (१)। प्राणानेवास्योपदासयति, इति।

आर्त्विज्यार्थं वृतं कंचिदेकं पुरुषमितरे यदि द्वेषेणाऽऽर्त्विज्यान्निराकृतवन्तस्तदानीं निराकृतः पुरुषो होमं जुहुयात्। तदा होतृमन्त्रस्य सापाध्वर्युरित्येतच्छब्दनिमित्ते वाक्यं तदारभ्य चित्तिः स्रुगित्यादिवाक्ये समाप्तिः प्रतिलोमम्। तत्रापि प्रतिवाक्यं विगृह्य पृथक्पृथगाहुतीर्जुहुयात्। एतस्य यो निराकर्ता तस्य प्राणानुपक्षपयति।

अथ प्रकारान्तरेण नैमित्तिकहोमं विधत्ते—

यद्येनं पुनरुपशिक्षेयुः। आग्नीध्र एव जुहुयाद्दशहोतारम्। चतुर्गृहीतेनाऽऽज्येन। पश्चात्प्राङासीनः। अनुलोममविग्राहम्। प्राणानेवास्मै कल्पयति, इति।

यदि तदीयहोमाद्भीताः सन्त एनं निराकृतं पुरुषं पुनरपि स्वी कुर्युस्तदानीं विरोधिनिग्रहार्थमनुष्ठानात्पूर्वहोमाद्विपर्ययेणानुग्रहार्थं होमं कुर्यात्। तत्र चित्तिः स्रुगादिरनुलोमपाठः। आहुतिश्चैकैव। न तु विगृह्य होमः। तेन तस्य निराकर्तुः प्राणान्कल्पयति स्वस्थान्करोति।

---

१ क. ख. °न समभ्येति।

अथान्यं प्रयोगं विधत्ते—

प्रायश्चित्ती वाग्घोतेत्यृतुमुख ऋतुमुखे जुहोति। ऋतूनेवास्मै कल्पयति। कल्पन्तेऽस्मा ऋतवः (२)। क्लृप्ता अस्मा ऋतव आयन्ति, इति।

प्रायश्चित्तं कर्तव्यमित्येवं बुद्धिमान्प्रायश्चित्ती स पुमान्वाग्घोतेत्यनुवाकेन तस्मिन्नृतुपक्रमे जुहुयात्. यदा विहितानुष्ठाने स्वमनसि शङ्कितं भवति प्रतिपदोक्तं च प्रायश्चित्तं न दृश्यते तदानीं शङ्कितदोषपरिहाराय समनन्तरमाविन ऋतोरुपक्रमदिने तेनानुवाकेन जुहुयात्। स चानुवाक आरण्यकाण्ड एवमाम्नातः—"वाग्घोता। दीक्षा पत्नी। वातोऽध्वर्युः। आपोऽभिगरः। मनो हविः। तपसि जुहोमि। भूर्भुवः सुवः। ब्रह्म स्वयंभु। ब्रह्मणे स्वयंभुवे स्वाहा" इति। तत्र वागादिदेवतानां होत्रादिरूपत्वमनुसंधेयम्। होत्रा शस्त्रेषु शस्यमानेषु "ओथामो दैव" इत्यादिभिर्वाक्यैरध्वर्योर्यः प्रतिगरः स चाभ्दैवतारूपः। शंसनकाले होताऽध्वर्युमभिमुखत्वेनाऽऽह्वयति—"शोंसावोम्" इति। हेऽध्वर्यो शस्त्रं पठामि मदीयशस्त्रपाठकाले प्रतिगराय त्वं सावधानो भव। य एते भूरादयस्त्रयो लोकास्तेषामादिकारणं यत्स्वयंभु ब्रह्म तस्मै जुहुधीति स्वकीया वागाह। अनेन मन्त्रेण होमे सति शङ्कितप्रायश्चित्तपरिहारेण सर्वानृतूनस्मै होमकर्त्रे तत्स्वयंभु ब्रह्म फलप्रदानकरोति। त ऋतव एतदर्थं फलप्रदानसमर्था भवन्ति। समर्थाः सन्तोऽस्य समीपमागच्छन्ति। तत्र सूत्रकारस्तु—"कल्पन्तेऽस्मै" इत्यादिफलमवलोक्य काम्यप्रयोगत्वेनोदाजहार—"अथैष ऋतुमुखी यः षड्ढोता वाग्घोतेति तस्य वदत्यृतुमुख ऋतुमुखे जुहुयादिति स सार्वकामः" इति।

"अथ वाग्घोता" इति मन्त्रं प्रशंसति—

षड्ढोता वै भूत्वा प्रजापतिरिदꣳ सर्वमसृजत। स मनोऽसृजत। मनसोऽधि गायत्रीमसृजत। तद्गायत्रीं यश आर्च्छत्। तामालभत। गायत्रिया अधि च्छन्दाꣳस्यसृजत। छन्दोभ्योऽधि साम। तत्साम यश आर्च्छत्। तदालभत

( ३ )। साम्नोऽधि यजूꣳष्यसृजत । यजुर्भ्योऽधि विष्णुम् । तद्विष्णुं यशं आर्च्छत् । तमालभत । विष्णोरध्योषधीरसृजत । ओषधीभ्योऽधि सोमम् । तत्सोमं यशं आर्च्छत् । तमालभत । सोमादधि पशूनसृजत । पशुभ्योऽधीन्द्रम् ( ४ ) । तदिन्द्रं यशं आर्च्छत् । तदेनं नातिप्राच्यवत । इन्द्र इव यशस्वी भवति । य एवं वेद । नैनं यशोऽतिप्रच्यवते, इति ।

वाग्घोतेति मन्त्रे होतृपत्न्यादीनां सप्तदशवर्णानां विद्यमानत्वादयं षड्ढोता प्रजापतिस्तन्मन्त्रानुष्ठानेन तद्रूपो भूत्वा सर्वमिदमसृजत । आदौ तावत्सर्वसंकल्पक्षमं मनः सृष्ट्वा तेन मनसा संकल्प्य तदूर्ध्वं गायत्रीदेवतामसृजत । तदानीं प्रजापतिसंबन्धि यद्यशः सामर्थ्यं तद्गायत्रीं प्राप्नोत् । ततः प्रजापतिस्तां गायत्रीं पशुवदालभ्य गायत्र्या अधिकान्युष्णिगादीनि च्छन्दांस्यसृजत । तेभ्यश्छन्दोभ्योऽत्यधिकं सप्तस्वरोपेतं सामासृजत । ततः सामदेवतां यशः प्राप्नोत् । अथ प्रजापतिस्तदपि साम पशुत्वेनाऽऽलभत । एवमुत्तरत्र योज्यम् । तत्प्रजापतेर्यशोऽनन्तत इन्द्रं प्राप्य तमतिक्रम्य नान्यत्र क्वापि गतम् । तदेवं षड्ढोतृमन्त्रसामर्थ्यादिन्द्राधिपत्यपर्यन्ता सृष्टिरासीत् । ततोऽयमत्यन्तप्रशस्तः । य एवं मन्त्रवृत्तान्तं वेद सोऽपीन्द्रवद्यशस्वी भवति । तद्यशस्तं पुरुषं कदाचिदप्यतिक्रम्य नान्यत्र गच्छति ।

प्रतिग्रहमन्त्रानुवाके—" सोमाय वासः, रुद्राय गाम् " इत्यादिना यानि द्रव्याण्याम्नातानि तद्व्यतिरिक्तद्रव्यविषये प्रतिग्रहमन्त्रं विधत्ते—

यद्वा इदं किंच । तत्सर्वमुत्तान एवाऽऽङ्गीरसः प्रत्यगृह्णात् । तदेनं प्रतिगृहीतं नाहिनत् । यत्किंच प्रतिगृह्णीयात् । तत्सर्वमुत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णात्वित्येव प्रतिगृह्णीयात । इयं वा उत्तान आ-

ङ्गिरसः । अन्यैवैनत्प्रतिगृह्णाति । नैनꣳ हिन-

स्ति, इति ।

लोके प्रतिग्रहयोग्यं यत्किंचिद्द्रव्यं तत्सर्वमाङ्गिरसः पुत्र उत्तानाख्य एव पुरा कदाचित्प्रत्यगृह्णात् । तत्र प्रतिगृहीतं द्रव्यं प्रतिगृहीतारमुत्तानमेनं नैव हिंस्त्व । अतोऽन्योऽपि सर्वमुत्तान इति मन्त्रेणैव प्रतिगृह्णीयात् । यथा भूमिः सर्वंसहा तथाऽयमुत्तानः सर्वप्रतिग्रहसहिष्णुः । ततो भूमिरूपत्वाद्भूम्या सर्वं प्रतिगृहीतं न तु पुरुषेणेत्येनं पुरुषं प्रतिग्रहदोषो न हिनस्ति ।

अथ गवाश्वप्रतिग्रहे विशेषं विधत्ते—

बर्हिषा प्रतीयाद्गां वाऽश्वं वा । एतद्वै पशूनां प्रियं

धाम । प्रियेणैवैनं धाम्ना प्रत्यैति ( ५ ), इति ।

विग्राहमृतवस्तदालभतेन्द्रं गृह्णीयात्षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीया-

ध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

गामश्वं वा प्रतिग्रहीष्यन्पुरुषस्तृणमुष्टिना युक्तः संमुखं गच्छेत् । तृणस्य पशुप्रियवस्तुत्वात्पशुप्रियेणैव वस्तुना सह संमुखो भवति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-

ब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

—:०⊙:०—

अथ तृतीयप्रपाठके तृतीयोऽनुवाकः ।

—○*○—

द्वितीये नैमित्तिको होतृमन्त्रहोम उक्तः । तृतीये केशनिवर्तनविषये कंचि-द्ध्यानविशेषं दर्शयति । एतच्च होतृमन्त्रप्रयुक्तेषु कर्मसु चातुर्मास्यादिकर्मसु च यत्र यत्र केशनिकृन्तनमस्ति तत्र सर्वत्राङ्गत्वेनैतद्वेदनं द्रष्टव्यम् । तदिदं वेदनमन्वयव्यतिरेकाभ्यां विधत्ते—

यो वा अविद्वान्निवर्तयते । विशीर्षा स पाप्माऽमु-

ष्मिँल्लोके भवति । अथ यो विद्वान्निवर्तयते ।

सशीर्षा विपाप्माऽमुष्मिँल्लोके भवति, इति ।

वक्ष्यमाणप्रकारेणाग्न्यादयो देवाः केशनिवर्तनेन यां पुष्टिं संपादितवन्त-स्तत्पुष्टिसाधनमिह निवर्तनमित्यभिप्रेत्य यः केशनिवर्तनं प्राप्नोति स स्वर्ग-लोके शिरोरहितः पापी भवति । तच्छेदनपूर्वके तु निवर्तने शिरःसहितः पाप-रहितो भवति । तस्माच्छेदनं संपादयेत् ।

ता एता अग्न्यादिभिः संपादिताः पुष्टीः क्रमेण दर्शयति—

देवता वै सप्त पुष्टिकामा न्यवर्तयन्त । अग्निश्च पृथिवी च । वायुश्चान्तरिक्षं च । आदित्यश्च द्यौश्च चन्द्रमाः । अग्निर्न्यवर्तयत । स साहस्रमपुष्यत् (१) । पृथिवी न्यवर्तयत । सौषधीभिर्वनस्पति-भिरपुष्यत् । वायुर्न्यवर्तयत । स मरीचीभिरपुष्यत् । अन्तरिक्षं न्यवर्तयत । तद्वयोभिरपुष्यत् । आदित्यो न्यवर्तयत । स रश्मिभिरपुष्यत् । द्यौर्न्यवर्तयत । सा नक्षत्रैरपुष्यत् । चन्द्रमा न्यवर्तयत । सोऽहोरात्रैर-र्धमासैर्मासैर्ऋतुभिः संवत्सरेणापुष्यत् । तान्पोषान्पु-ष्यति । यांस्तेऽपुष्यन् । य एवं विद्वान्नि च वर्तयते परि च (२), इति ।

अपुष्यन्नक्षत्रैरपुष्यत्पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

न्यवर्तयन्त स्वकीयान्केशान्न्यवर्तयन् स साहस्रं सहस्रसंख्योपेतं धनमपुष्य-

त्पुष्टमकरोत् । पृथिव्यादय ओषध्यादिभिर्जगत्पुष्टिं संपादितवन्तः । मरीचिशब्देनाग्नय उपलक्ष्यन्ते । वायुना ह्यग्नयः प्रज्वाल्यन्ते । वयोभिः पक्षिभिः । यः पुमानग्न्यादिदेवताभिः संपादितां सृष्टिं तत्साधनत्वं च निवर्तनस्य विद्वान्निवर्तयते परिवर्तयते वा केशानां कर्तनं स पुमानग्न्यादिभिर्ये पोषः संपादितास्तान्पोषान्सर्वान्प्राप्नोति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ तृतीयप्रपाठके चतुर्थोऽनुवाकः ।

---

तृतीये केशवपनाङ्गं पुष्टिवेदनमुक्तम् । अथ प्रतिग्रहमन्त्रेषु तत्तन्मन्त्रविज्ञानं चतुर्थेऽभिधीयते । तत्र हिरण्यप्रतिग्रहमन्त्रस्य महिमवेदनमन्वयव्यतिरेकाभ्यां विधत्ते—

तस्य वा अग्नेर्हिरण्यं प्रतिजग्रहुषः । अर्धमिन्द्रियस्यापाक्रामत् । तदेतेनैव प्रत्यगृह्णात् । तेन वै सोऽर्धमिन्द्रियस्याऽऽत्मन्नुपाधत्त । अर्धमिन्द्रियस्याऽऽत्मन्नुपाधत्ते । य एवं विद्वान्हिरण्यं प्रतिगृह्णाति । अथ योऽविद्वान्प्रतिगृह्णाति । अर्धमस्येन्द्रियस्यापक्रामति, इति ।

पुरा कदाचिदग्निर्मन्त्रमन्तरेण हिरण्यं प्रतिगृहीतवान् । तस्याग्नेः शरीरवर्ति यदिन्द्रियं वीर्यं तस्यार्धमग्नेः सकाशादपगतम् । तदानीं स्वकीयं बलक्षयं दृष्ट्वा तत्परिहाराय—“ राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यम् ” इत्येतेनैव मन्त्रेण प्रत्यगृह्णात् । तत्राग्निना पठ्यमाने मन्त्रे योऽयं चतुर्थ्यन्तोऽग्निशब्दस्तस्य कल्पान्तरगतोऽग्निरित्यर्थः । तदव्यवधानेन प्रतिग्रहे सति तेनैव मन्त्रेण पूर्वमपगतं स्वकीयवीर्यस्यार्धं स्वस्मिन्नेव पुनः समाधत्त । यः पुमानेवं मन्त्रमहिमानं विद्वान्प्रतिगृह्णाति तस्येन्द्रियभागो नातिक्रामति—किंतु स्वस्मिन्नेव समाहितो भवति । अविदुषस्तु स भागः स्वस्मादपगच्छति ।

हिरण्यमन्त्रवद्ब्रह्मगवाश्वपुरुषतल्पशकटप्रतिग्रहमन्त्राणां षण्णां वेदनमन्वयव्यतिरेकाभ्यां विधत्ते—

तस्य वै सोमस्य वासः प्रतिजग्रहुषः । तृतीयमिन्द्रियस्यापाक्रामत् ( १ ) । तदेतेनैव प्रत्यगृह्णात् । तेन वै स तृतीयमिन्द्रियस्याऽऽत्मन्नुपाधत्त । तृतीयमिन्द्रियस्याऽऽत्मन्नुपाधत्ते । य एवं विद्वान्वासः प्रतिगृह्णाति । अथ योऽविद्वान्प्रतिगृह्णाति । तृतीयमस्येन्द्रियस्यापक्रामति । तस्य वै रुद्रस्य गां प्रतिजग्रहुषः । चतुर्थमिन्द्रियस्यापाक्रामत् । तामेतेनैव प्रत्यगृह्णात् । तेन वै स चतुर्थमिन्द्रियस्याऽऽत्मन्नुपाधत्त ( २ ) । चतुर्थमिन्द्रियस्याऽऽत्मन्नुपाधत्ते । य एवं विद्वान्गां प्रतिगृह्णाति । अथ योऽविद्वान्प्रतिगृह्णाति । चतुर्थमस्येन्द्रियस्यापक्रामति । तस्य वै वरुणस्याश्वं प्रतिजग्रहुषः । पञ्चममिन्द्रियस्यापाक्रामत् । तमेतेनैव प्रत्यगृह्णात् । तेन वै स पञ्चममिन्द्रियस्याऽऽत्मन्नुपाधत्त । पञ्चममिन्द्रियस्याऽऽत्मन्नुपाधत्ते । य एवं विद्वानश्वं प्रतिगृह्णाति ( ३ ) । अथ योऽविद्वान्प्रतिगृह्णाति । पञ्चममस्येन्द्रियस्यापक्रामति । तस्य वै प्रजापतेः पुरुषं प्रति-

जग्रहुर्षः । षष्ठमिन्द्रियस्यापाक्रामत् । तमेते-
नैव प्रत्यगृह्णात् । तेन वै स षष्ठमिन्द्रियस्याऽऽ-
त्मन्नुपाधत्त । षष्ठमिन्द्रियस्याऽऽत्मन्नुपाधत्ते । य
एवं विद्वान्पुरुषं प्रतिगृह्णाति । अथ योऽविद्वा-
न्प्रतिगृह्णाति । षष्ठमस्येन्द्रियस्यापक्रामति (४)।
तस्य वै मनोस्तल्पं प्रतिजग्रहुर्षः । सप्तममिन्द्रिय-
स्यापाक्रामत् । तमेतेनैव प्रत्यगृह्णात् । तेन वै स
सप्तममिन्द्रियस्याऽऽत्मन्नुपाधत्त । सप्तममिन्द्रिय-
स्याऽऽत्मन्नुपाधत्ते । य एवं विद्वाꣳस्तल्पं प्रतिगृह्णा-
ति । अथ योऽविद्वान्प्रतिगृह्णाति । सप्तममस्येन्द्रि-
यस्यापक्रामति । तस्य वा उत्तानस्याऽऽङ्गीरसस्या-
प्राणत्प्रतिजग्रहुर्षः । अष्टममिन्द्रियस्यापाक्रामत्
(५)। तदेतेनैव प्रत्यगृह्णात्। तेन वै सोऽष्टम-
मिन्द्रियस्याऽऽत्मन्नुपाधत्त । अष्टममिन्द्रियस्याऽऽ-
त्मन्नुपाधत्ते । य एवं विद्वानप्राणत्प्रतिगृह्णाति । अथ
योऽविद्वान्प्रतिगृह्णाति । अष्टममस्येन्द्रियस्यापक्रा-
मति, इति ।

अत्र तृतीयचतुर्थादिशब्दा वीर्यभागपराः । अप्राणत्प्राणवायुरहितमचेतनं शकटमुत्तानायाऽऽङ्गीरसायान इति तत्तत्पर्यायेषु प्रथमपर्यायवद्व्याख्येयम् ।

यदुक्तं द्वितीयानुवाकेनाऽऽम्नातमन्त्राणामुत्तानमन्त्रेण प्रतिग्रह इति तदत्र मन्त्रमाहिमवेदनप्रसङ्गेन तदीयवेदनविधानार्थं पुनः पठति—

यद्वा इदं किंच । तत्सर्वमुत्तान एवाऽऽङ्गीरसः प्रत्य-

गृह्णात् । तदेनं प्रतिगृहीतं नाहिनत् । य एवं विद्वान्
प्रतिगृह्णीयात् । तत्सर्वमुत्तानस्त्वाऽऽङ्गिरसः प्रति-
गृह्णात्वित्येव प्रतिगृह्णीयात् । इयं वा उत्तान
आङ्गिरसः । अनयैवैनत्प्रतिगृह्णाति । नैनꣳ
हिनस्ति (६), इति ।

तृतीयमिन्द्रियस्यापाक्रामच्चतुर्थमिन्द्रियस्याऽऽत्मन्नुपावर्तताश्वं प्रतिगृह्णाति
षष्ठमस्येन्द्रियस्यापाक्रामत्सप्तममिन्द्रियस्यापाक्रामत्प्रतिगृ-
ह्णीयाच्चत्वारि च ।

तस्य वा अग्नेर्हिरण्यं सोमस्य वासस्तदेतेन रुद्रस्य गां तामेतेन वरुण-
स्याश्वं प्रजापतेः पुरुषं मनोस्तल्पं तमेतेनोत्तानस्य तदेतेन प्राणद्दै । अग्नेः
तृतीयषष्ठं तच्चतुर्थं तां शेषं तं वै तं सप्त कं ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयाध्याये
चतुर्थोऽनुवाकः ॥ ४ ॥

---

पूर्ववद्व्याख्येयम् । एवं मन्त्रमहिमाऽप्यनुसंधेय इति तात्पर्यार्थः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-
ब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ तृतीयप्रपाठके पञ्चमोऽनुवाकः ।

---

चतुर्थे प्रतिग्रहमन्त्रमहिमज्ञानं विहितम् । द्वादशाहगतस्य दशमस्याह्नो दश-
मेऽहन्यध्वर्युप्रभृतयः प्रष्टारो गृहपतिः प्रतिवक्ता तेषां प्रश्नोत्तरे पञ्चमानु-
वाकेऽभिधीयेते । अत्र प्रश्नोत्तररूपं संवादं विधत्ते—

ब्रह्मवादिनो वदन्ति, इति ।

वक्ष्यमाणप्रश्नोत्तररूपं वेदवाक्यं ब्रह्म तद्वदनशीला ब्रह्मवादिनस्ते परस्परं
वदन्तः संवादं कुर्युरित्यर्थः । अत एव सूत्रकारः—"ब्रह्मवाद्यं वदन्ति

इति विज्ञायते" इति शाखान्तरवचनमुदाजहार । उदाहृत्य चैवमुक्तम्—"गृहपतिमेव महर्त्विजः पर्युपविश्य पृच्छेयुः" इति ।

तत्राध्वर्युगृहपत्योः प्रश्नोत्तरे वाक्ये दर्शयति—

यद्दशहोतारः सत्रमासत । केन ते गृहपतिनाऽऽर्ध्नुवन् । केन प्रजा असृजन्तेति । प्रजापतिना वै ते गृहपतिनाऽऽर्ध्नुवन् । तेन प्रजा असृजन्त, इति ।

यदा दशहोतृमन्त्राभिमानिनो देवाः सत्रमन्वतिष्ठंस्तदानीं केन गृहपतिना सत्ररूपां समृद्धिं प्राप्नुवन् । प्राप्य च केन गृहपतिना प्रजाः सृष्टवन्तः । सत्रार्थं दीक्षितेषु मध्ये मुख्यो गृहपतिः । इतरेऽध्वर्युप्रभृतय ऋत्विजः । तत्राध्वर्युप्रश्नस्य गृहपतिनोत्तरमेवं दर्शयम्[1] । प्रजापतिरेव दशहोतृणां सत्रे गृहपतिरासीत्तेन प्रजापतिना फलसमृद्धिः प्रजोत्पत्तिश्च संपादिता ।

होतुः प्रश्नं तस्योत्तरं च दर्शयति—

यच्चतुर्होतारः सत्रमासत । केन ते गृहपतिनाऽऽर्ध्नुवन् । केनौषधीरसृजन्तेति । सोमेन वै ते गृहपतिनाऽऽर्ध्नुवन् (१) । तेनौषधीरसृजन्त, इति ।

पूर्ववद्व्याख्येयम् ।

ब्रह्मणः प्रश्नं तस्योत्तरं च दर्शयति—

यत्पञ्चहोतारः सत्रमासत । केन ते गृहपतिनाऽऽर्ध्नुवन् । केनैभ्यो लोकेभ्योऽसुरान्प्राणुदन्त । केनैषां पशूनवृञ्जतेति । अग्निना वै ते गृहपतिनाऽऽर्ध्नुवन् । तेनैभ्यो लोकेभ्योऽसुरान्प्राणुदन्त । तेनैषां पशूनवृञ्जत, इति ।

एषामसुराणां पशूनिमनाशितवन्तः । अन्यत्पूर्ववद्व्याख्येयम् ।

---

१ क. ख. °त्तरवाक्यं द° ।

अथ होतृकाणां प्रश्नोत्तरे दर्शयति—

यत्षड्ढोतारः सत्रमासत । केन ते गृहपतिनाऽऽर्ध्नुवन् (२) । केनर्तूनकल्पयन्निति । धात्रा वै ते गृहपतिनाऽऽर्ध्नुवन् । तेनर्तूनकल्पयन्त, इति ।

पूर्ववद्व्याख्येयम् ।

अथोद्गातुः प्रश्नं तस्योत्तरं च दर्शयति—

यत्सप्तहोतारः सत्रमासत । केन ते गृहपतिनाऽऽर्ध्नुवन् । केन सुवरायन् । केनेमाँल्लोकान्त्समतन्वन्निति । अर्यम्णा वै ते गृहपतिनाऽऽर्ध्नुवन् । तेन सुवरायन् । तेनेमाँल्लोकान्त्समतन्वन्निति (३), इति ।

सुवरायन्स्वर्गं प्राप्ताः । समतन्वन्संततानविच्छिन्नान्कृतवन्तः ।

उक्तेषु प्रश्नोत्तरेषु निर्णीतानां गृहपतीनां वेदनं प्रशंसति—

एते वै देवा गृहपतयः । तान्य एवं विद्वान् । अप्यन्यस्य गार्हपते दीक्षते । अवान्तरमेव सत्रिणामृध्नोति, इति ।

प्रजापतिः सोमोऽग्निर्धाताऽर्यमा चेत्येते देवाः पूर्वोक्तप्रश्नोत्तरेषु निर्णीता गृहपतयः । यः पुमांस्तान्गृहपतीन्विदित्वा ध्यायेत्सोऽन्यस्यापि गार्हपत्ये कर्मणि यदि दीक्षते तदानीमवान्तरमेव पृथगेव सत्रिणां फलं प्राप्नोति । अयमर्थः—दीक्षितेषु सत्रिषु स्वयं गृहपतिर्न भवति । किंत्वध्वर्युप्रभृतिषु कश्चिद्गृहपतिस्त्वन्य एव । तस्यैवान्यवद्गृहपतित्वोपपत्तेः । तस्य यत्फलं तदेव तस्मै भवति । किंच तस्यैव सर्वे ऋत्विजो गृहपतित्वोपपत्तिकर्मण्यनुकूला भवन्ति । तथा च तस्य मुख्यत्वाभावेऽपि प्रजापत्यादिगृहपतिवेदनसामर्थ्येन सर्वेषां सत्रिणां यावत्फलं तावत्स्वयं पृथगेव प्राप्नोति ।

---

१ ख. तस्मा अन्य ।

पूर्वोक्तस्य पञ्चमस्य गृहपतेरर्यमाख्यस्य वेदनं पुनर्विशेषेण प्रशंसति—

यो वा अर्यमणं वेद। दानकामा अस्मै प्रजा भवन्ति। यज्ञो वा अर्यमा। आर्यावसतिरिति वै तमाहुर्यं प्रशंसन्ति, इति।

योऽयमर्यमा देवेषु गृहपतित्वेनोक्तः सोऽयं यज्ञनिष्पादकत्वाद्यज्ञ एव। एवं तमर्यमणं यो वेदास्य वेदितुः पुत्राद्याः प्रजा दानकामा भवन्ति। स्वकर्तृकं दानं कामयन्ते। दातारो भवन्तीत्यर्थः। आर्याः पूज्या गुर्वादयस्तेषामावसतिः साकल्येन निवासहेतुरित्यनेनैव शब्देन लोके व्यवहरन्ति यं प्रशंसितुमिच्छन्ति। अयमर्थः—दानशीलं राजानममात्यं वा यदा प्रशंसन्ति तदानीमयं राजाऽऽर्याणां साधूनां विदुषां यष्टॄणां वा गुरूणां च स्वकीयगृहनिवासहेतुरिति प्रशंसन्ति। तस्मादार्यावसतिशब्दो निरतिशयप्रशंसावाची। अर्यमाशब्दस्याऽऽर्यावसतिशब्दः[1] पर्यायः। आर्याः पूज्यन्ते मन्यन्त इति वा व्युत्पत्तेः।

प्रकारान्तरेण तमर्यमणं पुनः प्रशंसति—

आर्यावसतिर्भवति। य एवं वेद (४), इति।

ईदृशमर्यमणं सर्वेषामार्याणां निवासहेतुं यो वेद सोऽप्यार्याणां निवासभूमिर्भवति।

अथ चतुर्होतृमन्त्रवेदनं प्रशंसति—

यद्वा इदं किंच। तत्सर्वं चतुर्होतारः। चतुर्होतृभ्योऽधि यज्ञो निर्मितः। स य एवं विद्वान्विवदेत। अहमेव भूयो वेद। यश्चतुर्होतॄन्वेदेति। स ह्येव भूयो वेद। यश्चतुर्होतॄन्वेद, इति।

यदिदं किंचित्प्रजापतिसृष्टं जगद्दृश्यते तत्सर्वं होतृमन्त्राणां स्वरूपभूतम्। तन्मन्त्रबलादेव तत्सृष्टेः पूर्वप्रपाठके बहुधा प्रपञ्चितत्वात्। किंच चतुर्होतृमन्त्रेभ्य ऊर्ध्वं सर्वोऽपि यज्ञो निर्मितः। तत्तद्यज्ञारम्भे होतृमन्त्रहोमस्य पूर्वं

---

१ क. ख. °जा स्वयमार्याणां साधूनां विदुषां यष्टॄणां गुरूणां च स्वकीयगृहनिवासहे[तु]रयमिति दातारं प्रशंसति। त°।

विहितत्वात् । एवं सति यो विद्वान्विवदेत यः कोऽपि होतृमन्त्रमाहात्म्यं विद्वानितरैः सह विवादं कुर्यात् । कीदृशो विवाद इति तदुच्यते—योऽहं होतृमन्त्रान्वेद सोऽहमेव सर्वेषां मध्ये भूयो वेदितेति । तस्मिन्विवादे तस्यैव होतृमन्त्राभिज्ञस्य जय इत्युत्तरवाक्यं प्रसिद्धवाचिना हिशब्देन स्पष्टी करोति । होतृमन्त्ररहस्यं यो वेत्ति स एव भूयो वेदेत्यतिप्रसिद्धमित्यर्थः ।

अथ होतृमन्त्राभिमानिदेवविषयं वेदनं प्रशंसति—

यो वै चतुर्होतॄणाꣳ होतॄन्वेद । सर्वासु प्रजा-
स्वन्नमत्ति ( ५ ) । सर्वा दिशोऽभिजयति ।
प्रजापतिर्वै दशहोतॄणाꣳ होता । सोमश्चतुर्हो-
तॄणाꣳ होता । अग्निः पञ्चहोतॄणाꣳ होता ।
धाता षड्ढोतॄणाꣳ होता । अर्यमा सप्तहोतॄ-
णाꣳ होता । एते वै चतुर्होतॄणाꣳ होतारः ।
तान्य एवं वेद । सर्वासु प्रजास्वन्नमत्ति ।
सर्वा दिशोऽभिजयति ( ६ ), इति ।

आध्नुवन्नाध्नुवन्नित्येवं वेदाग्नि सर्वा दिशोऽभिजयति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

===

होतृमन्त्रैर्होमादिकं निष्पाद्य फलसाधकाः प्रजापत्यादयो मन्त्राणां होतारः । तान्यो वेद सोऽयं सर्वासु प्रजासु यदन्नं तत्सर्वमनुभवति । सर्वाः प्रजा अस्मै प्रशस्तमन्नं समर्पयन्तीत्यर्थः । किंच सर्वदिग्वर्तिन्यः प्रजा अस्य वश्या भवन्ति । प्रजापतिर्वै दशहोतॄणामित्यादौ होतृमन्त्रस्यावयवभेदात्तव-योगभेदाद्वा बहुवचननिर्देशः । तान्य एवं वेदेत्यादिपुनरुक्तिरुपसंहारार्था ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

अथ तृतीयप्रपाठके षष्ठोऽनुवाकः ।

पञ्चमेऽनुवाके प्रश्नोत्तररूपो ब्रह्मविषयः संवाद उक्तः । षष्ठे होतृमन्त्र-प्रशंसार्थमग्निहोत्रादिकर्मभिः प्रजापतिशरीरनिष्पादनमभिदधानः कर्मविशेषे-ष्वृत्विग्विशेषनिर्णयोऽभिधीयते । तत्राऽऽदौ तावदग्निहोत्रस्यैकमृत्विजं दर्श-यति—

प्रजापतिः प्रजाः सृष्ट्वा व्यस्रꣳसत । स हृदयं भूतोऽशयत् । आत्मन् हा३ इत्यह्वयत् । आपः प्रत्यशृण्वन् । ता अग्निहोत्रेणैव यज्ञक्रतुनोप-पर्यावर्तन्त । ताः कुसिंधमुपौहन् । तस्मादग्निहोत्रस्य यज्ञक्रतोः । एक ऋत्विक्, इति ।

प्रजापतिर्महता प्रयत्नेन प्रजाः सृष्ट्वा तेन प्रयासेन विस्रस्तहस्तपादादिस-र्वावयवो हृदयमात्रावशेषः सन्व्यवहर्तुमशक्तः क्वचिच्छयितोऽभूत् । तदानीं ह आत्मन्नित्येवं स्वकीयं शरीरमाहूतवान् । हाशब्दे योऽयमेकारस्तस्य प्लुत आकार इकारशिरस्क आदेशो भवति । दूरादाह्वानार्थः प्लुतः । आत्मशब्दः शरीरवाची । तदेतच्छरीराह्वानमब्देवता श्रुत्वाऽग्निहोत्रेण सह प्रजापतिस-मीपे समागत्य कुसिंधं शिरोव्यतिरिक्तं देहमुपायन् । कुसिमात्मशोकं दधा-तीति कुसिंधः । यद्यपि यूपवन्तो यज्ञक्रतवस्तथाऽप्यग्निहोत्रस्य तद्रूपत्वमु-पचरितम् । यस्मात्तच्छरीराह्वाने [illegible] सहाग्निहोत्रयागं तस्मादग्निहोत्रस्या-ध्वर्युरेक ऋत्विक् ।

अथ दर्शपूर्णमासयोर्ब्रह्मा होताऽध्वर्युरग्नीदिति चतुर ऋत्विज इति दर्शयति—

चतुर्होतारोऽहीयन्त । अग्निर्वायुरादित्यश्च-न्द्रमाः (१) । ते प्रत्यशृण्वन् । ते दर्श-पूर्णमासाभ्यामेव यज्ञक्रतुनोपपर्यावर्तन्त । त उपौहꣳश्चत्वार्यङ्गानि । तस्माद्दर्शपूर्णमा-सयोर्यज्ञक्रतोः । चत्वार ऋत्विजः, इति ।

अग्न्यादयो देवा दर्शपूर्णमासाभ्यां सहाऽऽगत्य द्वौ हस्तौ द्वौ पादावित्येवं चत्वार्यङ्गान्यानीतवन्तः । ततो दर्शपूर्णमासयोश्चत्वार ऋत्विजः संपन्नाः ।

अथ चातुर्मास्यानां प्रतिप्रस्थात्रा सह पूर्वोक्तांश्चतुर ऋत्विजो दर्शयति—

पञ्चकृत्वोऽह्वयत । पशवः प्रत्यशृण्वन् । ते चातुर्मास्यैरेव यज्ञक्रतुनोपपर्यावर्तन्त । त उपौहँल्लोम च्छवीं मांसमस्थि मज्जानम् । तस्माच्चातुर्मास्यानां यज्ञक्रतोः (२) । पञ्चर्त्विजः, इति ।

यथा प्रथमे पर्याये शरीरस्य सकृदाह्वानं यथा च द्वितीये पर्याये चतुराह्वानम् । तथा तृतीये पर्याये पञ्चवारमाह्वानम् । तदेतत्पश्वभिमानिनो देवाः श्रुत्वा चातुर्मास्यैः सहाऽऽगत्य लोमादीन्यानीतवन्तः । छविस्त्वक् । यद्यपि प्रथमपर्याय एव कबन्धमानीतवन्तस्तथाऽपि तत्र कण्ठस्याधस्तन ऊरुभ्यामूर्ध्ववर्तिमध्यभाग एव विवक्षितः । अतो द्वितीयपर्याये हस्तपादानयनम् । तत्रोभयत्राऽऽकारमात्रं संपन्नं न तु लोमादिपरिपूर्तिः । सा चास्मिन्पर्याय एव कृता । यस्मात्पञ्चवारमाह्वानं यस्माच्च लोमादिपञ्चकसंपत्तिस्तस्मात्तत्साधनभूतानां चातुर्मास्यानामृत्विजः पञ्चसंख्याकाः ।

अथ निरूढपशुबन्धादौ मैत्रावरुणेन सहितान्पूर्वोक्तान्पञ्चर्त्विजो दर्शयति—

षट्कृत्वोऽह्वयत । ऋतवः प्रत्यशृण्वन् । ते पशुबन्धेनैव यज्ञक्रतुनोपपर्यावर्तन्त । त उपौहँस्तनावाण्डौ शिश्नमवाञ्चं प्राणम् । तस्मात्पशुबन्धस्य यज्ञक्रतोः । षडृत्विजः, इति ।

षड्वारमाह्वानात्स्तनादीनामपि षट्त्वात्तत्साधनभूते पशुबन्धे षडृत्विजः संपन्नाः ।

अथ सोमयागे होता मैत्रावरुणो ब्राह्मणाच्छंसी नेष्टा पोताऽऽग्नीध्रोऽच्छावाकश्चेति सप्त होत्रान्द(द)र्शयति—

सप्तकृत्वोऽह्वयत । होत्राः प्रत्यशृण्वन् । ताः

सौम्येनैवाध्वरेण यज्ञक्रतुनोपपर्यावर्तन्त (३) । ता उपौहन्त्सप्तशीर्षण्यान्प्राणान् । तस्मात्सौम्यस्याध्वरस्य यज्ञक्रतोः । सप्तहोत्राः प्राचीर्वषट्कुर्वन्ति, इति ।

सप्तवारमाह्वानाच्छिरोनिष्ठसप्तच्छिद्रवर्तिप्राणानयनात्तत्साधने सोमाध्वरे सप्तहोत्राः संपन्नाः । ताश्च प्राङ्मुखत्वेनावस्थिता याज्यान्ते वौषट्शब्दान्पठन्ति ।

अथ संवत्सरसत्रे गवामयने सर्वक्रत्वन्तर्भावं दर्शयति—

दशकृत्वोऽह्वयत् । तपः प्रत्यशृणोत् । तत्कर्मणैव संवत्सरेण सर्वैर्यज्ञक्रतुभिरुपपर्यावर्तत । तत्सर्वमात्मानमपरिवर्गमुपौहत् । तस्मात्संवत्सरे सर्वे यज्ञक्रतवोऽवरुध्यन्ते, इति ।

दशवारमाह्वानं तपोभिमानी देवः श्रुत्वा संवत्सरसत्ररूपेण सह कर्मणा तदवयवभूतैश्च सर्वैर्यज्ञक्रतुभिः सहाऽऽगत्य प्रजापतेरात्मानं देहं सर्वमप्यपरिवर्गमानयत् । यथा किंचिदपि वर्जितं न भवति । तस्मात्संपूर्तिसाधनं संवत्सरसत्रम् । तत्राग्निष्टोमोक्थ्यादयः सर्वेऽपि क्रतवोऽन्तर्भवन्ति ।

अथैकेनाध्वर्युणा निष्पाद्यमग्निहोत्रं प्रथमभावित्वेन प्रशंसति—

तस्माद्दशहोता चतुर्होता । पञ्चहोता षड्ढोता सप्तहोता । एकहोत्रे बलिꣳ हरन्ति । हरन्त्यस्मै प्रजा बलिम् । ऐनमप्रतिख्यातं गच्छति । य एवं वेद (४), इति ।

चन्द्रमाश्चातुर्मास्यानां यज्ञक्रतोरध्वरेण यज्ञक्रतुनोपपर्यावर्तन्त सप्तहोता चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

यस्मादेवमग्निहोत्रेणैकहोत्रा प्रथमं कुसिंध उपानीते सति पश्चाद्दर्शपूर्णमासादिभिरङ्गैरुपकृतं तस्माद्दशहोत्रादयः पञ्चाप्यात्मविशेषा एकहोत्रे परमात्मने बलिं हरन्ति पूजां कुर्वन्ति । य एवं परमात्मपूज्यत्वं वेद तस्मै सर्वाः प्रजाः पूजां समर्पयन्ति । अप्रतिख्यातमवमानरहिता कीर्तिश्चैनं वेदितारं प्राप्नोति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ तृतीयप्रपाठके सप्तमोऽनुवाकः ।

---

षष्ठे होतृप्रशंसाप्रसङ्गेन क्रतूनामृत्विग्विशेषं व्यवस्थाप्याग्निहोत्रस्य तन्मध्ये प्राशस्त्यं दर्शितम् । अथ तस्मिन्नग्निहोत्रे सर्वक्रतुसङ्घात्संपादनेन तदग्निहोत्रं सप्तमे प्रशंसति । तत्राऽऽदौ होतृमन्त्राणां प्रजापतेः शरीररक्षकत्वं दर्शयति—

प्रजापतिः पुरुषमसृजत । सोऽग्निरब्रवीत् । ममायमन्नमस्त्विति । सोऽबिभेत् । सर्वं वै माऽयं प्रधक्ष्यतीति । स एतांश्चतुर्होतॄनात्मस्परणानपश्यत् । तानजुहोत् । तैर्वै स आत्मानमस्पृणोत्, इति ।

प्रजापतिः पूर्वमशरीरः सन्पूर्वानुवाकोक्तक्रमेण कुसिंधादिलोमान्तैः सर्वैश्चैकं पुरुषाकारं देहमसृजत । तदानीमग्निस्तं देहं दृष्ट्वा सोऽयं पुरुषो ममान्नमस्त्वित्यब्रवीत् । ततः स प्रजापतिः पुरुषाकारं मामेव सर्वमप्ययमग्निर्धक्ष्यतीति भयमापन्नो होतृमन्त्रानात्मस्परणान्स्वशरीररक्षकत्वेन प्रीतिहेतूनपश्यत् । तान्हुत्वा तैः स्वदेहं प्रीतमकरोद्रक्षादित्यर्थः ।

होतृमन्त्रेषु च दशहोतुः प्रथमभावित्वात्तस्याग्निहोत्रप्रक्रमरूपत्वादग्निहोत्रहोमेनैव सर्वरक्षां विवक्षुरादौ कुसिंधरक्षां दर्शयति—

यदग्निहोत्रं जुहोति । एकहोतारमेव तद्यज्ञक्रतुमाप्नोत्यग्निहोत्रम् (१) । कुसिंधं चाऽऽत्मनः

स्पृणोति । आदित्यस्य च सायुज्यं गच्छति, इति ।

यदा पुरुषोऽग्निहोत्रं जुहोति तदा पूर्वोक्तरीत्या तस्यैकहोतृकत्वादेकहोतृकं यज्ञक्रतुं प्राप्नोति । तत्फलभूतमादित्यस्य च सायुज्यं गच्छत्यात्मनः कुसिंधं च स्पृणोति । रक्षतीत्यर्थः ।

अथाग्निहोत्र एव चतुर्होतृफलं दर्शयति—

चतुरुन्नयति । चतुर्होतारमेव तद्यज्ञक्रतुमाप्नोति दर्शपूर्णमासौ । चत्वारि चाऽऽत्मनोऽङ्गानि स्पृणोति । आदित्यस्य च सायुज्यं गच्छति, इति ।

यदेतदग्निहोत्रे चतुर्वारं स्रुक्पूरणं तेन चतुःसंख्यासाम्याच्चतुर्होतृकदर्शपूर्णमासक्रतुं प्राप्य हस्तपादाङ्गचतुष्टयरक्षापूर्वमादित्यसायुज्यमाप्तिश्च संपद्यते ।

अथ पञ्चहोतृफलं दर्शयति—

चतुरुन्नयति । समित्पञ्चमी । पञ्चहोतारमेव तद्यज्ञक्रतुमाप्नोति चातुर्मास्यानि । लोम च्छवीं माꣳसमस्थि मज्जानम् (२) । तानि चाऽऽत्मनः स्पृणोति । आदित्यस्य च सायुज्यं गच्छति, इति ।

अग्निहोत्रे यच्चतुर्वारं स्रुक्पूरणं या चाऽऽहुत्याधारभूता समित्तदुभयनिष्ठया पञ्चत्वसंख्यया पञ्चहोतृकचातुर्मास्यफलप्राप्तिर्लोमादिपञ्चाङ्गरक्षाप्राप्तिरादित्यसायुज्यं च ।

अथ षड्ढोतृफलं दर्शयति—

चतुरुन्नयति । द्विर्जुहोति । षड्ढोतारमेव तद्यज्ञक्रतुमाप्नोति पशुबन्धम् । स्तनावाण्डौ शिश्नश्वांश्च

प्राणम् । तानि चाऽऽत्मनः स्पृणोति । आदित्यस्य च सायुज्यं गच्छति, इति ।

उन्नयनहोमगतषट्संख्यया षड्ढोतृफलमादित्यस्य सायुज्यं च ।

अथ सप्तहोतृफलं दर्शयति—

चतुरुन्नयति । द्विर्जुहोति ( ३ ) । समित्सप्तमी । सप्तहोतारमेव तद्यज्ञक्रतुमाप्नोति सौम्यमध्वरम् । सप्त चाऽऽत्मनः शीर्षण्यान्प्राणान्स्पृणोति । आदित्यस्य च सायुज्यं गच्छति, इति ।

उन्नयनहोमसमिद्गतया सप्तसंख्यया सप्तहोत्रादिफलम् ।

अथ दशहोतृफलं दर्शयति—

चतुरुन्नयति । द्विर्जुहोति । द्विर्निमार्ष्टि । द्विः प्राश्नाति । दशहोतारमेव तद्यज्ञक्रतुमाप्नोति संवत्सरम् । सर्वं चाऽऽत्मानमपरिवर्गꣳ स्पृणोति । आदित्यस्य च सायुज्यं गच्छति ( ४ ), इति ।

अग्निहोत्रं मज्जानं द्विर्जुहोत्यपरिवर्गꣳ स्पृणोत्येकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

---

यदेतच्चतुर्वारं स्रुक्पूरणं यच्चाऽऽहुतिद्वयं यदपि बर्हिषि भूमौ च द्विर्लेपनिमार्जनं यदप्याहुतिद्वयशेषयोर्द्विः प्राशनं तद्गतया दशसंख्यया तत्साध्यसंवत्सरसत्रप्राप्त्या तदन्तर्गतकृत्स्नक्रतुप्राप्तिरादित्यसायुज्यं च । तदेवं पूर्वानुवाक

एकहोत्रे बलिं हरन्तीत्येकहोतृकाग्निहोत्रप्रशंसनं यत्संक्षेपेणोक्तं तदिहाग्निहोत्रे सर्वहोतृकसर्वक्रतुसंपादनेन प्रपञ्चितम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथ तृतीयप्रपाठकेऽष्टमोऽनुवाकः ।

---

सप्तमेऽनुवाक एकहोतृकाग्निहोत्रे सर्वयज्ञक्रतुहोतृफलान्तर्भावद्वारेण सर्वर्त्विक्ष्वनुगत एकहोता प्रशंसितः । अथाष्टमे होतृमन्त्रसामर्थ्यं प्रशस्यते । तत्र तावदासुरसृष्टिं दर्शयति—

प्रजापतिरकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स हरितः श्यावोऽभवत् । तस्मात्स्त्र्यन्तर्वत्नी । हरिणी सती श्यावा भवति । स विजायमानो गर्भेणाताम्यत् । स तान्तः कृष्णः श्यावोऽभवत् । तस्मात्तान्तः कृष्णः श्यावो भवति । तस्यासुरेवाजीवत् (१) । तेनासुनाऽसुरानसृजत । तदसुराणामसुरत्वम् । य एवमसुराणामसुरत्वं वेद । असुमानेव भवति । नैनमसुर्जहाति, इति ।

प्रजामुत्पादयितुं कामयमानः प्रजापतिर्होतृमन्त्रानुष्ठानरूपं तपः कृत्वा स्वोदरे गर्भं धृत्वा हरितश्यावो नीलश्वेतमिश्रवर्णोऽभवत् । अत एव लोके गर्भिणी स्त्री तादृग्वर्णा दृश्यते । स प्रजापतिर्विजायमानो गर्भस्थितजन्तुविशेषेण प्रसवकालेऽताम्यद्ग्लानिं प्राप्नोत् । तदा ग्लानिवशात्कृष्णश्वेतमिश्र-

रूपोऽभवत् । अत एव लोके मार्गश्रमरोगश्रमादिना तादृग्वर्णो भवति । तस्य तादृशस्य ग्लानिं प्राप्तस्य प्रजापतेरसुरेवाजं वच्छ्वासमात्रं स्वव्यापारक्षममभूत् । न तु हस्तपादादयः स्वव्यापारक्षमाः । तदानीं तेनासुना प्राणवायुना बलाधिकानसुरानसृजत । बलहेतुरसुः प्राणवायुरेषामस्तीति व्युत्पत्त्या तेषामसुरनाम संपन्नम् । एतस्य वेदिता बलकारिणा प्राणेन युक्तो भवति । स च प्राण एनं वेदितारमपमृत्युना न परित्यजति ।

अथ पितृसृष्टिं दर्शयति—

> सोऽसुरान्सृष्ट्वा पितेवामन्यत । तदनु पितॄनसृजत । तत्पितॄणां पितृत्वम् । य एवं पितॄणां पितृत्वं वेद । पितेव स्वानां भवति (२) । यन्त्यस्य पितरो हवम्, इति ।

स प्रजापतिरसुरान्सृष्ट्वा पितृत्वाभिमानमकरोत् । यथा नव्यं गृहादिकं निर्माय गृहस्य पिताऽहमिति न मन्यते । पुत्रानुत्पाद्य तथा मन्यते । एवमयं प्रजापतिरपि गिरिनद्याद्यचेतनं सृष्ट्वा पितृत्वं न मन्यते । चेतनानसुरान्सृष्ट्वा पितृत्वं मन्यते । अतः पितृत्ववासनावासितं तन्मनः सृष्टावपि पितृलोकस्वामिनः पितॄनसृजत । पितृत्वाभिमानेन सृष्टत्वात्पितृनाम संपन्नम् । एवं वेदिता स्वकीयानां सर्वेषां पितेव मान्यो भवति । अपि चास्य वेदितुः स्वयं मृताः पितरः स्वं हवं यन्त्याह्वानं प्राप्नुवन्ति । एतेन स्वापादावाहूताः सन्तः फलप्रदानेनानुगृह्णन्तीत्यर्थः ।

अथ मनुष्यसृष्टिं दर्शयति—

> स पितॄन्त्सृष्ट्वाऽमनस्यत् । तदनु मनुष्यानसृजत । तन्मनुष्याणां मनुष्यत्वम् । य एवं मनुष्याणां मनुष्यत्वं वेद । मनस्व्येव भवति । नैनं मनुर्जहाति, इति ।

स प्रजापतिः पितृसृष्टेरूर्ध्वं किमिदानीमन्यत्सृजामीत्येवमनन्यत्सृष्टिविषयं मनोऽकरोत्। तन्मनोऽनुसृत्य मनुष्यानसृजत। यस्मान्मनोऽनुसारेणोत्पन्नास्तस्मात्तन्मनुष्यनाम संपन्नम्। य एवं वेदिता मनस्वी सर्वकार्येषु स्थिरचित्तो भवति। मनुर्मननशक्तिः कदाचिदप्येनं न जहाति।

अथ देवसृष्टिं दर्शयति -

तस्मै मनुष्यान्त्ससृजानाय । दिवा देवत्राऽभवत् । तदनु देवानसृजत । तद्देवानां देवत्वम् । य एवं देवानां देवत्वं वेद । दिवा हैवास्य देवत्रा भवति, इति।

यो मनुष्यान्ससृजानः सृष्टवान्प्रजापतिस्तस्मै प्रजापतये दिवा देवत्राऽभवत्। दिवसो द्योतनशीलोऽभवत्। सृष्टैर्मनुष्यैर्लौकिकवैदिकव्यवहारे सर्वस्मिन्क्रियमाणे सति दिवसः सर्वोऽपि व्यवहारैर्द्योत्यते तदेतद्देवनमनुसृत्य देवानसृजत। देवनानुसारेणोत्पन्नत्वाद्देवानां देवत्वं संपन्नम्। एवं वेदितुः सर्वोऽपि दिवसः सर्वैर्व्यवहारैः प्रकाशितो भवति।

उक्तां सृष्टिं निगमयति—

तानि वा एतानि चत्वार्यम्भाꣳसि । देवा मनुष्याः पितरोऽसुराः, इति।

यानि चत्वारि देवादिस्थानानि तानि सर्वाण्यम्भांसि जलप्रदेशानि। यथा तडागनद्यादिजलं स्नानपानाद्युपयुक्तमेवमेतानि भोगोपयुक्तानीत्यर्थः।

एतद्वेदनं प्रशंसति—

तेषु सर्वेष्वम्भो नभ इव भवति । य एवं वेद (३), इति।

अजीवत्स्वानां भवति देवानसृजत सप्त च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

सर्वेषु देवादिस्थानेष्वस्मा:शब्दोपलक्षितो भोग आकाशवद्व्याप्य: संपूर्णो भवतीत्यर्थः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ तृतीयप्रपाठके नवमोऽनुवाकः ।

---

अष्टमे सृष्टिसाधनत्वेन होतृमन्त्राः प्रशंसिताः । अथ नवमे वायुरूपत्वज्ञानेन मन्त्राणां प्रशंसा क्रियते । तदेतज्ज्ञानं विधातुमादौ ब्रह्मवादिवाक्येन तस्मिन्होतृरूपवायुविज्ञाने श्रद्धामुत्पादयति—

ब्रह्मवादिनो वदन्ति । यो वा इमं विद्यात् । यतोऽयं पवते । यदभिपवते । यदभिसंपवते । सर्वमायुरियात् । न पुराऽऽयुषः प्रमीयेत । पशुमान्त्स्यात् । विन्देत प्रजाम्, इति ।

होतृमन्त्रस्य सामर्थ्यमेव वाय्वाकारेण परिणतं सल्लोके संचरति तदेतदुपासकानां प्रसिद्धम् । अत एवान्यत्र श्रूयते—"वायोरात्मानं कवयो निचिक्युः" इति । सोऽयं वायुर्यतः कारणाद्वाति यदभिलक्ष्य वाति तस्मिन्नभिलक्ष्ये वस्तुनि यत्सम्यग्वाति तादृशसंचारोपेतमिमं वायुं यः पुमान्विद्यात्सोऽयमायुरादिफलचतुष्टयं प्राप्नुयात् । अयमर्थः—वायुर्हि किंचित्प्रयोजनमुद्दिश्य स्वनति किंचिद्वस्तुषु संचरति संचरंस्तेषु किंचिदुपयोगं करोति । तत्प्रयोजनं तद्वस्तुगतमुपयोगं च यो विदित्वा ध्यायति सोऽयं सर्वमायुः प्राप्नोति । अत एवापमृत्योरभावादायुषः पुरा न म्रियते प्रजापशुसंपत्तिश्च तस्य भवतीत्येवं ब्रह्मवादिनो वायुध्यानमहिमानं परस्परं कथयन्ति ।

तदेवं ब्रह्मवादिवाक्यं विद्वांसं प्रमाणत्वेनोपन्यस्येदानीं श्रुतिः स्वयं विधत्ते—

यो वा इमं वेद (१) । यतोऽयं पवते । यदभिपवते । यदभिसंपवते । सर्वमायुरेति । न पुराऽऽयुषः

प्रमीयते । पशुमान्भवति । विन्दते प्रजाम्, इति ।

ब्रह्मवादिवाक्यवद्विधिवाक्यं व्याख्येयम् ।

ध्यानविदा ध्यातव्यं निरूपयति—

अद्भ्यः पवते । अपोऽभिपवते । अपोऽभिसंपवते (२), इति ।

अद्भ्यो निमित्तभूताभ्यो वाति । जलव्यवहारनिर्वाहो वायुसंचारस्य प्रयोजनमित्यर्थः । तथाऽपोऽभिलक्ष्य संचरति । वायुसंचारविषयभूतं वस्तु जलमित्यर्थः । तथाऽपोऽभिप्राप्य सम्यक्पवते । यत्र निम्नदेशे गन्तव्यं तत्र तदा गमयति । यत्र शोषणीयं तदा शोषयति । यदा वृष्टिरपेक्षिता तदा वर्षयति । सोऽयं वायुसंचारस्योपयोगो जलव्यवहारनिर्वाहः प्रयोजनं जलमेव संचारस्य विषयो निम्नदेशादिप्रेरणमुपयोग इत्येतत्त्रयं वायौ ध्यातव्यम् ।

एवं पृथिव्यग्न्यन्तरिक्षादित्यद्युदिग्विषये ध्यातव्यं दर्शयति—

अस्याः पवते । इमामभिपवते । इमामभिसंपवते । अग्नेः पवते । अग्निमभिपवते । अग्निमभिसंपवते । अन्तरिक्षात्पवते । अन्तरिक्षमभिपवते । अन्तरिक्षमभिसंपवते । आदित्यात्पवते (३) । आदित्यमभिपवते । आदित्यमभिसंपवते । द्योः पवते । दिवमभिपवते । दिवमभिसंपवते । दिग्भ्यः पवते । दिशोऽभिपवते, इति ।

जलपर्यायवदेते पर्याया व्याख्येयाः ।

अथ प्राच्यादिभेदेन प्राणादिनामानि वायौ ध्यातव्यानि । तत्र प्राणनामध्यानं विधत्ते—

दिशोऽभिसंपवते । स यत्पुरस्ताद्वाति । प्राण एव

भूत्वा पुरस्ताद्वाति (४) । तस्मात्पुरस्ताद्वान्तम् । सर्वाः प्रजाः प्रतिनन्दन्ति । प्राणो हि प्रियः प्रजानाम् । प्राण इव प्रियः प्रजानां भवति । य एवं वेद । स वा एष प्राण एव, इति ।

स वायुर्यदा पूर्वस्यां दिशि संचरति तदा प्राणरूपो भूत्वा संचरति । यस्मात्पूर्वस्यां दिशि संचरन्वायुः प्राणत्वेन प्रजानां प्रियस्तस्मात्पूर्वस्यां दिशि संचरन्तं वायुं प्रति सर्वाः प्रजा हृष्यन्ति । वायौ समागते सति शरीरस्वेदः शुष्यति वृष्टिर्भविष्यतीत्येवं प्रजानां संतोषः । य एवं वायोः प्राणरूपत्वं वेद स प्रजानां प्राणवत्प्रियो भवति । जन्मान्तरे च स एष प्राणो वायुरूप एव भवति ।

मातरिश्वनामध्यानं विधत्ते—

अथ यद्दक्षिणतो वाति । मातरिश्वैव भूत्वा दक्षिणतो वाति । तस्माद्दक्षिणतो वान्तं विद्यात् । सर्वा दिश आवाति (५) । सर्वा दिशोऽनुविवाति । सर्वा दिशोऽनुसंवातीति । स वा एष मातरिश्वैव, इति ।

यदा वायुर्दक्षिणस्यां दिशि संचरति तदा मातरिश्वेति तस्य नाम ध्यातव्यम् । मातर्यन्तरिक्षे श्वयति वर्धते मातृवन्नयतीति वा मातरिश्वा, सर्वेषामाप्यायनकारीत्यर्थः । यस्मादयमेवंविधो मातरिश्वनामकस्तस्माद्दक्षिणस्यां दिशि संचरन्तं वायुमेवं विद्यात् । मातरिश्वनामकोऽयं वायुः सर्वा अपि दिश आभिमुख्येन गच्छति । सर्वा अपि दिशोऽनुकूलः सन्विशेषेण संचरति तथा सर्वा दिशोऽनुगम्य सम्यक्संचरति । यत्र यादृशो वायुरपेक्षितस्तत्र तादृश एव संचरतीत्यर्थः । एवं वेदिता मातरिश्वैव भवति ।

अथ पवमाननामध्यानं विधत्ते—

अथ यत्पश्चाद्वाति । पवमान एव भूत्वा पश्चा-

दधाति । पूतमस्मा आहरन्ति । पूतमुपह-
रन्ति । पूतमश्नाति । य एवं वेद । स वा
एष पवमान एव (६), इति ।

यदा स वायुः पश्चिमायां दिशि संचरति तदा पवमान इति तस्य नाम । शोधक इत्यर्थः । यः पुमानेवंविधं वायुं ध्यायति तस्मै विदुषे पूतं दोषरहितं धनादिकमाहरन्ति । तथा पूतं शुद्धमन्नमुपहरन्ति समीपे समर्पयन्ति । स्वयमपि तत्पूतमेवाश्नाति । तदेतदैहिकफलम् । आमुष्मिकं तु पवमानप्राप्तिरूपम् ।

सवितृनामध्यानं विधत्ते—

अथ यदुत्तरतो वाति । सवितैव भूत्वो-
त्तरतो वाति । सवितेव स्वानां भवति ।
य एवं वेद । स वा एष सवितैव, इति ।

यदा स वायुरुत्तरस्यां दिशि संचरति तदा सवितेति तस्य नाम । सर्वस्य प्रेरक इत्यर्थः । एवं वेदिता स्वकीयानां सर्वेषामिह प्रेरको भवति परत्रायं सवितैव भवति ।

एवं वायुध्यानं कुर्वतां ध्यानाङ्गत्वेन निन्दानुग्रहं विधित्सुः प्रथमं तावत्साधने कांचिदुपपत्तिं दर्शयति—

ते य एनं पुरस्तादायन्तमुपवदन्ति । य एवास्य
पुरस्तात्पाप्मानः । तांस्तेऽपघ्नन्ति । पुरस्तादि-
तरान्पाप्मनः सचन्ते, इति ।

पूर्वस्यां दिश्यागच्छन्तमेनं वायुध्यायिनं ते लोकप्रसिद्धा निन्दका दाम्भिकोऽयमित्यादिभिर्दुर्वाक्यैर्निन्दन्ति । तदानीमस्य ध्यातुः पूर्वस्यां दिशि ये केचित्संभाविताः पाप्मानस्तान्स्वीयान् निन्दका अपघ्नन्ति । अस्य ध्यातुस्तया निन्दया पापजयो भवति । निन्दकास्तु त एतन्निन्दाजन्यानितरान्पाप्मनः प्राप्नुवन्ति ।

---

१ क. 'चित्प्रभा' ।

पूर्वस्यां दिश्युक्तं ध्यातुः पापक्षयं निन्दकस्य पापसंबन्धं च दिगन्तरेष्वपि क्रमेण दर्शयति—

अथ य एनं दक्षिणत आयन्तमुपवदन्ति (७) ।
य एवास्य दक्षिणतः पाप्मानः । तांस्तेऽपघ्नन्ति ।
दक्षिणत इतरान्पाप्मनः सचन्ते । अथ य एनं
पश्चादायन्तमुपवदन्ति । य एवास्य पश्चात्पाप्मानः ।
तांस्तेऽपघ्नन्ति । पश्चादितरान्पाप्मनः सचन्ते ।
अथ य एनमुत्तरत आयन्तमुपवदन्ति । य एवा-
स्योत्तरतः पाप्मानः । तांस्तेऽपघ्नन्ति (८) ।
उत्तरत इतरान्पाप्मनः सचन्ते, इति ।

प्रथमपर्यायवदितरपर्यायत्रयं व्याख्येयम् ।

तदेवं निन्दाया अनुग्राहकत्वेन सहनयोग्यत्वं प्रतिपाद्य निन्दितेन ध्यात्राऽनुष्ठेयं विधत्ते—

तस्मादेवं विद्वान् । वीव नृत्येत् । प्रेव
चलेत् । व्यस्येवाक्ष्यौ भाषेत ।
मण्टयेदिव । क्राथयेदिव । शृङ्गायेतेव, इति ।

यस्मादन्यैः स्वस्मिन्प्रयुक्ता निन्दा निन्दकानामेव प्रत्यवायोत्पत्तिहेतुस्तस्मादेवं विद्वानुपासको निन्दां श्रुत्वा विशेषेण नृत्येदिव । यथा लोके काचित्प्रियकरीं पुत्रजन्मादिवार्तां श्रुत्वा हृष्यन्तः स्वमनोगतं हर्षं द्योतयितुं बाहोर्मुखविकासादिभिर्नृत्यन्तीव दृश्यन्त एवमयमपि स्वमुखं विकासयेदित्यर्थः । तथा प्रहृष्टमिव चरेत् । यथा लोके नृत्यन्तः प्रमोदन्तः पदविन्यासादिकं कुर्वन्ति । तद्वदयमपि पद्भ्यां तमभिनयेत् । तथाऽक्ष्यौ चक्षुषी व्यस्येव विकास्येव हर्षविकसिते कृत्वा समीचीनानि प्रियवचनानि निन्दकेन सह

भाषेत । एवं मोक्षशास्त्रेषु स्मर्यते–' तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् " इति । किंच मण्टयेदिव, उन्मादयेदिव । मटि उन्माद इति धातुः । अत एव जाबालोपनिषदि श्रूयते–" अव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्ति " इति । उन्मादनटनमेव स्पष्टी क्रियते–क्राथयेदिव । क्रथ हिंसायामिति धातुः । कंचित्कान्तां ताडयितुमिव गच्छेत् । शृङ्गायेतेव । महावृषभः शृङ्गाभ्यां मृदमुत्क्षिप्योद्धृत्य स्वपृष्ठे विक्षिप्य क्रीडति तदिदं क्रीडनं शृङ्गायितम् । तथाऽयं क्रीडेत् । तस्य चोन्मादनटनस्य जनैः सङ्गाभावः प्रयोजनम् ।

अत एव स्मर्यते—

तथा चरति वै योगी सतां धर्ममदूषयन् ।
जना यथा न मन्येरन्गच्छेयुर्नैव संगतिम् ॥ इति ।

निन्दां सहमानस्याभिप्रायः स्पष्टी क्रियते—

उत मोपवदेयुः । उत मे पाप्मानमपहन्युरिति, इति ।

किमेते मां निन्देयुः । किंवा मे पाप्मानं विनाशयेयुरिति । अस्याश्च वाचो भङ्ग्याऽयमर्थः—नैते निन्दन्ति किंतु पाप्मानमेव विनाशयन्ति ।

अथास्य भिक्षाटनप्रकारं दर्शयति—

स यां दिशꣳ सनिमेष्यन्त्स्यात् । यदा तां दिशं वातो वायात् । अथ प्रवेयात् । प्र वा धावयेत् । सातमेव रदितं व्यूढं गन्धमभिप्रच्यवते । आऽस्य तं जनपदं पूर्वा कीर्तिर्गच्छति, इति ।

स वायूपासको यां दिशमभिप्रेत्य सनिमेष्यन्भैक्ष्यं प्राश्नामीत्येवंबुद्धिः स्यात् । दानवाची सनिशब्दोऽत्र स्वस्वत्यागपूर्वकं परैर्देयं भैक्ष्यमुपलक्षयति । यस्यां दिशि भैक्ष्यं लप्स्यत इत्येवंबुद्धिर्योगी तां दिशमनुकूलो वायुर्यदा वायात्तदा प्रवेयात्प्रकम्पेत्तस्यां दिशि गन्तुं प्रचलेदित्यर्थः । स्वयं सहसा गन्तुमशक्तश्चेच्छिष्यं वा प्रकर्षेण धावयेत् । तदानीं सातादिविशेषणविशिष्टमेव भैक्ष्यमभिलक्ष्यायं प्रच्यवते प्रकर्षेण गच्छति । सातं स्वयं लब्धं प्रागवेदितमित्यर्थः । रदितमिति । रद विलेखन इति धातुः । रदितं विलेखितं कृतमर्यादमित्यर्थः । व्यूढं विभक्तं साकारं पात्रे पृथक्पृथगुद्धृत्तमित्यर्थः ।

---

१ क. ख. "विद्वालांस्ताड" ।

गन्धं यादृशं तादृशगन्धोपेतम् । एवंविधैर्नियमैर्युक्तस्य योगिनः कीर्तिस्त-स्मात्पूर्वैव जनपदमागच्छति । ईदृशो महात्माऽभिज्ञः समायातीत्येवं सर्वे जनपदवासिनो भक्तिं कुर्वन्तीत्यर्थः ।

भिक्षाटनवृत्तान्तज्ञानं प्रशंसति—

दानकामा अस्मै प्रजा भवन्ति ।

य एवं वेद ( ९ ), इति ।

वेद संप्रवत आदित्यात्प्रवते वात्या वात्येष प्रवमान एव दक्षिणत आय-न्तमुपवदन्ति य एवास्योत्तरतः पाप्मानस्त रुतेऽपघ्नन्तीत्यष्टौ च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीया-ध्याये नवमोऽनुवाकः ॥ ९ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

अथ तृतीयप्रपाठके दशमोऽनुवाकः ।

नवमेऽनुवाके सर्वहोतृमन्त्रसमष्टिदेवस्य वायोरुपासनमुक्तम् । अथ दशमे होतृमन्त्राणां कश्चित्काम्यप्रयोगोऽभिधीयते । तं विधातुमादावुपाख्यानमाह—

प्रजापतिः सोमꣳ राजानमसृजत । तं त्रयो वेदा अन्वसृज्यन्त । तान्हस्तेऽकुरुत । अथ ह सीता सावित्री । सोमꣳ राजानं चकमे । श्रद्धामु स चकमे । सा ह पितरं प्रजापतिमुप-ससार । तꣳ होवाच । नमस्ते अस्तु भगवः । उप त्वाऽयानि ( १ ) । प्र त्वा पद्ये । सोमं वै राजानं कामये । श्रद्धामु स कामयत इति ।

तस्या उ ह स्थागरमलंकारं कल्पयित्वा । दशहोतारं पुरस्ताद्व्याख्याय । चतुर्होतारं दक्षिणतः । पञ्चहोतारं पश्चात् । षड्ढोतारमुत्तरतः । सप्तहोतारमुपरिष्टात् । संभारैश्च पत्निभिश्च मुखेऽलंकृत्य (२) । आऽस्यार्धं वव्राज । ताꣳ होदीक्ष्योवाच । उप मा वर्तस्वेति । तꣳ होवाच । भोगं तु म आचक्ष्व । एतन्म आचक्ष्व । यत्ते पाणाविति । तस्या उ ह त्रीन्वेदान्प्रददौ । तस्मादु ह स्त्रियो भोगमेव हारयन्त इति ।

प्रजापतिः सोमं सृष्ट्वा तमनु त्रीन्वेदानसृजत । स च सोमस्तान्वेदान्स्वमुष्टिमध्ये गोपायामास । तदानीं सवितुः प्रजापतेः पुत्री काचिन्नामतः सीता सावित्री[1]स सोमो मे भर्ताऽस्त्वित्यकामयत । स तु सोमः श्रद्धाख्यां कांचिदन्यां प्रजापतेर्दुहितरं कामितवान्न त्वेतां सीताम् । सा तु सीता प्रजापतिसमीपमागत्य नमस्कारं कृत्वा त्वत्समीपे कार्यार्थं समागताऽस्मि त्वां भजे सर्वदेत्येवमुवाच । ततः प्रजापतिना किं कार्यमिति पृष्टा सती सोमविषयां कामनामुवाच । ततः प्रजापतिस्तस्याः सीतायाः सोमवशीकरणार्थं कंचित्प्रयोगं कृतवान् । स्थागरो नाम कश्चित्सुगन्धद्रव्यविशेषस्तं पिष्ट्वा तत्संबन्धिनमलंकारं चन्दनविशेषं कल्पयित्वा तस्य पूर्वादिदिक्षु दशहोत्रादिमन्त्रान्पठित्वा "अग्निर्यजुर्भिः" इत्यादिभिः संभारमन्त्रैः, "सेनेन्द्रस्य" इत्यादिभिर्देवपत्नीमन्त्रैश्चाभिमन्त्रितेन स्थागरपिष्टेन तस्याः सीताया मुखे तिलकाद्यलंकारं चकार । सा च सीता तस्य सोमस्य समीपे प्रत्याजगाम । स च सोमस्तां दृष्ट्वा परवशो मां प्रति समीपे समागच्छेत्युवाच । सा च तदीयां प्रीतिं परीक्षितुमेवमुवाच । अहमागमिष्यामि त्वं तु भोगमाचक्ष्व

१ क. 'ताऽऽसीत् । स सो'।

सर्वदा भोगं करिष्यामीति प्रतिजानीहि । किं यत्ते पाणौ मुष्टिमध्ये गोप्यं वस्तु वर्तते एतन्मह्यमवश्यनं कृत्वा कथय । ततः सोमोऽपि प्रीत्यतिशयेन तस्यै सीतायै त्रीन्वेदान्मददौ । वेदम् त्रलाञ्छितं किंचिद्घुटिकाद्रव्यं दत्तवानित्यर्थः । यस्मादियं सीता प्रियं वस्तु ययाचे तस्माल्लोकेऽपि स्त्रियो भोगमुद्दिश्य प्रियं दायं पुरुषमाहारयन्ते ।

तदेवमुपाख्यानेन प्रयोगं प्रशस्य तं प्रयोगं विधत्ते—

स यः कामयेत प्रियः स्यामिति ( ३ ) । यं वा कामयेत प्रियः स्यादिति । तस्मा एतं स्थागरमलंकारं कल्पयित्वा । दशहोतारं पुरस्ताद्व्याख्याय । चतुर्होतारं दक्षिणतः । पञ्चहोतारं पश्चात् । षड्ढोतारमुत्तरतः । सप्तहोतारमुपरिष्टात् । संभारैश्च पत्निभिश्च मुखेऽलंकृत्य । आऽस्यार्धं व्रजेत् । प्रियो हैव भवति ( ४ ), इति ।

अथान्यलंकृत्य स्यामिति भवति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयाध्याये दशमोऽनुवाकः ॥ १० ॥

===

अहमेव तस्मै राज्ञे प्रियो भविष्यामीति वा पुरुषोऽयं राज्ञे प्रियो भवत्विति वा कामनायां सत्यां प्रीतिविषयस्य स्वस्य परस्य व मुखे पूर्वोक्तप्रकारेण स्थागरपिष्टतिलकादिकं कृत्वा तस्य राज्ञः समीपे गच्छन्नयं तिलकधारी तस्य राज्ञः प्रियो भवति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

—○*○—

अथ तृतीयप्रपाठक एकादशोऽनुवाकः ।

दशमे होतृमन्त्रैः काम्यप्रयोग उक्तः । अथैकादशे दशहोत्रादिमन्त्रनाम्नां प्रवृत्तिनिमित्तमुच्यते । तत्राऽऽदौ दशहोतृशब्दस्य प्रवृत्तिनिमित्तं दर्शयति–

ब्रह्माऽऽत्मन्वदसृजत । तदकामयत । समात्मना पद्ये-येति । आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै दशमꣳ हूतः प्रत्यशृणोत् । स दशहूतोऽभवत् । दशहूतो ह वै नामैषः । तं वा एतं दशहूतꣳ सन्तम् । दशहोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ( १ ), इति ।

यदेतज्जगत्कारणं परं ब्रह्म तदेतदादिसृष्टावात्मन्वज्जीवात्मोपेतं दशहोतृमन्त्राभिमानिदेवतानां शरीरमसृजत । तत्सृष्ट्वा चानन्तरमनेन जीवात्मना संपद्येय संगतो भवेयमिति विचार्य तं जीवात्मानमुद्दिश्याऽऽत्मन्निति संबोध्याऽऽमन्त्रितवान् । द्विरुक्तिर्बह्वर्था बहुकृत्वाऽऽहूतवानित्यर्थः । एवं ब्रह्मण्याह्वयति सति दशमे पर्याये समाहूतो जीवात्मा प्रत्यशृणोत् । भो इति प्रत्युत्तरं दत्तवान् । तावता तस्य दशहोतेति नाम संपन्नम् । सोऽयं वस्तुतो दशहूत एव । एतमेव वास्तवं नामविशेषमाच्छाद्यापरेण वर्णान्तरव्यवहृतेन दशहोतेति नाम्ना व्यवहरन्ति । यस्माद्देवाः पूज्याः पित्राचार्यादयः स्वकीयं वास्तवं नाम परित्यज्य हे तात ह आचार्येति परोक्षेणाऽऽह्वानं कुर्वन्ति । तस्माद्युक्तः परोक्षनामव्यवहारः ।

अथ सप्तहोत्रादिनामप्रवृत्तिं दर्शयति–

आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै सप्तमꣳ हूतः प्रत्यशृणोत् । स सप्तहूतोऽभवत् । सप्तहूतो ह वै नामैषः । तं वा एतꣳ सप्तहूतꣳ सन्तम् । सप्तहोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ।

आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै षष्ठꣳ हूतः प्रत्यशृणोत् । स षड्ढूतोऽभवत् (२)। षड्ढूतो ह वै नामैषः । तं वा एतꣳ षड्ढूतꣳ सन्तम् । षड्ढोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै पञ्चमꣳ हूतः प्रत्यशृणोत् । स पञ्चहूतोऽभवत् । पञ्चहूतो ह वै नामैषः । तं वा एतं पञ्चहूतꣳ सन्तम् । पञ्चहोतेत्याचक्षते परोक्षेण (३) । परोक्षप्रिया इव हि देवाः । आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै चतुर्थꣳ हूतः प्रत्यशृणोत् । स चतुर्हूतोऽभवत् । चतुर्हूतो ह वै नामैषः । तं वा एतं चतुर्हूतꣳ सन्तम् । चतुर्होतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः, इति ।

सप्तहोतृषड्ढोतृपञ्चहोतृचतुर्होतृनामनिर्वचनवाक्यानि दशहोतृवाक्यवद्व्याख्येयानि ।

अथ चतुर्होतृमन्त्राभिमानिनं पुरुषं विशेषतः प्रशंसति—

तमब्रवीत् । त्वं वै मे नेदिष्ठꣳ हूतः प्रत्यश्रौषीः । त्वयैनानाख्यातार इति । तस्मान्नु हैनाꣳश्चतुर्होतार इत्याचक्षते । तस्माच्छुश्रूषुः पुत्राणाꣳ हृद्यतमः । नेदिष्ठो हृद्यतमः । नेदि-

ष्ठो ब्रह्मणो भवति । य एवं वेद (४), इति ।

देवाः षड्ढूतोऽभवत्पञ्चहोतेत्याचक्षते परोक्षेणाश्रीवीः षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयाऽध्याय एकादशोऽनुवाकः ॥ ११ ॥

---

ब्रह्मवादिनः किं दक्षिणा यो वा अविद्वांस्तस्य वै ब्रह्मवादिनो यद्दर्श-होतारः प्रजापतिर्व्यस्तं प्रजापतिः पुरुषं प्रजापतिरकामयत स तपः सोऽन्त-र्वान्ब्रह्मवादिनो यो वा इमं विद्यात्प्रजापतिः सोमं राजानं ब्रह्माऽऽत्मन्वदे-कादश ॥ ११ ॥

ब्रह्मवादिनस्तस्य वा अग्नेर्यद्वा इदं किंच प्रजापतिरकामयत सोऽन्तर्वान्य एवास्य दक्षिणतः पञ्चाशत् ॥ ५० ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीयोऽध्यायः ॥ ३ ॥

---

चतुर्होतृमन्त्राभिमानिनं देवं प्रजापतिरेवमब्रवीत् । त्वमेवैको मया समाहूतः सन्मदीयं वाक्यं यं नेदिष्ठवतिसमीपं यथा भवति तथा श्रुत्वा प्रत्युत्तरं दत्त-वान् । चतुर्थमामन्त्रणं त्वया श्रुतमितरे न तथा सहसा श्रुतवन्तः । तस्मा-त्त्वयैव सर्वानेतान्हि जनाः कथयिष्यन्ति । एते चतुर्होतारं इत्येवं त्वन्ना-म्नैव व्यवहारो भविष्यतीत्यर्थः । यस्मादेवं प्रजापतिना वरो दत्तस्तस्मादे-तान्दशहोत्रादीन्सर्वानपि चतुर्होतार इत्येव वचनं वैदिका आचक्षते । यस्मादेवं शीघ्रं वाक्यं श्रुतवतश्चतुर्होतुः प्रजापतेर्वरलाभस्तस्माल्लोकेऽपि पुत्राणां मध्ये यः पितुर्वाक्यमादरेण श्रोतुमिच्छति स एव पितुर्हृद्यतमोऽ-त्यन्तं प्रियः । योऽतिप्रियः स नेदिष्ठोऽतिसमीपवर्ती भवति । यः पुमानेवं चतुर्होतृब्रह्मसमीपवर्तित्वं वेद स स्वयमपि ब्रह्मणोऽतिसमीपवर्ती भवति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

अस्य प्रपाठकस्यानुवाकार्थसंग्रहः—

होतृब्राह्मणशेषेऽस्मिंस्तृतीये हि प्रपाठके ।
आद्यानुवाके सर्वेषां चतुर्होतृत्वमीरितम् ॥
नैमित्तिकं द्वितीये स्यात्तृतीये वपनं भवेत् ।
विद्वत्प्रतिग्रहस्तुर्येऽन्यस्मिन्प्रश्नोत्तरद्वयम् ॥
ऋत्विग्विभागः षष्ठेऽस्मिन्नग्निहोत्रं तथोत्तरे ।
अष्टमे सृष्टिरन्यस्मिन्वायूपासनमीरितम् ॥
वश्यप्रयोगो दशमे दशहोत्रादिनामसु ।
निरुक्तिरन्तिमे प्रोक्ता तृतीयोऽयं प्रपाठकः ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयः प्रपाठकः समाप्तः ॥ ३ ॥

---

( मूलक्रमेण—अष्ट० २ अध्या० ३ ( ११ ) अनु० ११ (१११)।
भाष्यक्रमेण—का० २ प्रपा० ३ ( ११ ) अनु० ११ ( १११ ) ।

---

अथ द्वितीयकाण्डे चतुर्थप्रपाठकारम्भः ।

---

तत्र प्रथमोऽनुवाकः ।

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
होतृब्राह्मणशेषो यः स तृतीये समापितः ।
चतुर्थ उपहोमानां पूर्वभागोऽभिधीयते ॥

अत्र भरद्वाजेनोक्तम्—उपहोमा अच्छिद्रकाण्डमिति लिङ्गविनियोज्यानि । ततः श्रौते स्मार्ते वा यत्र मन्त्रापेक्षा तत्र तदुचितं लिङ्गं पर्यालोच्य स मन्त्रो बुद्धिमद्भिर्विनियोजनीयः । यत्र विशेषविनियोगो नोपलभ्यते तत्र लिङ्गानुसारात्तद्देवतायुक्ते कर्मणि समाख्याबलादुपहोमार्था मन्त्राः । समाख्याऽपि श्रुतिलिङ्गादिवद्विनियोगेषु प्रमाणम् । तत्र प्रथमानुवाके प्रथमामृचमाह—

हरिः ॐ ।

जुष्टो दमूना अतिथिर्दुरोणे । इमं नो यज्ञमुपयाहि विद्वान् । विश्वा अग्नेऽभियुजो विहत्य । शत्रूयतामाभरा भोजनानि, इति ।

हेऽग्ने त्वं जुष्टो देवमनुष्यैः सेवितः । दमूनाः शत्रूणां दमयिता । दुरोणे यजमानगृहेऽतिथिसदृशो विद्वान्सर्वज्ञस्त्वं नोऽस्मदीयं यज्ञमिममुपयाहि । शत्रूयतामस्मासु शात्रवमिच्छतां पुरुषाणां विश्वा अभियुजः सर्वानभियोगान्विहत्य विनाश्य भोजनानि भोक्तुं योग्यानि द्रव्याण्याभरास्मान्प्रत्याहर । अस्या ऋचो विनियोगो बौधायनगृह्येऽभिहितः—"अग्निमात्काष्ठाद्वाग्निं मथित्वा श्रोत्रियागाराद्वाऽऽहृत्य व्याहृतिभिर्नियुज्योपसमाधायोपतिष्ठते जुष्टो दमूनाः" इति ।

अथ द्वितीयामृचमाह—

अग्ने शर्ध महते सौभगाय । तव द्युम्नान्युत्तमानि सन्तु । सं जास्पत्यꣳ सुयममाकृणुष्व । शत्रूयतामभितिष्ठा महाꣳसि, इति ।

हेऽग्नेऽस्माकं महते सौभाग्याय शर्ध, उत्सहस्व । तव संबन्धिन्युत्तमानि मणिमुक्तादीन्यस्माकं सन्तु । जास्पत्यं जायापतिभावं सुयमं सुष्ठु नियतं समाकृणुष्व सम्यक्संपादय । शत्रूयतां शात्रवमिच्छतां पुरुषाणां महांसि तेजांस्यभितिष्ठाभित आक्रमस्व । अस्य मन्त्रस्य वैमृधेष्टौ स्विष्टकृतः पुरोनुवाक्यारूपेण विनियोगमापस्तम्बो दर्शयति—" शर्धवत्यौ संयाज्ये अग्ने शर्ध महते सौभगाय " इति ।

अथ तृतीयामाह—

अग्ने यो नोऽभितो जनः । वृको वारो जिघाꣳसति (१) । ताꣳस्त्वं वृत्रहञ्जहि । वस्वस्मभ्यमाभर, इति ।

हेऽग्ने यः शत्रुजनो वृको वृकसदृश आरण्यश्वा यथोपद्रवकारी तथोपद्रवकारीत्यर्थः । अत एव वारोऽस्मद्व्यवहारस्य निवारकः सन्सर्वतोऽस्माञ्जिघांसति हन्तुमिच्छति । हे वृत्रहन्वैरिघातिन्नग्ने तान्वृकसदृशाञ्जहि मारय । अस्मभ्यं तु वसु धनमाभर संपादय ।

अथ चतुर्थीमाह—

अग्ने यो नोऽभिदासति । समानो यश्च निष्ट्यः ।

इध्मस्येव प्रक्षायतः । मा तस्योच्छेषि किंचन, इति ।

हेऽग्ने यः प्रबलः शत्रुर्नोऽस्मानभिदासति हिनस्ति । यश्चान्यः समानबलो निष्ट्यः शत्रुत्वेनावस्थितो हिनस्ति । तस्य द्विविधस्य शत्रोः संबन्धि द्रव्यं किंचन किमपि नोच्छेष्यवशिष्टं मा कुरु । अत्र दृष्टान्तः—इध्मस्येव प्रक्षायतः । यथाऽग्नौ प्रक्षिप्तस्य प्रदाहेन क्षीयमाणस्येध्मस्य न कोऽप्यंशोऽवशिष्यते तद्वत् । ता एताश्चतस्र आग्नेयकर्मणि विनियोज्याः ।

अथ पञ्चमीमाह—

त्वमिन्द्राभिभूरसि । देवो विज्ञातवीर्यः । वृत्रहा पुरुचेतनः, इति ।

हे इन्द्र त्वमभिभूः शत्रूणामभिभविताऽसि । कीदृशस्त्वम् । देवो द्योतमानो विज्ञातवीर्यः प्रख्यातशौर्यो वृत्रहा वृत्राख्यस्यासुरस्य हन्ता पुरुचेतनो महाप्रज्ञः ।

अथ षष्ठीमाह—

अप प्राच इन्द्र विश्वाꣳ अमित्रान् (२) । अपापाचो अभिभूते नुदस्व । अपोदीचो अपशूराधराच उरौ । यथा तव शर्मन्मदेम, इति ।

हे इन्द्र प्राचः पूर्वदिग्वर्तिनो विश्वान्सर्वानमित्राञ्शत्रूनपनुदस्व निराकुरु । हेऽभिभूतेऽभिभवशक्तियुक्तापाचः पश्चिमदिग्वर्तिनः शत्रूनपनुदस्व । उदीच उत्तरदिग्वर्तिनोऽप्यपनुदस्व । हे शूराधराचोऽधोदिग्वर्तिनस्तदुपलक्षितदक्षिणदिग्वर्तिनश्चापनुदस्व । तव पितृस्थानीयस्योरावुरुसङ्के पुत्रस्थानीया वयं शर्मन्सुखकर्मणि सुखे प्राप्ते सति मदेम हृष्येम । शत्रुनिराकरणेन तथा कुरु ।

अथ सप्तमीमाह—

तमिन्द्रं वाजयामसि । महे वृत्राय हन्तवे । स वृषा वृषभोऽभुवत्, इति ।

महे वृत्राय महतः शत्रोर्हन्तवे हननाय तं प्रसिद्धमिन्द्रं वाजयामस्यर्चयामः । स इन्द्रो वृषा कामानां वर्षिता सन्वृषभो लौकिकवृषभ इवाप्रधृष्योऽभुवद्भवतु ।

अथाष्टमीमाह—

युजे रथं गवेषणꣳ हरिभ्याम् । उप ब्रह्माणि जुजुषाणमस्थुः । विबाधिष्टास्य रोदसी महित्वा । इन्द्रो वृत्राण्यप्रतीजघन्वान् (३), इति ।

गवेषणं सोमयागान्वेषणपरमिन्द्रस्य रथं हरिभ्यां तदीयाभ्यामश्वाभ्यां युजे योजयामि । ब्रह्माणि परिवृढानि मदीयानि स्तोत्राणि जुजुषाणं प्रीतियुक्तमिन्द्रमुपास्थुरुपयाप्तानि भवन्तु । अस्य संबन्धी रथो महित्वा स्वकीयेन महत्त्वेन रोदसी द्यावापृथिव्यौ विबाधिष्ट विशेषेण बाधितवान् । अत एवान्यत्राऽऽम्नातम्—" अन्तान्दिवो बाधते वर्तनिभ्याम् " इति । सोऽयमिन्द्रो वृत्राणि शत्रून्प्रति यथा प्रतिपक्षयुक्ता न भवन्ति तथा जघन्वान्हतवान् । " त्वमिन्द्राभिभूः " इत्यादयश्चत्वारो मन्त्रा ऐन्द्रे कर्मणि विनियोज्याः । " युजे रथम् " इति मन्त्रस्तु संहितायामैन्द्रमिति विहिते पशौ वपायां याज्यात्वेनापि विनियुक्तः । अत एव सूक्तेऽप्याम्नातः—" इन्द्रं नरो युजे रथम् " इति ।

अथ नवमीमाह—

हव्यवाहमभिमातिषाहम् । रक्षोहणं पृतनासु जिष्णुम् । ज्योतिष्मन्तं दीद्यतं पुरंधिम् । अग्निꣳ स्विष्टकृतमाहुवेम, इति ।

अग्निं देवमाहुवेम कर्मण्याह्वयाम । कीदृशमग्निम् । हव्यवाहं हविषां वोढारमभिमातिषाहं पाप्मनोऽभिभवितारं रक्षोहणं रक्षसां हन्तारं पृतनासु जिष्णुं परकीयसेनासु जयशीलं ज्योतिष्मन्तं रश्मिरूपेण ज्योतिषा युक्तं दीद्यन्तं स्वशरीरेऽपि दीप्यमानं पुरंधिं पुरुषाहवनीयायतनेष्ववस्थितं स्विष्टकृतं वैकल्यपरिहारेण स्विष्टत्वसंपादकम् ।

---

१ क. वर्षयिता ।

अथ दशमीमाह—

स्विष्टमग्ने अभि तत्पृणाहि । विश्वा देव पृतना अभिष्य । उरुं नः पन्थां प्रदिशन्विभाहि । ज्योतिष्मद्धेह्यजरं न आयुः, इति ।

हेऽग्ने स्विष्टं वैकल्यराहित्येन सुष्ठु प्रक्षिप्तं तद्धविरभिपृणाह्यभितः पालय पूरय वा । स्विष्टत्वसंपादनमेव पालनम् । हे देव विश्वाः पृतनाः सर्वाः शत्रुसेना अभिष्य सर्वतो निराकुरु । नोऽस्माकमुरुं पन्थां विस्तीर्णं मार्गं प्रदिशन्नुपदिशन्विभाहि विशेषेण दीप्यस्व । ज्योतिष्मदुज्ज्वलमजरं जरारहितमायुर्नोऽस्मभ्यं धेहि संपादय । अस्य मन्त्रद्वयस्य " अग्नये तन्तुमतेऽष्टाकपालं निर्वपेत् " इत्यस्यामिष्टौ स्विष्टकृतः संयाज्यारूपेण विनियोग आपस्तम्बेनोक्तः । बौधायनस्तु नक्षत्रेष्टिषु विनियोगमुदाजहार—" स्विष्टवत्यौ संयाज्ये हव्यवाहः स्विष्टम् " इति । अत एव तदीययाज्यानुवाक्याकाण्डे हव्यवाहः स्विष्टमिति प्रतीकद्वयमाम्नातम् । तथा दिवश्येनीयेष्वैधृतुषु चेष्टिषु तत्प्रतीकद्वयमाम्नातम् ।

अथैकादशीमाह—

त्वामग्ने हविष्मन्तः । देवं मर्तास ईडते (४) । मन्ये त्वा जातवेदसम् । स हव्या वक्ष्यानुषक्, इति ।

हेऽग्ने त्वां देवं हविष्मन्तो हविर्युक्ता मर्तासो मनुष्या ईडते स्तुवन्ति । अहं तु त्वां जातवेदसमुत्पन्नसर्वजगदभिज्ञं मन्ये । स त्वं हव्या हवींष्यानुषगनुक्रमेण देवेषु यथा सक्तानि भवन्ति तथा वक्षि वह । अस्य मन्त्रस्य काम्येष्टिषु विकल्पितसंयाज्यारूपेण विनियोगमापस्तम्ब उदाजहार— " अनुष्टुभौ संयाज्ये त्वां चित्रश्रवस्तमस्त्वामग्ने हविष्मन्तः " इति ।

अथ द्वादशीमाह—

विश्वानि नो दुर्गहा जातवेदः । सिन्धुं न नावा दुरिताऽतिपर्षि । अग्ने अत्रिवन्मनसा गृणानः । अस्माकं बोध्यविता तनूनाम्, इति ।

हे जातवेदो नोऽस्मदीयानि दुर्गहा दुष्परिहराणि विश्वानि सर्वाणि दुरितानि पापान्यतिपर्ष्यतीत्य पालय । तत्र दृष्टान्तः—नावा सिंधुं न, यथा लोके नदीं नावाऽतिलङ्घयति तद्वत् । हेऽग्ने, अत्रिवदत्रिणा महर्षिणा चतूरात्रे कर्मणि यथा स्तूयसे तथाऽस्माभिर्मनसा गृणानः स्तूयमानोऽस्माकं तनूनामविता रक्षिता भूत्वा बोधयस्मद्भक्तिं बुध्यस्व । अयं मन्त्रः काम्याग्नेये कर्मणि विनियोक्तव्यः ।

अथ त्रयोदशीमाह—

पूषा गा अन्वेतु नः । पूषा रक्षत्वर्वतः । पूषा वाजꣳ सनोतु नः, इति ।

पूषाख्यो देवो नोऽस्मदीया गा अन्वेतु रक्षणार्थमनुगच्छतु । तथाऽर्वतोऽस्मदीयानश्वान्पूषा रक्षतु । तथा पूषा देवो नोऽस्मभ्यं वाजमन्नं सनोतु ददातु । एतस्य मन्त्रस्य वृषोत्सर्गे विनियोगं बौधायन उदाजहार—“ पक्वाज्जुहोति पूषा गा अन्वेतु न इति पुरोनुवाक्यामनूच्य ” इति ।

अथ चतुर्दशीमाह—

पूषेमा आशा अनुवेद सर्वाः (५) । सो अस्माꣳ अभयतमेन नेषत् । स्वस्तिदा अघृणिः सर्ववीरः । अप्रयुच्छन्पुर एतु प्रजानन्, इति ।

पूषा देव इमाः सर्वा आशा दिशोऽनुवेद क्रमेण जानाति स पूषा देवोऽस्मानभयतमेनात्यन्तं भयरहितेन मार्गेण नेषन्नयतु । सोऽयं स्वस्तिदा भद्रस्य दाताऽघृणिरसोढव्यदीप्तिः । न ह्येतस्य दीप्तिः केनापि विरोधिना सोढुं शक्यते । सर्ववीरः सर्वैर्भृत्यैर्युक्तोऽप्रयुच्छन्प्रमादमकुर्वन्प्रजानन्नस्मदभिप्रायं प्रकर्षेण जानन्पुर एतु पुरतो गच्छतु । अयं मन्त्रः “ पौष्णꣳ श्याममालभेत ” इत्यस्य पशोः पुरोडाशस्य याज्यारूपेण विनियुक्तः । तथा च सूक्ते तत्प्रतीकमाम्नातम्—“ शुक्रं ते अन्यत्पूषेमा आशाः ” इति ।

अथ पञ्चदशीमाह—

त्वमग्ने सप्रथा असि । जुष्टो होता वरेण्यः ।

त्वया॑ य॒ज्ञं वित॑न्वते, इति ।

हेऽग्ने सप्रथाः ख्यातियुक्तो जुष्टो यजमानानां प्रियो होता देवानामाह्वयिता वरेण्यो वरणीयश्चासि । त्वया त्वदनुग्रहेण यज्ञं वितन्वते विस्तारयन्ति । एतस्य मन्त्रस्य प्रायश्चित्तविशेषे विनियोगो द्रष्टव्यः । तथा च ब्राह्मणे— "यस्यानो वा रथो वाऽन्तराऽग्नी याति" इत्युपक्रम्यान्ते मन्त्रोऽयमुदाहृतः—"त्वमग्ने सप्रथा असीत्याह" इति ।

अथ षोडशीमाह—

अ॒ग्नी रक्षा॑ꣳसि सेधति । शु॒क्रशो॑चि॒रम॑र्त्यः । शुचि॑ः पाव॒क ईड्य॑ः, इति ।

अयमग्नी रक्षांसि प्रतिषेधति । कीदृशोऽग्निः । शुक्रशोचिर्निर्मलदीप्तिरमर्त्यो मरणरहितः शुचिः शुद्धः पावकोऽन्येषामपि शोधक ईड्यः स्तुत्यः । एतस्य विनियोगमापस्तम्बोऽग्नी रक्षांसीत्युपक्रम्य दर्शयति—"शुचिः पावक ईड्य इत्यरणी अभिमन्त्र्य" इति ।

अथ सप्तदशीमाह—

अग्ने॒ रक्षा॑ णो॒ अꣳह॑सः (६) । प्रति॑ ष्म दे॒व रीष॑तः । तपि॑ष्ठैर॒जरो॑ दह, इति ।

हेऽग्ने त्वं नोऽस्मानंहसः पापाद्रक्ष । हे देव त्वमजरः सन्रीषतो हिंसकाञ्शत्रूँस्तपिष्ठैरतिशयेन तापकैर्ज्वालाविशेषैः प्रतिदहस्व (स्म) प्रत्येकं सर्वथा दह ।

अथाष्टादशीमाह—

अग्ने॒ हꣳसि॒न्य॑त्रिणम् । दीद्य॒न्मर्त्ये॒ष्वा । स्वे क्षये॑ शुचिव्रत, इति ।

हेऽग्ने त्वमत्रिणं पापपुरुषं निहंसि नितरां जहि । हे शुचिव्रत शुद्धस्य कर्मणो निष्पादक स्वे क्षये स्वकीये यज्ञगृहे मर्त्येष्वा सर्वेषु मनुष्येष्वपि दीद्यत्प्रकाशमानास्तिष्ठ । एतयोर्मन्त्रयोः पूर्वेण मन्त्रेण सह विनियोगं बौधायन उदाजहार—"यदि मथ्यमानो न जायेत राक्षोघ्नीरनुब्रूयात्कृणुष्व पाज इति पञ्च, अग्नी रक्षांसि सेधतीति तिस्रः" इति ।

अथैकोनविंशीमाह--

आ वा॑त वाहि भेषजम् । वि वा॑त वाहि यद्र॑पः ।
त्वꣳ हि वि॒श्वभे॑षजः । दे॒वानां॑ दू॒त ईय॑से, इति ।

हे वात वायो भेषजं यथा भवति तथा आ वाह्यस्मान्प्रति सर्वतो वातं कुरु । हे वात यद्रपः पापमस्ति तद्विवाहि विश्लिष्य गच्छ । यस्मात्त्वं विश्वभेषजो विश्वस्य चिकित्सको देवानां दूतश्च सन्नीयसे गच्छसि ।

अथ विंशीमाह—

द्वावि॒मौ वातौ॑ वातः (७) । आ सिन्धो॒रा प॑राव॒तः । दक्षं॑ मे अ॒न्य आ॒वा॒तु । परा॒ऽन्यो वा॑तु॒ यद्र॑पः, इति ।

इमौ लोके दृश्यमानौ द्वौ वातावासिन्धोः समुद्रसहिते प्रदेश आपरावतो दूरवर्तिलोकयुक्ते देशे वातः संचरतः । शान्तो वायुरेकस्तीव्रोऽपरस्तयोर्मध्य एकः शान्तो मे मम दक्षमावातु सुखं संपादयतु । अन्यस्तीव्रो वायुर्यद्रपो मम यत्पापमस्ति तत्पराबातु विनाशयतु ।

अथैकविंशीमाह—

य॒द॒दो वा॑त ते गृ॒हे । अ॒मृत॑स्य नि॒धिर्हि॒तः । ततो॑ नो देहि जी॒वसे॑ । ततो॑ नो धेहि भे॒षजम् । ततो॑ नो॒ मह॒ आव॑ह, इति ।

हे वात ते गृहे यददो योऽसावमृतस्य निधिर्हितः स्थापितस्ततो निधेः सकाशान्नोऽस्माकं जीवसे जीवनाय देहि कियदप्यमृतं प्रयच्छ । ततोऽमृतान्नोऽस्माकं भेषजं धेहि संपादय । ततस्तस्माद्भेषजान्नोऽस्माकं मह आवह तेजः संपादय ।

अथ द्वाविंशीमाह—

वात॒ आवा॑तु भे॒षजम् । शं॒भूर्म॑यो॒भूर्नो॑ हृ॒दे (८) ।

प्र णु आयूंषि तारिषत, इति ।

अयं वातो भेषजं यथा भवति तथाऽऽवातु। नोऽस्माकं हृदे मनसि शंभूर-निष्टशान्ति भावयन्मयोभूः सुखं च भावयन्वर्ततां। नोऽस्माकमायूंषि चिर-कालजीवनानि प्रतारिषत्प्रकर्षेण वर्धयतु । " आ वात वाहि " इत्यादिकं मन्त्रचतुष्टयं कस्मिंश्चिद्वायव्ये कर्मणि विनियोज्यम् ।

अथ त्रयोविंशीमाह—

त्वमग्ने अयासि । अयासन्मनसा हितः । अयास-न्हव्यमूहिषे । अया नो धेहि भेषजम्, इति ।

हेऽग्ने त्वमयासि सर्वगतोऽसि। अयासन्सर्वगत एव सन्यजमानस्य मनसा क्वचित्प्रदेशविशेष आहितः । अयासन्स्वभावतः सर्वगत एव सन्हव्यमूहिषे काचित्क इव देशान्तरे हविर्वहसि। अयाः सर्वगतः सन्नोऽस्माकं भेषजं धेहि संपादय । आपस्तम्बः—" जुह्वा स्रुवेण वा सर्वप्रायश्चित्तानि जुहोति " इति विधाय होममन्त्रेषु—" त्वमग्ने अयासि " इत्येतमपि पठितवान् ।

चतुर्विंशीमाह—

इष्टो अग्निराहुतः । स्वाहाकृतः पिपर्तु नः । स्वगा देवेभ्य इदं नमः, इति ।

अयमग्निरिष्टो दर्शपूर्णमासादियागैः पूजित आहुतोऽग्निहोत्रादिहोमैस्तर्पितः स्वाहाकृतोऽग्निमग्नौ स्वाहेति प्रणयनकाले स्वाहाकारेण प्रतिष्ठापितस्तादृशो नोऽस्मान्पिपर्तु पालयतु। देवेभ्यो देवानामर्थ(र्था)येदं हविः स्वगा स्वगतं कृतं देवेभ्यो दातुं त्वया स्वात्मनि स्थापितमित्यर्थः। तादृशाय तुभ्यं नमोऽस्तु। अयं मन्त्र आग्नेयकर्मणि विनियोज्यः ।

अथ पञ्चविंशीमाह—

कामो भूतस्य भव्यस्य । सम्राडेको विराजति (१)।
स इदं प्रतिपप्रथे । ऋतूनुत्सृजते वशी, इति ।

योऽयं कामाभिमानी देवः सोऽयं भूतस्य भव्यस्य च सम्राट् समीचीनो राजा भूत्वा स्वयमेको विराजति विशेषेण दीप्यते। स च काम इदं सर्वं जगत्प्रतिलक्ष्य पप्रथे प्रथितोऽभूत्। वशी स्ववशः सन्नृतून्वसन्तादीनुत्सृजत उत्कर्षेण निर्मिमीते।

अथ षड्विंशीमाह—

कामस्तदग्रे समवर्तताधि। मनसो रेतः प्रथमं यदासीत्। सतो बन्धुमसति निरविन्दन्। हृदि प्रतीष्या कवयो मनीषा, इति।

ईश्वरकामस्तुतिरियम्। "तस्यान्तर्मनसि कामः समवर्तत, इदं सृजेयम्" इति हि ब्राह्मणम्। प्रजापतेः कामस्तदानीमग्रे जगत्सृष्टिसमये समवर्तत प्रादुरभूदिदं सर्वं सृजेयमिति। प्रजापतेर्मनसः प्रथमं यद्रेत आसीत्कामरूपं तत्सतो जगतः कार्यभूतस्य बन्धुं निदानभूतमसति कारणभूते प्रजापतौ स्थितं कवयो निरविन्दन्निष्कृष्यावविन्दन्। केनोपायेनेति तदुच्यते। हृदि प्रतीष्या कवयः स्वे स्वे हृदये मनीषया योगसंस्कृतया बुद्ध्या प्रतीष्या जगत्कारणमिति निश्चितवन्तः। प्रजापतेः काम एव सृष्टिकारणमिति कारणमव्यक्तत्वाद्सदित्युच्यते। कार्यं तु व्यक्तत्वात्सदित्युच्यते। एतच्च मन्त्रद्वयं दिवः श्येनीष्टिषु द्वितीयस्यामिष्टौ याज्यानुवाक्यारूपेण विनियोजनीयम्। अत एव तत्र प्रतीकद्वयमाम्नातम्—"कामो भूतस्य" "कामस्तदग्रे" इति।

अथ सप्तविंशीमाह—

त्वया मन्यो सरथमारुजन्तः। हर्षमाणासो धृषता मरुत्वः। तिग्मेषव आयुधा सꣳशिशानाः। उप प्रयन्ति नरो अग्निरूपाः (१०), इति।

मरुच्छब्देन वेगो लक्ष्यते। हे मरुत्वो वेगयुक्त मन्यो क्रोध त्वया प्रेरिता नरो मनुष्या उपप्रयन्ति युद्धसमीपं प्राप्नुवन्ति। कीदृशा नराः। सरथमारुजन्तो रथसहितं शत्रुं सर्वतो हिंसन्तो हर्षमाणासः शत्रुवधेन हर्ष-

१ क. °दिव्यश्येनी°। ग. दिवश्ये°।

युक्ता धृषता भीत्यभावेन धार्ष्ट्यर्युक्ता स्तिग्मेषवस्तीक्ष्णबाणयुक्ता आयुधा संशिशाना आयुधानि सम्यक्तीक्ष्णीकुर्वन्तोऽग्निरूपा अग्निवदुग्ररूपाः ।

अथाष्टाविंशीमाह—

मन्युर्भगो मन्युरेवाऽऽस देवः । मन्युर्होता वरुणो विश्ववेदाः । मन्युं विश ईडते देवयन्तीः । पाहि नो मन्यो तपसा श्रमेण, इति ।

योऽयं मन्युः क्रोधाभिमानी देवः सोऽयं भगादिरूपेण प्रशस्यते । यो भगो देवः सोऽपि मन्युस्वरूपः । यश्चान्यो देव इन्द्रादिः सोऽपि मन्युरेवाऽऽस बभूव । होता देवानामाह्वाताऽग्निरपि मन्युस्वरूपः । विश्ववेदाः सर्वज्ञो वरुणोऽपि मन्युस्वरूपः । देवयन्तीर्देवान्कामयमाना विशः प्रजा मन्युमीडते स्तुवन्ति । हे मन्यो श्रमेण श्रमहेतुना तपसा युक्तानस्मान्पाहि रक्ष । क्रोधेनास्माकं तपोनाशो मा भूदित्यर्थः । भगादीनां मन्युरूपत्वं क्रोधाधीनप्रवृत्तियुक्तत्वादवगन्तव्यम् । एतच्च मन्त्रद्वयं मन्युदेवताके कर्मणि विनियोजनीयम् । तादृशं कर्म नरमेधे श्रूयते—" मन्यवेऽयस्तापम् " इति । अयस्तापं लोह(हा)कारं पुरुषं मन्युदेवतार्थमालभेतेत्यर्थः ।

अथैकोनत्रिंशीमाह—

त्वमग्ने व्रतभृच्छुचिः । देवाꣳ आसादया इह । अग्ने हव्याय वोढवे, इति ।

हेऽग्ने त्वं व्रतभृदनुष्ठीयमानकर्मपोषकः शुचिः शुद्धः । अत एव देवानिह कर्मण्यासादयाऽऽनीय स्थापय । हेऽग्ने हव्याय वोढवे हविषां वहनाय देवानां सदनं कुरु ।

अथ त्रिंशीमाह—

व्रता नु बिभ्रद्व्रतपा अदाभ्यः । यजानो देवाꣳ अजरः सुवीरः । दधद्रत्नानि सुविदानो अग्ने । गोपाय नो जीवसे जातवेदः ( ११ ), इति ।

जिघा꣡ꣳसत्यमित्रां जघन्वानीडते सर्वा अꣳहसो वातो हृदे राजत्य-
ग्निरूपाः सुविदानो अग्न एकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके चतुर्था-
ध्याये प्रथमोऽनुवाकः ॥ १ ॥

जातं जगद्वेत्तीति जातवेदः । तादृश हेऽग्ने जीवसे जीवनाय गोपाय । कीदृशस्त्वम् । व्रता व्रतानि कर्माणि तु विभ्रद्वश्यं धारयन्व्रतपाः कर्मणः पालकोऽदाभ्यः केनाप्यतिरस्कार्यो देवान्यजानः पूजयमानोऽजरो जरारहितः सुवीरः शोभनापत्यप्रदो रत्नानि मणिमुक्तादीनि दधद्धारयन्सुविदानः सम्यगभिज्ञः । एतच्च मन्त्रद्वयमौपवसथ्येऽहन्यश्रुपातमायाश्विलेष्टौ याज्यानुवाक्यारूपेणाऽऽपस्तम्बो विनियुक्तवान्—" अग्नये व्रतभृदष्टाकपालं यद्यार्तिजमश्रु कुर्यात्त्वमग्ने व्रतभृच्छुचिः " इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-
ब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

अथ चतुर्थप्रपाठके द्वितीयोऽनुवाकः ।

अथ द्वितीयानुवाके प्रथमामृचमाह—

चक्षुषो हेते मनसो हेते । वाचो हेते ब्रह्मणो हेते ।
यो माऽघायुरभिदासति । तमग्ने मेन्याऽमेनिं कृणु, इति ।

हेऽग्ने यो मामभिचरति तस्य शत्रोश्चक्षुषो मनसो वाचश्च ब्रह्मणः प्राणस्य हेतिरायुधं त्वमसि । हे हेते तादृशो यः शत्रुरघायुरघमनिष्टं कर्तुमिच्छन्मामभिदासति हिनस्ति तं शत्रुं मेन्या त्वदीयेन क्रोधेनामेनिं कृणु क्रोधरहितं कुरु । मेनिशब्दः क्रोधवाची । तथा च वाजसनेयिनः कस्यचिन्मन्त्रस्य ब्राह्मणे समामनन्ति—" अमेन्यस्मासु ब्रह्माणि धारयेत्यक्रुध्यन्नस्मासु ब्रह्माणि धारयेत्येवैतदाह " इति ।

१ ग. 'स्माह्मा' ।

अथ द्वितीयामाह—

यो मा चक्षुषा यो मनसा । यो वाचा ब्रह्मणाऽ-
घायुरभिदासति । तयाऽग्ने त्वं मेन्या । अमुममेनिं
कृणु, इति ।

यो मां स्वकीयैश्चक्षुरादिभिरघायुः पापमिच्छन्हिंसन्स्यात्तं शत्रुं तया मेन्या त्वदीयेन क्रोधेन क्रोधरहितं कुरु ।

अथ तृतीयामाह—

यत्किंचासौ मनसा यच्च वाचा । यज्ञैर्जुहोति
यजुषा हविर्भिः ( १ ) । तन्मृत्युर्निर्ऋत्या संवि-
दानः । पुरा दिष्टादाहुतीरस्य हन्तु, इति ।

असौ मच्छत्रुर्यत्किंच मनसा मद्विषये दुरितं करोति यच्च वाचा यज्ञैर्हविर्भिश्च यजुषा मच्छासनार्थं जुहोति तत्सर्वं निर्ऋत्या संविदान ऐकमत्यं गतो मृत्युर्हन्तु नाशयतु । पुरा दिष्टात् । दिष्टं दैवम् । शत्रोरनुकूलस्य दैवस्य प्रवृत्तेः पुराऽस्य शत्रोराहुतिं हन्तु नाशयतु ।

अथ चतुर्थीमाह—

यातुधाना निर्ऋतिरादु रक्षः । ते अस्य घ्नन्त्वनृ-
तेन सत्यम् । इन्द्रेषिता आज्यमस्य मथ्नन्तु ।
मा तत्समृद्धि यदसौ करोति, इति ।

यातुधानाः क्रूरा भूतविशेषा या च निर्ऋतिः क्रूरदेवताऽऽद्वनन्तरं च यद्रक्षो राक्षसजातिस्ते सर्वेऽस्य शत्रोः सत्यमवैतथ्यं कृतं कर्मानृतेन दुष्टेन व्यापारेण हविरुपघातेन घ्नन्तु । तदेव पुनराह—इन्द्रेषिता यातुधानादयस्तस्य शत्रोराज्यं हविर्भूतं मथ्नन्तु केशकीटाद्यशुचिमिश्रणेन दूषयन्तु यदसौ शत्रुः करोति तत्कर्म मा समृद्धि समृद्धं मा भवतु ।

अथ पञ्चमीमाह—

हन्मि तेऽहं कृतं हविः । यो मे घोरमचीकृतः ।

अपाञ्चौ त उभौ बाहू । अपनह्याम्यास्यम् (२), इति ।

हे शत्रो यस्त्वं मे घोरमभिचाररूपं कर्माचीकृतोऽकार्षीर्घोरं कर्तनमहत्वरूपेणाकार्षीरित्यर्थः । हे शत्रो ते तव कृतं संस्कृतं हविरहमिन्द्रेण प्रेषितैर्भूतैर्हन्मि । तव द्वावपि बाहू अपाञ्चावपगतौ पृष्ठतः कृत्वाऽपनह्यामि दृढं बध्नाम्यास्यं मुखं च पृष्ठतः कृत्वा बध्नामि ।

अथ षष्ठीमाह—

अपनह्यामि ते बाहू । अपनह्याम्यास्यम् । अग्नेर्देवस्य ब्रह्मणा । सर्वं तेऽवधिषं कृतम्, इति ।

पादद्वयं पूर्ववत् । अग्नेर्देवस्य ब्रह्मणाऽऽग्नेयसूक्तरूपेण स्तोत्रेण सर्वं कर्म तव कृतमवधिषमहं हतवानस्मि ।

अथ सप्तमीमाह—

पुराऽमुष्य वषट्कारात् । यज्ञं देवेषु नस्कृधि । स्विष्टमस्माकं भूयात् । माऽस्मान्प्रापन्नरातयः, इति ।

अमुष्य शत्रोर्वषट्कारात्पूर्वमेवास्माकं यज्ञं देवेषु कृधि स्थापय । हेऽग्नेऽस्माकं यज्ञकर्म स्विष्टमस्तु मा शत्रोः । अपि च कदाचिदप्यरातयोऽस्मान्मा प्रापन्मा प्राप्नुवन्तु ।

अथाष्टमीमाह—

अन्ति दूरे सतो अग्ने । भ्रातृव्यस्याभिदासतः (३) । वषट्कारेण वज्रेण । कृत्यां हन्मि कृतामहम्, इति ।

हेऽग्ने मम भ्रातृव्यस्य शत्रोरभिदासतो हिंसतोऽन्ति समीपे दूरे वा सतोऽवस्थितस्य कृतामुत्पादितां कृत्यामहं वषट्कारेण वज्रेण हन्मि नाशयामि ।

अथ नवमीमाह—

यो मा नक्तं दिवा सायम् । प्रातश्चाह्नो निपीयति । अधा तमिन्द्र वज्रेण । भ्रातृव्यं पादयामसि, इति ।

यः शत्रुग्रहोऽहोरात्रयोः सायंप्रातःकालयोश्च मां निपीडयति बाधते तं शत्रुं हे इन्द्र त्वदीयेन वज्रेण छित्त्वा पातयामः। त एते नव मन्त्रा एतयैव यजेताभिचर्यमाण इत्यादिष्विष्टिपूर्वहोमार्थत्वेन विनियोक्तव्याः।

अथ दशमीमाह—

इन्द्रस्य गृहोऽसि तं त्वा। प्रपद्ये सगुः साश्वः।

सह यन्मे अस्ति तेन, इति।

अत्रेन्द्रशब्देन परमैश्वर्ययोगादादित्य उच्यते। तथा च ब्राह्मणम्—"असौ वा आदित्य इन्द्र एव प्रजापतिः" इति। हे आदित्यमण्डल त्वमिन्द्रस्य गृहोऽस्यादित्यनिवासस्थानमसि। तं तादृशमादित्यगृहं त्वामहं प्रपद्ये प्राप्नोमि। कीदृशोऽहम्। सगुर्गोसहितः साश्वोऽश्वसहितोऽन्यदपि मे यद्वस्तु विद्यते तेन सह त्वां प्रविशामि। अयं मन्त्र आत्मरक्षायां विनियोक्तव्यः।

अथैकादशीमाह—

ईडे अग्निं विपश्चितम् (४)। गिरा यज्ञस्य साधनम्। श्रुष्टीवानं धितावानम्, इति।

अग्निमीडे गिरा स्तौमि। कीदृशम्। विपश्चितमभिज्ञं यज्ञस्य साधनं होमाधारत्वेन यज्ञनिष्पादकम्। श्रुष्टीवानमन्नवन्तम्। गिरा च श्रुष्टिरित्यादावन्नपरत्वेन प्रयोगात्। धितावानं धारणवन्तम्।

अथ द्वादशीमाह—

अग्ने शकेम ते वयम्। यमं देवस्य वाजिनः। अति

द्वेषांसि तरेम, इति

हेऽग्ने वाजिनो देवाय तुभ्यं हविर्यमं दातुं शकेम। यमशब्दो णमुलन्तो दानवाची। तेन दानेन द्वेषांसि रक्षांस्यतितरेम। एतच्च मन्त्रद्वयमाग्नेयकर्मणि विनियोज्यम्।

अथ त्रयोदशीमाह—

अवतं मा समनसौ समोकसौ। सचेतसौ सरेतसौ।

उभौ मामवतं जातवेदसौ। शिवौ भवतमद्य नः, इति।

योऽयमाहवनीयोऽग्निर्यश्च तत्र प्रह्रियमाणोऽग्निस्तावुभौ हेऽग्नी समानमनस्कौ परस्परप्रीतियुक्तौ समानस्थानावेकत्रैव निवसन्तौ सचेतसौ समानज्ञानौ सरेतसावेककर्मप्रवर्तकौ भूत्वा मामवतं रक्षतम्। तादृशौ हे जातवेदसावद्यास्मिन्कर्मणि नोऽस्मान्प्रति शिवौ शान्तौ भवतम्। अयं मन्त्र आहवनीयमथितःग्न्योर्मेलने विनियोजनीयः।

अथ चतुर्दशीमाह—

स्वयं कृण्वानः सुगमप्रयावम् (५)। तिग्मशृङ्गो वृषभः शोशुचानः। प्रत्नꣳ सधस्थमनुपश्यमानः। आ तन्तुमग्निर्दिव्यं ततान, इति।

अयमग्निर्दिव्यं दिवि भवं तन्तुं तन्यमानं यज्ञमाततानाऽऽसमन्ताद्विस्तृतवान्। कीदृशोऽग्निः। सुगं गन्तुं सुशकमप्रयावं प्रमादरहितं मार्गं स्वयमेव कृण्वानः कुर्वाणः। तिग्मशृङ्गस्तीक्ष्णज्वालो वृषभः कामाभिवर्षकः शोशुचानोऽत्यन्तं दीप्यमानः प्रत्नं चिरकालसिद्धं सधस्थं सर्वेषां देवानां सहावस्थानयोग्यमाहवनीयायतनमनुपश्यमानो निरन्तरं द्रष्टा।

अथ पञ्चदशीमाह—

त्वं नस्तन्तुरुत सेतुरग्ने। त्वं पन्था भवसि देवयानः। त्वयाऽग्ने पृष्ठं वयमारुहेम। अथा देवैः सधमादं मदेम, इति।

हेऽग्ने त्वं नोऽस्माकं तन्तुरविच्छिन्नो यज्ञो भवसि। उतापि च सेतुरनुष्ठानमर्यादानामसांकर्याय सेतुवद्व्यारकोऽसि। तथा त्वं देवयानो देवैर्गन्तुं योग्यः पन्था भवसि तत्साधनत्वात्तद्रूपत्वम्। त्वया त्वत्प्रसादेन वयं यजमानाः पृष्ठं स्वर्गस्योपरिभागमारुहेम। अथानन्तरं तत्रावस्थितैर्देवैः सधमादं सहैकविधो हर्षो यथा भवति तथा मदेम हृष्यास्म। तदेतन्मन्त्रद्वयं प्रायश्चित्तेष्टौ याज्यानुवाक्यारूपेण सूत्रकारो विनियुक्तवान्—"यस्याग्निहोत्रं विच्छिद्येत द्व्यहे त्र्यहे चतुरहे वाऽग्नये तन्तुमतेऽष्टाकपालं निर्वपेत्स्वयं कृण्वानः" इति।

अथ षोडशीमाह—

उदुत्तमं मुमुग्धि नः । वि पाशं मध्यमं चृत ।

अवाधमानि जीवसे (६), इति ।

हे वरुण नोऽस्माकमुत्तमं त्वदीयं पाशमुन्मुमुग्ध्युत्कर्षेण मोचय । मध्यमं पाशं विचृत वियोजय । जीवसेऽस्माकं जीवनार्थमधमानि बन्धनान्यवचृत विनाशय । सोऽयं मन्त्रो बन्धनमोक्षे विनियोज्यः ।

अथ सप्तदशीमाह—

वयꣳ सोम व्रते तव । मनस्तनूषु बिभ्रतः । प्रजा-

वन्तो अशीमहि, इति ।

हे सोम तव व्रते त्वदीये कर्मणि वयं वर्तमानास्तनूषु शरीरेषु मनो बिभ्रतो विचारक्षमं मनो धारयन्तः प्रजावन्तः पुत्रपौत्रादियुक्ता अशीमहि भोगान्भुञ्जीमहि । अस्य मन्त्रस्याग्न्युपस्थाने मुखमार्जने विनियोगं सूत्रकार आह—" अशीमहीति मुखं विमृष्टे " इत्यन्तेन वाक्येन ।

अथाष्टादशीमाह—

इन्द्राणी देवी सुभगा सुपत्नी । उदꣳशेन पति-

विद्ये जिगाय । त्रिꣳशदस्या जघनं योजनानि ।

उपस्थ इन्द्रꣳ स्थविरं बिभर्ति, इति ।

येयमिन्द्राणीन्द्रस्य भार्या सेयं देवी द्योतमाना सुभगा सौभाग्ययुक्ता सुपत्नी शोभनपतियुक्ता सती पतिविद्ये पत्युरिन्द्रस्य लाभे स्नेहे सत्यंशेन सेनाया एकदेशेनैव शत्रूनुज्जिगायोत्कर्षेण जितवती । अस्या ईदृश्या इन्द्राण्या जघनं पृष्ठभागवर्ति सैन्यं त्रिंशद्योजनानि त्रिंशत्संख्याकेषु योजनेषु व्याप्यावतिष्ठते । सेयमिन्द्राणी स्थविरं स्थैर्ययुक्तं निर्भयमिन्द्रं स्वपतिमुपस्थे सेनामुखे बिभर्ति धारयति ।

अथैकोनविंशीमाह—

सेना ह नाम पृथिवी धनंजया । विश्वव्यचा

अदितिः सूर्यत्वक् । इन्द्राणी देवी प्रासहा ददाना

( ७ ) । सा नो देवी सुहवा शर्म यच्छतु, इति ।

सेना ह नाम देवानां सेनाऽत्यन्तं प्रसिद्धा । सा च पृथिवी विस्तीर्णा धनंजया शत्रूणां धनं जेतुं समर्था विश्वव्यचाः सर्वव्यापिन्यदितिरखण्डनीया सूर्यत्वक्सूर्यवदुज्ज्वलरूपा । तया सेनया युक्तेन्द्राणी देवी प्रासहा प्रकृष्टेन बलेनाऽऽददाना शत्रूणां धनं स्वीकुर्वाणा वर्तते । सा तादृशी सुहवा सुखेनाऽऽह्वातुं शक्या देवी नोऽस्मभ्यं शर्म यच्छतु सुखं ददातु । एते ऋचौ "इन्द्राण्यै चरुं निर्वपेत्" इत्यत्र विकल्पिते याज्यानुवाक्ये द्रष्टव्ये ।

अथ विंशीमाह—

आ त्वाऽहार्षमन्तरभूः । ध्रुवस्तिष्ठाविचाचलिः ।

विशस्त्वा सर्वा वाञ्छन्तु । मा त्वद्राष्ट्रमधिभ्रशत् , इति ।

शत्रुभिरपरुद्धो वाऽपरुध्यमानो वा हे राजन्, त्वामाहार्षं स्वकीये राज्ये समानीतवानस्मि । अन्तरभूस्तस्मिन्राज्येऽन्तर्भव । तत्र ध्रुवः स्थिरः सन्नविचाचलिः कदाचिदपि चलनरहितास्तिष्ठ । सर्वा विशः प्रजास्त्वां वाञ्छन्तु । इदं राष्ट्रं त्वन्मा भ्रशत्त्वत्तो भ्रष्टं मा भूत् ।

अथैकविंशीमाह—

ध्रुवा द्यौर्ध्रुवा पृथिवी । ध्रुवं विश्वमिदं जगत् ।

ध्रुवा ह पर्वता इमे । ध्रुवो राजा विशामयम्, इति ।

यथा पृथिव्यादयो लोके ध्रुवा एवमयं विशां प्रजानां राजा ध्रुवो भवतु ।

अथ द्वाविंशीमाह—

इहैवैधि मा व्यथिष्ठाः (८) । पर्वत इवाविचाचलिः ।

इन्द्र इवेह ध्रुवस्तिष्ठ । इह राष्ट्रमु धारय, इति ।

हे राजन्निहैव राष्ट्र एधि स्थिरो भव । मा व्यथिष्ठा व्यथां भयं मा प्राप्नुहि । पर्वतो यथा चलनरहितस्तथा त्वं निश्चलो भव । इन्द्रो यथा द्युलोके ध्रुवस्तिष्ठति तथा त्वमिह राष्ट्रे ध्रुवस्तिष्ठेहैव स्थित्वा तदेतद्राष्ट्रमु सर्वमपि धारय पोषय ।

अथ त्रयोविंशीमाह—

अभितिष्ठ पृतन्यतः । अधरे सन्तु शत्रवः । इन्द्र

इव वृत्रहा तिष्ठ । अपः क्षेत्राणि संजयन्, इति ।

पृतनामस्मद्विरोधिनीं सेनामात्मन इच्छन्तीति पृतन्यतस्तान्वैरिणोऽभिति-ष्ठाभिक्रम्य निगृह्य स्थिरो भव । ते च शत्रवस्त्वत्तोऽधरे नीचाः सन्तु । इन्द्र-वद्वृत्रहा शत्रुघाती तिष्ठ । किं कुर्वन् । अपः सस्योपकारीणि जलानि क्षेत्राणि च संजयन्सम्यग्जयेन संपादयन् ।

अथ चतुर्विंशीमाह—

इन्द्र एणमदीधरत् । ध्रुवं ध्रुवेण हविषा । तस्मै देवा अधिब्रुवन् । अयं च ब्रह्मणस्पतिः ( ९ ), इति ।

हविर्भिरास्थमभिदासतो विपश्चितमर्भथावं जीवसे ददाना व्यथिष्ठा ब्रुवन्नेकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके चतुर्थाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

योऽयमिन्द्रोऽस्ति स एनं राजानं ध्रुवो यथा भवति तथाऽधीधरद्धारयतु । ध्रुवेण स्थिरेण यथाशास्त्रमनुष्ठितेन हविषा तुष्टा देवास्तस्मै यजमानार्थमधि-ब्रुवन्नाधिकोऽयमिति ब्रुवन्तु । यो ब्रह्मणस्पतिर्देवोऽयं चाधिब्रवीतु । "आ त्वा हार्षम्" इत्याद्या ऋचः पञ्चेन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपेदपरुद्धो वाऽपरुध्यमानो वेत्यत्रोपहोमार्था द्रष्टव्याः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

अथ चतुर्थप्रपाठके तृतीयोऽनुवाकः ।

तृतीयानुवाके प्रथमामृचमाह—

जुष्टी नरो ब्रह्मणा वः पितॄणाम् । अक्षमव्ययं न किला रिषाथ । यच्छक्वरीषु बृहता रवेण । इन्द्रे शुष्ममदधाथा वसिष्ठाः, इति ।

हे वसिष्ठा वसिष्ठस्य मम पुत्रा यद्यस्मात्कारणाच्छक्करीषु " प्रोष्वस्मै पुरोरथम् " इत्यादिकासु शक्करीछन्दोयुक्तास्वृक्षु बृहता रवेण महता सामध्वनिनेन्द्रे शुष्मं बलमदधाथाः संपादितवन्तः । तस्मात्कारणाद्धे नरो मत्पुत्राः पुरुषा वो युष्मत्संबन्धिनां पितॄणां ब्रह्मणा जुष्टी भवदीयेन परिवृढेन स्तोत्रेण प्रीतानामक्षं क्रुद्धं चक्षुरिन्द्रियमव्ययं वसिष्ठोऽहमाच्छादितवानस्मि । इतः परं यूयं न रिषाथ किल सर्वथा हिंसिता न भवथ । अयमर्थः—सौदासनामकैरसुरैर्यदा वसिष्ठो हतपुत्रोऽभूत्तदानीं पुत्राभावादेतद्दीयाः पितरो रक्तवर्णेन चक्षुषा युक्ताः क्रुद्धा दृश्यन्ते[स्म]। तदानीं वसिष्ठः पुत्रानुत्पादितवान् । ते च पुत्रा विद्याधिकाः सन्तः सामगानेनेन्द्रं तोषितवन्तः । तदीयपितॄणां क्रुद्धमक्षं क्रोधपरित्यागेन शान्तं संपन्नम् । सोऽयं वृत्तान्तो वसिष्ठेन स्वपुत्रान्प्रत्यभिहित इति । अयं मन्त्रो रक्षार्थं द्रष्टव्यः ।

अथ द्वितीयामाह—

पावका नः सरस्वती । वाजेभिर्वाजिनीवती । यज्ञं वष्टु धिया वसुः, इति ।

इयं सरस्वती नोऽस्मदीयं यज्ञं धिया स्वबुद्ध्या वष्टु कामयताम् । कीदृशी । पावका शोधिका । वाजेभिर्नानाविधैरन्नैर्युक्तत्वेन वाजिनीवती बहन्ना । वसुः सर्वेषां निवासयित्री । अयं मन्त्रोऽङ्गहीनपशूपाकरणप्रायश्चित्तत्वेन सूत्रे विनियुक्तः—" सारस्वतीं वार्हस्पत्यामिति च हुत्वा प्रयोजयेत् " इति ।

अथ तृतीयामाह—

सरस्वत्यभि नो नेषि वस्यः । मा पस्फरीः पयसा मा न आधक् । जुषस्व नः सख्या वेश्या च (१)। मा त्वत्क्षेत्राण्यरणानि गन्म, इति ।

हे सारस्वति नोऽस्मान्वस्योऽभि श्रेयः प्रति नेषि नय । मा पस्फरीर्मा हिंसीः । पयसा नदीरूपायास्तव जलेन नोऽस्मान्मा धक्सर्वतो मा धाक्षीर्मा विनाशय । सख्या सखित्वेन वेश्या च गृहावस्थानेन च नोऽस्मान्प्रति जुषस्व । त्वत्तव प्रसादादरणानि रणरहितानि क्लेशकारणानि क्षेत्राणि मृत्युस्थानानि मा गन्म मा प्राप्नवाम । अयं च पादोऽन्यत्र ब्राह्मणेन व्याख्यातः—" मा त्वत्क्षेत्राण्यरणानि गन्मेत्याह । मृत्योर्वै क्षेत्राण्यरः

ण्यानि । तेनैव मृत्योः क्षेत्राण्येव गच्छति ” इति । तस्मिन्नेव ब्राह्मणे मन्त्रोऽप्ययं विनियुक्तः—“ सरस्वत्यभि नो नेषि वस्य इति पुरोरुचं कुर्यात् ” इति । तत्रोक्थपात्राण्यूहीत्येतदुपक्रान्तत्वात्तदीयेयं पुरोरुक् । तथा सूक्तेऽपि —“ सारस्वतीं मेषीमालभेत ” इत्यस्य पशोर्हविषः पुरोनुवाक्या-रूपेण प्रतीकमाम्नातम्—“ सरस्वत्यभि नो नेषि ”.इति ।

अथ चतुर्थीमाह—

वृञ्जे हविर्नमसा बर्हिरग्नौ । अयामि स्रुग्घृतवती सुवृक्तिः । अभ्यक्षि सद्म सदने पृथिव्याः । अश्रायि यज्ञः सूर्ये न चक्षुः, इति ।

अग्नौ हविः प्रस्तररूपेण होतव्यं बर्हिर्यदस्ति तदेतन्नमसा नमनेन विनयेन सह वृञ्जे वर्जयामि । लुनामीत्यर्थः । आच्छेत्ता ते मा रिषमित्याद्युक्तिर्विनयः । घृतवती घृतसंपूर्णा सुवृक्तिः सुप्रदाना स्रुग्जुहूरयामि होमार्थमस्माभिरग्राहि । पृथिव्याः संबन्धिनि सदने देवयजने सद्म प्राग्वंशादिरूपमभ्यक्ष्यस्माभिरमापि । यज्ञोऽयमस्माभिरश्रायि । सूर्ये न सूर्येऽपि चक्षुरस्मदीयमश्रायि सूर्यावलोकनं कृतमित्यर्थः । सोऽयं मन्त्रः क्वचिद्यजमानजपे विनियोक्तव्यः ।

अथ पञ्चमीमाह—

इहार्वाञ्चमतिह्वये । इन्द्रं जैत्राय जेतवे । अस्माकमस्तु केवलः, इति ।

इह कर्मणीन्द्रमर्वाञ्चमस्मदभिमुखमतिह्वयेऽन्यान्यजमानानतिलङ्घ्य प्रथममेवाऽऽह्वयामि । किमर्थम् । जैत्राय जेतवे जेतव्यस्य जयार्थम् । स इन्द्रोऽस्माकं केवलोऽस्त्वस्मास्वेव पक्षपातवान्भवतु ।

अथ षष्ठीमाह—

अर्वाञ्चमिन्द्रममुतो हवामहे । यो गोजिद्धनजिदश्वजिद्यः ( २ ) । इमं नो यज्ञं विहवे जुषस्व । अस्य कुर्मो हरिवो मेदिनं त्वा, इति ।

अर्वाञ्चमस्मदभिमुखमिन्द्रममुतः स्वर्गादाह्वयामः । य इन्द्रो गोजिच्छत्रुसंब-

न्धिनीर्गा जयेन संपादयति यश्च तथैव धनजिदश्वजिच्च तमिन्द्रं हवामहे, इति पूर्वत्रैवान्वयः । हे हरिवो हरिनामकाभ्यामश्वाभ्यां युक्तेन्द्र विहवे विविधाह्वाने सत्यस्मदीयमिमं यज्ञं जुषस्व सेवस्व। अस्यानेन यज्ञेन त्वां मेदिनं स्निग्धशरीरं कुर्मः । एते ऋचौ कस्मिंश्चिज्जयहेतावैन्द्रे हविषि याज्यानुवाक्ये द्रष्टव्ये ।

अथ सप्तमीमाह—

अस॑सृष्टो जायसे ×मातृवोः शुचि॑ः । मन्द्रः कविरुद॑-
तिष्ठो विव॑स्वतः । घृतेन॑ त्वा वर्धयन्नग्न आहुत ।
धूमस्ते॑ केतुर॑भवद्दिवि श्रि॒तः, इति ।

हेऽग्ने त्वमकृतसंमार्जन एव सन्मातृवोर्मात्रोररण्योः शुचिरेव जायसे । स्रुगादयो हि संमार्जनतः शुध्यन्ति । त्वं पुनरसंमृष्ट एव शुचिर्भवसि । मन्द्रो हर्षयुक्तः कविर्विद्वांस्त्वं विवस्वतः परिचरतो यजमानान्प्रत्युदतिष्ठोत्स्थितोऽभूः । आहुतिभिराहुत हेऽग्ने यजमानास्त्वां घृतेनावर्धयन् । ते तव धूमो दिविश्रित आकाशे व्याप्तः सन्केतुरभवत् । अग्निमानयं प्रदेश इति ज्ञानस्य हेतुरभवत् । अयं च मन्त्रो मथनजन्याग्न्यभिमन्त्रणे कचिद्विनियोक्तव्यः ।

अथाष्टमीमाह—

अ॒ग्निरग्रे॑ प्रथ॒मो दे॒वता॑नाम् । संया॑तानामु॒त्तमो॒ विष्णु॑-
रासीत् । यज॑मानाय परि॒गृह्य॑ दे॒वान् । दी॒क्षये॒दꣳ
ह॒विराग॑च्छतं नः ( ३ ), इति ।

यजमानं प्रति संयातानां पौर्वापर्येणाऽऽगच्छन्तीनां देवतानामग्निः प्रथमोऽग्रे पुरतो मार्गप्रदर्शको गच्छति । विष्णुरुत्तमः पश्चादागच्छति । एतदुक्तं भवति—"अनपक्रमणार्थं पङ्क्तिरूपेणाऽऽगच्छतां देवानामग्निः प्रथमो विष्णुरुत्तमश्चरमः" इति । तावुभौ सर्वान्देवान्मुखतः पृष्ठतश्च यजमानार्थं परिगृह्य दीक्षादेवतया सह तावग्नाविष्णू युवां नोऽस्मदीयमिदं हविरुद्दिश्याऽऽगच्छतम् ।

अथ नवमीमाह—

अ॒ग्निश्च॑ विष्णो॒ तप॑ उत्त॒मं म॒हः । दी॒क्षा॒पा॒लेभ्यो॒

× मातृवोरित्यपि पाठो वैदिकानाम् ।

वनंतꣳ हि शक्रा । विश्वैर्देवैर्यज्ञियैः संविदानौ ।

दीक्षामस्मै यजमानाय धत्तम्, इति ।

हे विष्णो त्वं चाग्निश्चोभौ युवां दीक्षाख्यव्रतपालकेभ्यो देवेभ्यः सकाशा-द्यजमानार्थं मह उत्तमं तपो वनतं याचतम् । हे शक्रा, इन्द्रसमानौ युवां हि प्रसिद्धौ यज्ञयोग्यैः सर्वैर्देवैः सह संविदानावैकमत्यं गतावस्मै यजमानाय दीक्षाख्यं संस्कारं संपादयतम् । एतच्चोभयं दीक्षणीयायामिष्टौ याज्यानुवा-क्यारूपेण विनियोज्यम् ।

अथ दशमीमाह—

प्र तद्विष्णुः स्तवते वीर्याय । मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेषु । अधिक्षि-यन्ति भुवनानि विश्वा, इति ।

तस्मिन्कर्मणि यजमानानां वीर्यार्थं विष्णुः प्रस्तवते प्रकर्षेण स्तूयते । कुचरो भूमौ वर्तमानो भीमो भयंकरो मृगो न सिंहो यथोर्ध्वमुत्प्लुत्य गिरि-ष्ठाः पर्वतस्थो भवति । तथा यस्य विष्णोः पूर्वं वामनस्य पश्चात्त्रिविक्रमत्वं गच्छत ऊरुषु विस्तीर्णेषु त्रिषु विक्रमणेषु विश्वा भुवनानि सर्वे लोका अधिक्षियन्त्याधिक्येन निवसन्ति । स विष्णुः स्तूयत इति पूर्वत्रान्वयः ।

अथैकादशीमाह—

नू मर्तो दयते सनिष्यन्यः । विष्णव उरुगायाय दाशत् ( ४ ) । प्र यः सत्राचा मनसा यजाते । एतावन्तं नर्यमाविवासात्, इति ।

यो यजमानः सनिष्यन्हविर्दास्यन्नुरुगायाय महाकीर्तये विष्णवे दाशद् दाति । यश्च सत्राचा सत्यगामिना मनसा प्रयजाते प्रकर्षेण यजते । एता-वन्तं पूर्वोक्तविक्रमत्रयसामर्थ्योपेतं नर्यं नरेभ्यो हितं विष्णुमाविवासात्स्तु-त्यादिना सर्वतः परिचरति स मर्तो मनुष्यो नू क्षिप्रं दयते स्वात्मानं जगच्च रक्षति ।

अथ द्वादशीमाह—

विचक्रमे पृथिवीमेष एताम् । क्षेत्राय विष्णुर्मनुषे

दशस्यन् । ध्रुवासो अस्य कीरयो जनासः । उरु-

क्षितिꣳ सुजनिमा चकार, इति ।

एष विष्णुः पृथिवीमेतां पृथिव्युपलक्षितमिदं लोकत्रयं विचक्रमे विशेषेण पादैराक्रान्तवान् । किं कुर्वन्, मनुषे मनुष्याणां क्षेत्राय निवासार्थं दशस्यन्प्रदातुमिच्छन् । अस्य विष्णोः कीरयो जनासः कीर्तिपरा जना ध्रुवासः स्थिरा भवन्ति । स विष्णुः पुनः सुजनिमा शोभनेन वामनरूपेण जन्मना युक्त उरुक्षितिं प्राणिनां निवासाय विस्तीर्णं स्थानं चकार ।

अथ त्रयोदशीमाह—

त्रिर्देवः पृथिवीमेष एताम् । विचक्रमे शतर्चसं

महित्वा । प्र विष्णुरस्तु तवसस्तवीयान् । त्वेषꣳ

ह्यस्य स्थविरस्य नाम ( ५ ), इति ।

एष विष्णुर्देवः शतर्चसं शतविधगतियुक्तामेतां पृथिवीं पृथिव्युपलक्षितलोकत्रयं महित्वा स्वमहिम्ना त्रिर्विचक्रमे त्रिवारं पादेनाऽऽक्रान्तवान् । तवसस्तवीयान्महतो महीयान्विष्णुः प्रास्तु प्रकृष्टो भवतु । स्थविरस्यात्यन्तं प्रवृद्धस्यास्य विष्णोर्नाम त्रिविक्रमादिरूपं त्वेषं हि प्रदीप्तं प्रसिद्धमित्यर्थः । उक्तानां मन्त्राणां "वैष्णवं वामनमालभेत" इत्येतस्य पशोः सूक्ते प्रतीकान्याम्नातानि, "प्र तद्विष्णुर्विचक्रमे त्रिर्देवः" इति । "नू मर्तः" इति मन्त्रस्तु प्र तद्विष्णुरित्यनेन सह विकल्प्यते ।

अथ चतुर्दशीमाह—

होतारं चित्ररथमध्वरस्य । यज्ञस्य यज्ञस्य

केतुꣳ रुशन्तम् । प्रत्यर्धिं देवस्य देवस्य मह्ना ।

श्रिया त्वग्निमतिथिं जनानाम्, इति ।

श्रिया स्वकीयया संपदा युक्तमग्निं त्विममग्निमेव प्रजामहे इति शेषः । कीदृशमग्निम् । होतारं देवानामाह्वातारं चित्ररथं विचित्रेण रथेन युक्तमध्वरस्य हिंसारहितस्य यज्ञस्य यज्ञस्य केतुं सर्वस्यापि यज्ञस्य ज्ञापकं रुशन्तं दीप्तिमन्तं मह्ना स्वकीयेन महिम्ना देवस्य देवस्य सर्वस्यापि देवस्य प्रत्यर्धिं प्रत्येकम-

र्थेन हविषा युक्त्वा । अत एव सूत्रकार आह—"सर्वेषां हविषामुत्तरार्धात्सकृत्सकृत्स्विष्टकृतेऽवद्यति" इति । जनानां यजमानानामतिथिमतिथिवत्पूजनीयम् । अयं मन्त्र आतिथ्येष्टौ स्विष्टकृतः पुरोनुवाक्या । तथा चाऽऽश्वलायन आह—" होतारं चित्ररथमध्वरस्य प्र प्रायमग्निर्भरतस्य शृण्व इति संयाज्ये " इति ।

अथ पञ्चदशीमाह—

आ नो विश्वाभिरूतिभिः सजोषाः । ब्रह्म जुषाणो

हर्यश्व याहि । वरीवृजत्स्थविरेभिः सुशिप्र । अस्मे

दधद्वृषणꣳ शुष्ममिन्द्र, इति ।

हे हर्यश्व हरिनामकाभ्यामश्वाभ्यामुपेतेन्द्र ब्रह्म जुषाणोऽस्मदीयस्तोत्रं सेवमानः सजोषा अस्माभिः समानप्रीतिः सन्विश्वाभिरूतिभिः सर्वैरपि रक्षणप्रकारैः सह नोऽस्मान्प्रत्यायाह्यागच्छ । किं कुर्वन्, हे सुशिप्र शोभनहनुभिर्युक्त स्थविरेभिर्वृद्धैर्देवैः सह वरीवृजत्सर्वमशुभमत्यन्तं वर्जयन् । हे इन्द्र वृषणं कामवर्षणक्षमं शुष्मं बलमस्मे दधदस्मासु संपादयन्वर्तस्व ।

अथ षोडशीमाह—

इन्द्रः सुवर्षा जनयन्नहानि । जिगायोशिग्भिः

पृतना अभिश्रीः ( ६ ) । प्रारोचयन्मनवे केतु-

मह्नाम् । अविन्दज्ज्योतिर्बृहते रणाय, इति ।

अयमिन्द्र उशिग्भिर्विजयं कामयमानैर्देवैः सह पृतना वैरिसेना जिगाय जयं प्राप्तवान् । कीदृश इन्द्रः । सुवर्षाः स्वर्गप्रदोऽभिश्रीरभिमतश्रीकः । किं कुर्वन्नहानि जनयन्स्वर्भानुसंज्ञिनाऽसुरेण सूर्ये तमसा विद्धे सति तदसुरविनाशनेन प्रकाशभूतान्यहान्युत्पादयन्मनवे मनुष्यार्थमह्नां केतुं सूर्यं प्रारोचयत्प्रकर्षेण दीपितवान् । ततो बृहते रणाय महते रणाय क्रीडार्थं ज्योतिरविन्दत्सूर्यरश्मिरूपं प्रकाशं लब्धवान् । एते ऋचौ कस्मिंश्चिदैन्द्रे कर्मणि याज्यानुवाक्ये ।

---

१ क. °हनुयुक्त ।

सप्तदशीमाह—

अश्विनाववसे निह्वये वाम् । आ नूनं यातꣳ सुकृताय विप्रा । प्रातर्युक्तेन सुवृता रथेन । उपागच्छतमवसाऽऽगतं नः, इति ।

हेऽश्विनौ वां युवामवसेऽस्मद्रक्षणार्थं निह्वये नितरामाह्वयामि । हे विप्रा मेधाविनावश्विनौ सुकृताय शोभनकर्मसिद्ध्यर्थं नूनमायातमवश्यमागच्छतम् । प्रातर्युक्तेन प्रातःकालेऽश्विभ्यां संयुक्तेन सुवृता शोभनवर्तनेन रथेनोपागच्छतं समीपे समागच्छतम् । समागमने कारणमुच्यते—अस्माकमवसा रक्षणेनाऽऽगतमागच्छतम् ।

अथाष्टादशीमाह—

आविष्टं धीष्वश्विना न आसु । प्रजावद्रेतो अह्रयं नो अस्तु । आ वां तोके तनये तूतुजानाः । सुरत्नासो देववीतिं गमेम (७), इति ।

हेऽश्विनावासु धीषु कर्मानुष्ठानबुद्धिषु नोऽस्मानाविष्टमवतं रक्षतम् । नोऽस्माकं रेतः प्रजावदपत्ययुक्तं सदह्रयमलज्जाकरमस्तु । अपत्याभावे निषिक्तं रेतो लज्जाकरमेव स्यात् । आ वां वयं तोके तनये पुत्रे पौत्रे च तूतुजानाः क्षिप्रं यतमानाः सुरत्नासः शोभनरत्नोपेता देववीतिं देवैः काम्यमानं यज्ञं गमेम प्राप्नुयाम । एते ऋचावाश्विने कर्मणि याज्यानुवाक्ये ।

अथैकोनविंशीमाह—

त्वꣳ सोम क्रतुभिः सुक्रतुर्भूः । त्वं दक्षैः सुदक्षो विश्ववेदाः । त्वं वृषा वृषत्वेभिर्महित्वा । द्युम्नेभिर्द्युम्न्यभवो नृचक्षाः, इति ।

हे सोम त्वं क्रतुभिरस्मदनुष्ठितैः कर्मभिः सुक्रतुर्भूः शोभनकर्मा भव । त्वं दक्षैरस्मदीयैर्बलैः सुदक्षः शोभनबलोपेतो विश्ववेदाः सर्वज्ञश्च भव । तथा त्वं वृषत्वेभिः सेचनयुक्तैरस्माभिर्वृषा सेचनयुक्तो महित्वा महिमोपेतश्च भव ।

द्युम्नेभिरस्मदीयैर्धनैर्द्युम्नी धनवान् भूत्वा नृचक्षा अभवो मनुष्येषु ख्यातः संपन्नोऽस्मदीयोत्कर्षमेव त्वदीयोत्कर्षत्वेन भावयेत्यर्थः ।

अथ विंशीमाह—

अषाढं युत्सु पृतनासु पप्रिम् । सुवर्षामप्स्वां वृज-
नस्य गोपाम् । भरेषुजाꣳ सुक्षितिꣳ सुश्रवसम् ।
जयन्तं त्वामनु मदेम सोम, इति ।

हे सोम त्वामनु वयं मदेम हृष्यास्म । कीदृशम् । युत्स्वषाढं युद्धेषु केनाप्य-तिरस्कार्यं पृतनासु स्वकीयसेनासु पप्रिं पालकं पूरकं वा सुवर्षां स्वर्गप्रदम-प्स्वां जलप्रदं वृजनस्य गोपां बलस्य रक्षकं भरेषुजां संग्रामेषु रक्षणाय प्रादुर्भवन्तं सुक्षितिं शोभननिवासं सुश्रवसं शोभनकीर्तिं जयन्तं जयोपेतम् । एतयोर्ऋचोः “ सौम्यं बभ्रुं ज्योगामयावी ” इत्यस्य पशोः सूक्ते प्रतीकद्वयमाम्नातम् “ अषाढं युत्सु त्वꣳ सोम क्रतुभिः ” इति ।

अथैकविंशीमाह—

भवा मित्रो न शेव्यो घृतासुतिः । विभूतद्युम्न
एवया उ सप्रथाः ( ८ ) । अधा ते विष्णो
विदुषा चिदर्ध्यः । स्तोमो यज्ञस्य राध्यो हवि-
ष्मतः, इति ।

हे विष्णो त्वं मित्रो न मित्र इव शेव्यः सुखहेतुर्भव । कीदृशस्त्वम् । घृतासु-तिर्घृतदानो विभूतद्युम्नः प्रभूतधनयुक्त एवया एव एतव्यो गन्तव्यदेश-स्तत्र गन्ता सप्रथा उ कीर्तिसहितोऽपि । अधेत्यथशब्दार्थः । अनन्तरं हे विष्णो विदुषा चिद्यष्टुमशक्तेन केवलविद्यायुक्तेनापि ते स्तोम ऋध्यस्त्वदीयं स्तोत्रं संपादनीयम् । हविष्मतो हविर्युक्तस्य यष्टुं शक्तस्य यज्ञस्य राध्यो यज्ञेन त्वमाराधनीयः । द्रव्याभावादनुष्ठातुमशक्तस्य तज्जपेनैवानुष्ठानसंपूर्तिः । अत एवान्यत्राऽऽम्नायते–“ यं यं क्रतुमधीते तेन तेनास्येष्टं भवति ” इति ।

स्मृतिरपि—

जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ इति ।

अथ द्वाविंशीमाह--

यः पूर्व्याय वेधसे नवीयसे । सुमज्जानये विष्णवे ददाशति । यो जातमस्य महतो महि ब्रवात् । सेदुः श्रवोभिर्युज्यंचिदभ्यसत्, इति ।

यः पुमान्विष्णवे ददाशति हविर्ददाति । कीदृशाय विष्णवे । पूर्व्याय जगतः पूर्वमेव भवाय वेधसे जगतो विधात्रे नवीयसे रामकृष्णाद्यवतारैरत्यन्तं नूतनाय सुमज्जानये सुष्ठु माद्यन्ती हृष्यन्ती लक्ष्म्याख्या जाया यस्यासौ सुमज्जानिस्तस्मै । यश्चान्यः पुरुषोऽस्य महतो विष्णोर्जातं रामकृष्णादिजन्मविशेषं महि ब्रवान्महत्त्वेन सर्वदा ब्रवीति सेदुः स एवोभयविधः पुमान्, श्रवोभिः श्रवणीयैर्हविर्दानमन्त्रैः स्तोत्रविशेषैश्च युज्यंचित्सर्वदा स्वेन युक्तमपि कामक्रोधलोभरूपं शत्रुमभ्यसदभितो निरस्यति । अत एव स्मर्यते--

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ इति ।

अथ त्रयोविंशीमाह--

तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य । गर्भं हविषा पिपर्तन । आऽस्य जानन्तो नामचिद्विवक्तन । बृहत्ते विष्णो सुमतिं भजामहे (९), इति ।

हे स्तोतारः पुरुषाः पूर्व्यं जगतः पूर्वमेवावस्थितं तमु तमेव विष्णुं यथा विद यथावज्जानीत । ज्ञात्वा चर्तस्य सत्यस्य देवस्य गर्भं गर्भवदन्तःस्थितं वेदमतिपाद्यमित्यर्थः । तादृशं विष्णुं हविषा पिपर्तन पालयत पूरयत वा । तत्राशक्तौ यूयमस्य विष्णोर्नामचित्केशवनारायणादीनि नामानि जानन्तः शास्त्राचार्यमुखादवगच्छन्त आविवक्तन समन्ताद्विशेषेण ब्रूत निरन्तरं जपतेत्यर्थः । हे विष्णो ते सुमतिं त्वदीयामनुग्रहबुद्धिं बृहद्भजामहे निरन्तरं सेवामह इत्यर्थः । एतास्तिस्र ऋचो वैष्णवे कर्मण्युपहोमार्थाः ।

अथ चतुर्विंशीमाह--

इमा धाना घृतस्नुवः । हरी इहोपव-

क्षतः । इन्द्रꣳ सुखतमे रथे, इति ।

घृतस्नुवो घृतं क्षरन्त्य इमा धाना भर्जितयवरूपा अस्माभिरुपक्लृप्ता इति शेषः । सुखतमेऽतिशयेन सुखप्रदे रथे समारूढमिन्द्रं हरी तदीयावश्वाविह धानायुक्ते कर्मण्युपवक्षतः समीपं प्रापयतः । अयं मन्त्रः प्रातःसवन उन्नीयमानसूक्तेऽन्तर्भावनीयः । अत एव बह्वृचैः—"आ त्वा वहन्तु" इति सूक्तेऽन्तर्भाव्याऽऽम्नातः ।

अथ पञ्चविंशीमाह—

एष ब्रह्मा प्र ते महे । विदथे शꣳसिषꣳ हरी ।
य ऋत्वियः प्र ते वन्वे । वनुषो हर्यतं मदम् ।
इन्द्रो नाम घृतं न यः । हरिभिश्चारु सेचते ।
श्रुतो गण आ त्वा विशन्तु (१०) । हरिवर्पसं
गिरः, इति ।

द्वयोर्ऋचोर्व्यतिषक्तरूपोऽयं मन्त्रः । प्रयोगकाले हि तदुभयं व्यतिषज्य शंसनीयम् । अत एवात्र व्यतिषज्याऽऽम्नातः । अर्थस्तु विभज्यैवाववोद्धव्यः । तत्रैका द्विपदाऽनुष्टुप् । इतरा चतुष्पदा जगती । तत्र द्विपदायाः पाठस्तु—'एष ब्रह्मा य ऋत्वियः । इन्द्रो नाम श्रुतो गणे' इति । तस्यायमर्थः । इन्द्रो नाम यो देवतागणे श्रुतः प्रसिद्ध ऋत्वियश्च ऋतावृतौ तत्तत्कर्मकाले तत्तत्कर्म कर्तुमाविर्भवति, एष एवंभूत इन्द्रः सदा ब्रह्मा प्रजापतिरेवेति । अयं द्विपदो मन्त्र एवमेवाच्छिद्रकाण्डे समाम्नातः । जगत्याः पाठस्तु—'प्र ते महे विदथे शꣳसिषꣳ हरी । प्र ते वन्वे वनुषो हर्यतं मदम् । घृतं न यो हरिभिश्चारु सेचते । आ त्वा विशन्तु हरिवर्पसं गिरः' इति । हे इन्द्र महे विदथे महति यज्ञे हरी त्वदीयावश्वौ प्रशंसिषं प्रकर्षेण स्तुतवानस्मि । हर्यतं हरणीयं मदं मदहेतुं सोमं वनुषः प्रार्थितवन्तः । ते तव प्रवन्वे प्रकर्षेण ददामि । चारु घृतं न समीचीनं घृतमिव मदत्तं सोमं हरिभिरश्वैर्युक्तोऽयमिन्द्रः सेचते समवैति संबध्यानुभवतीत्यर्थः । हरिवर्पसं हरितवर्णवपुर्युक्तं च पूर्वोक्तगणयुक्तं त्वा त्वां मदीया स्तुतिरूपा गिर आविशन्त्विति । एतयोर्ऋचोर्व्यतिषङ्गपाठः केवलमध्ययनार्थ एवोपहोमेष्वाम्नातः । अयं च व्यतिषक्तो मन्त्रो विहृतषोडशस्तोत्रेऽन्तर्भावनीयः ।

अथ षड्विंशीमाह—

आ चर्षणिप्रा वृषभो जनानाम् । राजा कृष्टीनां पुरुहूत इन्द्रः । स्तुतः श्रवस्यन्नवसोपमद्रिक् । युक्त्वा हरी वृषणाऽऽयाह्यर्वाङ्, इति ।

हे इन्द्र त्वं वृषणा सेचनसमर्थौ हरी अश्वौ युक्त्वा रथे संयोज्यार्वाङस्मदभिमुख आयाह्यागच्छ । कीदृशस्त्वमासमन्ताच्चर्षणिप्राश्चर्षणीनां मनुष्याणां यजमानरूपाणां फलैः पूरयिता जनानां देवलोकस्थानां मध्ये वृषभः श्रेष्ठः कृष्टीनां मनुष्याणां सर्वेषां स्वामी पुरुहूतः पुरुषु बहुषु यज्ञेष्वाहूत इन्द्रः परमैश्वर्ययुक्तः स्तुतो यागकाले स्तोत्रैः स्तुतः श्रवस्युञ्श्रवोऽन्नं हविस्तदिच्छन्नवसाऽस्मदीयरक्षणेन निमित्तेनोपमद्रिग्अस्मत्समीपे द्रुवन्प्राप्नुवन् । अयं च मन्त्रः सौत्रामण्यामैन्द्रस्य पशोर्वपायाः पुरोनुवाक्या । अत एव तत्र प्रतीकमाम्नातम्—"आ चर्षणिप्रा विवेषयन्मा" इति ।

अथ सप्तविंशीमाह—

प्र यत्सिन्धवः प्रसवं यदायन् । आपः समुद्रꣳ रथ्येव जग्मुः । अतश्चिदिन्द्रः सदसो वरीयान् । यदीꣳ सोमः पृणति दुग्धो अꣳशुः, इति ।

यद्यदा सिन्धवो नद्यः प्रसवमिन्द्रस्यानुज्ञां प्रकर्षेणाऽऽयन्प्राप्नुवन् । द्वितीयो यच्छब्दस्तच्छब्दार्थे वर्तमान उत्तरत्रान्वेति । तत्तदा रथ्येव रथपङ्क्तिरिव नदीप्रवाहगता आपः समुद्रं जग्मुः । यथा राजमार्गे रथपङ्क्तिः शीघ्रं ग्रामान्तरं प्राप्नोति तद्वन्नदीगतो जलप्रवाहः सहसा समुद्रं प्राप्नोति । यद्यस्मात्कारणादीमिममिन्द्रं दुग्धोऽभिषुतः सोमोंऽशुः सोमरसभागः पृणाति पूरयति तद्वत् अतश्चिदत एव कारणादयमिन्द्रः सदसः सभागताद्देवसमूहाद्वरीयानतिशयेन श्रेष्ठः ।

अथाष्टाविंशीमाह—

ह्वयामसि त्वेन्द्र याह्यर्वाङ् (११) । अरं ते सोमस्तनुवे भवाति । शतक्रतो मादयस्वा सुतेषु । प्रा-

१ क. ख. °व सदा प्र° ।

स्मान् अव पृतनासु प्र युत्सु, इति।

हे इन्द्र त्वां हवामस्यस्मिन्कर्मण्याह्वयामः। अर्वाङभिमुखो याहि कर्मभूमिं गच्छ। ते तनुवे त्वदीयाय शरीराय सोमोऽस्माभिर्दीयमानोऽरं भवाति-अलं संपूर्णो भवति। हे शतक्रतो सुतेषु सोमेषु मादयस्व तं पीत्वा हृष्टो भव। पृतनासु परकीयसेनासु प्रकर्षेणास्मानव रक्ष। युत्सु युद्धेषु च प्रकर्षेण रक्ष।

अथैकोनत्रिंशीमाह—

इन्द्राय सोमाः प्रदिवो विदाना। ऋभुर्येभिर्वृषपर्वा

विहायाः। प्रयम्यमानान्प्रति षू गृभाय। इन्द्र

पिब वृषधूतस्य वृष्णः, इति।

प्रदिव इति पुरातननामसु पठितः, प्रदिवः सोमाः पुरातनाः सोमा इन्द्राय विदाना इन्द्रार्थत्वेनैव विज्ञाताः। ऋभुरिन्द्रो येभिर्यैः सोमैर्वृषपर्वा वृषभवत्पीवराङ्गो विहाया विशेषेण कार्श्यं हित्वाऽवस्थितः प्रति प्रत्येकं प्रयम्यमाणान्प्रकर्षेणास्माभिर्दीयमानान्सोमान्सुष्ठु गृभाय गृहाण। हे इन्द्र वृषधूतस्य वृषभवद्वीर्यवद्भिर्ग्रावभिरभिषुतस्य वृष्णो वीर्यवतः सोमस्य रसं पिब।

अथ त्रिंशीमाह—

अहेडमान उपयाहि यज्ञम्। तुभ्यं पवन्त इन्दवः

सुतासः। गावो न वज्रिन्त्स्वमोको अच्छ (१२)।

इन्द्राऽऽगहि प्रथमो यज्ञियानाम्, इति।

हे इन्द्राहेडमानोऽक्रुध्यन्सन्नस्मदीययज्ञमुपयाहि सुतासोऽभिषुता इन्दवः सोमास्तुभ्यं त्वदर्थं पवन्ते दशापवित्रेण शोधिता भवन्ति। हे वज्रिन्निन्द्र यज्ञियानां यज्ञार्हाणां देवानां मध्ये प्रथमः सन्स्वमोकोऽच्छ स्वकीयं स्थानमभिलक्ष्याऽऽगहि आगच्छ। तत्र दृष्टान्तः—गावो न यथा गावः स्वकीयां गोशालां प्रत्यागच्छन्ति तद्वत्।

१ क. °भिर्यैः°।

अथैकत्रिंशीमाह—

या ते काकुत्सुकृता या वरिष्ठा।
यया शश्वत्पिबसि मध्व ऊर्मिम्।
तया पाहि प्र ते अध्वर्युरस्थात्।
सं ते वज्रो वर्ततामिन्द्र गव्युः, इति।

हे इन्द्र या ते काकुज्जिह्वा सुकृता प्रजापतिना सुष्ठु निर्मिता। अत एव या जिह्वा वरिष्ठाऽतिशयेन श्रेष्ठा। यया जिह्वया मध्वो मधुरस्य सोमस्योर्मिं तरङ्गं तरङ्गाकारं रसं शश्वन्निरन्तरं पिबसि। तया जिह्वया पाहि। अध्वर्युरयं ते तव यागार्थं प्रास्थात्प्रस्थितः। हे इन्द्र ते वज्रो गव्युर्गा इच्छन्संवर्ततां सम्यक्प्रवर्तताम्। "प्र यत्सिन्धवः" इत्यादयः पञ्चेन्द्रलिङ्गका मन्त्रा माध्यंदिनसवने शुक्रामन्थिग्रहप्रचारात्पूर्वं प्रस्थितयाज्या द्रष्टव्याः।

अथ द्वात्रिंशीमाह—

प्रातर्युजा वि बोधय। अश्विना वेह गच्छतम्।
अस्य सोमस्य पीतये, इति।

हे होतः प्रातर्युजा प्रातःकालभोजनीयावश्विनौ विबोधय मन्त्रविशेषेण प्रबुद्धौ कुरु। हेऽश्विनाविह कर्मण्यस्य सोमस्य पानाय युवां गच्छतम्। अयं मन्त्र आश्विनग्रहस्य पुरोनुवाक्या।

अथ त्रयस्त्रिंशीमाह—

प्रातर्यावाणा प्रथमा यजध्वम्। पुरा गृध्रादररुषः
पिबाथः। प्रातर्हि यज्ञमश्विना दधाते। प्रशꣳ-
सन्ति कवयः पूर्वभाजः, इति।

हे ऋत्विजः प्रातर्यावाणा प्रातःसवनं गच्छन्तावश्विनौ प्रथमा प्रथममेव यजध्वम्। हेऽश्विनौ गृध्रात्सोमयुक्तादररुषोऽररुर्नामकादसुरात्पुरा पिबाथ इमं सोमरसं पिबतम्। हि यस्मात्कारणादेतावश्विनौ प्रातःकाले यज्ञं दधाते आश्विने ग्रहे चमसगणे यज्ञमश्विनौ धारयतस्तस्मात्कारणात्पूर्वभाजः पूर्वमेव देवान्भजमानाः कवयो विद्वांस ऋत्विज एनावश्विनौ प्रशंसन्ति।

अथ चतुर्स्त्रिंशीमाह—

प्रातर्यजध्वमश्विना हिनोत । न सायमस्ति देवया

अजुष्टम् । उतान्यो अस्मद्यजते विचायः । पूर्वः

पूर्वो यजमानो वनीयान् ( १३ ), इति ।

चाश्वाजिद्यो गच्छतं नोदाशन्नामाभिश्रीर्गमेम सप्रथा भजामहे

विशन्तु याह्वर्वाङ्च्छ पिबाथः षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके चतुर्थाध्याये

तृतीयोऽनुवाकः ॥ ३ ॥

---

हे ऋत्विजः प्रातःकाले यजध्वमेतावश्विनौ हिनोत प्रीणयत । सायंकाले देवया देवार्थं यागो नास्ति । यस्मात्सायंकाले हुतमजुष्टमप्रियम् । उतापि चास्मदन्यः कश्चिद्यजमानो विचायो विशेषेण पूजायुक्तो यद्यपि यजते तथाऽपि पूर्वः पूर्वो यजमानो वनीयानत्यन्तं संभजनीयस्तस्मादहमेव सर्वेभ्यः पूर्वो यजामीत्यभिप्रायः । एते ऋचावाश्विने कर्मणि विकल्पिते याज्ये ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ चतुर्थप्रपाठके चतुर्थोऽनुवाकः ।

---

चतुर्थानुवाके प्रथमामृचमाह—

नक्तं जाताऽस्योषधे । रामे कृष्णे

असिक्नि च । इदꣳ रजनि रजय ।

किलासं पलितं च यत्, इति ।

अथ पञ्चभिर्मन्त्रैः श्वेतकुष्ठरोगं विनाशयति—शरीरं रमणीयं करोतीति रामा स्वयं कृष्णवर्णा श्वैत्यविनाशनेनासितं कृष्णवर्णं तस्मिन्प्रदेशे संपादयतीत्यसिक्नी । तथाविधे हे नील्याख्यौषधे त्वं नक्तं जाताऽसि । अत एवान्धकारवन्नीलवर्णा दृश्यसे । हे रजनि स्वकीयेन वर्णेन रञ्जनक्षम ओषध इदं श्वेतं शरीरं रजय स्वकीयवर्णेन रञ्जितं कुरु । यत्किलासं श्वेतरोगग्रस्त-

मङ्कं यच्च पलितं रोमादिकं तदिदं रजयेति पूर्वत्रान्वयः । अत्र हरिद्रा रजनीति केचित् ।

अथ द्वितीयामाह—

किलासं च पलितं च । निरितो

नाशया पृषत् । आ नः स्वो अश्नुतां

वर्णः । परा श्वेतानि पातय, इति ।

किलासं श्वित्ररोगस्तं पलितं चेत्येवं पृषद्विचित्ररूपं तदितः शरीरान्निःशेषेण नाशय । स्वो वर्णो देहस्य स्वकीयः पूर्वसिद्धो वर्णो नोऽस्माना समन्तादश्नुतां व्याप्नोतु । श्वेतानि रोगरूपाणि परापातय विनाशय ।

अथ तृतीयामाह—

असितं ते निलयनम् । आस्थान-

मसितं तव (१) । असिक्न्यस्यो-

षधे । निरितो नाशया पृषत्, इति ।

हे ओषधे ते तव निलयनं निःशेषेण लयनं लयप्राप्तिस्थानमङ्गमासितं कृष्णं भवति । न केवलं देहावयवः किंतु तव यदास्थानं वसतिरूपं तदसितं कृष्णं भवति । आ समन्तात्तिष्ठत्यत्रेत्यास्थानं नीलिमप्रक्षेपेण वस्त्रं कृष्णं भवतीति प्रसिद्धमेतत् । अतो हे ओषधे त्वमसिक्न्यसि तद्धर्मापिकाऽसि । अस्मत्पृषन्तं बहुविधं रूपमितोऽस्मदीयशरीरान्निःशेषेण नाशय ।

अथ चतुर्थीमाह—

अस्थिजस्यं किलासस्य । तनूजस्य

च यत्त्वचि । कृत्यया कृतस्य ब्रह्मणा ।

लक्ष्म श्वेतमनीनशम्, इति ।

अस्थिजन्यं यत्किलासं श्वित्रं तनूजं मांसजन्यं यत्किलासं त्वचि यत्किलासं वर्तते यच्च कृत्यया परकीयाभिचारेण कृतं संपादितं किलासं तस्य सर्वस्य संबन्धि श्वेतं लक्ष्म श्वेतवर्णलाञ्छनं ब्रह्मणा परमेश्वरेणानुगृहीतोऽहमनीनशं नाशितवानस्मि ।

अथ पञ्चमीमाह—

सरूपा नाम ते माता । सरूपो नाम ते पिता ।

सरूपाऽस्योषधे सा । सरूपमिदं कृधि (२), इति ।

हे ओषधे ते माता तव मातृस्थानीया भूमिः सरूपा नाम । त्वया समानरूपैव कृष्णभूमिरित्यर्थः । ते पिता तव पितृस्थानीयो बीजविशेषः सरूपो नाम कृष्णवर्णतया समानरूपः । एताभ्यामुत्पन्ना सा त्वमपि सरूपाऽसि कृष्णवर्णतया तयोर्मातापित्रोः समानरूपाऽसि । तस्मादिदं श्वेतरूपरोगग्रस्तं शरीरं सरूपं कृधि त्वया समानरूपं कृष्णवर्णं कुरु । एतेषां पञ्चानां मन्त्राणां श्वेतरोगनिवारणौषध्यभिमन्त्रणे विनियोगो द्रष्टव्यः ।

अथ षष्ठीमाह—

शुनꣳ हुवेम मघवानमिन्द्रम् । अस्मिन्भरे नृतमं

वाजसातौ । शृण्वन्तमुग्रमूतये समत्सु । घ्नन्तं वृत्राणि

संजितं धनानाम्, इति ।

वाजसातावन्नप्रदेशेऽस्मिन्भरे भरणीये संग्रामे इन्द्रं हुवेमाऽऽह्वयाम । कीदृशम् । शुनं सुखरूपं मघवानं धनयुक्तं नृतमं पुरुषश्रेष्ठं शृण्वन्तमस्मदाह्वानस्य श्रोतारं समत्सु युद्धेषूतयेऽस्मद्रक्षार्थमुग्रं कोपयुक्तं वृत्राणि घ्नन्तं शत्रून्मारयन्तं धनानां संजितं सम्यक्संपादकम् । अयं मन्त्रो विजयार्थेन्द्रकर्मण्युपहोमार्थः ।

अथ सप्तमीमाह—

धूनुथ द्यां पर्वतान्दाशुषे वसु । नि वो वना जिहते

यामनो भिया । कोपयथ पृथिवीं पृश्निमातरः ।

युधे यदुग्राः पृषतीरयुग्ध्वम्, इति ।

हे पृश्निमातरः पृश्नेरुत्पन्ना मरुतः । तथा च ब्राह्मणम्—"पृश्न्यै वै पयसो मरुतो जाताः" इति । तादृशा यूयं यद्यदा युधे युद्धार्थमागताः सन्तः पृषतीर्भवदीया अश्वा अयुग्ध्वं रथे योजितवन्तस्तदानीमेव द्यां धूनुथ

द्युलोकं कम्पयथ, तथा पर्वतान्धूनुथ। दाशुषे हविर्दत्तवते यजमानाय वसु धनं धूनुथ प्रयच्छथेत्यर्थः । वो युष्माकं यामनो गमनवेगाद्वनानि सर्वाणि भिया भीत्यैव निजिहते न्यग्भूतानि पतन्ति । तथा पृथिवीं कोपयथ भूमिं क्षोभयथ।

अथाष्टमीमाह—

प्रवेपयन्ति पर्वतान् । विविंञ्चन्ति वनस्पतीन् (३)।

प्रोऽवारत मरुतो दुर्मदा इव । देवासः सर्वया विशा, इति ।

हे मरुतो भवन्तः पर्वतान्प्रवेपयन्ति कम्पयन्ति, तथा वनस्पतीन्विविञ्चन्ति विविधमुन्मीलयन्ति । प्रो प्रकर्षेणावारत धावत । कीदृशा भवन्तः, सर्वया विशा प्रजया सह देवासो दीप्यमानाः । एते ऋचौ " पृश्नियै दुग्धे प्रैयंगवं चरुं निर्वपेत् " इत्येतस्मिन्कर्मणि याज्यानुवाक्ये द्रष्टव्ये ।

अथ नवमीमाह—

पुरुत्रा हि सदृङ्ङसिं । विशो विश्वा अनु

प्रभु । समत्सु त्वा हवामहे, इति ।

हेऽग्ने त्वं पुरुत्रा बहुषु स्थानेषु सदृङ्ङसि समानोऽसि । स्थित्वाऽप्यलिप्तोऽसीत्यर्थः । तथा चाऽऽहुः—" श्मशानेष्वपि तेजस्वी पावकोऽस्मिन्न लिप्यते " इति । विशो विश्वा अनु सर्वाः प्रजा अनुसृत्य प्रभु प्रकर्षेण दाहपाकादिनोपकारको भवसि । समत्सु युद्धेषु त्वां हवामह आह्वयामः ।

अथ दशमीमाह—

समत्स्वग्निमवसे । वाजयन्तो हवामहे । वाजेषु

चित्रराधसम्, इति ।

वाजयन्तोऽन्नमिच्छन्तो वयं समत्सु युद्धेष्ववसेऽस्माकं रक्षणायाग्निं हवामह आह्वयामः । कीदृशम् । वाजेष्वन्नेषु विषयेषु चित्रराधसमाश्चर्यं यथा भवति तथा साधकम् । एतच्च मन्त्रद्वयं विजयार्थीग्नेये कर्मणि द्रष्टव्यम् ।

अथैकादशीमाह—

संगच्छध्वः संवदध्वम् । सं वो मनाꣳसि जान-

ताम् ( ४ )। देवा भागं यथा पूर्वे । संजानाना

उपासंत, इति ।

समानैः सह विप्रिया हे पुरुषा यूयं संगच्छध्वं परस्परं संगता भवत। संवदध्वं संवादं कुरुत। एको भोक्तुं कार्यमिव ( ? ) वो युष्माकं मनांसि संजानतां परस्परं संमतिं जानन्तु । यथा पूर्वे देवाः संजानानाः परस्परसंगतिं जानन्तो भागमुपासत स्वस्वभागमविघ्नेनानुभूतवन्तस्तद्वत् ।

अथ द्वादशीमाह—

समानो मन्त्रः समितिः समानी । समानं मनः

सह चित्तमेषाम् । समानं केतो अभि संरभध्वम् ।

संज्ञानेन वो हविषा यजामः, इति ।

मन्त्रो मन्त्रालोचनं कार्यविचारः समान एकरूपोऽस्तु । तथा समितिः समान्यन्योन्यसंगमोऽप्येकरूपोऽस्तु । मनः समानमेकविषयमस्तु । एषां चित्तं सह तिष्ठतु । ऊहापोहस्थमन्तःकरणं मनः । वस्तुज्ञानावस्थितमन्तःकरणं चित्तम् । समानं केतोऽभि सहवासस्थानमभिलक्ष्य संरभध्वं प्रयतध्वम् । वो युष्माकं विप्रतिपन्नानां देवानां संज्ञानेन संप्रतिपत्तिनिमित्तेन हविषा यजामः ।

अथ त्रयोदशीमाह—

समानी व आकूतिः । समाना हृदयानि वः । समानमस्तु वो मनः । यथा वः सुसहासति

( ५ ), इति ।

वो युष्माकमाकूतिः समानी संकल्प एकरूपोऽस्तु । वो युष्माकं हृदयानि कार्यनिश्चायकान्यन्तःकरणानि समानैकरूपाणि भवन्तु । वो युष्माकं मन ऊहापोहरूपं मननसामर्थ्यं च समानमेकरूपमस्तु । किं बहुना वो युष्माकं सर्वं कार्यं सुसहा( ह ) सुखेन सहावस्थितं यथाऽसत्यतिशयेन प्रकारेण भवति तथाऽस्तु ।

अथ चतुर्दशीमाह—

संज्ञानं नः स्वैः । संज्ञानमरणैः । संज्ञानं-

मश्विना युवम् । इहास्मासु नियच्छतम् , इति ।

नोऽस्माकं स्वैः स्वकीयैः पुरुषैः सह संज्ञानमैकमत्यमस्तु । अरणैर्गमनैर्व्य-वहारविशेषैः संज्ञानमैकमत्यमस्तु । हेऽश्विनौ युवामिह लोकेऽस्मासु सर्वेष्वपि संज्ञानमैकमत्यं नियच्छतं नियतं कुरुतम् ।

अथ पञ्चदशीमाह—

संज्ञानं मे बृहस्पतिः । संज्ञानꣳ सविता करत् । संज्ञानमश्विना युवम् । इह मह्यं नियच्छतम्, इति ।

बृहस्पतिर्देवो मे मदीयसंघस्य संज्ञानमैकमत्यं करोतु । सविता च संज्ञान-मैकमत्यं करोतु । हेऽश्विनौ युवां मह्यं मदर्थमिह मदीये जने संज्ञानं नियच्छ-तम् । संगच्छध्वमित्यादयः पञ्च मन्त्राः " यः समानैर्मिथो विमिथः स्या-त्तमेतया संज्ञान्या याजयेत् " इत्यस्मिन्कर्मणि द्रष्टव्याः ।

अथ षोडशीमाह—

उप च्छायामिव घृणेः । अगन्म शर्म ते वयम् (६), अग्ने हिरण्यसंदृशः, इति ।

हेऽग्ने हिरण्यसंदृशः सुवर्णवत्सम्यग्दृश्यमानस्य ते तव शर्म शरणं गृहमुप समीपे वयमगन्म प्राप्ताः स्मः । तत्र दृष्टान्तो घृणेश्छायामिव यथा लोक आ-दित्यस्य रश्मेश्छायाभूतां शालां प्राप्नुवन्ति तद्वत् । अयं मन्त्र आग्नेयक-र्मणि द्रष्टव्यः ।

अथ सप्तदशीमाह—

अदब्धेभिः सवितः पायुभिष्ट्वम् । शिवेभिरद्य परि-पाहि नो गयम् । हिरण्यजिह्वः सुविताय नव्यसे । रक्षा माकिर्नो अघशꣳस ईशत, इति ।

हे सवितस्त्वमदब्धेभिरहिंसकैः शिवेभिः शान्तैः पायुभिः पालनोपायैरद्या-स्मिन्कर्मणि नो गयमस्मदीयं गृहं परिपाहि सर्वतः पालय । हिरण्यजिह्वः

स्वर्णसदृशजिह्वायुक्तः सन्नध्यसेऽस्यन्तं नूतनाय सुविताय शोभनगमनाय सम्यगनुष्ठानाय रक्ष विघ्नान्परिहर। अघशंसो नोऽस्मदीयमघं शंसन्निन्दां कुर्वन्यो वैरी वर्तते स नोऽस्माकं माकिरीशत बाधितुं समर्थो मा भूत्। अयं मन्त्रः सावित्रे कर्मणि द्रष्टव्यः।

अथाष्टादशीमाह—

मदेमदे हि नो ददुः। यूथा गवामृजुक्रतुः। संगृभाय पुरूशता। उभया हस्त्या वसु। शिशीहि राय आभर (७), इति।

ऋजुक्रतुरकुटिलकर्माऽयमिन्द्रो नोऽस्माकं मदे मदे तदा तदा हर्षनिमित्तं गवां यूथा ददुर्गोसमूहान्प्रयच्छति। हे इन्द्रोभया हस्त्योभयोर्हस्तयोः पुरुशता बहूनि शतानि संगृभाय सम्यग्गृहीत्वा वसु धनं शिशीह्यस्मभ्यं प्रयच्छ। पुनरपि रायो धनान्याभर संपादय।

अथैकोनविंशीमाह—

शिप्रिन्वाजानां पते। शचीवस्तव दंसना। आ तू न इन्द्र भाजय। गोष्वश्वेषु शुभ्रषु। सहस्रेषु तुवीमघ, इति।

शिप्रशब्दो हनुवाचकः। शोभनहनुयुक्तः शिप्री। वाजानां पतिरन्नपालकः। शचीवाञ्शक्तिमांस्तुवीमघो बहुलधनस्तादृश हे इन्द्र तव दंसना त्वत्संबन्धिनि दंसनशब्दाभिधेयेऽस्मिन्कर्मण्यनुष्ठिते सति शुभ्रेषु निर्मलेषु सहस्रेषु सहस्रसंख्याकेषु गोष्वश्वेषु च नोऽस्माना तु भाजय समन्तात्सदा भागिनः कुरु। एतच्च मन्त्रद्वयमैन्द्रे कर्मणि द्रष्टव्यम्।

अथ विंशीमाह—

यद्देवा देव हेडनम्। देवासश्चकृमा वयम्। आदित्यास्तस्मान्मा यूयम्। ऋतस्यर्तेन मुञ्चत, इति।

हे देवासो दीप्यमाना आदित्या देवा देवहेलनं देवावज्ञारूपं पापं यद्वयं चकृम यूयमादित्या ऋतस्य यज्ञस्यर्तेन सत्येन शास्त्रीयेणास्मदनुष्ठानेन मां तस्मात्पापान्मुञ्चत मुक्तं कुरुत ।

अथैकविंशीमाह—

ऋतस्यर्तेनाऽऽदित्याः ( ८ ) ।

यजत्रा मुञ्चतेह मां । यज्ञैर्वो यज्ञ-

वाहसः । आशिक्षन्तो न शेकिम, इति ।

हे आदित्या यजत्रा यष्टव्या यूयमिहास्मिँल्लोक ऋतस्यर्तेन सम्यगनुष्ठानेन मां पापादस्मान्मुञ्चत । हे यज्ञवाहसो यज्ञनिर्वाहका देवा वो युष्मत्संबन्धिभिर्यज्ञैः शेकिम पापं नाशयितुं शक्ता भवेम । तत्र दृष्टान्तः—आशिक्षन्तो न यथा यज्ञसंबन्धिनीं सर्वतः शिक्षां कुर्वन्त आचार्याः शक्तास्तद्वत् ।

अथ द्वाविंशीमाह—

मेदस्वता यजमानाः । स्रुचाऽऽज्येन

जुह्वतः । अकामा वो विश्वे देवाः ।

शिक्षन्तो नोपशेकिम, इति ।

हे विश्वे देवा मेदस्वता सारयुक्तेनाऽऽज्येन पूर्णया स्रुचा जुह्वतो होमं कुर्वन्तोऽकामाः फलकामनारहिता यजमाना वयं वो युष्माकं प्रसादादुपशेकिम पापं नाशयितुं सर्वथा शक्ताः स्मः । शिक्षन्तो नेति दृष्टान्तः पूर्ववत् ।

अथ त्रयोविंशीमाह—

यदि दिवा यदि नक्तम् । एनं एनस्योऽक-

रत । भूतं मा तस्माद्भव्यं च । द्रुपदादिव

मुञ्चतु, इति ।

एन इच्छतीत्येनस्यः पूर्वं पापप्रवृत्तोऽहं रात्रौ दिवसे वैनोऽकरत्पापं कृतवानस्मि । कीदृशमेनः । भूतं भव्यं च । किंचिदेनः पूर्वमेव निष्पन्नमन्यत्तु कर्तुमुद्युक्तम् । तस्मात्सर्वस्मात्पापान्मामादित्यो मुञ्चतु । तत्र दृष्टान्तः—द्रुपदादिवा-

पराधिनां पादे प्रतिमोचितं काष्ठं द्रुपदं यथा कृपालुः स्वाम्यस्माद्बन्धनादपराधिनं मोचयति तद्वत् ।

अथ चतुर्विंशीमाह—

द्रुपदादिवेन्मुमुचानः । स्विन्नः स्नात्वी
मलादिव । पूतं पवित्रेणेवाऽऽज्यम् ।
विश्वे मुञ्चन्तु मैनसः, इति ।

विश्वे सर्वे देवा मामेनसः पापान्मुञ्चन्तु मुक्तं कुर्वन्तु । तत्र दृष्टान्तत्रयम्—द्रुपदात्पादबन्धनरूपात्काष्ठान्मुमुचान इवेद्यथा तथेत्यर्थः । स्विन्नः स्वेदव्याप्तगात्रः स्नात्वी स्नानं कृत्वा यथा मलान्मुच्यते तद्वत् । पवित्रेणोत्पवनसाधनेनाऽऽज्यं यथा पूतं तद्वत् ।

अथ पञ्चविंशीमाह—

उद्वयं तमसस्परि । पश्यन्तो ज्योति-
रुत्तरम् । देवं देवत्रा सूर्यम् ।
अगन्म ज्योतिरुत्तमम् (९), इति ।

तवं कृधि वनस्पतींज्ञानतामसंति वयं मैराऽऽदित्याश्च नवं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके चतुर्थाध्याये
चतुर्थोऽनुवाकः ॥ ४ ॥

---

तमसस्परि तमसोऽन्धकारात्पर्यूर्ध्वमुत्तरमुत्कृष्टं ज्योतिरुत्पश्यन्त उत्कर्षेण पश्यन्तो वयं देवत्रा देवेषु मध्ये देवं द्योतमानं सूर्यरूपमुत्तमं ज्योतिरगन्म प्राप्ताः स्मः । "यद्देवा देवहेडनम्" इत्येताः षडृच पापक्षयार्थे कर्मणि द्रष्टव्याः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

अथ चतुर्थप्रपाठके पञ्चमोऽनुवाकः ।

अथ पञ्चमानुवाके प्रथमामृचमाह—

वृषा सो अꣳशुः पंवते हविष्मा-
न्त्सोमः । इन्द्रस्य भाग ऋतयुः
शतायुः । समा वृषाणं वृषभं कृणोतु ।
प्रियं विशाꣳ सर्ववीरꣳ सुवीरम्, इति ।

सोमो वल्ल्यात्मकः पवते शुद्धो भवति । कीदृशः सोमः । वृषा कामानां वर्षयिता स प्रसिद्धोऽꣳशुर्बहुभिरंशुभिर्युक्तो हविष्मान्हविषो निष्पादक इन्द्रस्य भागो भक्षणीय ऋतयुर्यज्ञहेतुः शतायुः शतसंवत्सरस्याऽऽयुषः प्रदाता तादृशः सोमो मां यजमानं वक्ष्यमाणविशेषणोपेतं कृणोतु करोतु । कैर्विशेषणैरुपेतम् । वृषाणं सेचकं वृषभं श्रेष्ठं विशां प्रजानां प्रियं प्रीतिहेतुं सर्ववीरं सर्वेषां मध्ये वीर्योपेतं सुवीरं शोभनैर्वीरैः पुत्रैर्युक्तम् ।

अथ द्वितीयामाह—

कस्य वृषा सुते सचा । नियुत्वान्वृषभो
रणत् । वृत्रहा सोमपीतये, इति ।

कस्योदकस्य वृषा वर्षिता सुतेऽभिषुते सोमे सचा समवेतो नियुत्वान्नियुद्भिरश्वविशेषैर्युक्तो वृषभः श्रेष्ठो वृत्रहा वैरिघातक इन्द्रः सोमपीतये सोमपानाय रणद्रमते ।

अथ तृतीयामाह—

यस्ते शृङ्गवृषो नपात् । प्रणपात्कुण्ड-
पाय्यः । न्यस्मिन्दध्र आ मनः (१), इति ।

शृङ्गादिशब्दैस्त्रिभिः सोमः संबोध्यते । अथवेन्द्रस्य संबोधनानि । शृङ्गवच्छ्रेष्ठकामाभिवर्षको नपान्नपातयिताऽस्माकमविनाशहेतुरीदृश इन्द्रो योऽयं कुण्डपाय्य एतन्नामकः सोमयागविशेषः प्रणपात्प्रकर्षेण न पातयिता तृप्तिहेतुरित्यर्थः । अस्मिन्क्रतौ ते मनो नितरामा समन्ताद्दध्रे धृतवान् ।

अथ चतुर्थीमाह—

तं॑ स॒ध्रीची॑रू॒तयो॒ वृष्ण्या॑नि । पौंस्या॑नि नि॒युतः॑

स॒श्चुरिन्द्र॑म् । स॒मु॒द्रं न सिन्ध॑व उ॒क्थशु॑ष्माः ।

उ॒रु॒व्यच॑सं॒ गिर॒ आवि॑शन्ति, इति ।

सध्रीचीः सह प्रवर्तमाना ऊतयो रक्षाहेतवः कर्मविशेषाः पौंस्यानि पुंसंबन्धीनि वृष्णियानि सेचनानि कामवर्षणानि वा नियुतोऽश्वाश्च तमिन्द्रं सश्चुः संबध्नन्ति । तत्र दृष्टान्तः—समुद्रं न सिन्धवो यथा समुद्रं नद्यः प्राप्नुवन्ति तद्वत् । अथवा वक्ष्यमाणार्थेऽयं दृष्टान्तः—उक्थशुष्मा उक्थैः शस्त्रैः शुष्माः प्रबला गिरोऽस्मदीयाः स्तुतिरूपा वाच उरुव्यचसमत्यन्तंतृप्तियुक्तामिन्द्रमाविशन्ति ।

अथ पञ्चमीमाह—

इन्द्रा॑य॒ गिरो॒ अनि॑शितसर्गाः । अ॒पः प्रैर॑यन्त्स॒गर॑स्य बु॒ध्नात् । यो अक्षे॑णेव च॒क्रिया॒ शची॑भिः ।

विष्व॑क्त॒स्तम्भ॑ पृथि॒वीमु॒त द्याम्, इति ।

य इन्द्रः शचीभिः शक्तिभिः पृथिवीं विष्वक्तस्तम्भ सर्वतः स्तम्भितवान् । उतापि च द्यां द्युलोकमपि विष्वक्तस्तम्भ । तत्र दृष्टान्तः—अक्षेणेव चक्रिया यथा रथस्याक्षेण चक्रिया चक्रद्वयं स्तम्भितं तद्वत् । तादृशायेन्द्रायास्माभिः प्रयुज्यमानाः स्तुतिरूपा गिरोऽनिशितसर्गा अतीक्ष्णस्वभावा अपः सगरस्य समुद्रसमानस्य मेघस्य बुध्नान्मूलात्प्रैरयन् । अस्मदीयाभिः स्तुतिभिः स्तूयमान इन्द्रो वृष्टिं प्रयच्छतीत्यर्थः । "आपो वै शान्ताः" इति श्रुतेरनुभवाच्चापामतीक्ष्णस्वभावत्वम् ।

अथ षष्ठीमाह—

अक्षो॑दयच्छव॑सा॒ क्षाम॑ बु॒ध्नम् । वार्ण॒वात॒स्तवि॑षीभि॒रिन्द्रः॑ ( २ ) । दृ॒ढा॒न्यौ॑भ्नादु॒शमा॑न॒ ओजः॑ । अवा॑भिनत्क॒-

---

१ क. घ. 'न्तव्याप्तिं'।

कुभः पर्वतानाम्, इति ।

अयमिन्द्रः शवसा स्वकीयेन बलेन क्षामं क्षीणं बुध्नं मेघमूलमक्षोदयद्रुद-कपूरणं कृत्वा प्रेरितवान् । तत्र दृष्टान्तः—वार्णवातो वार्णवायुर्जलं यथा प्रेरयति तद्वत् । ओजो बलमुक्षमानः कामयमानो दृढानि मेघमूलान्यौन्नाद्धत-वान्वज्रेण भिन्नवान् । पर्वतानां ककुभः शिखराणि महावृष्ट्या वज्रेण वाऽ-भिनद्भिन्नान्यकरोत् । वृषा स इत्यादयः षण्मन्त्रा ऐन्द्रे सौमिके कर्मणि द्रष्टव्याः । "तꣳ सध्रीचीः" इत्यस्य तु सौत्रामण्यामैन्द्रे पशावप्यस्ति विनि-योगः । अत एव तत्र प्रतीकमाम्नातम्—" तꣳ सध्रीचीः" इति ।

अथ सप्तमीमाह—

आ नो अग्ने सुकेतुना । रयिं विश्वायुपोष-

सम् । मार्डीकं धेहि जीवसे, इति ।

हेऽग्ने सुकेतुना शोभनेन ज्ञानेन युक्तस्त्वं विश्वायुपोषसं विश्वस्याऽऽयुषः पोषणे क्षमं रयिं धनं मार्डीकमतिशयेन सुखसाधनभूतं जीवसेऽस्माकं जीव-नायाऽऽधेहि सर्वतः संपादय ।

अथाष्टमीमाह—

त्वꣳ सोम महे भगम् । त्वं यून ऋता-

यते । दक्षं दधासि जीवसे, इति ।

हे सोम त्वं महे महते वृद्धाय भगं सौभाग्यं दधासि संपादयसि । तथा त्वमृतायते यज्ञमिच्छते यूने यौवनोपेताय यजमानाय जीवसे जीवनार्थं दक्षं समर्थं धनं दधासि संपादयसि । एते उभे ऋचौ चातुर्मास्य(स्या)न्तर्गतमहा-पितृयज्ञ आज्यभागयोः पुरोनुवाक्ये । तथा च सूत्रकार आह—"जीवव-न्तावाज्यभागौ यजत्या नो अग्ने सुकेतुना " इति ।

अथ नवमीमाह—

रथं युञ्जते मरुतः शुभे सुगम् । सूरो न मित्राव-

रुणा गविष्टिषु ( ३ ) । रजाꣳसि चित्रा विचं-

रान्ति तन्यवः । दिवः संम्राजा पयंसा न

उक्षतम्, इति ।

मरुतो देवाः शुभे कर्मणि सुगं शोभनं गमनसाधनं रथं युञ्जतेऽश्वैर्योजयन्ति । तत्र दृष्टान्तः—सूरो न यथा सूर्यो रथं युनक्ति तद्वत् । हे मित्रावरुणौ गविष्टिषु भूमाविष्यमाणाः क्षेत्रादिसंपत्तयो गविष्टयस्तासु निमित्तभूतासु चित्रा विचित्राणि रजांसि रञ्जनीयानि जलानि वितन्यवो विस्तारयन्तो मरुतो विविधं चरन्ति । तद्द्युवामपि दिवः सकाशात्सम्राजा पयसा सम्यग्राजमानेन क्षेत्रोपकारिणा जलेन नोऽस्मानुक्षतं सिञ्चतम् ।

अथ दशमीमाह—

वाचं॑ सुमित्रावरुणाविरावतीम् । पर्जन्यंश्चित्रां

वंदति त्विषींमतीम् । अभ्रा वंसत मरुतः सु

मायया । द्यां वर्षयतमरुणामंरेपसंम्, इति ।

हे मित्रावरुणावयं पर्जन्य इरावतीमन्नसाधनभूतां चित्रां बहुविधां त्विषीमतीं त्विड्भिर्विद्युद्भिर्युक्तां वाचं गर्जनध्वनिरूपां वदति करोतीत्यर्थः । अरुणां विद्युद्भिर्युक्तत्वेनारुणवर्णामरेपसं रेपसा वृष्टिप्रतिबन्धकेन पापादिना रहितां द्यां मेघयुक्तां दिवं वर्षयतम्, हे मित्रावरुणौ युवां वृष्टियुक्तां कुरुतम् । हे मरुतो यूयमपि मायया धूमज्योतिरादिभिर्मेघनिष्पादिकया भवदीयया मायाशक्त्याऽभ्रा विचित्राण्यभ्राणि सुवसत सुष्ठु वासयत संपादयतेत्यर्थः । एतच्च मन्त्रद्वयं वृष्टिहेतौ मैत्रावरुणकर्मणि विनियोक्तव्यम् ।

अथैकादशीमाह—

अयुंक्त सप्त शुन्ध्युवंः । सूरो रथस्य नप्त्रिंयः ।

ताभिर्याति स्वयुंक्तिभिः, इति ।

सूरः सूर्यो रथस्य स्वकीयस्य नप्त्रियोऽपालनहेतून्रथमविनाशयितॄञ्शुन्ध्युवः शुद्धान्सप्तसंख्याकानयुक्त रथे योजितवान् । स्वयुक्तिभिः स्वेन योजिताभिः सह याति प्रतिदिनं गच्छति ।

अथ द्वादशीमाह—

वहिष्ठेभिर्विहरंन्यासि तन्तुम् (४) । अव-

व्ययन्नसितं देव वस्वः । दविध्वतो रश्मयः सूर्यस्य ।
चर्मेवावाधुस्तमो अप्स्वन्तः, इति ।

हे देव सूर्य वहिष्ठेभिरतिशयेन वहनक्षमैरश्वैर्विहरंस्तत्र तत्र क्रीडंस्तन्तुं रश्मिविस्तारं यासि प्राप्नोषि । किं कुर्वन्नसितमन्धकारमवव्ययन्विनाशयन् । वस्वो वासयितारमाच्छादकमन्धकारं दविध्वतो दोधूयमाना विनाशनसमर्थाः सूर्यस्य रश्मयोऽप्स्वन्तरन्तरिक्षमध्ये तमोऽन्धकारमवाधुर्विनाशितवन्तः । अप्शब्दोऽप्यन्तरिक्षनामसु पठितः । तमोविनाशने दृष्टान्तः—चर्मेव यथा दृष्टेरावरकं पटलरूपं चर्मापनयति तद्वत् । एतच्चोभयं सौर्ये कर्मणि द्रष्टव्यम् ।

अथ त्रयोदशीमाह—

पर्जन्याय प्रगायत । दिवस्पुत्राय मीढुषे । स नो
यवसमिच्छतु, इति ।

हे ऋत्विजः पर्जन्याय पर्जन्यदेवार्थं प्रगायत प्रकर्षेण गानं कुरुत । कीदृशाय । दिवस्पुत्राय स्वर्गलोकस्य पुत्रस्थानीयाय मीढुषे सेचनसमर्थाय । स च पर्जन्यो नोऽस्मदर्थं यवसं तृणसस्यादिकमिच्छतु वृष्टिद्वारेण संपादयत्वित्यर्थः ।

अथ चतुर्दशीमाह—

अच्छा वद तवसं गीर्भिराभिः । स्तुहि पर्जन्यं
नमसा विवास । कनिक्रदद्वृषभो जीरदानुः ।
रेतो दधात्वोषधीषु गर्भम् ( ५ ), इति ।

हे पर्जन्यदेव तवसमच्छाऽस्मद्धितं बलमभिलक्ष्य वद गर्जनरूपं शब्दं कुरु । येन गर्जनेन वृष्टिद्वाराऽस्माकं बलं संपद्यते तथा गर्जनं कुरु । हे ऋत्विक्समूहाऽऽभिर्गीर्भिर्वैदिकीभिः स्तुतिभिः पर्जन्यदेवं स्तुहि । नमसा विवास सर्वो जनो नमस्कारेण परिचर्यां चकार । कनिक्रदत्पुनः पुनर्गर्जन्वृषभो वर्षणक्षमो जीरदानुरस्मज्जीवनहेतुरयं पर्जन्य ओषधीषु गर्भं रेतो गर्भकारणबीजं दधातु स्थापयतु ।

---

१ क. गानपाठवं ।

अथ पञ्चदशीमाह—

यो गर्भमोषधीनाम्। गवां कृणोत्यर्वताम्। पर्जन्यः पुरुषीणाम्, इति।

यः पर्जन्य ओषधीनां गवामर्वतामश्वानां पुरुषीणां मनुष्यस्त्रीणां च गर्भं कृणोति करोति स पर्जन्योऽभीष्टं साधयत्विति शेषः।

अथ षोडशीमाह—

तस्मा इदास्ये हविः। जुहोता मधुमत्तमम्। इडां नः संयतं करत्, इति।

यः पर्जन्यदेवो गर्भप्रदस्तस्मा इत्तस्यैव पर्जन्यस्य देवस्याऽऽस्ये मुखे हे ऋत्विजो हविर्जुहोत। कीदृशं हविः। मधुमत्तममतिशयेन मधुरम्। स च पर्जन्योऽस्माकं संयतं सम्यङ्नियतमिडामन्नं करत्करोतु। पर्जन्यायेत्यादिमन्त्रचतुष्टयं पर्जन्यदेवताके कर्मणि द्रष्टव्यम्। अत एव सूत्रकारश्चातुर्मास्येष्वन्वारम्भणीयेष्टौ पर्जन्यचरुं विधाय तत्र पर्जन्यायेति मन्त्रद्वयं विनियुक्तवान्।

अथ सप्तदशीमाह—

तिस्रो यदग्ने शरदस्त्वामित्। शुचिं घृतेन शुचयः सपर्यान्। नामानि चिद्दधिरे यज्ञियानि। असूदयन्त तनुवः सुजाताः (६), इति।

हेऽग्ने यद्यस्मात्कारणात्तिस्रः शरदस्त्रीन्संवत्सराञ्शुचयः शुद्धा मरुतः शुचिं त्वामिच्छुद्धात्मानं त्वामेव घृतेन सपर्यान्परि(र्य)चरन्। तस्मात्कारणाद्यज्ञियानि यज्ञयोग्यानि नामानि चिद्दधिरे नामान्यपि धृतवन्तः। तानि च मरुतां नामान्यन्यत्राऽऽम्नातानि "ईदृङ् चान्यादृङ् च" इत्यादीनि। ते च मरुतः सुजातास्तनुवः सुष्ठु समुत्पन्नाः स्वकीयास्तनूरसूदयन्तान्तरिक्षे प्रेरितवन्तः। अयं मन्त्र आग्नेये कर्मणि द्रष्टव्यः।

अथाष्टादशीमाह—

इन्द्रश्च नः शुनासीरौ। इमं यज्ञं मिमिक्षतम्। गर्भं धत्तᳪ स्वस्तये, इति।

शुनो वायुः सीर आदित्यः। हे शुनासीरौ नोऽस्मदीयमिमं यज्ञं मिमिक्षतं घृतादिद्रव्येण सेक्तुमिच्छतम्। भवत्स्वामी योऽयमिन्द्रः सोऽपि सक्तुमिच्छतु। तथा शुनासीरौ युवां स्वस्तये क्षेमाय गर्भं धत्तं संपादयतम्।

अथैकोनविंशीमाह—

यये॑रि॒दं विश्वं॒ भुव॑नमावि॒वेश॑। ययो॑रान॒न्दो नि॑हि॒तो मह॑श्च। शु॒ना॑सीरावृ॒तुभि॑ः संवि॒दा॒नौ। इन्द्र॑वन्तौ ह॒विरि॒दं जु॑षेथाम्, इति।

ययोः शुनासीरयोरिदं विश्वं भुवनमाविवेश प्रविष्टमाश्रितमित्यर्थः। तथा ययोः शुनासीरयोरानन्दो निहितोऽवस्थितो महश्च तेजोऽप्याश्रितम्। तौ शुनासीरावृतुभिर्वसन्तादिदेवैः सह संविदानावैकमत्यं गताविन्द्रवन्ताविन्द्रेण युक्तौ युवामिदं हविर्जुषेथाम्। एतच्चोभयं शुनासीर्ये[1] कर्मणि द्रष्टव्यम्।

अथ विंशीमाह—

आ घा ये अ॒ग्निमि॒न्धते॑। स्तृ॒णन्ति॑ ब॒र्हिरा॑नु॒षक्। येषा॒मिन्द्रो॒ युवा॒ सखा॑, इति।

ये यजमाना ऋत्विज आ समन्तादग्निमिन्धते प्रज्वलयन्ति। घशब्दः पादपूरणार्थः प्रसिद्ध्यर्थो वा। प्रसिद्धा ऋत्विज इत्यर्थः। तथाऽऽनुषगनुषक्तं बर्हिर्ये स्तृणन्ति। तथा येषां यजमानादीनां युवा नित्यतरुण इन्द्रः सखा सखिवत्सुलभो भवति। ते यजमानादयः कर्मानुतिष्ठन्त्विति शेषः। अनेन मन्त्रेण सुत्यादिने महारात्रे बुद्ध्वा सदोऽभिमृशेत्। तथा च सूत्रकारणोक्तम्—"आ घा ये अग्निमिन्धत इति सदः" इति।

अथैकविंशीमाह—

अग्न॒ इन्द्र॑श्च मे॒दिना॑। ह॒थो वृ॒त्राण्य॑प्र॒ति। यु॒वꣳहि वृ॑त्र॒हन्त॑मा, इति।

हेऽग्ने त्वं चेन्द्रश्च मेदिना मेदस्वन्तौ बलवन्तौ वृत्राणि शत्रूनप्रति प्रतिकूलत्वं यथा [न] भवति तथा हथो मारयथः। हि यस्मात्कारणाद्युवं युवामुभौ वृत्रहन्तमाऽतिशयेन शत्रुघातिनौ।

1 ग. शुनासीरीये।

अथ द्वाविंशीमाह—

याभ्याꣳ सुवरजयन्नग्र एव । यावातस्थतुर्भुवनस्य मध्ये । प्रचर्षणी वृषणा वज्रबाहू । अग्नी इन्द्रा वृत्रहणा हुवे वाम् (७), इति ।

मम इन्द्रो गविष्टिषु तन्तुं गर्भꣳ सुजाताः सखा सप्त च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके चतुर्थाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

याभ्यामिन्द्राग्निभ्यामग्र एवेतः पूर्वमेवानुगृहीता यजमानाः सुवरजयन्स्वर्गं जितवन्तः । यौ चेन्द्राग्नी भुवनस्य मध्ये सर्वत्राऽऽतस्थतुः आगत्य स्थितौ । ताविन्द्राग्नी वां युवां हुवेऽस्मिन्कर्मण्याह्वयामि । कीदृशौ । प्रचर्षणी प्रकृष्टैश्चर्षणीभिर्मनुष्यैर्यागकर्तृभिर्युक्तौ वृषणा कामानां वर्षयितारौ वज्रबाहू हस्ते वज्रं धारयन्तौ वृत्रहणा वैरिघातिनौ । एतच्चोभयमैन्द्राग्ने कर्मणि द्रष्टव्यम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ चतुर्थप्रपाठके षष्ठोऽनुवाकः ।

---

षष्ठेऽनुवाके प्रथमामृचमाह—

उत नः प्रिया प्रियासु । सप्तस्वसा सुजुष्टा । सरस्वती स्तोम्याऽभूत्, इति ।

इयं सरस्वती स्तोम्या स्तोत्रयोग्याऽभूत् । कीदृशी । प्रियासु देवतासु मध्येऽत्यन्तं प्रियोताऽपि च नोऽस्माकं विशेषतः प्रिया, सप्तसंख्याका ब्राह्मीमाहेश्वरीत्याद्या देवताः स्वसारो भगिन्यो यस्याः सा सप्तस्वसा सुजुष्टा सुष्ठु सेविता ।

अथ द्वितीयामाह—

इमा जुह्वाना युष्मदा नमोभिः । प्रति स्तोमꣳ

सरस्वति जुषस्व । तव शर्मन्प्रियतमे दधानाः ।
उपस्थेयाम शरणं न वृक्षम्, इति ।

हे सरस्वति युष्मद्युष्मांस्त्वामित्यर्थः । इमे यजमाना नमोभिर्नमस्कारैः सहाऽऽजुह्वानाः सर्वतो होमयाह्वानं वा कुर्वन्तो वर्तन्ते । स्तोमं त्वदीयं स्तोत्रं प्रति प्रातिदिवकर्ममसाधारणं जुषस्व सेवस्व । तव प्रियतमेऽतिप्रिये वृक्षवदुपकारके शर्मञ्शरणे गृहे दधाना हविर्धारयन्तो वयमुपस्थेयामोपस्थानं करवाम[3] । एवदुभयं सारस्वते कर्मणि द्रष्टव्यम् । तथा "सारस्वतीं मेषीमालभेत" इत्यस्य पशोः सूत्रे प्रतीकमाम्नातम्—"इमा जुह्वाना यस्ते स्तनः" इति ।

अथ तृतीयामाह—

त्रीणि पदा विचक्रमे । विष्णुर्गोपा अदाभ्यः ।
ततो धर्माणि धारयन् (१), इति ।

गोपाः सर्वस्य जगतो रक्षकोऽदाभ्यः केनाप्यतिरस्कार्यो विष्णुः कृत्स्नेऽपि जगति त्रीणि पदा विचक्रमे पदत्रयं निदधौ । किं कुर्वंस्ततस्तस्मात्पदत्रयाद्धर्माणि धारयितव्यानि सर्वाणि वस्तूनि धारयन् ।

अथ चतुर्थीमाह—

तदस्य प्रियमभि पाथो अश्याम् । नरो यत्र देवयवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था ।
विष्णोः पदे परमे मध्व उत्सः, इति ।

देवयवो देवानिच्छन्तो नरो यजमाना यत्र भागीरथीजले मदन्ति हृष्यन्ति । अस्य विष्णोः प्रियं तत्पाथो भागीरथीजलमभ्यश्यामभितो व्याप्नवान् । उरुक्रमस्य विस्तीर्णपादस्य विष्णोः परमे पदे तृतीये पादे बन्धुः संबद्धो मध्वो मधुर उत्सो भागीरथीप्रवाह इत्था हि एवंविधः । हिशब्दः सर्वलोकप्रसिद्धिद्योतनार्थः ।

---

१ क. ख. °कतयाऽऽसा° । २ क. ख. °थे श° । ३ क. ख. °म । तत्र दृष्टान्तः शरणं वृक्षमिव । ए° ।

अथ पञ्चमीमाह—

क्रत्वा दा अस्तु श्रेष्ठः । अद्य त्वा वन्वन्त्सु-

रेक्णाः । मर्त आनाश सुवृक्तिम्, इति ।

क्रत्वा क्रतौ कर्मणि दा हविषो दाता श्रेष्ठः सर्वेषां मध्ये प्रशस्तोऽस्तु भवतु । हेऽग्नेऽद्यास्मिन्कर्मणि त्वां वन्वन्याचमानः सुरेक्णाः शोभनधनो मर्तो मनुष्यः सुवृक्तिं सुष्ठु दारिद्र्यवर्जनमानाशाऽऽनशे व्याप्नोति । अयं मन्त्र आग्नेये कर्मणि द्रष्टव्यः ।

अथ षष्ठीमाह—

इमा ब्रह्म ब्रह्मवाह । प्रिया त आ बर्हिः

सीद । वीहि सूर पुरोडाशम् ( १ ), इति ।

ब्रह्माणि वेदान्वहतीति ब्रह्मवाहो वेदैरविनाभूतः सूर्यः । अत एवान्यत्राऽऽम्नातम्—“वेदैरशून्यस्त्रिभिरेति सूर्यः” इति । तादृश सूर हे सूर्येमा ब्रह्मेमानि ब्रह्माणि वेदवाक्यानि कर्मण्यस्मिन्नुच्चार्यमाणानि ते प्रिया तव प्रियाणि । अतस्त्वं बर्हिरासीद यज्ञमागच्छ पुरोडाशं वीहि भक्षय । अयं मन्त्रः सौर्ये कर्मणि द्रष्टव्यः ।

अथ सप्तमीमाह—

उप नः सूनवो गिरः । शृण्वन्त्वमृतस्य

ये । सुमृडीका भवन्तु नः, इति ।

अमृतस्य सूनवः क्षीरस्य पुत्रा ये मरुतः सन्ति । तथा च ब्राह्मणमाम्नातम्—“ पृश्नियै वै पयसो मरुतो जाताः ” इति । हे मरुतो नोऽस्मदीया गिरः स्तुतिरूपा वाच उपशृण्वन्तु । ततो नोऽस्माकं सुमृडीकाः सुखहेतवो भवन्तु । अयं मन्त्रो मारुते कर्मणि द्रष्टव्यः ।

अथाष्टमीमाह—

अधा नो देव सवितः । प्रजावत्सावीः

सौभगम् । परा दुष्ष्वप्निय सुव, इति ।

हे सवितर्देवाद्यास्मिन्कर्मणि नोऽस्माकं प्रजावत्पुत्रपौत्राद्युपेतं सौभगं सौभाग्यं सावीरनुजानीहि । दुष्ष्वप्नियं दुःस्वप्ननिमित्तं दोषं परासुव विनाशय।

अथ नवमीमाह—

विश्वा॑नि देव सवितः । दुरितानि परा॑-

सुव । यद्भद्रं तन्म आसु॑व, इति ।

हे सवितर्देव विश्वानि दुरितानि परासुव विनाशय । यद्भद्रं कल्याणमस्ति तन्मे ममाऽऽसुव सर्वतोऽनुजानीहि । एतदुभयं सावित्रे कर्मणि द्रष्टव्यम् ।

अथ दशमीमाह—

शुचि॑मर्कैर्बृहस्पति॑म् ( ३ ) । अध्वरेषु नमस्यत ।

अनाम्योज आ च॑के, इति ।

हे ऋत्विजः शुचिं शुद्धं बृहस्पतिमध्वरेषु यागेष्वर्कैरर्चनैः सह नमस्यत नमस्कुरुत । तस्य बृहस्पतेः प्रसादादहमनामि कस्याप्यवशमोजो बलमाचके सर्वतः प्राप्नवानि । अयं मन्त्रो बार्हस्पत्ये कर्मणि द्रष्टव्यः ।

अथैकादशीमाह—

याऽधारयन्त देवा सुदक्षा दक्ष॑पितारा । असुर्या॑य

प्रम॑हसा, इति ।

देवाः सर्वेऽपीन्द्रादयो देवाः सुदक्षा सुष्ठु दक्षौ कुशलौ दक्षपितारा दक्षस्य कर्मणः पालकौ यौ मित्रावरुणौ प्रमहसा प्रकृष्टेन तेजसाऽसुर्यायासुरसंबन्धिने विनाशाय(या)धारयन्त चित्ते धृतवन्तो मित्रावरुणावेवासुरान्विनाशयत इत्येवं निश्चितवन्तः । अयं मन्त्रो मैत्रावरुणशस्त्रेऽन्तर्भावनीयः ।

अथ द्वादशीमाह—

स इत्क्षेति सुधि॑त ओक॑सि स्वे । तस्मा इडा॑

पिन्वते विश्वदानी॑ । तस्मै विशः स्वयमेवाऽऽनम॑-

न्ति । यस्मिन्ब्रह्मा राजनि पूर्व एति, इति ।

---

१ क. ख. °न्यदं म ममामि । ओजो ।

यस्मिन्राजनीन्द्रे ब्रह्मा बृहस्पतिः पूर्व एति पुरतो गच्छति स इत्स एवेन्द्रो राजा स्वे स्वकीय ओकसि स्थाने सुधितः सुखं प्राप्तः सन्क्षेति सीदति। तस्मै राज्ञ इडा धेनुर्विश्वदानी सर्वदा पिन्वते प्रीतिं जनयति। तस्मै राज्ञे विशः प्रजाः स्वयमेवाऽऽनमन्ति वशी भवन्ति। अत्र राजशब्देनेन्द्रो मनुष्यो वा विवक्षितव्यः। अयं मन्त्रो बार्हस्पत्ये कर्मणि द्रष्टव्यः।

अथ त्रयोदशीमाह—

सकूतिमिन्द्र सच्युतिम्। सच्युतिं जघनच्युतिम्

(४)। कनात्काभां न आभर। प्रयप्स्यन्निव

सक्थ्यौ, इति।

हे इन्द्र कनात्काभां कनकवद्भासमानां रूपवतीं कन्यां नोऽस्मदर्थमाभराऽऽनय। कीदृशीम्। सकूतिं कूतिराकूतिः संकल्पस्तेन सहितामस्मास्वनुरक्तामित्यर्थः। सच्युतिं च्युतिः क्षरणं वीर्यस्यन्दनं तेन सहिताम्। अनुरागातिशयेन हि सहसा वीर्यं स्यन्दति। एतदेव पुनः सच्युतिमित्यनूद्य जघनच्युतिमित्यनेन व्याख्यायते। आहरणे दृष्टान्तः—सक्थ्यौ प्रयप्स्यन्निव यथाऽत्यन्तं कामुक ऊरुद्वयं प्रति यब्धुमुद्युक्तोऽत्यन्तादरेण स्त्रियमाहरति तद्वत्।

अथ चतुर्दशीमाह—

वि न इन्द्र मृधो जहि। कनीखुनदिव सापयन्।

अभि नः सुष्टुतिं नय, इति।

हे इन्द्र मृधोऽस्मद्विवाहप्रतिबन्धकाञ्शत्रून्विजहि विविधं मारय। कनीखुनदिव सापयन्यथा पूर्वं भूमौ निक्षिप्तं द्रव्यमतिशयेन खनित्वा स पुरुषः स्वपुत्रं प्रत्यानीय संयोजयति तद्वत्त्वमपि कन्यारत्नमस्मासु संयोजयन्नोऽस्मदीयां सुष्टुतिं शोभनां कीर्तिमाभि सर्वतो नय प्रापय। एतच्च मन्त्रद्वयं कन्यालभार्थे विनियोज्यम्।

अथ पञ्चदशीमाह—

प्रजापतिः स्त्रियां यशः। मुष्कयोरद-

१ क. ख. पिबसति। २ क. ख. स्खलति।

धात्सर्पम् । कामस्य तृप्तिमानन्दम् ।

तस्याग्ने भाजयेह मां, इति ।

योऽयं प्रजापतिर्जगतः स्रष्टा स्त्रियां यशो भार्यायां गर्भरूपेण यशसः कारणं यद्वीर्यं तन्मुष्कयोरण्डयोः सर्पं संबन्धमदधात्स्थापितवान् । तस्यैव स्थापितस्य विशेषणानि कामस्य तृप्तिं तृप्तिकारणम् । तस्मिन्गलिते सति योषिन्मे भूयादिति कामो निवर्तते तन्निवृत्तिरेव तृप्तिः । अत एवाऽऽनन्दं सुखकारणम् । हेऽग्न इह विवाहे कर्मणि मां तस्य वीर्यस्य सुखं भाजय प्रापय ।

अथ षोडशीमाह—

मोदः प्रमोद आनन्दः ( ५ ) । मुष्कयो-

र्निहितः सर्पः । सृत्वेव कामस्य तृप्याणि ।

दक्षिणानां प्रतिग्रहे, इति ।

मोदादयस्त्रयस्तारम्येनावस्थिताः सुखावान्तरविशेषाः । वार्ताजन्यः सुखविशेषो मोदः । दर्शनजन्यः प्रमोदः । भोगजन्य आनन्दः । तेषां सर्वेषां सर्पः समवायहेतुर्मुष्कयोर्निहितः स्थापितः । दक्षिणानां प्रतिग्रहे सति कामस्य सृत्वेव कामितार्थं प्राप्येव तृप्याणि तृप्तो भवानि । अयमर्थः— ऋत्विजां दक्षिणाकाले कन्याऽपि दीयते । अत एवाऽऽपस्तम्बधर्मेषु स्मर्यते—" दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेत् " इति । दैवे विवाहे चिकीर्षिते सति यज्ञप्रयोगमध्य ऋत्विजे कन्यां समर्पयेत् । आश्वलायनोऽपि दक्षिणारूपायाः कन्याया अभिमर्शनं विधत्ते—" अभिमृशेद्प्राणि कन्यां च " इति । तस्माद्दक्षिणानां प्रतिग्रहे सति कन्यां प्राप्तस्य यादृशी तृप्तिस्तादृशी तृप्तिर्भवतीति ।

अथ सप्तदशीमाह—

मनसश्चित्तमाकूतिम् । वाचः सत्यमशी-

महि । पशूनाꣳ रूपमन्नस्य । यशः श्रीः

श्रयतां मयि, इति ।

मनसः संबन्धि चित्तं विज्ञानमाकूतिं संकल्पं वाचः संबन्धि सत्यवदनं

चाशीमहि प्राप्नुयाम। तथा पशूनां गवादीनां रूपमनेकविधं स्वरूपमन्नस्य संबन्धि यशः कीर्तिं चाशीमहि। मयि श्रीर्धनसमृद्धिः श्रयतां सेवताम्।

अथाष्टदशीमाह—

यथाऽहमस्या अतृ॑पꣳ स्त्रि॒यै पुमा॑न्। यथा॒ स्त्री तृप्य॑ति पुꣳसि प्रि॒ये प्रि॒या। ए॒वं भग॑स्य तृप्याणि (६)। य॒ज्ञस्य॒ काम्यः॑ प्रि॒यः, इति।

अस्यै स्त्रिया अस्यां विवाहेन लब्धायां स्त्रियां पुमानहं यथाऽतृपं येन प्रकारेण तृप्तोऽस्मि यथा च प्रिया स्त्री प्रिये पुंसि तृप्यत्येवमहं भगस्य तृप्याणि सौभाग्येन तृप्तो भवानि। कीदृशोऽहम्। यज्ञस्य काम्यो यज्ञो हि स्वानुष्ठानाय मां कामयते। अत एव यज्ञस्याहं प्रियः।

अथैकोनविंशीमाह—

द॒दा॒मीत्य॒ग्निर्व॑दति। तथेति॑ वा॒युरा॑ह॒ तत्। हन्तेति॑ स॒त्यं च॒न्द्रमाः॑। आ॒दि॒त्यः स॒त्यमोमिति॑, इति।

एतां कन्यामहं ददामीत्येवमग्निर्ब्रूते। तत्तथाऽस्त्विति वायुरप्याह। चन्द्रमास्तु तत्सत्यं हन्त ममायं हर्ष इत्याह। आदित्यः सत्यमोमित्यवश्यमङ्गीकरोमीति ब्रूते।

अथ विंशीमाह—

आ॒पस्तत्स॒त्यमाभ॑रन्। यशो॑ य॒ज्ञस्य॒ दक्षि॑णाम्। अ॒सौ मे॒ कामः॑ समृ॑ध्यताम्, इति।

यज्ञस्य दक्षिणां यज्ञसंबन्धिदक्षिणारूपं यशो यशसः कारणं तत्कन्यारूपं वस्त्वापः सत्यमाभरन्नब्देवता अवश्यमानयन्। तस्मादसौ पुत्रोत्पादनरूपो मे कामः समृध्यतां समृद्धो भवतु। प्रजापतिरित्यादिमन्त्रषट्कस्य कन्याप्रतिग्रहे विनियोगमाह बौधायनः—"अथ यदि दक्षिणाभिः सह दत्ता स्यान्नात्र वरान्प्रहिणुयात्तां प्रतिगृह्णीयात्प्रजापतिः स्त्रियां यश इत्येताभिः षड्भिरनुच्छन्दसम्" इति। आपस्तम्बमतानुसारिणस्तु वध्वाः शिरसि तण्डुलप्रक्षेपे विनियोगमाहुः।

अथैकविंशीमाह—

न हि स्पशमविदन्नन्यमस्मात् । वैश्वानरात्पुर

एतारमग्नेः ( ७ ) । अथेममन्थन्नमृतम-

मूराः । वैश्वानरं क्षेत्रजित्याय देवाः, इति ।

वैश्वानरनामकादस्मादग्नेरन्यं देवं स्पशं रक्षसां बाधकं पुर एतारं देवानां पुरतो गन्तारं न ह्यविदन्देवाः सर्वथा नालभन्त । अथानन्तरममूरा अमूढा देवाः क्षेत्रजित्याय कर्मानुष्ठानाङ्गक्षेत्रजयाय तन्मार्गजयाय वाऽमृतं केनाप्यतिरस्कृतमीं वैश्वानरमिमं वैश्वानराख्यमग्निममन्थन्नरण्योर्मथितवन्तः ।

अथ द्वाविंशीमाह—

येषामिमे पूर्वे अर्मास आसन् । अयूपाः सद्म

विभृता पुरूणि । वैश्वानर त्वया ते

नुत्ताः । पृथिवीमन्यामभितस्थुर्जनासः, इति ।

येषां जनानां यजमानानामयूपा विमोहराहिता इमे वैश्वनरस्य मन्थितारो देवाः पूर्वेऽर्मासः पूर्वभाविनो गन्तार आसन् । पुरूणि सद्म बहूनि यज्ञगृहाणि च येषां यजमानानां विभृतानि विशेषेण संपादितानि ते जनासो जना यजमाना हे वैश्वानर त्वया नुत्ताः प्रेरिताः सन्तोऽन्यां कांचिद्यज्ञयोग्यां पृथिवीमभितस्थुरभिगम्यावस्थिताः । एतच्चोभयं वैश्वानरदेवत्ये कर्मणि द्रष्टव्यम् ।

अथ त्रयोविंशीमाह—

पृथिवीं मातरं महीम् । अन्तरिक्षमुप-

ब्रुवे । बृहतीमूतये दिवम्, इति ।

इमां पृथिवीं महीं महतीं मातरं मातृसमानामहमुपब्रुवे । यथा माता पालयति तथा त्वं पालयेति ब्रुवे प्रार्थये । अन्तरिक्षमप्यवकाशप्रदानाय प्रार्थये । बृहतीं प्रौढां दिवमप्यूतये वृष्टिप्रदानेन रक्षणाय प्रार्थये ।

अथ चतुर्विंशीमाह—

विश्वं बिभर्ति पृथिवीम् ( ८ )। अन्तरिक्षं

विप्रथे । दुहे द्यौर्बृहती पयः, इति ।

इयं पृथिवी विश्वं सर्वं जगद्बिभर्ति धारयति पोषयति च । अन्तरिक्षमध्यवकाशप्रदानाय विप्रथे विस्तीर्णमभूत् । बृहती द्यौः पयो दुहे जलं दोग्धि । एतच्च मन्त्रद्वयं लोकेष्टौ द्रष्टव्यम् । तथा चाऽऽश्वलायन आह—"लोकेष्टिः पृथिव्यन्तरिक्षं द्यौरिति देवताः पृथिवीं मातरम्" इति ।

अथ पञ्चविंशीमाह—

न ता नेशन्ति न दभाति तस्करः । नैना आमित्रो

व्यथिरादधर्षति । देवांश्च याभिर्यजते ददाति च ।

ज्योगित्ताभिः सचते गोपतिः सह, इति ।

याभिर्गोभिर्देवानुद्दिश्य यजते च यागमपि करोति ददाति च गवां दानमपि करोति ता गावो न नशन्ति नैव नाशं प्राप्नुवन्ति । तस्करश्चोरोऽपि ता गा न दभाति न हिनस्ति । व्यथिर्व्यथाहेतुरमित्रः शत्रुरप्येना गा नाऽऽदधर्षति नैव धृष्टो भवति ताडयितुं प्रगल्भो न भवति । ताभिर्गोभिः सह गोपतिर्गवां स्वामी ज्योगिच्चिरमेव सचते स्वर्गे समवेतो भवति ।

अथ षड्विंशीमाह—

न ता अर्वा रेणुककाटो अश्नुते । न संस्कृतत्रमु-

पयन्ति ता अभि । उरुगायमभयं तस्य ता अनु ।

गावो मर्त्यस्य वि चरन्ति यज्वनः (९), इति ।

रेणुककाटो रेणोर्भूधूलेः ककाट उत्थापकस्तीव्रगतियुक्त इत्यर्थः । अर्वा तादृशोऽश्वस्ता गा नाश्नुते न व्याप्नोति, अश्वादपि शीघ्रगतय इत्यर्थः । अत एव ता अभ्येतादृशीर्गा अभिलक्ष्य संस्कृतत्रं संस्कारेण युक्तं रक्षार्थं दण्डं नोपयन्ति गोपाला हस्ते दण्डं न स्वी कुर्वन्ति । शक्त्याधिक्येनाश्वादपि शीघ्रं गच्छन्तीनां गवां ताडनार्थो दण्डो नापेक्षितः । यज्वनो यागशीलस्य तस्य मर्त्यस्य मनुष्यस्य ता गाव उरुगायं विस्तीर्णगतियोग्यं भयरहितं स्थानं प्राप्य विचरन्ति विस्रम्भेण चरन्ति । एतच्च मन्त्रद्वयं ब्रह्मण ऋषभमिति विहितस्य पशोरुपहोमार्थं गोसूक्तेऽन्तर्भूतम् । अत एव तत्र प्रतीकद्वयमाम्नातम्—" न ता नशन्ति न ता अर्वा " इति ।

अथ सप्तविंशीमाह—

रात्री व्यख्यदायती । पुरुत्रा देव्यक्षभिः ।

विश्वा अधिश्रियोऽधित, इति ।

पुरुत्रा पुरुषु बहुषु दिवसेष्वायती पुनः पुनरागच्छन्ती रात्री देवी रात्र्यभिमानिनी देवताऽक्षभिः सर्वेषां प्राणिनां चक्षुर्भिर्व्यख्यद्विख्याताऽभूत् । अन्धकारं ज्योत्स्नां वा दृष्ट्वा रात्रिरियमिति निश्चीयते । सा च देवी विश्वाः श्रियः सर्वाः संपदोऽधिष्ठायाधित धारितवती ।

अथाष्टाविंशीमाह—

उप ते गा इवाकरम् । वृणीष्व दुहितर्दिवः । रात्री स्तोमं न जिग्युषी, इति ।

दिवो दुहितर्द्युलोकदेवतायाः पुत्रि हे रात्रि गा इव गोभिरुपलक्षितान्गोमहिषादीन्सर्वानपि पशूंस्त उपाकरं तव समीपे कृतवानस्मि । ताने वृणीष्व रक्षार्थं सर्वानपि गवादीन्स्वी कुरु । रात्रौ हि पशवः शालासु रक्ष्यन्ते । इयं रात्री देवी स्तोमं नास्माभिः कृतं स्तोत्रमपि जिग्युषी जितवती वशीकृतवती । एतच्च मन्त्रद्वयमरिष्टदर्शनेषु होमेषु विनियोक्तव्यम् । तथा च बह्वृचा आरण्यकाण्डे संहितोपनिषदि प्रत्यक्षाणि स्वप्नगतानि चारिष्टान्युपन्यस्यानन्तरमिदमामनन्ति " स यद्येतेषां किंचित्पश्येत् । उपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रिसूक्तेन प्रत्यृचं हुत्वा " इति ।

अथैकोनत्रिंशीमाह—

देवीं वाचमजनयन्त देवाः । तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना । धेनुर्वागस्मानुप सुष्टुतैतु ( १० ), इति ।

देवाः सर्वे वाचं देवीमजनयन्त । तां वाचं विश्वरूपा द्विपाच्चतुष्पादवान्तरभेदेन बहुविधाः पशवः स्वस्वभाषारूपेण वदन्ति । सा वाग्रूपा धेनुर्नोऽस्मदर्थमिषमन्नमूर्जं क्षीरादिरसं दुहाना संपादयन्ती सुष्टुताऽस्माभिः सुष्ठु वैदिकैः स्तोत्रैः स्तुता मन्द्रा हृष्टा सत्यस्मान्प्रत्यागच्छतु ।

अथ त्रिंशीमाह—

यद्वाग्वद॑न्त्यविचेत॒नानि॑ । राष्ट्री॑ दे॒वानां॑ निष॒साद॑ म॒न्द्रा । चत॑स्र॒ ऊर्जं॑ दुदुहे॒ पयां॑सि । क्व॑ स्विदस्याः पर॒मं ज॑गाम, इति ।

यद्वाग्या वाग्देवताऽविचेतनान्यचेतनसदृशान्मूकान्प्राणिनो वदन्त्यभिवदनक्षमान्कुर्वती । देवानां सर्वेषां राष्ट्री राष्ट्रप्रदा मन्द्रा हृष्टा सती निषसादास्मदीये कर्मण्युपविष्टा । यस्या वाग्देव्याः प्रसादाच्चतस्रो दिग्देवता ऊर्जं क्षीरादिरसद्रव्यं पयांसि जलानि च दुदुहे दुहन्ति संपादयन्ति । अस्या वाग्देव्याः परमं पदं मनुष्यः कस्विज्जगाम कुत्र वा प्राप्तवांस्तदीयस्थानं प्राप्तुं न कोऽपि क्षम इत्यर्थः । इदं च मन्त्रद्वयं " वाचे वेहतम् " इति विहिते पशौ विनियोक्तव्यम् । अत एव तदीये स्तोत्रे प्रतीकद्वयमाम्नातम्—" देवीं वाचमजनयन्त यद्वाग्वदन्ति " इति ।

अथैकत्रिंशीमाह—

गौ॒री मि॑माय सलि॒लानि॒ तक्ष॑ती । एक॑पदी द्वि॒पदी॒ सा चतु॑ष्पदी । अ॒ष्टाप॑दी॒ नव॑पदी बभू॒वुषी॑ । स॒हस्रा॑क्षरा पर॒मे व्यो॑मन्, इति ।

परमे व्योम्नि ब्रह्मणि प्रतिष्ठिता गौरी गौरवर्णा वाग्देवी सृष्ट्युपक्रमे सलिलसदृशानि वर्णपदवाक्यानि तक्षती सृजन्ती मिमाय शब्दमकरोत् । कथम् । प्रथमं प्रणवात्मनैकपदी ब्रह्मणो मुखान्निर्गता । अनन्तरं व्याहृतिरूपेण सावित्रीरूपेण च द्विपदी । ततो वेदचतुष्टयरूपेण चतुष्पदी । ततो वेदाङ्गैः षड्भिः पुराणधर्मशास्त्राभ्यां चाष्टापदी । ततो मीमांसान्यायसांख्ययोगपाञ्चरात्रपाशुपतायुर्वेदधनुर्वेदगान्धर्वैर्नवपदी । ततोऽनन्तैर्वाक्यसंदर्भैः सहस्राक्षराऽनन्तविधा बभूवुषी संपन्ना ।

अथ द्वात्रिंशीमाह—

तस्याः॑ समु॒द्रा अधि॒ वि क्ष॑रन्ति । तेन॑ जीवन्ति

---

१ क. ख. सूक्ते ।

प्रदिशश्चतस्रः (११)। ततः क्षरत्यक्षरम्। तद्विश्वमुपजीवति, इति ।

तस्यां वाग्देवतायामधिश्रिताः समुद्राः समुद्रसमाना वेदा विक्षरन्ति विविधं प्रवर्तन्ते । तेन प्रवर्तनेन चतस्रः प्रदिशश्चतुर्विधाः प्राच्यादिदिगवस्थिताः प्राणिनो जीवन्ति वेदोक्तमनुष्ठायैहिकमामुष्मिकं च प्राप्नुवन्ति । ततो वेदादेवाक्षरं प्रणवात्मकं प्रवर्तते । तदेतदक्षरं विश्वमुपजीवति सर्वे जनाः प्रणवानुष्ठानेन स्वापेक्षितं फलं प्राप्नुवन्ति । एतच्च मन्त्रद्वयं "वाचे वेहतम्" इत्यत्रैवोपहोमार्थं द्रष्टव्यम् ।

अथ त्रयस्त्रिंशीमाह—

इन्द्रा सूरा जनयन्विश्वकर्मा । मरुत्वाꣳ अस्तु गणवान्त्सजातवान् । अस्य स्नुषा श्वशुरस्य प्रशिष्टिम् । सपत्ना वाचं मनसा उपासताम्, इति ।

इन्द्रा परमैश्वर्ययुक्तः सूरा सूर्यो विश्वकर्मा सर्वव्यापारयुक्तो विश्वं जनयन् । मरुत्वान्मरुद्भिर्युक्तो गणवान्वसुरुद्रादित्यगणैः सहितः सजातवान्सजातैः स्वेन समानजन्मभिः सर्वैः सहितश्च सन्यजमानस्यानुग्राहकोऽस्तु । ततश्चास्य यजमानस्य श्वशुरस्थानीयस्य सपत्नाः शत्रवः स्नुषा श्नुषावान्निलीयमानाः सन्तः प्रशिष्टिं प्रशासनरूपां वाचं मनसोपासतां मनःपूर्वं सेवता-(न्ता)म् ।

अथ चतुस्त्रिंशीमाह—

इन्द्रः सूरो अतरद्रजाꣳसि । स्नुषा सपत्नाः श्वशुरोऽयमस्तु । अयꣳ शत्रूञ्जयतु जर्हृषाणः । अयं वाजं जयतु वाजसातौ, इति ।

इन्द्रः परमैश्वर्ययुक्तः सूरः सूर्यो रजांसि रञ्जकानि प्राणिजातान्यतरत्तीर्णवान्वशी कृतवानित्यर्थः । तत्प्रसादाद्यजमानस्य सपत्नाः शत्रवः स्नुषावत्स्वाधीनाः सन्तु । अयं तु यजमानः श्वशुरोऽस्तु श्वशुरवत्स्वामी भवतु । स्वामित्वादेवायं यजमानो जर्हृषाणोऽत्यन्तं हृष्यञ्शत्रूञ्जयतु । पुनरप्ययं यजमानो वाजसातौ स्वकीयेभ्योऽन्नदाने निमित्ते सति वाजं जयतु वैरिसंबन्ध्यन्नं वशं करोतु । एते ऋचौ स्नुषाश्वशुरीयायामिष्टौ याज्यानुवाक्ये ।

अथ पञ्चविंशीमाह—

अ॒ग्निः क्ष॒त्र॒भृद॑नि॑भृ॒ष्टमोज॑ः । स॒ह॒स्रि॒यो दी॑प्यता॒म-

प्र॑युच्छन् । वि॒भ्राज॑मानः समि॒धा॒न उ॒ग्रः । आऽ-

न्तरि॑क्षमरुहद॒गन्द्याम् ( १२ ), इति ।

धा॒र॒यन्पु॒रो॒डा॒शं॑ बृ॒ह॒स्पतिं॑ जयन्द्युतिमानन्दो भर्गस्य तृप्याण्यग्नेः पृथिवी यज्वन एतु प्रदिशश्चतस्रो वाजसातौ चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके चतुर्थाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

अयमग्निः क्षत्रभृद्बलं धारयन्ननिभृष्टमोजः केनाप्यतिरस्कृतं बलमस्मभ्यं प्रयच्छन्निति शेषः। सहस्रियो देवसहस्रेण संमितोऽप्रयुच्छन्प्रमादमकुर्वन्दीप्यताम् । विभ्राजमानो विशेषेण दीप्यमानः समिधानः समिद्भिर्युक्त उग्रस्तीव्रः सन्नन्तरिक्षमरुहदारोढुमर्हति । ततो द्यामगन्दिवं गच्छतु । अयं मन्त्र आग्नेये कर्मणि द्रष्टव्यः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ चतुर्थप्रपाठके सप्तमोऽनुवाकः ।

---

सप्तमे प्रथमामृचमाह—

वृषा॒ऽस्यं॒शुर्वृ॑ष॒भाय॑ गृह्य॒से । वृषा॒ऽय-

मु॒ग्रो नृ॒चक्ष॑से । दि॒व्यः कर्म॒ण्यो हि॒तो

बृ॒हन्नाम॑ । वृ॒ष॒भस्य॒ या क॒कुत्, इति ।

अंशुर्लतात्मकः सोमस्त्वं वृषाऽसि वीर्यवानसि । स त्वं वृषभाय श्रेष्ठायेन्द्रायाभिषवार्थं गृह्यसे । अयमुपांशुसवनाख्य उग्रः कठिनो ग्रावा वृषा वीर्यवान्भूत्वा नृचक्षसे नृणां द्रष्ट्रे तस्मा इन्द्राय कर्मण्योऽभिषवकर्मणि कुशलो हितोऽभिषवार्थमुपरे निहितः, स च दिव्यो द्योतनात्मको बृहच्छब्दस्तस्य ग्राव्णस्तस्य नाम । अत एवान्यत्राऽऽम्नातः—"बृहन्नसि बृहद्ग्रावा" इति ।

वृषभस्य श्रेष्ठस्यं हिमवदादिपर्वतस्य या [ ककुत् ] ककुत्सदृशं शृङ्गं यदस्ति तद्रूपोऽयं पाषाणः । अत एव सन्नानां ग्राव्णामभिमन्त्रणमन्त्र एवमाम्नातः— " पर्वतानां ककुभः प्रयुज्यते " इति ।

अथ द्वितीया[माह]—

विषूवान्विष्णो भवतु । अयं यो मामको वृषा ।

अथो इन्द्र इव देवेभ्यः । विब्रवीतु जनेभ्यः, इति ।

हे विष्णो व्याप्तसोमायं यजमानो विषूवाञ्श्रेष्ठो भवतु । यो यजमानो मामको मदीयो वृषा यागद्वारेण फलाभिवर्षणहेतुः सोऽयमिति पूर्वत्रान्वयः । अपि च यथेवेन्द्रो देवेभ्यः कार्याणि विविच्य ब्रवीति तथाऽयं यजमानो जनेभ्यो विविच्य ब्रवीतु । अयं मन्त्रः कचित्कर्मणि यजमानाभिमन्त्रणार्थः ।

अथ तृतीया[माह]—

आयुष्मन्तं वर्चस्वन्तम् । अथो अधिपतिं

विशाम् ( १ ) । अस्याः पृथिव्या अध्य-

क्षम् । इममिन्द्र वृषभं कृणु, इति ।

हे इन्द्रेमं यजमानं वृषभं कृणु श्रेष्ठं कुरु । वृषभत्वमेव प्रपञ्च्यते—आयुष्मन्तं दीर्घेणाऽऽयुषा युक्तं वर्चस्वन्तमधिकेन बलेन युक्तमपि च विशां प्रजानामधिपतिमस्याः पृथिव्या अध्यक्षं स्वामिनम् । अयं मन्त्र आशीर्वादरूपे कर्मणि द्रष्टव्यः ।

अथ चतुर्थी[माह]—

यः सुशृङ्गः सुवृषभः । कल्याणो द्रोण आहितः ।

कार्षीवलप्रगाणेन । वृषभेण यजामहे, इति ।

योऽयमिन्द्रार्थमालभ्यमानः पशुः सोऽयं सुशृङ्गः शोभनशृङ्गोपेतः सुवृषभः सुष्ठु सेचनसमर्थः कल्याणो रमणीयो द्रोणो मुद्गमाषादिभक्षः परिपूर्णे काष्ठपात्र आहितो भक्षणाय नित्यं स्थापितः कार्षीवलप्रगाणेन कृषीवलैः कृतं कार्षीवलं तादृशं प्रगाणं प्रशंसनं यस्यासौ कार्षीवलप्रगाणस्तादृशेन तेन वृषभेण यजामह इन्द्रं पूजयामः ।

१ क. ख. °स्य मूजव° ।

अथ पञ्चमी[माह]—

वृषभेण यजमानाः । अक्रूरेणेव सर्पिषा । मृधश्च

सर्वा इन्द्रेण । पृतनाश्च जयामसि ( २ ), इति ।

यथाऽक्रूरेण स्वादुतमेन सर्पिषा यागः क्रियते तथैव वृषभेणानेन यजमाना वयमिन्द्रेणानुगृहीताः सन्तो मृधश्च शत्रूनपि सर्वाः पृतनाश्च परकीयसेना अपि जयामसि वशी कुर्मः ।

अथ षष्ठी[माह]—

यस्यायमृषभो हविः । इन्द्राय परिणीयते । जयाति

शत्रुमायन्तम् । अथो हन्ति पृतन्यतः, इति ।

यस्य यजमानस्यायमृषभो हविर्भूत्वेन्द्रार्थं परितो नीयते स यजमान आयन्तमागच्छन्तं शत्रुं जयति । अपि च पृतन्यतोऽस्मद्विरोधिनीं सेनामिच्छतः पुरुषान्सर्वानपि हन्ति ।

अथ सप्तमी[माह]—

नृणामहं प्रणीरसत् । अग्र उद्भिन्दतामसत्, इति ।

अयं वृषभयाजी नृणां मनुष्याणां प्रणीरसत्प्रकर्षेण नेता भवतु । अद्यापि चोद्भिन्दतां विरोधिजनोद्भेदनं कुर्वतां पुरुषाणां मध्येऽयमग्रेऽसत्प्रथमप्रवृत्तो भवतु । " यः सुशृङ्गः " इत्याद्यश्चत्वारो मन्त्राः " ऐन्द्रमृषभमालभेत " इत्येतस्मिन्पशावुपहोमार्थाः ।

अथाष्टमी[माह]—

इन्द्र शुष्मं तनुवा मेरयस्व । नीचा

विश्वा अभितिष्ठाभिमातीः । निशृणी-

ह्याबाधं यो नो अस्ति । उरुं नो

लोकं कृणुहि जीरदानो ( ३ ),इति ।

हे इन्द्र तनुवाऽस्मच्छरीरेषु शुष्मं बलं मेरयस्व प्रेरय । विश्वा अभिमातीः पाप्मनो नीचैः कृत्वाऽभितिष्ठाभितोऽवस्थितं कुरु । योऽयं नोऽस्माकमपरैः

संपादित आबाधोऽस्ति तमाबाधं निशृणीहि नितरां शीर्णं कुरु। हे जीरदानो जीवनहेतविन्द्र नोऽस्माकमुरुं विस्तीर्णं लोकं कृणुहि कुरुष्व।

अथ नवमीमाह—

प्रेह्यभिप्रेहि प्रभरा सहस्व। मा विवेनो विशृणुष्वा जनेषु। उदीडितो वृषभ तिष्ठ शुष्मैः। इन्द्र शत्रून्पुरो अस्माकं युध्य, इति।

हे इन्द्र प्रेहि विजयार्थं गच्छ। गमनकालेऽप्यभिप्रेहि शत्रोरभिमुखो गच्छ। गत्वा च प्रभरणं मुख्यानां प्रहारं कुरु। सहस्वेतरानभिभव। किंचिदपि शत्रुं मा विवेनोऽयमेको रक्षणीय [इति] विशेषेणाऽऽदरं मा कुरु। ततो जनेषु महतीं मदीयां स्तुतिं शृणुष्व। हे वृषभेडितः स्तुतः सन्पुनरपि शुष्मैर्बलैः सह शत्रून्हन्तुमुत्तिष्ठ, हे इन्द्रास्माकं शत्रून्पुरत एव युध्य संप्रहर। एतच्चोभयं विजयार्थमैन्द्रे कर्मणि द्रष्टव्यम्।

अथ दशमी[ माह ]—

अग्ने जेता त्वं जय। शत्रून्त्सहस ओजसा। वि शत्रून्विमृधो नुद, इति।

हेऽग्ने जेता जयशीलस्त्वं शत्रूञ्जय। तथौजसा बलेन सहसेऽभिभव। शत्रून्वितुद विशेषेण निराकुरु। मृधोऽन्यानपि बाधकान्विनुद।

अथैकादशी [ माह ]—

एतं ते स्तोमं तुविजात विप्रः। रथं न धीरः स्वपा अतक्षम्। यदीदग्ने प्रति त्वं देव हर्याः (४)। सुवर्वतीरप एना जयेम, इति।

तुविजात प्रभूतजन्म हेऽग्ने ते तवैतं स्तोमं स्तोत्रं विप्रो यजमानोऽहमतक्षं तक्षणवत्संपादनमकार्षम्। तत्र दृष्टान्तः—धीरो बुद्धिमान्स्वपाः शोभनकर्मा शिल्पी रथं न यथा रथं तक्षति तद्वत्। हेऽग्ने देव यदीद्यदिदं स्तोत्रं त्वं प्रतिहर्या आद्रियेथास्तर्हि वयं सुवर्वतीः सुवः कामयुता अप एनैतेन स्तोत्रेण जयेम। एतदुभयमाग्नेये कर्मणि द्रष्टव्यम्।

१ क. एना अपः फलसंपद एना एते॰।

अथ द्वादशीमाह—

यो घृतेनाभिमानितः । इन्द्र जैत्राय जज्ञिषे । स नः

संकासु पारय । पृतनासाह्येषु च, इति ।

हे इन्द्र यस्त्वं घृतेनाभिमानितोऽभितः पूजितः सञ्जैत्राय शत्रुजयाय जज्ञिषे जायसे जयसमर्थ इत्यर्थः । स त्वं संकासु परकीयसेनासु नोऽस्मान्पारय पालय। तथा पृतनासाह्येषु च सेनानामभिभवेष्वपि समर्थान्कुर्विति शेषः ।

अथ त्रयोदशी[माह]—

इन्द्रो जिगाय पृथिवीम् । अन्तरिक्ष॑ सुवर्महत् ।

वृत्रहा पुरुचेतनः, इति ।

पुरुचेतनो बहुविधज्ञानयुक्तो वृत्रहा शत्रुघातक इन्द्रः पृथिवीमन्तरिक्षं महान्तं स्वर्गं च जिगाय वशीकृतवान् ।

अथ चतुर्दशीमाह—

इन्द्रो जिगाय सहसा सहा॑सि । इन्द्रो जिगाय

पृतनानि विश्वा (५) । इन्द्रो जातो वि पुरो

रुरोज । स नः परस्पा वरिवः कृणोतु, इति ।

अयमिन्द्रः सहसा स्वकीयबलेन सहांसि परकीयबलानि जिगाय जितवानयमिन्द्रो विश्वा पृतनानि सर्वाणि सैन्यानि जिगाय । अयमिन्द्रो जातमात्र एव पुरः परकीयाणि पुराणि विरुरोज विशेषेण भग्नानि कृतवान् । स इन्द्रो नोऽस्माकं परस्पाऽतिशयेन पालयिता सन्वरिवः कृणोतु धनं करोतु । इदं मन्त्रद्वयमैन्द्रे कर्मणि द्रष्टव्यम् ।

अथ पञ्चदशी[माह]—

अयं कृत्नुरगृभीतः । विश्वजिदुद्भिदित्सोमः ।

ऋषिर्विप्रः काव्येन, इति ।

कृत्नुर्नाम कश्चिदृषिर्विप्रो ब्राह्मणः काव्यनाम्ना साम्नानिष्पन्नं स्तोत्रं काव्यं

तेन स्तोत्रेणायमृषिर्विश्वजित्सर्वस्य विश्वस्य जेतोद्भिदित्सर्वस्य विरोधिन उद्भेदक एव सन्सोमः सोमसदृशः सर्वस्योपकारकः स चागृभीतः केनाप्यनभिभूतः । अस्य मन्त्रस्य क्वचिज्जपे विनियोगो द्रष्टव्यः ।

अथ षोडशी[माह]—

वायुरग्रेगा यज्ञप्रीः । साकं गन्मनसा यज्ञम् ।

शिवो नियुद्भिः शिवाभिः, इति ।

अयं वायुरग्रेगाः प्रथमगामी यज्ञप्रीर्यज्ञेन प्रीयमाणः शिवाभिः शान्ताभिर्नियुद्भिर्नियुन्नामिकाभिः स्वकीयाभिर्वडवाभिः साकं शिवः स्वयमपि शान्तः सन्मनसा गन्ध्यानमात्रेण यज्ञं गच्छतु ।

अथ सप्तदशीमाह—

वायो शुक्रो अयामि ते । मध्वो अग्रं दिविष्टिषु (६) । आयाहि सोमपीतये ।

स्वारुहो देव नियुत्वता, इति ।

हे वायो शुक्रो निर्मलो मध्वो मधुरः सोमरसो योऽस्ति तमग्रं श्रेष्ठं दिविष्टिषु दिवि वासेच्छा येषां देवानां ते दिविष्टयस्तेषु मध्ये ते त्वदर्थमयामि रथं प्राप्नोमि । ततो हे देव नियुत्वता त्वदीययाऽश्वजात्या सह स्वारुहः सुष्ठु रथमारूढः सोमपीतये सोमपानार्थमायाहि । एतदुभयं वायव्ये कर्मणि द्रष्टव्यम् । वायुरग्रेगा इत्यादयस्तु मण्डगशस्त्रेऽप्यन्तर्भूताः ।

अथाष्टादशीमाह—

इममिन्द्र वर्धय क्षत्रियाणाम् । अयं विशां विश्पतिरस्तु राजा । अस्मा इन्द्र महि वर्चांसि धेहि ।

अवर्चसं कृणुहि शत्रुमस्य, इति ।

हे इन्द्र क्षत्रियाणां मध्य इमं पुरोवर्तिनं राजानं वर्धय । अयं राजा विशां प्रजानां मध्ये विश्पतिरतिशयेन प्रजापालकोऽस्तु । विशां मध्ये या उत्तमा विशस्तासामपि पालकोऽस्त्वित्यर्थः । हे इन्द्रास्मै राज्ञे महि वर्चांसि महान्ति बलानि धेहि संपादय । अस्य शत्रुमवर्चसं कृणुहि बलहीनं कुरु ।

अथैकोनविंशी[माह]—

इममाभज ग्रामे अश्वेषु गोषु। निरमुं भज

यो मित्रो अस्य। वर्ष्मन्क्षत्रस्य ककुभि

श्रयस्व। ततो न उग्रो विभजा वसूनि

(७), इति।

हे इन्द्रेमं राजानं सर्वस्मिन्ग्रामेऽश्वेषु गोषु चाऽऽभज सर्वतो भागिनं कुरु। अस्य राज्ञोऽमित्रः शत्रुर्योऽस्त्यमुं निर्भज भागरहितं कुरु। क्षत्रस्य क्षत्रियजातेर्वर्ष्मञ्शरीरे ककुभिरु(उ)त्तमाङ्गे श्रयस्वेन्द्रस्य प्रसादाश्रितो भव। सर्वोऽपि क्षत्रियजातिस्त्वां नमस्करोत्वित्यर्थः। अथवैनं राजानं श्रयस्व स्थापय। तत ऊर्ध्वं नोऽस्माकमुग्रस्त्वं वसूनि परकीयाणि धनानि विभज विशेषेण संपादय। परेषु कुपितस्तदीयं धनमस्मभ्यं प्रयच्छेत्यर्थः।

अथ विंशी[माह]—

अस्मे द्यावापृथिवी भूरि वामम्। संदुहाथां घर्मदुघेव धेनुः। अयꣳ राजा प्रिय इन्द्रस्य भूयात्।

प्रियो गवामोषधीनामुतापाम्, इति।

प्रवर्ग्यार्थं या पयो दुग्धे सा घर्मदुघा। तादृशी धेनुरिव हे द्यावापृथिव्यावस्मेऽस्मदर्थं संदुहाथामपेक्षितस्य कामस्य युवां दोहनं कुरुतम्। अयं च राजा युवयोः प्रसादादिन्द्रस्य प्रियो भूयात्। तथा गवामोषधीनामपां च प्रियो भूयात्। ताः सर्वा अस्मिन्रमन्तामित्यर्थः।

अथैकविंशी[माह]—

युनज्मि त उत्तरावन्तमिन्द्रम्। येन जयासि न

पराजयासै। स त्वाऽकरेकवृषभꣳ स्वानाम्।

अथो राजन्नुत्तमं मानवानाम्, इति।

उत्तर उत्कृष्टो ज्ञानैश्वर्यादिर्यस्येन्द्रस्य सोऽयमुत्तरावांस्तादृशमिन्द्रं हे राजंस्ते त्वदर्थं युनज्मि त्वया सह संयोजयामि। येनेन्द्रेण जयासि सर्वदा त्वं

जेष्यसि । न पराजयासै कदाचिदपि पराजयं न प्राप्स्यासि । स इन्द्रस्त्वां स्वानां ज्ञातीनां मध्य एकवृषममेकमेव श्रेष्ठमकः करोतु । अथो अपि च हे राजन्मानवानां त्वामुत्तमं करोतु ।

अथ द्वाविंशीमाह—

उत्त॑रस्त्वमध॑रे ते स॒पत्नाः॑ । एक॑वृषा इन्द्र॑सखा

जिगी॒वान् ( ८ ) । विश्वा॒ आशाः॒ पृत॑नाः सं॒

जयं॑ जय॑न् । अ॒भिति॑ष्ठ शत्रूय॒तः स॑हस्व, इति ।

हे राजंस्त्वमुत्तर उत्कृष्टो भव । ते सपत्नाः शत्रवोऽधरे निकृष्टाः सन्तु । त्वमेकवृषैक एव श्रेष्ठ इन्द्रसखेन्द्रस्य सख्यं प्राप्तो जिगीवान्सर्वदा जयं प्राप्तो विश्वा आशाः सर्वा अपि दिशः संजयन्सम्यग्वशीकुर्वन्विश्वाः पृतनाश्च जयन्नभितिष्ठाभिक्रम्य स्थिरो भव । शत्रूयतः शात्रवमिच्छतो मनुष्यान्सहस्वाभिभव । इममिन्द्र वर्धयेत्यादिमन्त्रपञ्चकमाशीर्वादरूपं राजनि पुरोहितेन प्रयोक्तव्यम् ।

अथ त्रयोविंशी[माह]—

तुभ्यं॑ भरन्ति क्षि॒तयो॑ यविष्ठ । ब॒लिम॑ग्ने॒ अन्ति॑ त॒

ओत दूरात् । आ भन्दि॑ष्ठस्य सुम॒तिं चि॑किद्धि ।

बृहत्ते॑ अग्ने॒ महि॒ शर्म॑ भ॒द्रम् , इति ।

हे यविष्ठ युवतमाग्ने क्षितयो भूमिष्ठाः सर्वे मनुष्या अन्तितः समीपदेशादोतोत दूरदेशाच्च बलिं पूजामाभरन्त्यानीय प्रयच्छन्ति । भन्दिष्ठस्यातिशयेन स्तोतुर्मम सुमतिं शोभनमतिमाचिकिद्धि सर्वतोऽनुगृहाण । हेऽग्ने ते तव शर्म शरणं बृहन्महाधिकं कर्मभिः पूज्यं भद्रं कल्याणम् ।

अथ चतुर्विंशी(माह]—

यो दे॒ह्यो॑ अन॑मयद्वधस्नैः । यो अ॒र्यप॑त्नीरु॒षस॑श्च-

कार॑ । स नि॒रुध्या॒ नहु॑षो य॒ह्वो अ॒ग्निः । विश॑श्चक्रे

ब॒लिहृ॒तः सहो॑भिः ( ९ ), इति ।

---

१ क. ख. स्थितो ।

योऽग्निर्देह्यो देहिनीः प्रजा वधस्नैर्वधबन्धनैश्च । स्ना वेष्टन इति धातोरुत्पन्नत्वाद्बन्धनमुच्यते । अनमयत्स्ववशीकृतवान् । यश्चाग्निरुषसो देवीर्यपत्नीः सूर्यभार्याश्चकार सोऽग्निर्यह्वो महान्नहुषो बन्धको भूत्वा विशः प्रजा निरुध्य बलिहृतश्चक्रे । बलिहरणं नाम देवेभ्यो हविर्दानम् । सहोभिः स्वकीयैर्बलैस्तथा चक्रे । एतच्चोभयं द्विवर्ग्येनीष्टिषु—"अग्नये बलिमते चरुम्" इत्यत्र याज्यानुवाक्ये । तथा च तत्र प्रतीकद्वयमाम्नातम्—" तुभ्यं भरन्ति यो देह्यः " इति ।

अथ पञ्चविंशी[माह]—

प्र सद्यो अ॑ग्ने अत्ये॑ष्यन्यान् । आ॒विर्यस्मै॑

चारु॑तरो ब॒भूथ॑ । ई॒डेऽन्यो॑ वपु॒ष्यो॑ वि॒भावा॑ ।

प्रि॒यो विशा॒मति॑थि॒र्मानु॑षीणाम् , इति ।

हेऽग्ने यस्मै यजमानाय त्वं चारुतरः प्रियतर आविर्बभूथ प्रत्यक्षदृष्टोऽभूस्तस्य यजमानस्यार्थे सद्यस्तदानीमेवान्यान्सर्वान्यजमानान्प्रकर्षेणात्येष्यतिक्रमिष्यसि । चारुतरत्वमेव स्पष्टी क्रियते—ईडेऽन्यः सर्वैः स्तुत्यो वपुष्य उज्ज्वलरूपो विभावा दीप्यमानो मानुषीणां विशां प्रजानां प्रियोऽतिथिः । सोऽयं मन्त्र आग्नेये कर्मणि द्रष्टव्यः ।

अथ षड्त्रिंशी[माह]—

ब्रह्म॒ ज्येष्ठा॑ वी॒र्या॑ संभृ॑तानि । ब्रह्मा॒ग्रे ज्येष्ठं॑

दि॒वमात॑तान । ऋ॒तस्य॒ ब्रह्म॑ प्रथ॒मोत ज॑ज्ञे ।

तेना॑र्हति ब्रह्म॑णा॒ स्पर्धि॑तुं॒ कः, इति ।

हे ज्येष्ठा वृद्धतमाः प्रजापतिप्रभृतयः शृणुत यानि वीर्याणि ज्ञानैश्वर्यादीनि युष्मासु संभृतानि संपादितानि सर्वाणि ब्रह्मैव । अत एव स्मर्यते—

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥ इति ।

किंच ज्येष्ठं लोके वृद्धतमं ब्रह्माग्रे प्रथममादिकाले दिवमाततान द्युलोकं विस्तारयति स्म । किं बहुना यदृतं सत्यं सर्वकारणकारणं वस्तु तस्यापि ब्रह्म प्रथमं जज्ञे प्रादुरभूत् । स्वस्य स्वयमेवाऽऽविर्बभूव । स्वप्रकाशत्वेन भासत इत्यर्थः । तेनैवंभूतेन ब्रह्मणा कोऽन्यः पुमान्स्पर्धितुं शक्नोति ।

अथ सप्तविंशी[माह]—

ब्रह्म स्रुचो घृतवतीः । ब्रह्मणा स्वरवो

मिताः (१०) । ब्रह्म यज्ञस्य तन्तवः ।

ऋत्विजो ये हविष्कृतः, इति ।

घृतवतीर्घृतसंपूर्णाः स्रुचोऽपि ब्रह्मैव मिता यूपे प्रक्षिप्ताः स्वरवः शकलविशेषा अपि ब्रह्मैव । यज्ञस्य तन्तवो विस्तारा अपि ब्रह्मैव । हविष्कृतो हविःसंपादका य ऋत्विजः सन्ति तेऽपि ब्रह्मैव । एतच्चोभयं ब्रह्मण ऋषभमिति विहिते पशौ द्रष्टव्यम् ।

अथाष्टाविंशीमाह—

शृङ्गाणीवेच्छृङ्गिणाꣳ संददृश्रिरे । चषालवन्तः

स्वरवः पृथिव्याम् । ते देवासः स्वरवस्तस्थिवाꣳसः । नमः सखिभ्यः सन्नान्माऽवगात, इति ।

चषाला यूपाग्रवर्तिनः कटकाः स्वरवो यूपरशनास्वासक्तिताः शकलाश्चषालैः स्वरुभिश्च युक्ता यूपाः पृथिव्यां वेद्यां संददृश्रिरे सम्यग्दृष्टाः । तत्र दृष्टान्तः-शृङ्गिणां वृषभाणां शृङ्गाणीवेच्छृङ्गाणि यथा दृश्यन्ते तथैवेत्यर्थः । स्वरुमन्तस्ते यूपास्तस्थिवांसो देवासः स्थैर्येणावस्थिता देवा एव । अत एव " स वा एष सर्वदेवत्यो यद्यूपः" इत्याम्नातम् । अतो यजमानसखिभ्यो देवरूपेभ्यो यूपेभ्यो नमोऽस्तु । हे यूपाः सन्नाद्दस्मत्सदनान्माऽवगात माऽपगच्छत । एतस्य मन्त्रस्य विनियोगं सूत्रकार आह—" यूपं यजमान उपतिष्ठते नमः सखिभ्यः " इति ।

अथैकोनत्रिंशी[ माह ]—

अग्निर्भूरभिरतरद्रजाꣳसि । स्पृधो विहत्य पृतना

अभिश्रीः । जुषाणो म आहुतिं मा महिष्ट ।

हत्वा सपत्नान्वरिवस्करं नः, इति ।

---

१ क. ख. 'दस्मात्स' । २ क. स्वरुभ्यः ।

अभिभूरभिभवनशीलोऽयमग्नी रजांसि रञ्जनात्मकाँल्लोकानतरदत्यक्रामत् । स्पृधो बाधिकाः पृतनाः शत्रुसेना विहत्य तत एवाभिगतश्रीः सोऽयं जुषाणः प्रियमाणो मे ममाऽऽहुतिं मा अहिष्ट श्रद्दधातु । अस्मत्सपत्नान्हत्वा वरिवस्तदीयं धनं नोऽस्माकं करोतु ।

अथ त्रिंशी[ माह ]—

ईशा॑नं त्वा भुव॑नानामभि॒श्रिय॑म् । स्तौम्य॑ग्न उरु॒कृत॑ꣳ सु॒वीर॑म् । ह॒विर्जु॑षा॒णः स॒पत्ना॑ꣳ अभि॒भूर॑सि । ज॒हि शत्रू॑ꣳरप॒ मृधो॑ नुदस्व ( ११ ), इति ।

वि॒शां जं॑यामसि जीरदा॒नो ह॒र्या वि॒श्वा दि॒वि॒ष्टि॒षु वसू॑नि जि॒गी॒वान्त्स॒हो॒भि॒र्मि॒ता॒न॑श्च॒त्वारि॑ च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके चतुर्थाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

---

हेऽग्ने त्वां स्तौमि । कीदृशम् । भुवनानामीशानमभिगतश्रियमुरुकृतं प्रभूतकर्मकारिणं सुवीरं शोभनापत्यहेतुम् । हेऽग्ने त्वं हविर्जुषाणः सपत्नाञ्छत्रूनभिभवितुं समर्थोऽसि । अतः शत्रूञ्जहि मृधो बाधकानपनुदस्व । एतदुभयमाग्नेये कर्मणि द्रष्टव्यम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथ चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ।

---

अष्टमेऽनुवाके सर्वमप्याग्रयणसूक्तम् । तद्विनियोगं सूत्रकार आह—"स प्रत्नवदिति द्वे धाय्ये चतस्र आज्यभागयोर्दश हविषां द्वे स्विष्टकृतः" इति ।

तत्र प्रथमामृचमाह—

स प्र॑त्नवन्नवी॑यसा । अग्ने॑ द्यु॒म्नेन॑ सं॒यता॑ । बृ॒हत्त॑तन्थ भा॒नुना॑, इति ।

हेऽग्ने स त्वं प्रत्नवत्प्रत्नेन पुराणेन भानुनेव नवीयसाऽत्यन्तं नवतरेण

द्युम्नेन दीप्तेन संयता समृ( सु )ष्ठु गृहीतेन भानुना तेजसेदानीं बृहन्महद्-दन्तरिक्षं ततन्थ तव यागानुरूपं नवतरं तेजः प्रसारयेत्यर्थः ।

अथ द्वितीया[ माह ]—

नवं नु स्तोममग्नये । दिवः श्येनाय जीजनम् ।

वसोः कुविद्वनाति नः, इति ।

दिवो द्युलोकाच्छ्येनाय श्येनवत्क्षिप्रमागच्छतेऽग्नये नवं स्तोममभिनवं स्तोत्रं नु क्षिप्रं जीजनमुत्पादितवानास्मि । वसोर्धनस्य कुवित्प्रभूतं भागं नोऽस्माकं वनाति ददाति । एते उभे याज्ये ।

अथ तृतीया[ माह ]—

स्वारुहा यस्य श्रियो दृशे । रयिर्वीरवतो यथा ।

अग्रे यज्ञस्य चेततः, इति ।

यज्ञस्याग्र उपक्रमे सर्वं कर्तव्यं चेततश्चेतयमानस्य यस्याग्नेः श्रियः स्वारुहाः स्वस्मादेव प्ररूढा अपराधीना इत्यर्थः । दृशे दर्शनीयाः श्रियो भवन्ति । वीरवतः पुत्रवतः पुरुषस्य रयिर्धनं दर्शनीयं यथा भवति तद्वत्सोऽग्निः श्रीमानिति भावः ।

अथ चतुर्थी[माह]—

अदाभ्यः पुर एता ( १ ) । अग्निर्विशां मानुषीणाम् । तूर्णी रथः सदानवः, इति ।

मानुषीणां विशां देवपरिचरभूतानामग्निः पुरत एताऽग्रेसरः केनचिदप्यदाभ्यो हिंसितुमशक्यस्तूर्णिस्त्वरणहेतुः । " सर्वं ह्येष तरति " इति ब्राह्मणम् । रथो रथस्वामी, अत एव " रथीरध्वराणाम् " इत्याम्नातम् । सदा सर्वदा नवोऽभिनवः ।

अथ पञ्चमी[माह]—

नवꣳ सोमाय वाजिने । आज्यं पयसोऽजनि ।

जुष्टꣳ शुचितमं वसु, इति ।

वाजिनेऽन्नवते सोमाय नवं नूतनमाज्यं पयसोऽजन्युत्पन्नं तच्च जुष्टं प्रियं शुचितममत्यन्तं शुद्धं वसु श्रेष्ठम् ।

अथ षष्ठीं[माह]—

नवꣳ सोम जुषस्व नः । पीयूषस्येह तृप्णुहि ।

यस्ते भाग ऋता वयम्, इति ।

हे सोम नवमिदमाज्यं जुषस्व । नोऽस्मदीयस्य पीयूषस्यामृतसमानस्याऽऽज्यस्य भो(भा)गेनेह कर्मणि तृप्णुहि तृप्तो भव। यस्तवास्मिन्नृतौ कालविशेषे देवैः कल्पितो भागः सोऽयमाज्यरूपः । एताश्चतस्र आज्यभागयोः ।

अथ सप्तमीमाह—

नवस्य सोम ते वयम् । आ सुमतिं वृणीमहे (२)।

स नो रास्व सहस्रिणः, इति ।

हे सोम नवस्य नूतनमूर्तियुक्तस्य ते तव सुमतिमनुग्रहबुद्धिं वयमा समन्ताद्वृणीमहे । स त्वमस्मभ्यं सहस्रिणः सहस्रसंख्यस्य धनस्य भोगं रास्व देहि ।

अथाष्टमीमाह—

नवꣳ हविर्जुषस्व नः । ऋतुभिः सोम भूतमम् ।

तदङ्ग प्रतिहर्य नः । राजन्त्सोम स्वस्तये, इति ।

हे सोमर्तुभिः कालैर्भूतममतिशयेन निष्पन्नं सुपक्वं नवं नूतनं श्यामाकरूपं नोऽस्मदीयं हविर्जुषस्व । अङ्गशब्दः प्रियसंबोधनवाची । अङ्ग सोमराजन्नोऽस्माकं स्वस्तये तद्धविः प्रतिहर्य श्रद्धस्व। एते उभे सौम्यस्य श्यामाकहविषो याज्यापुरोनुवाक्ये ।

अथ नवमी[माह]—

नवꣳ स्तोमं नवꣳ हविः । इन्द्राग्निभ्यां निवेदय ।

तज्जुषेताꣳ सचेतसा, इति ।

नवं स्तोत्रं नवं हविश्चेन्द्राग्निभ्यामध्वर्यो निवेदय। तद्धविः सचेतसा समानचेतसाविन्द्राग्नी जुषेतां सेवेताम् ।

अथ दशमी[माह]—

शुचिं नु स्तोमं नवजातमद्य । इन्द्राग्नी वृत्रहणा जुषेथाम् (३) । उभा हि वाꣳ सुहवा जोहवीमि । ता वाजꣳ सद्य उशते धेष्ठा, इति ।

वृत्रहणौ शत्रुघातिनौ हे इन्द्राग्नी अद्यास्मिन्कर्मणि नवजातमभिनवत्वेनोत्पन्नं शुचिं नु स्तोमं शुद्धमेव स्तोत्रं जुषेथां हि यस्मादहं सुहवा सुखेनाऽऽह्वातुं शक्यौ वामुभा युवामुभौ जोहवीमि पुनः पुनराह्वयामि । तौ तथाविधौ युवामुशते कामयमानाय यजमानाय वाजमन्नं सद्यो धेष्ठा तस्मिन्नेव क्षणे संपादयतम् । एते उभे ऐन्द्राग्नस्य द्वादशकपालस्य याज्यानुवाक्ये ।

अथैकादशी[माह]—

अग्निरिन्द्रो नवस्य नः । अस्य हव्यस्य तृप्यताम् । इह देवौ सहस्रिणौ, इति ।

अग्निश्चेन्द्रश्च नोऽस्मदीयस्य नवस्य नूतनस्यास्य हव्यस्य भागेन तृप्यतामिह कर्मणि तौ देवौ द्योतमानौ सहस्रिणौ सहस्रसंख्याकधनप्रदौ स्याम् ।

अथ द्वादशी[माह]—

यज्ञं न आ हि गच्छताम् । वसुमन्तꣳ सुवर्विदम् । अस्य हव्यस्य तृप्यताम् । अग्निरिन्द्रो नवस्य नः, इति ।

अग्निश्चेन्द्रश्चोभौ नोऽस्मदीयस्य नवस्यास्य हव्यस्य तृप्यतां तदर्थं नोऽस्मदीयं यज्ञमा हि गच्छतां सर्वथैवाऽऽगच्छताम् । कीदृशं यज्ञम् । वसुमन्तं बहुधनप्रदं सुवर्विदं स्वर्गलाभसाधनम् । अत्र यद्विकाल्पितं हविरैन्द्राग्नं द्वादशकपालमाग्नेन्द्रं वेति तत्रैन्द्राग्नस्य पूर्वे ऋचावाग्नेन्द्रस्य त्वेते उभे याज्यानुवाक्ये ।

अथ त्रयोदशी[माह]—

विश्वान्देवाꣳस्तर्पयत (४) । हविषोऽस्य नवस्य नः । सुवर्विदो हि जज्ञिरे, इति ।

हे ऋत्विजो नोऽस्मदीयस्य नवस्यास्य हविषो भागेन विश्वान्देवांस्तर्पयत । यस्मात्ते विश्वे देवाः सुवर्विदो जज्ञिरे स्वर्गलाभहेतवो जाताः ।

अथ चतुर्दशी[माह]—

एदं बर्हिः सुष्टरीमा नवेन । अयं यज्ञो यजमानस्य भागः । अयं बभूव भुवनस्य गर्भः ।
विश्वे देवा इदमद्याऽऽगमिष्ठाः, इति ।

इदं बर्हिः सुष्टरीम सुष्ठु स्तीर्णं सर्वतोऽभूत् । नवेन हविषा युक्तो यजमानस्यायं यज्ञो भागो विश्वैर्देवैर्भजनीयः । सोऽयं यज्ञो भुवनस्य भूतजातस्य गर्भो रक्षकत्वेनान्तरवस्थितो बभूव । हे विश्वे देवा अद्यास्मिन्कर्मणीदमास्तीर्णं बर्हिः प्रत्यागमिष्ठा आगच्छत । एते उभे वैश्वदेवस्य हविषो याज्यानुवाक्ये ।

अथ पञ्चदशी[माह]—

इमे नु द्यावापृथिवी समीची । तन्वाने यज्ञं पुरुपेशसं धिया । आस्मै पृणीतां भुवनानि विश्वा । प्रजां पुष्टिममृतं नवेन ( ५ ), इति ।

इमे न्विमे एव द्यावापृथिव्यौ समीची परस्परेण संगते सत्यौ पुरुपेशसं बहुरूपं यज्ञं धिया स्वबुद्ध्या तन्वाने विस्तारयन्त्यावस्मै यजमानाय विश्वा भुवनानि सर्वाणि भूतजातान्यापृणीतां सर्वतः पालयेताम् । तथा प्रजां पुष्टिममृतमन्नं च नवेन हविषा स्वीकृतेन तत्सर्वं संपादयेताम् ।

अथ षोडशी[माह]—

इमे धेनू अमृतं ये दुहाते । पयस्वत्युत्तरामेतु पुष्टिः । इमं यज्ञं जुषमाणे नवेन । समीची द्यावापृथिवी घृताची, इति ।

ये द्यावापृथिव्यावमृतं वृष्टयन्नरूपं दुहाते इमे द्यावापृथिव्यौ सर्वेषां प्राणिनां धेनुस्थानीये पुष्टिर्धनसमृद्धिरुत्तरामुत्तरोत्तरातिशयावस्थामेत्वागच्छतु । कीदृशी पुष्टिः। पयस्वती प्रभूतवृष्ट्युदकयुक्ता नवेन नूतनेन हविषेमं यज्ञं जुषमाणे सेव-

माने समीची परस्परानुकूले द्यावापृथिव्यौ घृताची घृतमुदकं क्षरन्त्यौ भवेताम् । एते उभे ऋचौ द्यावापृथिव्यमेककपालमित्यस्य याज्यानुवाक्ये ।

अथ सप्तदशी[ माह ]—

यविष्ठो हव्यवाहनः । चित्रभानुर्घृतासुतिः । नवजातो विरोचसे । अग्ने तत्ते महित्वनम्, इति ।

हेऽग्ने त्वं यविष्ठो युवतमो हव्यवाहनो हविषो वोढा चित्रभानुर्विचित्रदीप्तिर्घृतासुतिर्घृताशनो नवजातः प्रतिक्षणं नूतनज्वालारूपेणोत्पन्नो विरोचसे विशेषेण दीप्यसे तन्महित्वनं तदेतन्माहात्म्यं ते तवैव न त्वन्यस्यास्ति ।

अथाष्टादशी[ माह ]—

त्वमग्ने देवताभ्यः । भागे देव न मीयसे (६) । स एना विद्वान्यक्ष्यसि । नवꣳ स्तोमं जुषस्व नः, इति ।

हेऽग्ने देव त्वं देवताभ्यः सर्वाभ्यो भागे त्वयोह्यमानेऽपि न मीयसे न हिंस्यसे। यथा तव भ्रातरो देवेभ्यो हव्यं वहन्तो मृता न तथा त्वमित्यर्थः । स त्वमेना देवता विद्वान्यजानो यक्ष्यस्यस्मदीयं नवं स्तोमं स्तोत्रं जुषस्व । एते उभे स्विष्टकृतः संयाज्ये ।

अथैकोनविंशी[ माह ]—

अग्निः प्रथमः प्राश्नातु । स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः । कृणोतु विश्वचर्षणिः, इति ।

अयमग्निरिमं हविःशेषं मत्तः प्रथमभावी सन्प्राश्नातु । स ह्यग्निर्यथेदं हविः संभूतं यथा चोपभोज्यं तथा वेद जानाति । अस्मभ्यं विश्वचर्षणिर्विश्वस्य द्रष्टाऽग्निरोषधीः शिवाः सुखकराः कृणोतु करोतु । अयं मन्त्रः श्यामाकचरुहविषः प्राशने विनियुक्तः ।

अथ विंशी[ माह ]—

भद्रान्नः श्रेयः समनैष्ट देवाः । त्वया वसेन समशीमहि त्वा । स नो मयोभूः पितो आवि-

शस्व । शं तोकाय तनुवे स्योनः, इति ।

हे देवा नोऽस्माकं भद्राद्वर्तमानाच्छ्रेयसोऽप्यधिकं श्रेयः समनैष्ट सम्यगानयत । हे पितोऽन्न त्वया वसेन त्वद्रूपेण रक्षकेण पाथेयेन त्वां समशीमहि सम्यगश्नुवीमहि । संवत्सरपर्यन्तं त्वयैव जीवाम इत्यर्थः । स त्वं नोऽस्माकं मयोभूः सुखं भावयन्नाविशस्वोदरं प्रविश । तोकाय पुत्राय तनुवे शरीराय च शं भव शान्तो भव । स्योनः सुखकरश्च भव । अयं मन्त्रो व्रीह्याग्रयणस्य शेषभक्षणे विनियोज्यः ।

अथैकविंशीमाह—

एतमु त्यं मधुना संयुतं यवम् । सरस्वत्या अधि-

मनावचर्कृषुः । इन्द्र आसीत्सीरपतिः शतक्रतुः ।

कीनाशा आसन्मरुतः सुदानवः (७), इति ।

पुर एता वृणीमहे जुषेथां तर्पयतामृतं नवेन मीयसे स्योनश्चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके चतुर्थाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

जुष्टश्चक्षुषो जुष्टीनरो नक्षजाता वृषास उत नो द्वर्षासयश्शुः स प्रत्न-

वद्दृष्टी ॥ ८ ॥

जुष्टो मन्युर्भगो जुष्टीनरो हरिवर्पसं गिरः शिप्रिन्वाजानामुत नो यद्वा-

ग्वदन्ती विश्वा आशा अशीतिः ॥ ८० ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके चतुर्थोऽध्यायः

---

अधिमनौ युगादिभूते मनौ प्रजापतौ राजनि सति तस्मिन्काले कृषिकाः सरस्वत्या नद्या मधुरेण जलेन संयुतमेतमिदानीं पुरतो दृश्यमानमेव यवं त्यं यवधान्यविशेषमचर्कृषुः क्षेत्रेषूप्तवन्तो योऽयं यव इदानीं दृश्यते तस्य यवस्य कृषिमादिकाले प्रारब्धवन्त इत्यर्थः । के कर्षकाः कश्च तत्स्वामीति तदुभयमुच्यते । इन्द्रः शतक्रतुः शतसंख्याकैरश्वमेधैर्लब्धपदो यः सोऽयं सीरपतिर्हल-

स्वाम्यासीत् । सुदानवः सुष्ठु दातारो मरुतः कीनाशाः कृषिकर्मकरा आसन् । अयं मन्त्रो यवाग्रयणस्य शेषभक्षणे विनियोज्यः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थः प्रपाठकः समाप्तः ॥ ४ ॥

---

( मूलक्रमेण—अष्ट० २ अध्या० ४ ( १२ ) अनु० ८ ( ११९ ) ।
( भाष्यक्रमेण—कां० २ प्रपा० ४ ( १२ ) अनु० ८ ( ११९ ) ।

---

अथ द्वितीयकाण्डे पञ्चमप्रपाठकारम्भः ।

तत्र प्रथमोऽनुवाकः ।

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
चतुर्थे उपहोमार्था मन्त्रा बहव ईरिताः ।
प्रपाठके पञ्चमेऽस्मिंस्तच्छेष उपवर्ण्यते ॥

तत्र प्रथमानुवाके प्रथमामृचमाह—

प्राणो रक्षति विश्वमेजत् । इर्यो भूत्वा बहुधा बहूनि । स इत्सर्वं व्यानशे, इति ।

योऽयं मुखनासिकावर्ती प्राणवायुः सोऽयं बहुधा भूत्वा प्राणापानादिवृत्तिभेदेनानेकप्रकारो भूत्वा बहूनि जीवजातानि प्रतीर्यः प्रेरकः सन्नेजत्कम्पमानं जंगमरूपं जगद्रक्षति स इत्स एव प्राणः सर्वं जगद्व्यानशे व्याप्तवान् ।

अथ द्वितीयामाह—

यो देवो देवेषु विभूरन्तः । आवृदूदात्क्षेत्रियध्वगद्वृषा । तमित्प्राणं मनसोपशिक्षत ।

अग्रं देवानामिदमंत्तु नो हविः, इति ।

दीव्यन्तीति देवाः प्राणचक्षुःश्रोत्रादयस्तेषु देवेषु मध्ये यो मुख्यो देवः प्राणः श्वासकर्ता सोऽयमन्तरादूदूदात्पुनः पुनरन्तर्बहिश्चाऽऽवर्तमानत्वात् । विभुः कृत्स्नदेहव्यापी क्षेत्री क्षेत्रं शरीरं तस्य स्वामी वृषा श्रेष्ठः । तस्य दृष्टान्तः-अध्वगद्यथा लोकेऽध्वगो नाऽऽलस्यगमनं करोत्येवमयं प्राणः प्रतिक्षणमुच्छ्वासनिश्वासौ करोति तमित्थमेव प्राणं मनसोपशिक्षत भक्तिपुरःसरमुपचरत । स प्राणो देवानां मध्येऽग्रं प्रथमं नोऽस्मदीयमिदं हविरत्तु भक्षयतु । यदुक्तमैतरेयब्राह्मणे—"चक्षुः श्रोत्रं मनो वाक्प्राणस्ता एताः पञ्च देवता इमं विश्लिष्टाः पुरुषम्" इति । तदेतन्मन्त्रद्वयं प्राण देवताविषयं द्रष्टव्यम् ।

अथ तृतीयामाह—

मनसश्चित्तेदम् । भूतं भव्यं च गुप्यते ।

तद्धि देवेष्वग्रियम् ( १ ), इति ।

यदिदं मनोऽन्तःकरणमस्ति तस्य चित्ता चित्तेन वृत्तिविशेषेणेदं दृश्यमानं भूतं भव्यं चातीतमनागतं च सर्वं गुप्यते रक्ष्यते । यत्पूर्वं निष्पन्नं पुत्रभृत्यादि चेतनं धनधान्याद्यचेतनं यच्चेतःपरं संपादनीयं चेतनमचेतनं च तत्सर्वं मनसैव परिरक्ष्यते । तद्रक्षोपायानां मनसा चिन्त्यमानत्वात् । हि यस्मात्कारणात्तन्मनो देवेषु दीप्यमानेष्विन्द्रियेष्वग्रियं श्रेष्ठं तस्मात्तेन रक्षणमुचितम् ।

अथ चतुर्थीमाह—

आ न एतु पुरश्चरम् । सह देवैरिमम्

हवम् । मनः श्रेयसि श्रेयसि । कर्म-

न्यज्ञपतिं दधत्, इति ।

तन्मनो देवैर्दीप्यमानैरन्यैरिन्द्रियैः सह पुरश्चरं स्वयमग्रगामि भूत्वा नोऽस्मदीयमिमं हवमाह्वानं प्रत्येत्वाभिमुख्यं प्राप्नोतु । किं कुर्वञ्छ्रेयसि श्रेयसि कर्मस्तस्मिंस्तस्मिन्प्रशस्ते कर्मणि यज्ञपतिं दधद्यजमानं स्थापयतु सर्वेषु पुण्यकर्मसु प्रवर्तयत्वित्यर्थः । तदेतन्मन्त्रद्वयं मनोदेवताविषयं द्रष्टव्यम् ।

अथ पञ्चमीमाह—

जुषतां मे वागिदं हविः । विराड्देवी

ध्यमयमु-
तेह्क-

पुरोहिता। हव्यवाडनपायिनी, इति।

इदं पुरोवर्ति मे हविर्वाग्देवी सेवताम्। कीदृशी। विराड्विविधं राजत इति विराड्विराजमाना देवी देवताविग्रहा पुरोहिता प्रथमतः प्रवृत्ता। यद्यपि पुरश्चरत्वं मनस उक्तं तथाऽपि कायव्यापारापेक्षया पूर्वभावित्वं प्रथमप्रवृत्तिर्वचसो युक्ताऽत एव व्यवहारक्रमोऽन्यत्राऽऽम्नातः—"यद्धि मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोति" इति। हव्यवाट्, वाचा हि मन्त्रमुच्चार्य हविर्दीयते तस्माद्वागियं हविर्वहतीत्युपचर्यते। अनपायिनी सर्वेष्वपि व्यवहारेष्वनुगता। न हि वागिन्द्रियमन्तरेणातीतानागतविषयो व्यवहारः संभवति।

अथ षष्ठीमाह—

यया रूपाणि बहुधा वदन्ति। पेशाꣳसि देवाः परमे जनित्रे। सा नो विराडनपस्फुरन्ती (२)। वाग्देवी जुषतामिदꣳ हविः, इति।

यान्येतानि देवतिर्यङ्मनुष्यादिरूपाणि यानि च नीलपीतशुक्लकृष्णादिरूपाणि तानि सर्वाणि यया वाचा मनुष्या बहुधा वदन्ति, इदं समीचीनमिदमसमीचीनमित्येतादृशं बहुधा वदन्ति तथा परमे जनित्र उत्तमे जन्मनि वर्तमाना देवाश्च पेशांसि रमणीयानि रूपाणि यया वाचा वदन्ति सा वाग्देवी मोऽस्मदीयमिदं हविर्जुषताम्। कीदृशी वागर्थप्रकाशकत्वेन विविधं राजत इति विराट्। अपस्फुरणमर्थाभिधाने कुण्ठीभावस्तद्राहित्यादनपस्फुरन्ती। तदिदं मन्त्रद्वयं वाग्देवताविषयं द्रष्टव्यम्।

अथ सप्तमीमाह—

चक्षुर्देवानां ज्योतिरमृते न्यक्तम्। अस्य विज्ञानाय बहुधा निधीयते। तस्य सुम्नमशीमहि। मा नो हासीद्विचक्षणम्, इति।

देवानां दीव्यमानानामिन्द्रियाणां मध्ये चक्षुरिन्द्रियं ज्योतिर्विस्पष्टभासकं तच्चामृते मरणरहित आदित्यस्वरूपे न्यक्तं निलीनम्। अत एव बह्वृचा आमनन्ति—"आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्" इति। तदिदं चक्षुरस्य सर्वस्य नीलपीतादिरूपजातस्य बहुधा विज्ञानाय नानाविधज्ञानसिद्धये

निधीयते प्रजापतिना व्यवस्थाप्यते । तस्य चक्षुरिन्द्रियस्य सुम्नं सुखं येन चक्षुरिन्द्रियेण रूपप्रकाशने सति यत्सुखं जायते तत्सर्वमशीमह्यश्नुवीमहि प्राप्नुयाम । विचक्षणं विशेषेण प्रकाशकं तच्चक्षुरिन्द्रियं नोऽस्मान्मा हासी-त्कदाचिदपि मा परित्यजतु ।

अथाष्टमीमाह—

आयुरिन्नः प्रतीर्यताम् । अनन्धाश्चक्षुषा वयम् ।

जीवा ज्योतिरशीमहि । सुवर्ज्योतिरुतामृतम्, इति ।

चक्षुर्देवताप्रसादेन नोऽस्मदीयमायुरित्प्रतीर्यतां सर्वथा वर्धताम् । अनेन चक्षुषा युक्ता वयं जीवाः क्वाप्यनन्धाः सन्तो रूपाभिव्यक्तवृत्तिलक्षणं ज्योतिरशीमहि प्राप्नुयाम । उतापि च सुवः स्वर्गस्थितममृतं ज्योतिर्विना-शरहितमादित्यप्रकाशमशीमहि चक्षुषा पश्येम । तदिदं मन्त्रद्वयं चक्षुर्देवताविषयं द्रष्टव्यम् ।

अथ नवमीमाह—

श्रोत्रेण भद्रमुत शृण्वन्ति सत्यम् । श्रोत्रेण वाचं

बहुधोद्यमानाम् । श्रोत्रेण मोदश्च महश्च श्रूयते ।

श्रोत्रेण सर्वा दिश आशृणोमि, इति ।

यद्भद्रं कल्याणं यच्च सत्यं वचनं तत्सर्वं श्रोत्रेणैव सर्वे शृण्वन्ति । येयं वाक्प्राणिभिर्बहुधोच्यते तां सर्वां वाचमनेन श्रोत्रेन्द्रियेण सर्वो जनः शृणोति । किंच योऽयं मोदो हर्षविषयो वृत्तान्तो यश्च महः पूजाविषयो वृत्तान्तः स सर्वोऽपि श्रोत्रेणैव श्रूयते । किंच सर्वा दिशो योऽयं सर्वदिग्विषयो वृत्तान्तस्तमप्यहं श्रोत्रेण सर्वत आशृणोमि ।

अथ दशमीमाह—

येन प्राच्या उत दक्षिणा । प्रतीच्यै दिशः शृण्व-

न्त्युत्तरात् । तदिच्छ्रोत्रं बहुधोद्यमानम् । अरान्न

नेमिः परि सर्वं बभूव ( ३ ), इति ।

अप्रियमनैपस्फुरन्ती सत्यꣳ सप्त च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके पञ्चमाध्याये प्रथमोऽनुवाकः ॥ १ ॥

—:०⊙:०—

येन श्रोत्रेण प्राच्यादिदिग्भ्य आगतं शब्दं शृण्वन्ति तदेव श्रोत्रं बहुधोद्यमानमुच्यमानं शब्दजातं सर्वं परिबभूव परिगृह्य वर्तते । रथनेमिरिव सर्वानरांश्चक्रस्य बहिर्वलयो नेमिस्तदन्तर्वर्तिनोऽवयवाः कालसंज्ञा अराः । एतच्च मन्त्रद्वयं श्रोत्रविषयं द्रष्टव्यम् । एतेषां दशानां मन्त्राणां जातकर्मणि विनियोगं बौधायन आह—" अथैनं दधि मधु घृतमिति समुदाहृत्य हिरण्येन प्राशयति प्राणो रक्षति विश्वमेजदित्यनुवाकेन प्रत्यृचम् " इति ।

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

———:*:———

अथ पञ्चमप्रपाठके द्वितीयोऽनुवाकः ।

द्वितीयेऽनुवाके प्रथमामृचमाह—

उदेहि वाजिन्यो अस्यप्स्वन्तः । इदꣳ राष्ट्रमाविश सूनृतावत् । यो रोहितो विश्वमिदं जजान । स नो राष्ट्रेषु सुधितां दधातु, इति ।

हे वाजिन्नश्वमेधे कर्मणि प्रयुज्यमान हेऽश्वोदेहि जलमध्यादुद्गच्छ । अत्राश्वमेधे भारद्वाजसूत्रम्—"अश्वमपोऽवगाह्य स्नपयित्वा समू(मु)ह्य ततो ह्यस्तारमनुदकमुदानयति उदेहि वाजिन्नित्यष्टाभिः" इति । अतोऽत्राश्वमेधगतमश्वं संबोध्योच्यते योऽयमश्वोऽप्स्वन्तर्वर्तते स त्वमुदेह्युद्गत्य च सूनृतावत्यीवियुक्तमिदं राष्ट्रमाविश । इहाऽऽस्यतामिह भुज्यतामित्येवंरूपा वाणी सूनृता । अस्य चाश्वस्य प्रजापतिजन्यत्वेन तद्रूपत्वमुपचर्य प्रशस्यते—योऽश्वः स्वकारणभूतप्रजापतिरूपेण रजोगुणयुक्तात्रोहितः सन्निदं विश्वं जजानोत्पादयामास स प्रजापतिरूपोऽश्वो नोऽस्मानेतेषु राष्ट्रेषु सुधितान्सुखयुक्तान्कृत्वा स्थापयतु ।

अथ द्वितीयामाह—

रोहꣳ रोहꣳ रोहित आरुरोह । प्रजाभिर्वृद्धिं

रस्य

जनुषामुपस्थम् । ताभिः संरब्धो अविदत्षडुर्वीः ।
गातुं प्रपश्यन्निह राष्ट्रमाहाः, इति ।

हे रोहित रोहिद्वर्ण प्रजापतिस्वरूपाश्व रोहं रोहं भौमं भोगं स्वर्गभोगमारुरोहाऽऽरोहणं कुरु। काभिः। प्रजाभिः सह। कमिव, वृद्धिमिच्छतां प्रजानां संबध्युपस्थं प्रत्यारोहणमिव ताभिः प्रजाभिः सह संरब्ध उत्साहयुक्तः सन्षडुर्वीरविदज्ज्ञातवानसि। उर्वीर्गातुं गन्तुं प्रपश्यन्निह राष्ट्रमाहाराहृतवानसि। तव प्रेक्षणवशाद्राष्ट्रस्था जनाः संनिहिता इत्यर्थः।

अथ तृतीयामाह—

आहार्षीद्राष्ट्रमिह रोहितः । मृधो व्यास्थदभयं नो अस्तु (१)। अस्मभ्यं द्यावापृथिवी शक्वरीभिः ।
राष्ट्रं दुहाथामिह रेवतीभिः, इति ।

रोहितस्त्वं राष्ट्रमिहाऽऽहार्षीदाहृतवानसि। व्यास्थद्विरोधिनिष्पाद्यान्मृधो युद्धादश्वाभिन्नप्रजापते तव प्रसादान्नोऽभयमस्तु । अश्वाभिन्नप्रजापते तव प्रसादाद्द्यावापृथिवी द्यावापृथिव्यौ शक्वरीभिः शक्वरीछन्दोयुक्ताभी रेवतीभिः सामाभिमानिनीभिर्देवताभिः सहास्मभ्यमस्मदर्थं राष्ट्रं दुहाथां पूरयन्त्यौ।

अथ चतुर्थीमाह—

विममर्श रोहितो विश्वरूपः । समाचक्राणः प्ररुहो रुहश्च । दिवं गत्वाय महता महिम्ना । वि नो राष्ट्रमुनत्तु पयसा स्वेन, इति ।

स रोहितः प्रजापतिर्विममर्श परामर्शं कृतवाननेनेदं कर्म कृतमयस्य फलस्य योग्य इति परामर्शः। कीदृशः प्रजापतिर्विश्वरूपः सर्वजगदाकारेण वर्तमानस्तथा समाचक्राणः सम्यगासमन्ताद्यजमानान्फलविशेषान्कुर्वाणः । ते च फलविशेषाः प्ररुहो रुहश्चेति शब्दद्वयेन निर्दिश्यन्ते। प्रकर्षेण रुह्यन्ते प्राप्यन्त इति प्ररुहः स्वर्गभोगा रुहो मानुषा भोगास्तदुभयं कुर्वाणः स प्रजापतिर्दिवं गत्वाय स्वर्गं प्राप्य महता महिम्ना स्वकीयेनात्याधिक्येन माहात्म्येन नोऽस्मदर्थमिदं राष्ट्रं स्वेन पयसा स्वकीयेन वृष्टिजलेन व्युनत्तु विशेषेण क्लेदयत

अथ पञ्चमीमाह—

यास्ते विशस्तपसा संबभूवुः । गायत्रं वत्समनु तास्त आगुः । तास्त्वा विशन्तु महसा स्वेन । सं माता पुत्रो अभ्येतु रोहितः ( २ ), इति ।

हे रोहित प्रजापते त्वदीयेन तपसा या विशः प्रजाः संबभूवुः । तथा ह्यन्यत्राऽऽम्नायते–" स तपोऽतप्यत । स तपस्तप्त्वा । इद् सर्वमसृजत " इति ते त्वदीयास्ताः प्रजा गायत्रं वत्समन्वागुः । " एष वै गायत्र्यै वत्सो यदाग्रयणः " इति श्रुत्यन्तरात् । आग्रयणग्रहो गायत्र्याख्यधेनोर्वत्सस्थानीयः । तमाग्रयणाख्यं वत्समश्वमेधस्य मध्यमेऽहन्यनुष्ठितवन्तः । ताः प्रजाः स्वेन महसा स्वकीयेनानुष्ठितेन महिमाख्यग्रहेण त्वां विशन्तु । किं बहुना । माता सर्वभूतानां सम्यङ्निर्माता पुत्रवद्रक्षको रोहितोऽश्वरूपः प्रजापतिरभ्येत्वस्मानभिलक्ष्याऽऽगच्छतु ।

अथ षष्ठीमाह—

यूयमुग्रा मरुतः पृश्निमातरः । इन्द्रेण सयुजा प्रमृणीथ शत्रून् । आ वो रोहितो अशृणोदभिद्यवः । त्रिसप्तासो मरुतः स्वादुसंमुदः, इति ।

हे मरुतो यूयं सयुजा युष्माभिः सहावस्थितेनेन्द्रेण साकमस्मदीयाञ्शत्रून्प्रमृणीथ निराकुरुत । रोहितः प्रजापतिरूपोऽयमश्वो वो युष्मानाशृणोच्छत्रुक्षयकारिण एत इति भवदीयां कीर्तिं सर्वदा शृणोति । कीदृशा मरुतः । उग्राः शत्रुविषये कोपयुक्ताः । पृश्निर्मातैषां ते पृश्निमातरः । "पृश्नेः पुत्रा उपमास:" इति हि मन्त्रान्तरम् । " पृश्नियै वै पयसो मरुतो जाताः" इति च ब्राह्मणम् । अभिद्यवोऽभितो द्योतमानास्त्रिसप्तासास्त्रिविधाः सप्त संख्या येषां ते त्रिसप्तासः । "सप्तगणा वै मरुतः" इति ब्राह्मणाम्नानात् । सप्तगणाः सप्तसंख्याकाः । तत्र धूनिश्च ध्वान्तश्चेत्यारण्यकानुवाकोक्तो गणो मध्यमः । तस्मात्पूर्ववर्तिन ईदृङ्चेत्यादिनोक्तास्त्रयो गणाः । ऋतश्च सत्यश्चेत्यादिनोक्ता उत्तरभाविनस्त्रयो गणास्तत्रैकस्मिन्गणत्रये तिस्रः सप्तसंख्या विद्यन्ते । तस्मात्ते त्रिसप्तास इत्युच्यन्ते । स्वादुना हविषा सम्यङ्मोदन्त इति स्वादुसंमुदः ।

१ ग. मरुद्गणाः ।

अत्र मरुत इति संबुद्ध्यन्तं पदं द्विराम्नातम्, तच्च वाक्यद्वये योजनीयम्। हे मरुतः शत्रून्प्रमृणीथ। हे मरुतो युष्मान्रोहितोऽशृणोदिति योजना।

अथ सप्तमीमाह—

रोहितो द्यावापृथिवी जंजान। तस्मिंस्तन्तुं परमेष्ठी ततान। तस्मिंञ्छिश्रिये अज एकंपात्। अदृंहद्द्यावापृथिवी बलेन, इति।

योऽयं रोहितोऽश्वरूपः प्रजापतिः स एव पुरा द्यावापृथिव्यावुत्पादितवान्। तस्मिन्रोहितेऽश्वे परमेष्ठी प्रजापतिस्तन्तुमश्वमेधतन्तुपरम्परां ततान विस्तारितवान्। एक एव पद्यते गच्छतीत्येकपात्। तथा च मन्त्रान्तरम्— "सूर्य एकाकी चरति" इति। स च मनुष्यवत्सृष्टिमध्ये पुनः पुनर्जन्मरहितत्वादजस्तादृशः सूर्योऽपि तस्मिन्रोहितेऽश्वे शिश्रिय आश्रितवान्। रोहिताश्वस्य प्रजापतिद्वारा जगत्सृष्टिकर्तृत्वात्सूर्यस्य तदाश्रितत्वं युक्तम्। स च रोहितः प्रजापतिः स्वकीयेन बलेन द्यावापृथिव्यावदृंहद्दृढी चकार।

अथाष्टमीमाह—

रोहितो द्यावापृथिवी अदृंहत्। तेन स्वः स्तभितं तेन नाकः (१)। सो अन्तरिक्षे रजसो विमानः। तेन देवाः सुवरन्वविन्दन्, इति।

रोहितः प्रजापतिर्द्यावापृथिव्यौ दृढीकृतवांस्तेन रोहितेन सुवः स्तभितं स्वर्गलोको यथाऽधो न पतति तथा स्तम्भितस्तथा नाकनामा स्वर्गविशेषोऽपि तेन स्तम्भितः। स एव रोहितोऽन्तरिक्षे रजसो रञ्जकस्य ज्योतिर्गणस्योदकस्य वा विमानो विशेषेण निर्माता। तेन रोहितेन देवा इन्द्रादयोऽपि सुवरन्वविन्दन्स्वर्गं लब्धवन्तः। एवमेतैरष्टभिर्मन्त्रैरश्वमेधगतस्याश्वस्य जलमध्यादुद्गमनं कुर्यात्।

अथ नवमीमाह—

सुशेवं त्वा भानवो दीदिवांसम्। समग्रासो

१ क. ख. 'दृहितुत्वा'।

जुह्वो जातवेदः । उक्षन्ति त्वा वाजिनमाघृ-
तेन । सꣳसमग्ने युवसे भोजनानि, इति ।

हे जातवेदो जुह्वो जुह्वाद्याः स्रुचः समग्रा घृतपूर्णाः सत्यः स्वनिष्ठेन घृतेन त्वामुक्षन्ति । कीदृश्यो जुह्वाद्याः । भानवो घृतपूर्णत्वाद्भासमानाः । कीदृशं त्वाम् । सुशेवं सुखेन सेवितुं शक्यं दीदिवांसमत्यन्तं दीप्यमानं वाजिनं वेगवन्तम् । अत्र त्वेति पदं द्वितीयान्तं द्विराम्नातम् । तत्रैकं प्रथमान्तत्वेनोपरि नेतव्यम् । हेऽग्ने त्वं भोजनानि भोक्तुं योग्यान्यस्मदीयहवींषि संसमत्यन्तसम्यक्त्वेन युवसे मिश्रयसि स्वी करोषीत्यर्थः ।

अथ दशमीमाह—

अग्ने शर्ध महते सौभगाय । तव द्युम्नान्युत्त-
मानि सन्तु । सं जास्पत्यꣳ सुयममाकृणुष्व ।
शत्रूयतामभितिष्ठा महाꣳसि ( ४ ) , इति ।

अस्त्वेतु रोहितो नाको महाꣳसि ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके पञ्चमाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

हेऽग्नेऽस्माकं महते सौभगाय सौभाग्याय शर्धोत्सहस्व । तव संबन्धीनि द्युम्नान्युत्तमानि मणिमुक्तादीनि धनान्यस्माकं सन्तु । जास्पत्यं जायापतिभावं सुयमं सुष्ठु नियतं समाकृणुष्व सम्यक्संपादय । शत्रूयतां शात्रवमिच्छतां पुरुषाणां महांसि तेजांस्यभितिष्ठाभित आक्रमस्व । इदं मन्त्रद्वयमाग्नेये कर्मणि द्रष्टव्यम् । तत्रोत्तरस्य विवाहकर्मण्यपि विनियोगं बोधायन आह— " अथ तथोपविश्यान्वारब्धायामुपयमनीर्जुहोत्यग्ने शर्ध महते सौभगाय " इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ पञ्चमप्रपाठके तृतीयोऽनुवाकः ।

तृतीयानुवाके प्रथमामृचमाह—

पुन॑र्न॒ इन्द्रो॑ म॒घवा॑ ददातु । धना॑नि श॒क्रो धन्यः॑ सु॒राधाः॑ । अ॒र्वा॒ची॒नं॑ कृणुतां याचि॒तो मनः॑ । श्रु॒ष्टी नो॑ अ॒स्य ह॒विषो॑ जु॒षा॒णः, इति ।

अस्मदीयानि धनानि यानि नष्टानि तानि सर्वाणि पुनरपि नोऽस्मभ्यमिन्द्रो ददातु । कीदृश इन्द्रः । मघवा धनवाञ्शक्रः शक्तियुक्तो धन्यो धनदानार्हः सुराधाः शोभनान्नयुक्तस्तादृशोऽयमिन्द्रो याचितोऽस्माभिः प्रार्थितः सन्स्वकीयं मनोऽर्वाचीनं कृणुतामस्मदभिमुखं करोतु । नोऽस्मदीयस्यास्य हविषो भागं श्रुष्टी जुषाणः शीघ्रं सेवमानः स इन्द्रोऽस्मदभीष्टं करोतु ।

अथ द्वितीयामाह—

यानि॑ नो॒ जिन॒न्धना॑नि । जहर्थ॑ शूर म॒न्युना॑ । इन्द्रा॑नु॒विन्द॑ न॒स्तानि॑ । अ॒नेन॑ ह॒विषा॒ पुनः॑, इति ।

हे शूरेन्द्र त्वं विहितस्याननुष्ठानान्निषिद्धसेवनाद्वा पापयुक्तान्नोऽस्माञ्जिनञ्शिक्षार्थं हिंसन्मन्युनाऽस्मासु क्रोधेन यान्यस्मदीयानि धनानि जहर्थापहृतवानसि । अनेनास्मदीयेन हविषा तुष्टः सन्पुनरपि नोऽस्माकं तानि धनान्यनुविन्दानुग्रहेण लभस्व । देहीत्यर्थः । एतदुभयं नष्टधनस्य पुनः प्राप्त्यर्थे कस्मिंश्चिदैन्द्रे कर्मणि द्रष्टव्यम् ।

अथ तृतीयामाह—

इन्द्र॑ आशा॑भ्यः॒ परि॑ । सर्वा॑भ्यो॒ऽभ॑यं करत् (१) । जेता॒ शत्रू॒न्विच॑र्षणिः, इति ।

विचर्षणिर्विविच्य द्रष्टा शत्रूणां जेतेन्द्रः सर्वाभ्यो दिग्भ्यः परितो वर्तमानाभ्योऽस्माकमभयं करत्करोतु । अयं मन्त्रः पूर्वत्रैवोपहोमार्थः ।

अथ चतुर्थीमाह—

आकू॑त्यै त्वा॒ कामा॑य त्वा स॒मृधे॑ त्वा ।

पुरो दधे अमृतत्वाय जीवसे, इति ।

हे इन्द्राऽऽकूत्यादिसिद्ध्यर्थं त्वां पुरो दधे पुरस्कृत्य सेवे । आकूतिः संकल्पः कामो भोगः समृत्समृद्धिरमृतत्वमपमृत्युराहित्यं जीवनमन्नादिसंसंपत्तिः ।

अथ पञ्चमीमाह—

आकूतिमस्यावसे । काममस्य समृद्ध्यै ।

इन्द्रस्य युञ्जते धियः, इति ।

लोके बुद्धिमन्तः कर्तारो वसे रक्षणार्थं समृद्ध्यै धनादिसमृद्ध्यर्थं चास्येन्द्रस्याऽऽकूतिं संकल्पं काममिच्छां धियो बुद्धिविशेषांश्च युञ्जत आश्रयन्ति । न त्विन्द्रनैरपेक्ष्येण स्वतन्त्रानाकूत्यादीँल्लभन्ते[1] ।

अथ षष्ठीमाह—

आकूतिं देवीं मनसः पुरो दधे । यज्ञस्य माता

सुहवा मे अस्तु । यदिच्छामि मनसा सकामः ।

विदेयमेनद्धृदये निविष्टम् ( २ ), इति ।

अहमाकूतिं संकल्पाभिमानिनीं देवीं कार्येषु कुर्वाणस्य मनसः पुरो दधे संकल्पपूर्वमेव सर्वं कार्यं मदीयेन मनसा क्रियत इत्यर्थः । सेयमाकूतिर्यज्ञस्य मातृस्थानीया सती मे मम सुहवा सुखेनाऽऽह्वातुं शक्याऽस्तु । सकामः कामसहितोऽहं मदीयेन मनसा यत्कार्यं कर्तुमिच्छामि मदीये हृदये निविष्टमेनत्तत्कार्यं विदेयं लभेयम् । अस्य मन्त्रत्रयस्य कर्मणामादौ संकल्पे विनियोगं बौधायन आह—“ आकूत्या वेदनं करोति । आकूत्यै त्वा कामाय त्वा समृधे त्वा ” इति ।

अथ सप्तमीमाह—

सेदग्निरग्नीꣳरत्येत्यन्यान् । यत्र वाजी तनयो

वीडुपाणिः । सहस्रपाथा अक्षरा समेति, इति ।

यत्र यस्मिन्नग्नौ यजमानेनोपचरिते सति तनयः पुत्रो वाज्यन्नवान्वीडुपाणिर्यागदानादिषु दृढहस्तः सहस्रपाथाः सहस्रसंख्याकेनान्नेन युक्तः सन्नक्षराऽ-

---

[1] क. ख. °त्यादन्भिजन्ते ।

क्षरेणाप्यविनाशेन जीवनेन समेति संगच्छते । सेदाग्निः स एवोपचरितोऽग्निरन्यानितरयजमानसंबन्धीनग्नीनत्येत्यातिक्रामति । सोऽयं मन्त्रः प्रायणीयेष्टौ स्विष्टकृतः पुरोनुवाक्या ।

अथाष्टमीमाह—

आशा॑नां त्वाशापा॒लेभ्य॑ः । च॒तुर्भ्यो॑ अ॒मृते॑भ्यः ।

इ॒दं भू॒तस्याध्य॑क्षेभ्यः । वि॒धेम॑ ह॒विषा॑ व॒यम्, इति ।

हे पशो त्वामाशानां दिशां मध्य आशापालेभ्यो विशिष्टानां दिशां पालेभ्यश्चतुर्भ्य इन्द्रयमवरुणसोमेभ्योऽमृतेभ्यो देवेभ्यः समर्पयामीति शेषः । भूतस्यास्मिन्कर्मणि प्राप्तस्य पशोरध्यक्षेभ्यः स्वामिभ्यो देवेभ्यो वयं हविषेदं विधेम शीघ्रमेव परिचरेम ।

अथ नवमीमाह—

विश्वा॒ आशा॒ मधु॑ना॒ सꣳसृ॑जामि । अ॒न॒मी॒वा आप॒

ओष॑धयो भवन्तु । अ॒यं यज॑मा॒नो॒ मृधो॒ व्य॑स्य-

ताम् । अगृ॑भीताः प॒शव॑ः सन्तु॒ सर्वे॑, इति ।

विश्वा आशाः सर्वा दिशोऽहं मधुना मधुरेण वृष्ट्युदकेन संसृजामि संयोजयामि । तेनाऽऽप ओषधयश्चानमीवा रोगरहिता भवन्तु । अयं च यजमानो मृधः शत्रून्व्यस्यतां निरस्यतु । सर्वे पशवोऽगृभीता व्याघ्रतस्करादिभिरस्वीकृताः सन्तु । इदं मन्त्रद्वयं पशौ संज्ञप्यमाने यजमानेन जप्यम् । तथा दिवाश्येनीसंज्ञिकास्विष्टिषु "आशायै चरुम्" इत्यस्य याज्यानुवाक्ये । तथा च तयोः प्रतीकद्वयमाम्नातम्—"आशानां त्वा विश्वा आशाः" इति ।

अथ दशमीमाह—

अ॒ग्निः सोमो॒ वरु॑णो मि॒त्र इन्द्र॑ः । बृह॒स्पति॑ः सवि॒ता

यः स॑ह॒स्री । पू॒षा नो॒ गोभि॒रव॑सा॒ सर॑स्वती । त्वष्टा॑

रू॒पाणि॒ सम॑नक्तु य॒ज्ञैः, इति ।

अग्न्यादयस्त्वष्टृदेवपर्यन्ता ये दश देवाः सन्ति तेषां मध्य एकैक एव नोऽस्माकमवसा रक्षणाय गोभिः समनक्तु संयोजयतु । यज्ञैश्च समनक्तु त्वष्टा

देवो रूपाणि पुत्रपौत्रादिशरीराण्यपि समनक्तु । यः सहस्रीति सवितृविशेषणम् । यः सहस्रसंख्याकरश्मियुक्तः सोऽयं सवितेति योज्यम् ।

अथैकादशीमाह—

त्वष्टा॑ रू॒पाणि॒ दध॑ती॒ सर॑स्वती। पू॒षा भग॑ꣳ सवि॒ता नो॑ ददातु। बृह॒स्पति॒र्दद॒दिन्द्रः॑ स॒हस्र॑म्। मि॒त्रो दा॒ता वरु॑णः॒ सोमो॑ अ॒ग्निः (३), इति।

कर॒न्निविष्टमस्यतां नवं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके पञ्चमाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

अयं त्वष्टा रूपाणि पुत्रादिशरीराणि ददातु । सरस्वती दधती धारयित्री भूयात् । पूषा सविता बृहस्पतिश्च प्रत्येकं नोऽस्मभ्यं भगं सौभाग्यं ददातु । इन्द्रः सहस्रं सहस्रसंख्याकं गोधनादिकं ददद्ददातु । मित्रवरुणसोमाग्निष्वेकैकः सहस्रस्य दाता भवतु । एतच्च मन्त्रद्वयं मित्रविन्दायामिष्टौ याज्यानुवाक्ये । तथा चाऽऽश्वलायनः—"मित्रविन्दा महावैराजी" इत्यादिनोदाजहार ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ पञ्चमप्रपाठके चतुर्थोऽनुवाकः ।

---

चतुर्थानुवाके प्रथमामृचमाह—

आ नो॑ भर॒ भग॑मिन्द्र द्यु॒मन्त॑म्। नि ते॑ दे॒ष्णस्य॑ धीमहि॒ प्ररे॒के। उ॒र्व इ॑व पप्र॒थे कामो॑ अ॒स्मे। तमा पृ॑णा वसुपते॒ वसू॑नाम्, इति।

हे इन्द्र द्युमन्तं दीप्यमानं भगं धनादिसौभाग्यं नोऽस्मभ्यमाभर संपादय । ते तव देष्णस्य दानस्य प्ररेकेऽतिशये सत्यतिरिक्तं धनं यागार्थं तुभ्यं निधी-

---

१ क. ख. °कैकशः स° ।

माहि। उर्व इव वाडवाग्निरिवास्माकं कामः पप्रथे प्रथितोऽभूत्। वसूनां वसुपते बहुधनस्वामिंस्तं काममापृणाः सर्वतः पूरय।

अथ द्वितीयामाह—

इमं कामं मन्दया गोभिरश्वैः। चन्द्रवता राधसा पप्रथश्च। सुवर्यवो मतिभिस्तुभ्यं विप्राः। इन्द्राय वाहः कुशिकासो अक्रन्, इति।

हे इन्द्रेममस्माकं कामं गोभिरश्वैस्त्वया दत्तैर्मन्दय हर्षहेतुं कुरु। चन्द्रवता हिरण्यवता राधसा रत्नादिधनेन च कामं पप्रथः प्रथय। सुवर्यवः स्वर्गमिच्छन्तो विप्रा ये मेधाविनः कुशिकासः कुशिकास्तुः विश्वामित्रस्य पुत्रा मतिभिः स्तोत्रैस्तुभ्यमिन्द्राय वाहोऽक्रन्वाहमकुर्वंस्तदीया स्तुतिरेव त्वदागमनहेतुत्वाद्वाहनमित्यर्थः। एतच्चोभयमैन्द्रे कर्मणि द्रष्टव्यम्।

अथ तृतीयामाह—

इन्द्रस्य नु वीर्याणि प्रवोचम्। यानि चकार प्रथमानि वज्री (१)। अहन्नहिमन्वपस्ततर्द। प्र वक्षणा अभिनत्पर्वतानाम्, इति।

वज्री वज्रहस्त इन्द्रः प्रथमानि मुख्यानि यानि वीर्याणि शौर्याणि चकार, इन्द्रस्य संबन्धीनि तानि वीर्याणि नु क्षिप्रं प्रवोचं प्रवक्ष्यामि। प्रथमं तावदहिं वृत्राख्यमसुरमहन्हतवान्। अनु तदनन्तरमपस्ततर्द मेघस्थितं जलं मेघभेदेन पृथिव्यां व्यापितवान्। अथ पर्वतानां वक्षणा पक्षान्प्राभिनत्प्रकर्षेण भिन्नवान्।

अथ चतुर्थीमाह—

अहन्नहिं पर्वते शिश्रियाणम्। त्वष्टाऽस्मै वज्रं स्वर्यं ततक्ष। वाश्रा इव धेनवः स्यन्दमानाः। अञ्जः समुद्रमवजग्मुरापः, इति।

पर्वते पर्वतसमाने मेघे शिश्रियाणमाश्रितमहिं जलनिरोधकमाहिनामानमसु-

रमहन्हतवान् । त्वष्टा देवोऽस्मा इन्द्राय स्वर्यं स्वर्गाय हितं वज्रं ततक्ष तीक्ष्णीकृतवान् । ततो वज्रेण वृष्टिनिरोधके शत्रौ हते सति स्यन्दमाना आपः समुद्रं समुद्रसमानं भूमदेशमञ्जः समञ्जसं यथा भवति तथाऽवजग्मुः प्राप्ताः । अपां दृष्टान्तः—वाश्रा धेनव इव यथा वत्समाकारयितुं शब्दं कुर्वत्यो धेनवो दुहन्ति तद्वत् ।

अथ पञ्चमीमाह—

वृषायमाणो वृणीत सोमम् । त्रिकद्रुकेष्वपिबत्सुतस्य । आसायकं मघवाऽऽदत्त वज्रम् । अहन्नेनं प्रथमजामहीनाम् ( २ ), इति ।

वृषायमाणो घासं जिघृ(घ)त्सुर्वृषभ इव बलवान्देवानां पानार्थमिन्द्रः सोममवृणीत । ततस्त्रिकद्रुकेषु ज्योतिर्गौरायुरित्येतेषु त्रिकद्रुकनामकेषु यज्ञेषु सुतस्याभिषुतस्य सोमस्य रसमयमिन्द्रोऽपिबत्तथा मघवेन्द्रः सायकं बाणवत्तीक्ष्णं वज्रमादत्त स्वीकृतवान् । आदाय चाहीनामसुराणां मध्ये प्रथमजां प्रथमोत्पन्नमेनं वृत्रमहन्हतवान् ।

अथ षष्ठीमाह—

यदिन्द्राहन्प्रथमजामहीनाम् । आन्मायिनाममिनाः प्रोत मायाः । आत्सूर्यं जनयन्द्यामुषासम् । तादीक्ना शत्रून्न किलाऽऽविवित्से, इति ।

हे इन्द्र यद्यदा त्वमहीनां प्रथमजां हतवानसि । आदनन्तरं मायिनां मायायुक्तानामसुराणां माया उत सर्वा अपि मायाः प्रामिनाः प्रकर्षेण विनाशितवानसि । आदनन्तरं सूर्यं जनयन्स्वर्भानुसंज्ञकेनासुरेण प्रयुक्ते तमसि मग्नं सूर्यं प्रादुर्भावयन्, तथोषासं द्यां जनयन्नुषःकालं दीप्तं कुर्वन्वर्तसे। तादीक्ना तादृशाञ्शत्रून्कदाचिदपि त्वं नाऽऽविवित्से किल सर्वथा न लभसे।

अथ सप्तमीमाह –

अहन्वृत्रं वृत्रतरं व्यंसम् । इन्द्रो वज्रेण महता वधेन । स्कन्धांसीव कुलिशेना विवृक्णा । अहिः

शयत उपपृक्पृथिव्याम्, इति।

अयमिन्द्रो महता प्रौढेन वधेन वधसाधनभूतेनानेन वज्रेण वृत्रमहन्वृत्रनामकमसुरं हतवान्। कीदृशं वृत्रम्। वृत्रतरमतिशयेन लोकत्रयावरकम्। "स इमाँल्लोकानवृणोत्" इति ब्राह्मणम्। व्यंसं छेदनेनांसरहितम्। ततोऽयमहिर्वृत्राख्योऽसुर इन्द्रेण हतः सन्पृथिव्यामुपपृगुपसंपृक्तः पतितोऽशयिष्ट। तत्र दृष्टान्तः—कुलिशेन कुठारेण विवृक्णा विशेषतश्छिन्नानि स्कन्धांसीव वृक्षस्य स्कन्धा यथा भूमौ निपतन्ति तद्वत्।

अथाष्टमीमाह—

अयोद्धेव दुर्मद आ हि जुह्वे। महावीरं तुविबाधमृजीषम् (२)। नातारीरस्य समृतिं वधानाम्। सं रुजानाः पिपिष इन्द्रशत्रुः, इति।

दुर्मदो मदान्धो वृत्र इन्द्रमाजुह्वे हि युद्धार्थमाहूतवान्किल। तत्र दृष्टान्तः—अयोद्धेव यथा लोके योद्धुमशक्तो वृथैव वाचा युद्धार्थं गर्जनं करोति तद्वत्। कीदृशमिन्द्रम्। महावीरं शूरेषु मध्येऽत्यन्तमेव शूरम्। तुविबाधं बाधरहितम्। ऋजीषं सोमसंबन्धिनम्। ऋजीषस्यापि मत्सकत्वादृजीषरूपम्। तादृशस्यैवेन्द्रस्य शत्रुर्वृत्रोऽस्येन्द्रस्य वधानां समृतिं संगमं नातारीन्नं प्राप्तवान्। इन्द्रं हन्तुं न शक्त इत्यर्थः। प्रत्युत रुजाना भङ्गं प्राप्नुवतीः स्वकीया एव सेनाः संपिपिषे सम्यक्पिष्टवान्वज्रेण हतो भूमौ पतन्सन्समीपवर्तिनः सर्वाञ्शूरांश्चूर्णीकृतवानित्यर्थः। "इन्द्रस्य नु वीर्याणि" इत्यारभ्य षण्मन्त्रा निष्केवल्यशस्त्रेऽन्तर्भावनीयाः।

अथ नवमीमाह—

विश्वो विहाया अरतिः। वसुर्दधे हस्ते दक्षिणे। तरणिर्न शिश्रथत्। श्रवस्यया न शिश्रथत्। विश्वस्मा इदिषुध्यसे। देवत्रा हव्यमूहिषे। विश्वस्मा इत्सुकृते वारमृण्वति। अग्निर्द्वारा व्यृण्वति (४), इति।

अयमग्निर्विश्वो विश्वात्मको विहाया विशिष्टगतियुक्तोऽरातिरुपरतिरहितः। हविर्वहनाय पुनः पुनरागमने नास्त्यस्योपरतिः। वसुर्निवासहेतुस्तादृशोऽयमग्निर्ब्राह्मणस्य दक्षिणे हस्ते दधे धृत आसीत्। अत एव तत्र होम आम्नातः—"ब्राह्मणस्य दक्षिणे हस्ते होतव्यम्" इति। तरणिर्दुःखेभ्यस्तारयिता न शिश्रथच्छिथिलो न भवति। तत्र हेतुः—श्रवस्यया हविर्लक्षणान्नेच्छया न शिश्रथत्पुनः पुनरभिवृद्ध एवाभून्न तु शिथिलः। विश्वस्मा इत्सर्वस्मै जगत एव सर्वजगद्रक्षणार्थमिषुध्यस ईश्वरो भवसि। इषुध ऐश्वर्य इति धातुः। देवत्रा सर्वेषु देवेषु हव्यमूहिषेऽस्मदीयं हव्यं वहसि। विश्वस्मा इत्सुकृते सर्वस्मा अपि पुण्यकृते तदर्थं वारमृण्वति। वार्यन्ते प्रवेशार्थिनः प्राणिनो यत्र तत्सुवर्गस्य[1] द्वारं वारमित्युच्यते। तदपावृणोति। तदेव स्पष्टी क्रियते—अयमग्निर्द्वारा स्वर्गद्वारं व्यृण्वति विवृतं करोति। अन्त्ये(त्य)ष्टित्वादियमष्टपदी।

अथ दशमीमाह—

उदुज्जिहानो अभिकाममीरयन्। प्रपृञ्चन्विश्वा भुवनानि पूर्वथा। आ केतुना सुषमिद्धो यजिष्ठः। कामं नो अग्ने अभिहर्य दिग्भ्यः, इति।

हेऽग्ने दिग्भ्यः सकाशान्नोऽस्मदीयं काममभीष्टमर्थमभिहर्य संपादय। किं कुर्वन्, उदुज्जिहानोऽत्यन्तमूर्ध्वमुद्गच्छन्काममभीष्टमर्थमभिमतमीरयन्प्रेरयन्। विश्वा भुवनानि पूर्वथा यथापूर्वं केतुना स्वकीयेन धूमेन प्रपृञ्चन्प्रकर्षेण संयोजयन्। कीदृशोऽग्निः। सुषमिद्धोऽत्यन्तदीप्तो यजिष्ठोऽतिशयेन यष्टा।

अथैकादशीमाह—

जुषाणो हव्यममृतेषु दूढ्यः। आ नो रयिं बहुलां गोमतीमिषम्। निधेहि यक्षदमृतेषु भूषन्, इति।

हेऽग्ने हव्यं जुषाणोऽस्मदीयं हविः सेवमानस्त्वममृतेषु देवेषु दूढ्यो यागरहितात्पुरुषादानीय नोऽस्माकं रयिं धनं बहुलामतिप्रभूतां गोमतीं गोभिर्युक्तामिषमन्नं निधेहि नितरां संपादय। यो दुर्बुद्धिः पुमान्देवेषु भक्तिं न

[1] क. ख. तत्स्वर्गस्य।

करोति तदीयं धनमाहृत्यास्मभ्यं देहीत्यर्थः। अस्मदीयस्तु यजमानोऽमृतेषु देवेषु मध्ये भूषन्स्वात्मानमलंकुर्वन्देवत्वमात्मन इच्छन्नित्यर्थः। स यजमानस्त्वद्दत्तेन धनादिना यक्षद्यागं करिष्यति। तदेतन्मन्त्रत्रयमाग्नेये कर्मणि द्रष्टव्यम्।

अथ द्वादशीमाह—

अश्विना यज्ञमागतम्। दाशुषः पुरुदंससा।
पूषा रक्षतु नो रयिम् (५), इति।

हेऽश्विनौ युवां पुरुदंससा भूरिकर्माणौ सन्तौ दाशुषो हविर्दत्तवतो यजमानस्य यज्ञमागतमागच्छतम्। पूषा च नोऽस्मदर्थं रयिं रक्षतु।

अथ त्रयोदशीमाह—

इमं यज्ञमश्विना वर्धयन्ता। इमौ रयिं यजमानाय
धत्तम्। इमौ पशून्रक्षतां विश्वतो नः। पूषा नः
पातु सदमप्रयुच्छन्, इति।

हेऽश्विनाविममस्मदीयं यज्ञं वर्धयन्ता वृद्धिं मापयन्ताविमौ युवां यजमानाय रयिं धनं धत्तं संपादयतम्। इमौ युवां नोऽस्मदीयान्पशून्विश्वतो रक्षतां सर्वतो भयात्पालयतम्। अयं पूषाऽप्रयुच्छन्प्रमादमकुर्वन्नोऽस्मदीयं सदं सदस्थानं पातु। एतच्चोभयम्—"अश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति" इत्यस्य याज्यानुवाक्ये।

अथ चतुर्दशीमाह—

प्र ते महे सरस्वति। सुभगे वाजिनीवति। सत्यवाचे भरे मतिम्, इति।

हे सुभगे सौभाग्ययुक्ते हे वाजिनीवति अन्नयुक्ते हे महे महति हे सरस्वति सत्यवाचेऽनृतवाक्यरहितायै ते तुभ्यं मतिं मदीयां स्तुतिं प्रभरे संपादयामि।

अथ पञ्चदशीमाह—

इदं ते हव्यं घृतवत्सरस्वति। सत्यवाचे प्रभरेमा
हवींषि। इमानि ते दुरिता सौभगानि।

तेभिर्व॒यꣳ सु॒भगा॑सः स्याम ( ६ ), इति ।

वज्यहीनामृजीषं व्यृण्वति रक्षतु नो रयिꣳ सौभगान्येकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके पञ्चमाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

हे सरस्वति ते तुभ्यं घृतवद्घृतयुक्तमिदं हव्यमस्माभिः संपादितमिति शेषः । सत्यवाचे तस्यै सरस्वत्या इमानि संपादितानि हवींषि प्रभरेम प्रकर्षेण समर्पयामः । दुरिता यानि दुरितानि यान्यस्माभिः कृतानि तानि सर्वाणि हे सरस्वति ते प्रसादात्सुभगानि सुकृतानि संपन्नानि । तेभिस्तैः सुकृतैर्वयं सुभगासः सौभाग्ययुक्ताः स्याम । एते ऋचौ—सरस्वते सत्यवाचे चरुम् " इत्यस्य याज्यानुवाक्ये ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

——:*:——

अथ पञ्चमप्रपाठके पञ्चमोऽनुवाकः ।

अथ पञ्चमानुवाके प्रथमामृचमाह—

य॒ज्ञो रा॒यो य॒ज्ञ ईशे॒ वसू॑नाम् । य॒ज्ञः स॒स्याना॑मु॒त सु॑क्षिती॒नाम् । य॒ज्ञ इ॒ष्टः पू॒र्वचि॑त्तिं दधातु । य॒ज्ञो ब्र॒ह्मण्वाꣳ॒ अप्ये॑तु दे॒वान् , इति ।

यज्ञो यज्ञस्वामी यो देवः स रायो धनस्य मणिमुक्तादिरूपस्येशे स्वामी भवति । तथा यज्ञो वसूनां निवासहेतूनां गृहाणामीशे स्वामी भवति । तथाऽयं यज्ञः सस्यानां व्रीह्याद्योषधीनां स्वामी । उतापि च सुक्षितीनां शोभनभूमीनामीशे स्वामी । इष्टो यज्ञः पूर्वचित्तिं दधातु पूर्वचित्तिं स्वर्गं दधातु । तथाऽन्यत्राऽऽम्नातम्—" द्यौरासीत्पूर्वचित्तिः " इति । ब्रह्म वेदः, ब्रह्मण्वान्मन्त्रयुक्तो यज्ञो देवानप्येतु देवान्प्राप्नोतु ।

[अथ] द्वितीयामाह—

अ॒यं य॒ज्ञो व॑र्धतां॒ गोभि॒रश्वैः॑ । इ॒यं वेदिः॑ स्वप॒त्या

सुवीरा । इदं बर्हिरतिबर्हीꣳष्यन्या । इमं यज्ञं विश्वे अवन्तु देवाः, इति ।

अयमस्माभिरनुष्ठीयमानो यज्ञो गोभिरश्वैश्च सह वर्धतां वृद्धिं प्राप्नोतु । इयं वेदिर्यज्ञसंबन्धिनी स्वपत्या शोभनपुत्रप्रदा सुवीरा शोभनभृत्यप्रदा चास्तु । इदं च वेद्यामास्तीर्णं बर्हिरन्या बर्हींषीतरयजमानसंबन्धीनि बर्हींष्यतिक्रामतु । इमं चास्मदीयं यज्ञं विश्वे देवा अवन्तु रक्षन्तु । एते ऋचौ दिवः श्येनीनामिकास्विष्टिषु "यज्ञाय चरुम्" इत्यस्य याज्यानुवाक्ये ।

अथ तृतीयामाह—

भग एव भगवाꣳ अस्तु देवाः । तेन वयं भगवन्तः स्याम (१) । तं त्वा भग सर्व इज्जोहवीमि । स नो भग पुर एता भवेह, इति ।

हे देवा यो भगाख्यो देवः स एव भगवान्सौभाग्यवानस्तु । तेन देवेन वयं सर्वे भगवन्तः सौभाग्ययुक्ताः स्याम । हे भग तादृशं त्वां सर्व इत्सर्व एव जोहवीम्याह्वयामीत्यर्थः । हे भगदेवेह कर्मणि नोऽस्माकं पुर एता पुरतो गन्ता भव ।

अथ चतुर्थीमाह—

भग प्रणेतर्भग सत्यराधः । भगेमां धियमुदव ददन्नः । भग प्र णो जनय गोभिरश्वैः । भग प्र नृभिर्नृवन्तः स्याम, इति ।

हे प्रणेतः प्रकर्षेण नेतुं कुशल हे भगदेवास्मान्कर्मणि प्रणयेति शेषः । हे सत्यराधः सत्यधन भगदेवास्मभ्यं धनं देहीति शेषः । हे भग नोऽस्मभ्यमिमां धियं ददत्कर्मानुष्ठानबुद्धिं प्रयच्छन्नुदवोत्कर्षेण रक्ष । हे भगदेव नोऽस्मान्गोभिरश्वैः प्रजनय तद्युक्तान्कुर्वित्यर्थः । हे भग त्वत्प्रसादाद्वयं नृभिः पुत्रपौत्रादिभिः पुरुषैर्नृवन्तः पुरुषवन्तः स्याम । एतद्द्वयं भगाय चरुं धावातायै गृह इत्यस्मिन्कर्मणि द्रष्टव्यम् ।

अथ पञ्चमीमाह—

शश्वतीः समा उपयन्ति लोकाः । शश्वतीः समा उपयन्त्यापः । इष्टं पूर्तꣳ शश्वतीनाꣳ समानाꣳ शाश्वतेन । हविषेष्ट्वाऽनन्तं लोकं परमारुरोह ( २ ), इति।

लोकाः सर्वे प्राणिनः शश्वतीः शाश्वतीः समा निरन्तरवर्तिनः संवत्सरानुपयन्ति प्राप्नुवन्ति। एकस्मिन्संवत्सरेऽतीतेऽपि पुनरन्यं संवत्सरं प्राप्नुवन्ति। तथैवाऽऽपः शाश्वतीः समा उपयन्ति निरन्तरं प्रवहन्ति। यथैतावुभौ दृष्टान्तौ तथा शाश्वतीनां समानां निरन्तरवर्तिनां संवत्सराणां संबन्धीष्टं पूर्तं श्रौतं स्मार्तं च कर्म प्रवर्ततां कर्मानुष्ठानमनवच्छिन्नमस्त्वित्यर्थः। तेन शाश्वतेन निरन्तरानुष्ठितेन हविषा देवमिष्ट्वाऽनन्तं विनाशरहितं परमुत्कृष्टं लोकमारुरोह पुरुष आरोहति। कृष्यादिफलवच्छ्रौतस्मार्तकर्मफलं सहसा न विनश्यति किंतु चिरमनुभवितव्यमित्यर्थः। अस्यामृचि देवताभिव्यक्त्यभावात् "अनिरुक्तः प्रजापतिः" इत्यनुसारेण प्राजापत्ये कर्मण्येषा द्रष्टव्या।

[अथ] षष्ठीमाह—

इयमेव सा या प्रथमा व्यौच्छंत् ।
सा रूपाणि कुरुते पञ्च देवी, इति।

या सृष्ट्युपक्रमे प्रथमोषा व्यौच्छद्व्युष्टाऽऽसीदियमेव सेदानीमस्मान्प्रति सूर्योदयात्पूर्वकालरूपोषा प्रादुर्भवति सैव रूपाणि पुनः पुनरावर्तत इत्यर्थः। सा देव्येकैव सती पञ्च रूपाणि पञ्चर्तूंस्तल्लिङ्गानि पञ्च वा कुरुते।

अथ सप्तमीमाह—

द्वे स्वसारौ वयतस्तन्त्रमेतत् । सनातनं विततꣳ षण्मयूखम्। अवान्याꣳस्तन्तून्किरतो धत्तो अन्यान्। नावपृज्याते न गमाते अन्तम्, इति।

अहश्च रात्रिश्चैते द्वे देवते स्वसारौ परस्परभगिन्यौ ते एतत्संवत्सरात्मकं तन्त्रं तन्तुनिष्पन्नं वस्त्रं वयतो यथा कुविन्दस्तन्तुभिर्वस्त्रं वयति निष्पादयत्ये-वमेते संवत्सरं निष्पादयत इत्यर्थः। तच्च संवत्सरात्मकं वस्त्रं कीदृशम्। सनातनमनादिकालसिद्धम्। नहि संवत्सरप्रवाहस्यास्माभिर्दृश्यमान आदिः कश्चिदस्ति। अत एव विततं वस्त्रगतदीर्घतन्तुवद्विस्तीर्णं षण्मयूखं षट्संख्याका ऋतवो मयूखाः शङ्कुस्थानीया यस्य तादृशं कुविन्देन हि तन्तुप्रसरणाय शङ्कवो निखन्यन्ते तद्वदृतव इत्यर्थः। कुविन्दो हि वस्त्रनिर्माणकाले कांश्चिद्दीर्घतन्तूनधः कृत्वा मध्ये तिर्यक्तन्तून्धारयत्येवमेते अप्यहोरात्रदेवते अन्यान्कांश्चिदहर्विशेषांस्तन्तूनस्तमयकालेऽववकिरतोऽधोगतान्कुरुतः, अन्यांश्च रात्रिरूपांस्तन्तूनस्तमयादूर्ध्वं यन्तो धारयतः। एते अहोरात्रदेवते कदाचिदपि नावपृज्याते। तस्यैव व्याख्यानमन्तं न गमाते संवत्सरात्मकवस्त्रनिर्माणस्य समाप्तिं न गच्छतो निरन्तरं संवत्सरपरम्परां निष्पादयत इत्यर्थः। एतच्च मन्त्रद्वयं क्रमादुषोदेवताकेऽहोरात्रदेवताके च कर्मविशेषे द्रष्टव्यम्।

अथाष्टमीमाह—

आ वो॒ यं तू॑द॒वाहा॑सो॒ अद्य । वृ॒ष्टिं ये विश्वे॑ म॒रुतो॑
जु॒नन्ति॑ । अ॒यं यो अ॒ग्निर्म॑रुतः॒ समि॑द्धः । ए॒तं
जु॑षध्वं कवयो युवानः ( ३ ), इति।

हे मरुतो ये विश्वे सर्वे मेघा वृष्टिं जुनन्ति जवेन त्वरया प्रेरयन्ति वो युष्मत्संबन्धिन उदवाहास उदकवाहिनो मेघा अद्यास्मिन्कर्मण्यायन्त्वागच्छन्तु। कवयः सर्वज्ञा युवानो नित्यतरुणा मरुतो यूयं योऽग्निरिह समिद्धस्तमेतं जुषध्वं वृष्ट्यर्थं सेवध्वम्। "अग्निर्वा इतो वृष्टिमुदीरयति मरुतः सृष्टां नयन्ति" इति ब्राह्मणम्।

[ अथ ] नवमीमाह—

धा॒रा॒व॒रा म॒रुतो॑ धृ॒ष्ण्वो॑जसः । मृ॒गा न भी॒मास्त॑-
वि॒षीभि॑रू॒र्मिभिः॑ । अ॒ग्नयो॒ न शु॑शुचा॒ना ऋ॑जी॒षिणः॑ ।
भृ॒मिं॒ धम॑न्त॒ उप॒ गा अ॑वृण्वत, इति।

एते मरुतो गा गोवद्दुहाना वृष्टीरुपावृण्वत समीपे वृतवन्तो वृष्टिं संपादित-

वन्त इत्यर्थः कीदृशा मरुतः । वृष्टिधारया भूमिं वृण्वन्ति व्याप्नुवन्तीति धारावराः, धृष्णु धर्षणक्षममोजो बलं येषां ते धृष्णुवोजसः । अत एव मृगा न सिंहव्याघ्रादिमृगा इव तविषेभिर्बलवद्भिरूर्मिभिर्गमनैर्भीमा भयंकरा अग्नयो न शुशुचाना अग्नय इव दीप्यमाना ऋजीषिण ऋजीषोपलक्षितसोमपानयुक्ता भ्रुमिं भ्राम्यतीति भ्रुमिर्मेघस्तं धमन्तश्चालयन्तः । एतच्चोभयं मारुते कर्मणि द्रष्टव्यम् ।

दशम्या एकादश्याश्च प्रतीके दर्शयति—

विचक्रमे त्रिर्देवः, इति ।

विचक्रम इत्येका त्रिर्देव इत्यपरा, एते "जुष्टी नरः" इत्यत्र व्याख्याते । एतच्चोभयं वैष्णवे कर्मणि द्रष्टव्यम् ।

[ अथ ] द्वादशीमाह--

आवेधसं नीलपृष्ठं बृहन्तम् । बृहस्पतिꣳ सदने साधयध्वम् । सादयोनिं दम आदीदिवाꣳसम् । हिरण्यवर्णमरुषꣳ सपेम, इति ।

हे ऋत्विग्यजमाना बृहस्पतिं देवं सदने यज्ञस्थाने साधयध्वम् । कीदृशम् । आवेधसं सर्वतः स्रष्टारं नीलपृष्ठं पृष्ठभागे नीलं बृहन्तं गुणैर्महान्तं सादयोनिं योनौ स्वर्गस्थाने यजमानान्सादयन्तं दमे गृह आदीदिवांसं सर्वतो दीप्यमानं हिरण्यवर्णं स्वर्णसमानकान्तिमरुषं रोषरहितं तादृशं बृहस्पतिं सपेम संबध्नीमः ।

[अथ] त्रयोदशीमाह—

स हि शुचिः शतपत्रः स शुन्ध्यूः (४) । हिरण्यवाशीरिषिरः सुवर्षाः । बृहस्पतिः स स्वावेश ऋष्वाः । पुरू सखिभ्य आ सुतिं करिष्ठः, इति ।

स हि प्रसिद्धो बृहस्पतिः शुचित्वादिगुणोपेतः । शुचिः शुद्धः । शतपत्रः शतसंख्याकवाहनोपेतः । स बृहस्पतिः शुन्ध्यूरन्येषामपि शोधको हिरण्यवाशीर्हिरण्यस्य वाशो वाक्यं शतमस्मै देहि सहस्रमस्मै देहीत्यादिरूपं तेन वाक्येनोपेत इषिरः सर्वैरेषणीयः सुवर्षाः स्वर्गप्रदः । स बृहस्पतिः स्वावेशः

सुष्ठाविष्टुं समाश्रयितुं शक्य ऋष्वा ऋषिरतीन्द्रियद्रष्टा तादृशो बृहस्पतिः सखिभ्यः सखिसदृशेभ्यो यजमानेभ्यः पुरू प्रभूतमासुतिमन्नं करिष्ठोऽतिशयेन कर्ता। एतच्च मन्त्रद्वयम्—"श्वेतां बार्हस्पत्याम्" इत्यस्य पशोः सूक्ते द्रष्टव्यम्। तथा च प्रतीकद्वयमाम्नातम्—"आवेधसꣳ सध्रुचीः" इति।

[अथ] चतुर्दशीमाह—

पूषꣳस्तव व्रते वयम्। न रिष्येम
कदाचन। स्तोतारस्त इह स्मसि, इति।

हे पूषंस्तव व्रते त्वदीये कर्मणि कदाचन न रिष्येम मा विनश्येम। इह कर्मणि ते तव स्तोतारः स्मसि भवामः।

[अथ] पञ्चदशीमाह—

यास्ते पूषन्नावो अन्तः समुद्रे। हिरण्ययीरन्त-
रिक्षे चरन्ति। याभिर्यासि दूत्याꣳ सूर्यस्य।
कामेन कृतः श्रव इच्छमानः (५), इति।

हे पूषन्समुद्रे समुद्रवद्विस्तीर्णेऽन्तरिक्षेऽन्तर्मध्ये हिरण्ययीः सुवर्णवर्णास्ते तव संबन्धिन्यो नावो नौसमाना दीप्तयो याश्चरन्ति याभिश्च रश्मिभिस्त्वं सूर्यस्य दूत्यां यासि दूतत्वं प्राप्नोषि। सूर्यो हि स्वर्भानुसंज्ञकेनासुरेण तमसाऽऽवृतः सन्दुःखितायाः सूर्यायाः समीपे पूषणं रश्मियुक्तं दूतत्वेन प्रेषितवान्। तदिदमाख्यानं शाखान्तरे द्रष्टव्यम्। तथा च सूक्तेऽप्याम्नायते—"तं देवासो अददुः सूर्यायै" इति। स त्वं ताभिर्दीप्तिभिर्युक्तः सञ्श्रव इच्छमानः कीर्तिमाकाङ्क्षन्कामेन कृतः स्वेच्छयैव दूतकर्मणि प्रेरितः। एतदुभयं पौष्णे कर्मणि द्रष्टव्यम्। सूक्तेऽप्येकस्य प्रतीकमाम्नातम्—"यास्ते पूषन्नावो अन्तः" इति।

[अथ] षोडशीमाह—

अरण्यान्यरण्यान्यसौ। या प्रेव
नश्यसि। कथा ग्रामं न पृच्छसि।

---

१ क. "विवदती"।

न त्वा भीरिव विन्दती३, इति ।

अरण्यानीशब्देन महारण्यमुच्यते । द्विरुक्तिरादरार्था । हेऽरण्यानि या त्वं प्रणश्यसीव जनरहितत्वान्नष्टेव प्रतीयसे, असौ त्वं कथा कथं ग्रामं न पृच्छसि । सर्वो हि जनो मार्गे गच्छन्स्वनिवासाय ग्रामः कुत्रेत्येवं पृच्छति । त्वं तु तथा न पृच्छसि । तथा ग्रामाद्बहिष्ठं पुरुषं रात्रौ भीः प्रविशति । त्वां तु भीर्न विन्दती ३ इव न लभत एव । प्लुतिर्विस्मयार्था । तदेवमरण्यदेवता स्तूयते ।

अथ सप्तदशीमाह—

वृषारवाय वदते । यदुपावति चिच्चिकः । आघाटीभिरिव धावयन् । अरण्यानिर्महीयते, इति ।

वृष्टिकाले रवः शब्दविशेषो यस्य पक्षिविशेषस्य सोऽयं वृषारवः । स हि निर्जनाया अरण्यान्या उपरि निर्गत्य निरन्तरं चिदित्यादिशब्दं वदति । तथावदते वृषारवाय पक्षिणे प्रत्युत्तरवादी चिच्चिकाख्योऽन्यः पक्षी यद्यदोपावति समीपमागत्य तदीयमभिवदनं प्रत्युत्तरदानेन परिपालयति । एकस्मिन्पक्षिणि चिच्चिशब्दं कुर्वति सत्यन्येऽपि तज्जातीयाः पक्षिणस्तदानीमेव चिच्चिशब्दान्कुर्वते तदानीमियमरण्यानिर्महीयते पूज्यते । तत्र दृष्टान्तः—आघाटीभिः काण्डवीणादिभिर्धावयन्निव शोधयन्निव यथा गानकाले गायकः पुरुषः स्वरविशेषान्वीणादिभिः शोधयति तादृशकुशलैर्गायकैः सेव्यमानो राजा यथा लोके पूज्यत एवमुक्तिप्रत्युक्तिरूपचिच्चिशब्दसहस्राणि कुर्वद्भिः सूक्ष्मैः पक्षिविशेषैर्युक्तेयमरण्यानिः शोभत इत्यर्थः ।

अथाष्टादशीमाह—

उत गाव इवाऽऽदन् । उतो वेश्मेव दृश्यते (६) ।
उतो अरण्यानिः सायम् । शकटीरिव सर्जति, इति ।

उतापि च गाव इव यथा ग्रामे गावो गृहेषु वसन्ति तथाऽरण्ये गवयाद्या मृगविशेषा आदंस्तृणानि भक्षयन्तो वर्तन्ते । उतो अपि च लतागुल्मादिकं तत्र तत्र वेश्मेव गृह इव दृश्यते । उतो अपि चेयमरण्यानिः सायंकाले वृक्षान्तरालेषु तमसा छन्नेषु शकटीः सर्जतीव लक्ष्यते । यथा कृषि-

काः सायंकाले धान्यविशेषैः शकटानि पूरयित्वा स्वगृहे समागच्छन्त्येवम-त्राप्यहनि वृक्षाग्रेषु दृश्यमानानि फलानि रात्रौ न दृश्यन्ते। तथा सति सर्वाणि फलानि लूत्वा शकटे पूरयित्वा गृहेषु नीतानीति मुग्धानां बालानां प्रतिभासो भवति। सोऽयं प्रतिभासोऽत्रारण्यवर्णनार्थमुच्यते।

अथैकोनविंशीमाह—

गामङ्गैष आह्वयति। दार्वङ्गैष उपावधीत्। वसन्नर-
ण्यान्याः सायम्। अक्रुक्षदिति मन्यते, इति।

अपि चारण्यान्यामहनि गाश्चारयन्गोपालोऽङ्गशब्देन प्रियसंबोधनवाचिना गामाह्वयति। यस्मिन्नाह्वानार्थे शब्दे गवां संकेतः क्लृप्तस्तादृशस्य शब्दस्यो-पलक्षकोऽयमङ्गशब्दः। गोपालस्य शब्दं श्रुत्वा यतः कुतश्चिदपि गावः समागच्छन्त्येव तदिदमाश्चर्यम्। अपि च विचित्रस्य प्रसादस्य निर्माता यस्त-क्षा स एष स्वापेक्षितं दारु काष्ठमरण्यान्यामुपावधीच्छिनत्तीत्यर्थः। यस्य यादृशं काष्ठमपेक्षितं तस्य तादृशमस्तीत्यपरमिदमाश्चर्यम्। तस्याऽऽश्चर्यस्य द्योतकोऽयमङ्गशब्दः। अङ्ग हन्तेत्यर्थः। अपि च दीर्घयात्रासु मार्गे गच्छ-न्नरण्यान्यां सायंकाले यः पुमान्वसति सोऽयं महतो वृक्षस्याधस्ताद्वसन्ब-हून्बहून्पक्षिशब्दाञ्श्रुत्वा सेयमरण्यान्याक्रोशतीति मन्यते तदिदमन्यदाश्चर्यम्।

अथ विंशीमाह—

न वा अरण्यानिर्हन्ति। अन्यश्चेन्नाभिगच्छति।
स्वादोः फलस्य जग्ध्वा। यत्र कामं निपद्यते, इति।

ये पुरुषास्तपश्चरितुमरण्यान्यां निवसन्ति तान्प्रत्यन्यो व्याघ्रादिर्नाभिग-च्छति चेत्तदानीमियमरण्यानिर्न वै हन्ति सर्वथा न मारयति। अयमर्थः। अरण्यप्रयुक्तः कश्चिदपि बाधो नास्ति व्याघ्रादिप्रयुक्तस्तूपायेन परिहर्तुं शक्यत इति। यस्यामरण्यान्यां स्वादोः फलस्य जग्ध्वा स्वादु फलं भक्षयि-त्वा कामं निपद्यते स्वेच्छया निवसितुं शक्यते। न खलु तत्रान्नसंपादनाय-प्रयासोऽस्ति नापि निवासस्थानसंकोचः। तादृशीयमरण्यानीति गुणस्तुतिः।

अथैकविंशीमाह—

आञ्जनगन्धिं सुरभीम्। बह्वन्नामकृषीवलाम्। प्राहं

मृगाणां मातरम् । अरण्यानीमशश्सिषम् (७), इति ।

स्याम रुरोह युवानः शुन्ध्यूरिच्छमानो दृश्यते निपद्यते चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके पञ्चमाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

अहमनुष्ठातेमामरण्यानीं प्राशंसिषं प्रकर्षेण शंसनं कृतवानस्मि । कीदृशीम् । आञ्जनगन्धीमञ्जनेषु कर्पूरादिसुगन्धिद्रव्यप्रक्षेपेण यादृशं गन्धं संपादयन्ति तादृशगन्धोपेताम् । विचित्रैः पुष्पैः फलैश्चानुकूलो गन्धः समुत्पाद्यते । अत एव सुरभीं सुगन्धी(न्धि)म् । चम्पकपुष्पादिजन्यो हि सुगन्धो वर्तते । भक्षितुं योग्यानां फलविशेषाणामनेकत्वाद्बह्वन्नां तादृशानां वृक्षाणां स्वत एवोत्पन्नत्वेन कृषेरनपेक्षणादकृषीवलां तत्रोत्पन्नानां मृगाणां पालकत्वान्मातृसदृशीम् । तदेतदरण्यानीत्यादिकमन्त्रषट्कमरण्यवासिभिस्तपस्विभिः स्वरक्षार्थं देवतां प्रार्थयितुं जपितव्यम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ पञ्चमप्रपाठके षष्ठोऽनुवाकः ।

---

[अथ] षष्ठानुवाके प्रथमामृचमाह—

वार्त्रहत्याय शवसे । पृतनासाह्याय

च । इन्द्र त्वा वर्तयामसि, इति ।

हे इन्द्र वार्त्रहत्याय शत्रुवधाय शवसेऽस्मदीयाय बलाय पृतनासाह्याय वैरिसेनाभिभवाय च त्वामावर्तयामसि पुनः पुनर्भजामहे ।

[अथ] द्वितीयामाह—

सुब्रह्माणं वीरवन्तं बृहन्तम् । उरुं गभीरं पृथुबुध्नमिन्द्र । श्रुतर्षिमुग्रमभिमातिषाहम् ।

अस्मभ्यं चित्रं वृषणꣳ रयिं दाः, इति ।

ह इन्द्रास्मभ्यं रयिं दा धनं देहि, वयं तु त्वां भजाम इत्यध्याहारः। कीदृशं त्वाम्। सुब्रह्माणं शोभनब्राह्मणोपेतमृत्विग्भिः स्तुत्यमित्यर्थः। वीरवन्तं वीरैः पुत्रैर्भृत्यैश्चोपेतं बृहन्तमैश्वर्येण महान्तमुरुं गभीरमत्यन्तं गभीरमतिप्रबुद्धमित्यर्थः। पृथुबुध्नं विस्तीर्णमूलं प्रजापतिसृष्टमित्यर्थः। "प्रजापतिरिन्द्रमसृजत" इति श्रुतेः। श्रुतर्षिमृषिषु मन्त्रेष्वैन्द्रसूक्तादिषु श्रूयमाणमुग्रं वैरिषु क्रोधिनमभिमातिषाहं पाप्मनो विनाशकम्। कीदृशं रयिम्। चित्रं मणिमुक्तादिरूपेण बहुविधं वृषणं कामाभिवर्षणक्षमम्। एतच्चोभयमैन्द्रे कर्मणि द्रष्टव्यम्।

[ अथ ] तृतीयामाह—

क्षेत्रियै त्वा निर्ऋत्यै त्वा। द्रुहो मुञ्चामि वरुणस्य पाशात्। अनागसं ब्रह्मणे त्वा करोमि (१)। शिवे ते द्यावापृथिवी उभे इमे, इति।

एतस्य मन्त्रजातस्य जातकर्मविषयत्वात्कुमारोऽत्र संबोध्यते। हे कुमार त्वां क्षेत्रीनामिकाया रक्षोजातेर्द्रुहो द्रोहाद्द्रो मुञ्चामि मुक्तं करोमि। बालोपद्रवकारिणी काचिद्रक्षोजातिः क्षेत्री। तथाऽन्या रक्षोजातिर्निर्ऋतिस्तस्या अपि द्रोहात्त्वां मुञ्चामि। तथा वरुणस्य पाशो रोगविशेषस्तस्मादपि त्वां मुञ्चामि। ब्रह्मणे परिवृढाय जातकर्मादिसंस्काराय त्वामनागसं दोषरहितं करोमि। ते त्वदर्थमिमे द्यावापृथिव्यावुभे अपि शिवे शान्ते भवेताम्।

[ अथ ] चतुर्थीमाह—

शं ते अग्निः सहाद्भिरस्तु। शं द्यावापृथिवी सहौषधीभिः। शमन्तरिक्षꣳ सह वातेन ते। शं ते चतस्रः प्रदिशो भवन्तु, इति।

हे कुमार त्वदर्थमयमग्निरद्भिः सह शं सुखहेतुरस्तु। द्यावापृथिव्यौ चौषधीभिः सह शं सुखहेतू स्ताम्। अन्तरिक्षं च वातेन सह ते शमस्तु। प्राच्याद्याः प्रकृष्टदिशश्चतस्रोऽपि ते शं भवन्तु।

[ अथ ] पञ्चमीमाह—

या दैवीश्चतस्रः प्रदिशः। वातपत्नीरभि सूर्यो

विचष्टे । तासां त्वा जरस आदधामि । प्र यक्ष्म

एतु निर्ऋतिं पराचैः, इति ।

वातपत्नीर्वायोः पालयित्रीर्देवीर्देवतारूपा याश्चतस्रः प्रदिशोऽभिलक्ष्य सूर्यो विचष्टे विशेषेण ख्यापयति तासां दिशां जरसे जरार्थं त्वां(त्वामा)दधामि स्थापयामि । यावद्दिशो न जीर्यन्ति तावत्त्वां जीवयामीत्यर्थः । योऽयं यक्ष्मो व्याधिः स पराचैस्त्वत्तः पराङ्मुखो भूत्वा निर्ऋतिं रक्षोजातिं प्रैतु प्राप्नोतु ।

[ अथ ] षष्ठीमाह—

अमोचि यक्ष्माद्दुरितादवर्त्यै (२) । द्रुहः पाशां

निर्ऋत्यै चोदमोचि । अहा अवर्तिमविदत्स्योनम् । अप्यभूद्भद्रे सुकृतस्य लोके, इति ।

अयं कुमारो यक्ष्माव्द्याधेर्दुरितादिहेतोः पापादवर्त्यै वर्तिर्वर्तनं जीवनहेतुः संपत्तद्विपरीतं दारिद्र्यमवर्तिं तस्या अप्यमोचि मुक्तोऽभूत् । तथा निर्ऋत्यै राक्षसजातेर्द्रुहो द्रोहरूपात्पाशाच्चायं कुमार उदमोच्युत्कर्षेण मुक्तोऽभूत् । अवर्तिं दारिद्र्यमहा अहासीः परित्यक्तवान् । स्योनं सुखमविदल्लब्धवान् । भद्रे कल्याणे सुकृतस्य लोके पुण्यकर्मणः फलभूते स्थानेऽप्यभूदवस्थितवान् ।

[ अथ ] सप्तमीमाह—

सूर्यमृतं तमसो ग्राह्या यत् । देवा अमुञ्चन्नसृजन्व्येनसः । एवमहमिमं क्षेत्रियाज्जामिशंसात् ।

द्रुहो मुञ्चामि वरुणस्य पाशात्, इति ।

तमोविद्धस्य सूर्यस्य प्रतीकारं देवाश्चक्रुः । तथा च ब्राह्मणम्—"सुवर्भानुरासुरः सूर्यं तमसाऽविध्यत्तस्मै देवाः प्रायश्चित्तिमैच्छन्" इति । सोऽयं वृत्तान्तोऽत्र दृष्टान्तत्वेनाभिधीयते । यद्यथा देवा ऋतमन्धकारप्राप्तं सूर्यं ग्राह्या ग्राहकादावरकात्तमसोऽमुञ्चन्मुक्तमकुर्वन् । तथा तद्धेतोरेनसः पापाव्द्यसृजन्वियोजितवन्तः । एवमहं जनक इमं कुमारं वरुणस्य पाशान्मुञ्चामि मुक्तं करोमि । कीदृशात्पाशात् । क्षेत्रियात्क्षेत्रं गर्भस्थानं तत्रोत्पन्नत्वाञ्जामिशंसादालस्यप्ररूपापकाद्द्रुहो बाधकात् । क्षेत्रियै त्वेत्यादिमन्त्राणां जातकर्मणि विनियोगं बौधायन आह—" अथैनं स्नापयति क्षेत्रियै त्वा निर्ऋत्यै त्वा " इति ।

अथाष्टमीमाह—

बृहस्पते युवमिन्द्रश्च वस्वः । दिव्यस्येशाथे उत पार्थिवस्य । धत्तꣳ रयिꣳ स्तुवते कीरयेचित् ( ३ )। यूयं पात स्वस्तिभिः सदा नः, इति ।

हे बृहस्पते त्वमिन्द्रश्चेत्येतौ युवां दिव्यस्य वस्वः दिवि भवस्य वसुनः धनस्येशाथे स्वामिनौ भवथः। उतापि च पार्थिवस्य पृथिव्यां भवस्य धनस्येशाथे। स्तुवते स्तोत्रं कुर्वते कीरयेचित्कर्त्रे यागं बृहस्पतिसवाख्यं कुर्वते रयिं धनं संपादयतम्। हे इन्द्राबृहस्पती सपरिवारा यूयं नोऽस्मान्स्वस्तिभिः क्षेमैः सदा पात रक्षत। एतस्य मन्त्रस्य बृहस्पतिसवयागे यजमानाभिषेके विनियोगमापस्तम्ब आह— " आज्येन माध्यंदिने सवने कृष्णाजिन आसीनमभिषिञ्चति शुक्रामन्थिनो वा संस्रावेण बृहस्पते युवम् " इति।

[ अथ ] नवमीमाह—

देवायुधमिन्द्रमाजोहुवानाः । विश्वावृधमभि ये रक्षमाणाः । येन हता दीर्घमध्वानमायन् । अनन्तमर्थमनिवर्त्स्यमानाः, इति ।

येनेन्द्रेण हता वृत्रादयो दीर्घमध्वानमायन्मरणं प्राप्ता इत्यर्थः। तमिन्द्रमभिलक्ष्य ये यजमाना रक्षमाणाः प्रतीक्षां कुर्वन्त आजोहुवानाः सर्वत आह्वानं कुर्वन्तो वर्तन्ते। कीदृशमिन्द्रम् देवायुधं देवार्थं योद्धारं विश्वावृधं विश्वस्य वर्धयितारं ते यजमाना इन्द्रसेविनोऽनिवर्त्स्यमाना इतः परं मनुष्यलोके पुनरावृत्तिरहिताः सन्तोऽनन्तं विनाशरहितमर्थं सर्वैरर्थनीयं प्रार्थनीयं लोकमायन्प्राप्ताः। सोऽयं मन्त्र ऐन्द्रे कर्मणि द्रष्टव्यः।

[ अथ ] दशमीमाह—

यत्ते सुजाते हिमवत्सु भेषजम् । मयोभूः शंतमा यद्धृदोऽसि । ततो नो देहि सीबले, इति ।

सीबलाशब्दः कांचिदोषधिं वल्लीरूपामाचष्टे। सा च हिमवत्सानुषूत्पद्यते। हिमवत्सु पर्वतविशेषेषु सुजाते सुष्ठूत्पन्ने हे ओषधे ते त्वदीयं यद्भेषजं रोग-

विनाशमौषधमस्ति । यद्यतस्त्वं हृदो हृदयस्य शंतमा सर्वोपद्रवशमनहेतुर्मयोभूः सुखस्य भावयित्री चासि । हे सीवल एतत्संज्ञक ओषधे ततस्त्वादृश्यास्त्वत्सकाशात्तदौषधं नो देहि ।

[ अथ ] एकादशीमाह—

अदो गिरिभ्यो अधि यत्प्रधावसि । सꣳशोभमाना कन्येव शुभ्रे (४) । तां त्वा मुद्गला हविषा वर्धयन्ति । सा नः सीवले रयिमाभाजयेह, इति ।

हे ओषधे यद्यदा त्वं गिरिभ्यः पर्वतेभ्यः सकाशाददः प्रत्यक्षं यथा भवति तथाऽधिप्रधावस्यधिकं वल्लीरूपा सर्वतः प्रसरसि । तत्र दृष्टान्तः— संशोभमाना कन्येव यथा सर्वैराभरणैः सम्यक्शोभमाना कन्या स्वयंवरार्थमागतानां वराणां पुरतः संचरति तद्वत् । हे शुभ्रे निर्मल ओषधिदेवते तां त्वा तादृशीं शुभ्रां त्वां मुद्गला मुद्गलगोत्रोत्पन्ना महर्षयो हविषा वर्धयन्ति । हे सीवलाख्य ओषधिदेवते सा त्वमिह कर्मण्यस्मभ्यं रयिमाभाजय धनं संपादय । रोगानिवर्तकमौषधमेवात्र धनम् । एते उभे ऋचावेतदोषधिदेवताके शाखान्तरगते कर्मणि याज्यानुवाक्ये ।

अथ द्वादशीमाह—

पूर्वं देवा अपरेणानुपश्यञ्जन्मभिः । जन्मान्यवरैः पराणि । वेदानि देवा अयमस्मीति माम् । अहꣳ हित्वा शरीरं जरसः परस्तात्, इति ।

हे देवा अहमपरेणाधमेनानेन जन्मना पूर्वं जन्मानुपश्यन्निदानीं वर्ते । तथैवावरैर्निकृष्टैर्मनुष्यजन्मभिः पराण्युत्कृष्टानि देवा जन्मानि वेदानि लभेय । इदानींतनजन्मानि प्रयत्नमन्तरेण स्वतः प्रवृत्तां वेदशास्त्रादिवासनां दृष्ट्वा पूर्वमप्ये तादृशजन्म संपन्नमिति निश्चीयते । अत एव आहुः—“प्रपेदिरे प्राक्तनजन्मविद्याः” इति सोऽयं दृष्टान्तः—यथा पूर्वजन्मनि वासितमिहजन्मनि फलितमेवमत्राप्यनुष्ठितमुत्तरत्र फलिष्यतीति जानामि । अतोऽनुविस्याख्याया देवतायाः प्रसादादहं हे देवा जरसः परस्तात्स्वशरीरं हित्वा लोकान्तरेऽप्यमीदृशो देवोऽस्मीति मां वेदानि ज्ञातुं शक्नुयाम् ।

[अथ] त्रयोदशीमाह—

प्राणापानौ चक्षुः श्रोत्रम्। वाचं मनसि संभृताम् ।
हित्वा शरीरं जरसः परस्तात्। आ भूतिं भूतिं
वयमश्नवामहै, इति ।

यावेतौ प्राणापानावुच्छ्वासनिःश्वासरूपौ वायू। यदपि चक्षुः श्रोत्रमित्यादिकं ज्ञानेन्द्रियम्। याऽपि मनसि संभृता संबद्धा वाक्। "यद्धि मनसा ध्यायति तद्वाचा वदति" इति श्रुतेर्वाचो मनसि संबद्धत्वम्। इत्थं च वाक्कर्मेन्द्रियाणां सर्वेषामुपलक्षणम्। तदिदं प्राणापानादिकं सर्वं गृहीत्वा वयं जरसः परस्ताच्छरीरं हित्वा भूतिं भूतिं तत्तल्लोकस्थितं तत्तदैश्वर्यमा समन्तादश्नवामहै प्राप्नवाम। एते ऋचौ दिवःश्येनीष्टिष्विष्टिषु—"अनुवित्त्यै चरुम्" इत्यत्र याज्यानुवाक्ये। अत एव तत्र प्रतीकद्वयमाम्नातम्—" पूर्वं देवा अपरेण प्राणापानौ " इति ।

अथ चतुर्दशीमाह—

इमा एव ता उषसो याः प्रथमा व्यौच्छन्। ता
देव्यः कुर्वते पञ्च रूपा। शश्वतीर्नावपृज्यन्ति।
न गमन्त्यन्तम् (५), इति ॥

करोम्यवर्त्यै चिच्छुभ्रेऽश्नवामहै चत्वारि च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके पञ्चमाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

या उषसः प्रथमाः प्रथमभाविन्यः सृष्ट्यादौ वर्तमाना व्यौच्छन्व्युष्टिं प्रभासमकुर्वन्। ता इमा उषस इदानीं प्रतिदिनं वर्तमाना एव। ताश्चोषसो देव्यः पञ्चसंख्याकानि रूपाणि कुर्वते वसन्तादीनि तत्तल्लिङ्गानि कुर्वते। शश्वतीर्निरन्तरं वर्तमानस्ता उषसो नावपृज्यन्ति कदाचिदपि न समाप्यन्ते। तदेव स्पष्टी क्रियते—अन्तमवसानं न गमन्ति न प्राप्नुवन्ति। सोऽयं मन्त्र उषोदेवताके कर्मणि द्रष्टव्यः।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

अथ पञ्चमप्रपाठके सप्तमोऽनुवाकः ।

---

सप्तमानुवाके प्रथमामृचमाह—

वसूनां त्वाऽधीतेन । रुद्राणामूर्म्या । आदित्यानां तेजसा । विश्वेषां देवानां क्रतुना । मरुतामेम्ना जुहोमि स्वाहा, इति ।

हेऽग्ने त्वां जुहोमि । कीदृशं त्वाम् । वसूनामष्टानां संबन्धि यदधीतं मन्त्रजातं तेन सहितम् । रुद्राणामेकादशानां संबन्धिनी येयमूर्मिरुत्कर्षस्तेन सहितम् । आदित्यानां द्वादशानां संबन्धि यत्तेजस्तेन सहितम् । विश्वेषां देवानां संबन्धी यः क्रतुः संकल्पः कर्मानुष्ठानं वा तेन सहितम् । मरुतां संबन्धी योऽयमेम्ना(मा) गतिविशेषस्तेन सहितम् । एतस्य मन्त्रस्य सावित्रचयने विनियोगमापस्तम्ब आह—" अपरं चतुर्गृहीतं वसूनां त्वाऽधीतेन " इति। जुहोतीत्यनुवर्तते ।

अथ द्वितीयामाह—

अभिभूतिरहमागमम् । इन्द्रसखा स्वायुधः । आस्स्वाऽऽशासु दुष्षहः, इति ।

हेऽग्नेऽहमागमं त्वत्समीपे समागतोऽस्मि । त्वमप्याशासु दिक्ष्वभिभूतिर्वैरितिरस्कारक्षम आस्स्वोपाविश । इन्द्रसखेन्द्रस्य प्रियः स्वायुधः शोभनैरायुधैरुपेतो दुष्षहः केनापि तिरस्कर्तुमशक्यः । अयं मन्त्रः कर्मिणश्चिदाग्रयणे कर्मण्युपहोमार्थः ।

[अथ] तृतीयामाह—

इदं वर्चो अग्निना दत्तमागात् । यशो भर्गः सह ओजो बलं च (१) । दीर्घायुत्वाय शतशारदाय । प्रतिगृभ्णामि महते वीर्याय , इति ।

अग्निना दत्तं यदिदं वर्चःप्रभृति गुणजातं तदिदमागाद्यजमानं प्रत्यागतम् । वर्चः शरीरकान्तिर्यशः कीर्तिर्भर्गो रश्मिरूपं तेजः सहोऽभिभवसामर्थ्यमोजो

बलहेतुरष्टमो धातुर्बलं शरीरशक्तिः। शतशारदाय शतसंख्याकसंवत्सरोपेताय दीर्घायुत्वाय दीर्घकालवर्त्यायुष्याय महते वीर्यायाधिकसामर्थ्याय च प्रतिगृह्णाम्यग्नेरनुग्रहं स्वी करोमि। अस्य मन्त्रस्य हारियोजनादूर्ध्वमावीनि यज्ञपुच्छे विनियोगो द्रष्टव्यः।

उक्तास्त्रयो मन्त्रा ऋगात्मकाः। चतुर्थमन्त्रमारभ्य यजुरात्मकाः। तत्रैतं चतुर्थमन्त्रमाह—

आयु॑रसि वि॒श्वायु॑रसि। स॒र्वायु॑रसि॒ सर्व॑मायु॑-

रसि। सर्वं॑ म॒ आयु॑र्भूयात्। सर्व॒मायु॑र्गेषम्, इति।

हे प्रवर्ताख्यकर्णाभरण त्वमायुरस्यायुषः स्वरूपमसि। विश्वायुरसि विश्वस्य जगत आयुः स्वरूपमसि। सर्वायुरसि विशेषतः सर्वेषां पुरुषाणामायुः स्वरूपमसि। सर्वमायुरसि यच्छतसंवत्सरपरिमितमायुस्तत्सर्वं त्वमसि। त्वत्प्रसादात्सर्वं संपूर्णमायुर्मे भूयात्। अतोऽहं सर्वं संपूर्णमायुर्गेषं गम्यासम्। अस्य मन्त्रस्याऽऽयुष्कामेष्टौ कर्णाभरणधारणे विनियोगमापस्तम्ब आह—"तद्यजमान आचम्य प्रतिगृह्य प्रदक्षिणं दक्षिणे कर्णे आबध्नात्यायुरसि विश्वायुरसि" इति।

अथ पञ्चमं यजुराह—

भूर्भुवः॒ सुवः॑, इति।

पृथिव्यन्तरिक्षद्युलोका अनुगृह्णन्त्विति शेषः।

अथ षष्ठं यजुराह—

अ॒ग्निर्धर्म॑णान्ना॒दः। मृ॒त्युर्धर्म॑णान्न॑पतिः। ब्रह्म॑ क्ष॒त्रꣳ

स्वाहा॑ (२), इति।

योऽयमग्निः सोऽयं स्वकीयेन धर्मेणान्नादो भवति। अन्नभक्षकत्वं जाठराग्नौ प्रसिद्धम्। योऽयं मृत्युर्देवः सोऽयं स्वकीयेन धर्मेणान्नपतिरन्नस्य पालकः। यावन्मृत्युः प्राणिनं न मारयति तावदयमन्नं भुङ्क्ते तदिदमन्नपालकत्वम्। ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिस्तान्येतान्यग्निमृत्युब्रह्मक्षत्राण्युद्दिश्य स्वाहा हुतमिदमस्तु।

१ क. ख. "धर्मेणान्न"।

अथ सप्तमं यजुराह—

प्रजापतिः प्रणेता । बृहस्पतिः पुर एता । यमः

पन्थाः । चन्द्रमाः पुनरसुः स्वाहा, इति ।

योऽयं प्रजापतिः सोऽयं प्रणेता प्रेरकः । योऽयं बृहस्पतिः सोऽयं पुर एता पुरतो गन्ता । योऽयं यमः सोऽयं पन्था मार्गपालकः । यस्तु चन्द्रमाः सोऽयं पुनरसुः पुनः पुनर्जायमानः प्राणरूपः । तानेतान्प्रजापत्यादीनुद्दिश्य स्वाहा हुतमिदमस्तु । भूर्भुवः सुवरित्यादिमन्त्रत्रयस्य विनियोगः सूत्रान्तरेषु मृग्यताम् ।

अथाष्टमं यजुराह—

अग्निरन्नादोऽन्नपतिः । अन्नाद्यमस्मिन्यज्ञे यजमा-

नाय ददातु स्वाहा, इति ।

योऽयमग्निः सोऽयमन्नादो जाठराग्निरूपेणान्नस्य भक्षकः । अन्नपतिर्बाह्या- ग्निरूपेणान्नस्य पाचकत्वात्पालकः । सोऽयमग्निरस्मिन्यज्ञे यजमानाय भक्षण- योग्यमन्नं ददातु । तस्मा अग्नये स्वाहा हुतमिदमस्तु ।

अथ नवमं यजुराह—

सोमो राजा राजपतिः । राज्यमस्मिन्यज्ञे यजमा-

नाय ददातु स्वाहा, इति ।

यः सोमः सोऽयं ब्राह्मणानां राजा । "सोमोऽस्माकं ब्राह्मणानाꣳ राजा" इति मन्त्रान्तरात् । स चान्येषां राज्ञां पालकत्वाद्राजपतिः । शेषं पूर्ववत् ।

अथ दशमं यजुराह—

वरुणः सम्राट्सम्राट्पतिः । साम्राज्यमस्मिन्यज्ञे

यजमानाय ददातु स्वाहा ( ३ ), इति ।

योऽयं वरुणः सोऽयं समीचीनो राजा भूत्वा सर्वेषामन्येषां साम्राज्यानां पालकः ।

अथैकादशं यजुराह—

मित्रः क्षत्रं क्षत्रपतिः । क्षत्रमस्मि-

न्यस्मै यजमानाय ददातु स्वाहा, इति ।

मित्रो देवः स्वयं क्षत्रियजातिर्भूत्वा सर्वेषामन्येषां क्षत्रियाणां पालकः । स च क्षत्रं क्षत्रियधर्मं ददातु ।

अथ द्वादशं यजुराह—

इन्द्रो बलं बलपतिः । बलमस्मि-

न्यस्मै यजमानाय ददातु स्वाहा, इति ।

अयमिन्द्रः स्वयं बलं प्राप्य परकीयस्य बलस्य पालको भवति ।

अथ त्रयोदशं यजुराह—

बृहस्पतिर्ब्रह्म ब्रह्मपतिः । ब्रह्मास्मि-

न्यस्मै यजमानाय ददातु स्वाहा, इति ।

बृहस्पतिः स्वयं देवानां मध्ये ब्राह्मणजातियुक्तः । "ब्रह्म वै देवानां बृहस्पतिः" इति श्रुत्यन्तरात् । सोऽयमितरब्राह्मणजातेः पालको ब्राह्मणधर्मं ददातु ।

अथ चतुर्दशं यजुराह—

सविता राष्ट्रं राष्ट्रपतिः । राष्ट्रमस्मि-

न्यस्मै यजमानाय ददातु स्वाहा, इति ।

सविता स्वयं राष्ट्रं प्राप्यान्यदीयस्य राष्ट्रस्य पालको भवति ।

अथ पञ्चदशं यजुराह—

पूषा विशां विट्पतिः । विशमस्मि-

न्यस्मै यजमानाय ददातु स्वाहा, इति ।

पूषा स्वयं देवानां विशां स्वामी भूत्वा मनुष्याणामपि विशां पालको भवति ।

अथ षोडशं यजुराह—

सरस्वती पुष्टिः पुष्टिपत्नी । पुष्टिमस्मि-

न्यस्मै यजमानाय ददातु स्वाहा, इति ।

सरस्वती स्वयं पुष्टियुक्ता सती परकीयाया अपि पुष्टेः पालयित्री भवति ।

अथ सप्तदशं यजुराह—

त्वष्टा पशूनां मिथुनानाꣳ रूपकृ-
द्रूपपतिः । रूपेणास्मिन्यज्ञे यजमा-
नाय पशून्ददातु स्वाहा (४), इति ।

च स्वाहा साम्राज्यमस्मिन्यज्ञे यजमानाय ददातु स्वाहा विशमस्मिन्यज्ञे
यजमानाय ददातु स्वाहा चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके पञ्चमाध्याये
सप्तमोऽनुवाकः ॥ ७ ॥

---

मिथुनानां स्त्रीपुरुषरूपाणां पशूनां रूपस्य कर्ता त्वष्टा सर्वेषां रूपाणां पालकः । अतोऽस्मिन्यज्ञे यजमानाय समीचीनरूपेण युक्तान्पशून्ददातु । तस्मै त्वष्ट्रे स्वाहा हुतमिदमस्तु । "अग्निरन्नादः" इत्यादयो दश मन्त्रा मित्रविन्दाख्यायामिष्टावुपहोमार्थाः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-
ब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

——:*:——

अथ पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ।

---

अष्टमेऽनुवाके प्रथमामृचमाह—

स ईं पाहि य ऋजीषी तरुत्रः । यः
शिप्रवान्वृषभो यो मतीनाम् । या
गोत्रभिद्वज्रभृद्यो हरिष्ठाः । स इन्द्र
चित्राꣳ अभितृन्धि वाजान्, इति ।

हे इन्द्र यस्त्वमृजीषी । निष्पीडितरसः सोमवल्लीभाग ऋजीषम् । तद्वानृजीषी । अत एव ब्राह्मणमाम्नायते—"तस्मात्तृतीयसवन ऋजीषमभिषुण्वन्ति" इति । तरुत्रो दुःखेभ्यस्तारकस्तादृशः स त्वमीं पाहीमं सवनं पालय । यस्त्वं

शिप्रवाञ्शोभनहनुयुक्तो यश्च त्वं मतीनामस्मदबुद्धीनां वृषभो वर्षयिता सन्मार्गबुद्धिप्रद इत्यर्थः। यश्च त्वं गोत्रभित्पर्वतानां भेत्ता वज्रभृद्वज्रस्य धारको यश्च हरिष्ठा हरिनामकयोरश्वयोः स्थाता हे इन्द्र स त्वं चित्रान्वा-जान्विचित्राणि शत्रूणामन्नान्यभितृन्ध्यभितो विनाशय। अयं मन्त्रो माध्यं-दिनसवने प्रस्थितयाज्यास्वन्तर्भावनीयः।

[ अथ ] द्वितीयामाह—

आ ते शुष्मो वृषभ एतु पश्चात् । ओत्तरादध-

रागा ( १ ) पुरस्तात् । आ विश्वतो अभि समेत्व-

र्वाङ् । इन्द्र द्युम्नं स्वर्वद्धेह्यस्मे, इति ।

हे इन्द्र वृषभ श्रेष्ठ ते तव शुष्मो बलं पश्चादस्मत्तः पश्चिमभाग आ, एत्वा-गच्छतु । तथैवोत्तरादुत्तरभागेऽप्यागच्छतु । अधरादधरभागेऽप्यागच्छतु । पुरस्तात्पूर्वभागेऽप्यागच्छतु । विश्वतः सर्वेषु प्रदेशेष्वभ्यस्मानभिलक्ष्यार्वा-ङ्समीपवर्त्यासमेतु सम्यगागच्छतु । हे इन्द्र स्वर्वत्स्वर्गयुक्तं द्युम्नं धनमस्मे धेह्यस्मासु संपादय ।

[ अथ ] तृतीयामाह—

प्रोष्वस्मै पुरो रथम् । इन्द्राय शूषमर्चत ( १ ) ।

अभी केचिदु लोककृत् । सङ्गे समत्सु वृत्रहा ।

अस्माकं बोधि चोदिता । नभन्तामन्यकेषाम् ।

ज्याका अधि धन्वसु, इति ।

अस्मा इन्द्रायास्येन्द्रस्य पुरो रथं रथस्य पुरोभागे शूषं बलं प्रोष्वर्चत प्रकर्षेण सुष्ठु पूजयत । कथं बलस्य पूजेत्युच्यते—अयमिन्द्रो वृत्रहा वैरिघाती समत्सु संग्रामेषु सङ्गे योद्धृभिर्वैरिभटैः सङ्गे सति संयोगे सत्यभी केचि-द्धन्तुं कामयमानेऽपि वैरिणि लोककृत्स्थितिं करोत्येव न तु पलायते । इत्थं बलस्य पूजा । तथा पूजित इन्द्रोऽस्माकमितरव्यावृत्तये चोदिता प्रेरयिता सन्बोधि बुध्यतां सावधानो भवतु । अन्यकेषां कुत्सितानां वैरिणां धन्व-स्वधिश्रित्य वर्तमाना ज्याकाः कुत्सितज्या नभन्तां हिंसन्तां त्रुटयन्त्वित्यर्थः । एतच्चोभयं कस्मिंश्चिदैन्द्रे कर्मणि विनियोज्यम् ।

[ अथ ] चतुर्थीमाह—

इन्द्रं वयꣳ शुनासीरम् । अस्मिन्यज्ञे हवामहे ।

आ वाजैरुप नो गमत्, इति ।

शुनो वायुः सीर आदित्यस्ताभ्यां युक्तमिन्द्रमस्मिन्यज्ञे वयमाह्वयामः । स चेन्द्रो वाजैरन्नैः सह नोऽस्मान्प्रत्युपागमदुपागच्छतु ।

[ अथ ] पञ्चमीमाह—

इन्द्राय शुनासीराय । स्रुचा जुहुत नो हविः (२) ।

जुषतां प्रति मेधिरः, इति ।

शुनासीराय वाय्वादित्ययुक्तायेन्द्राय स्रुचा जुह्वा नोऽस्मदीयं हविर्हे ऋत्विजो जुहुत । मेधिरो मेधावानिन्द्रः प्रतिजुषतां प्रातिस्विकं तद्धविः सेवताम् ।

[ अथ ] षष्ठीमाह—

प्र हव्यानि घृतवन्त्यस्मै । हर्यश्वाय भरता सजो-

षाः । इन्द्रर्तुभिर्ब्रह्मणा वावृधानः । शुनासीरी

हविरिदं जुषस्व, इति ।

हर्यश्वाय हरितनामकाभ्यामश्वाभ्यां युक्तायास्मा इन्द्राय घृतवान्ति हव्यानि हे ऋत्विजः प्रभरत प्रकर्षेण संपादय[त] । हे इन्द्र त्वं सजोषा वसन्ताद्यृतुदेवताभिः समानप्रीतः सन्ब्रह्मणा मन्त्रेण वावृधानो वर्धमानः शुनासीरी वाय्वादित्ययुक्त इदं हविर्जुषस्व । अत्राऽऽपस्तम्बः—" इन्द्राय शुनासीराय पुरोडाशो द्वादशकपालः " इत्यस्मिन्कर्मणि मन्त्रद्वयं विनियुक्तवान् " इन्द्राय शुनासीराय " इत्यारभ्य ' हविरिदं जुषस्वेति याज्यनुवाक्ये " इत्यन्तेन वाक्येन । यस्त्वेताभ्यां पूर्वो मन्त्रः " इन्द्रं वयम् " इत्यादिः सोऽयं पुरोनुवाक्यया विकल्प्यते ।

[अथ] सप्तमीमाह—

वयः सुपर्णा उपसेदुरिन्द्रम् । प्रियमेधा ऋषयो

नाधमानाः । अप ध्वान्तमूर्णुहि पूर्धि चक्षुः । मुमु-

न्धर्यस्मान्निधयेव बद्धान्, इति ।

केचिदृषय इन्द्रमुपसेदुः कार्यप्राप्त्यर्थमुपासते । कीदृशा ऋषयः । वयः पक्षिमूर्तिधारिणोऽत एव सुपर्णाः शोभनपक्षोपेताः । प्रियमेधा अधीतस्य ग्रन्थस्य धारणशक्तिर्मेधा तस्यां प्रीतियुक्ताः । नाधमाना किंचित्कार्यं याचमानाः । स एव याच्ञाप्रकारः स्पष्टी क्रियते—हे इन्द्र ध्वान्तमज्ञानलक्षणमन्धकारमपोर्णुह्यपसारय । चक्षुर्ज्ञानलक्षणां दृष्टिं पूर्धि पूरय । निधयेव शृङ्खलयेवाज्ञानेन बद्धानस्मान्मुमुग्धि तस्मादज्ञानबन्धान्मोचय । अस्य मन्त्रस्य सोमक्रयादूर्ध्वमंसाच्छादकवस्त्रापनयने विनियोगमापस्तम्ब आह—" अत्र यजमानोऽपोर्णुते वयः सुपर्णाः " इति ।

अथाष्टमीमाह—

बृहदिन्द्राय गायत ( ३ ) । मरुतो वृत्रहन्तमम् ।

येन ज्योतिरजनयन्नृतावृधः । देवं देवाय

जागृवि, इति ।

हे मरुतो वृत्रहन्तममतिशयेन वैरिवधकारिणं बृहत्सामेन्द्रायेन्द्रार्थं गायत । ऋतावृधो यज्ञवर्धका ऋत्विजो देवायेन्द्रार्थं देवं दीप्यमानं जागृवि जागरणस्याप्रमत्तत्वस्य साधनं ज्योतिर्ज्ञानरूपं प्रकाशं येन बृहत्साम्नाऽजनयन्नुत्पादितवन्तः । तेन बृहता साम्ना गायतेत्यन्वयः । ऋत्विजो हि पृष्ठस्तोत्रे बृहत्साम गायन्ति । अस्य च मन्त्रस्य क्वचित्सोमविकृतौ विनियोगो द्रष्टव्यः ।

अथ नवमीमाह—

का मिहिकाः क इमे पतङ्गाः । मन्थालाः कुलि

परि मा पतन्ति । अनावृतैनान्प्रधमन्तु देवाः ।

सौपर्णं चक्षुस्तनुवा विदेय, इति ।

मिहिकाशब्दो नीहारवाचकः सन्दृष्टेरावरकं रोगविशेषमुपलक्षयति । मिहिका एव मिहिकाः । पतङ्गशब्दः शलभवाची सन्नेत्ररश्मिजन्यानि केशोण्डूकान्याकाशे भासमानान्युपलक्षयति । तानि चाक्षुष्यरोगे सति बहूनि भासन्ते । तदुभयं किंशब्दाभ्यामाक्षिप्यते । का मिहिका इमे पतङ्गाश्च के । तदुभयोपद्रवो मम मास्त्वित्यर्थः । मन्थशब्देन दधिमन्थनमुच्यते । तत्संबन्धिनस्तक्रादिद्रव्यो

मान्थास्तद्वदालान्त्यागच्छन्तीति मान्थालाः केशोण्डूकविशेषाः । कुलं समूह-स्तद्रूपतामापन्नाः कुलिशब्देनोच्यन्ते । ते च संघशो मा मां परिपतन्ति । देवा अनावृताः केशोण्ड्रादिकृतनेत्रावरणापगमेनैनान्केशोण्ड्रादिकान्रोगदोषान्मध-मन्तु प्रकर्षेण मुखोत्थितवायुमात्रेण विनाशयन्तु । ततोऽहं तनुवा सहितः सौपर्णं चक्षुर्विदेय । सुपर्णः पक्षी यथा दूरस्थं पश्यति तथा दूरदर्शनक्षमं चक्षुष्पाटवं लभेयम् । सोऽयं मन्त्रो नेत्ररोगपरिहाराय प्रयोक्तव्यः ।

[अथ] दशमीमाह—

एवाऽऽवन्दस्व वरुणं बृहन्तम् । नमस्या धीरममृतस्य गोपाम् । स नः शर्म त्रिवरूथं वियंसत् ( ४ ) । यूयं पात स्वस्तिभिः सदा नः, इति ।

हे यजमान बृहन्तं गुणाधिकं वरुणमेवाऽऽवन्दस्व स्तुहि । तथा धीरं बुद्धि-मन्तममृतस्य क्रतुफलस्य गोपां रक्षितारं नमस्य नमस्कुरु । स वरुणो नोऽ-स्मभ्यं त्रिवरूथं भूमिकात्रयोपेतं शर्म गृहं वियंसद्विशेषेण यच्छतु । हे वरुण सपरिवारा यूयं स्वस्तिभिः क्षेमैर्नोऽस्मान्सदा पात रक्षत । अस्य मन्त्रस्य ब्रह्मण उत्सङ्गे सोमासादने विनियोगमापस्तम्ब आह—"एवाऽऽवन्दस्वेत्यु-पस्थे ब्रह्मा राजानं कुरुते" इति ।

[अथ] एकादशीमाह—

नाके सुपर्णमुप यत्पतन्तम् । हृदा वेनन्तो अभ्यचक्षत त्वा । हिरण्यपक्षं वरुणस्य दूतम् । यमस्य योनौ शकुनं भुरण्युम्, इति ।

हे प्रवर्ग्यस्वामिंस्त्वामृत्विजो हृदा स्वकीयेन मनसा वेनन्तः कामयमाना यद्यदाऽभ्यचक्षताभितः प्रख्यापितवन्तस्तदा त्वं तुष्टो भवेति शेषः । कीदृशं त्वाम् । नाके स्वर्ग उप पतन्तं समीपं प्रतिगच्छन्तम् । अत एव सुपर्णं शोभन-पक्षोपेतं हिरण्यपक्षं सुवर्णमयपक्षोपेतं वरुणस्य दूतं वरुणेन प्रेष्यमाणं यमस्य योनौ स्थानविशेषे भुरण्युं भरणशीलं रोगसंपादकमित्यर्थः । शकुनं पक्ष्या-कारम् । अयं मन्त्रः प्रवर्ग्यस्याभिषवेऽभिमन्त्रणीयः ।

[ अथ ] द्वादशीमाह—

शं नो देवीरभिष्टये । आपो भवन्तु पीतये ।

शं योरभिस्रवन्तु नः, इति ।

देवीर्द्योतमाना आपो नोऽस्माकमभिष्टयेऽपेक्षिताय पानाय शं शान्ता भवन्तु । नोऽस्मान्प्रति शं सुखहेतवो योर्दुःखवियोजिकाश्च सत्योऽभिस्रवन्त्वभितः प्रवहन्तु ।

[ अथ ] त्रयोदशीमाह—

ईशाना वार्याणाम् । क्षयन्तीश्चर्षणीनाम् (५) ।

अपो याचामि भेषजम् , इति ।

अहमपो देवीः प्रति भेषजं पापविनाशकारणमौषधं याचामि । कीदृशीरपः । वार्याणां वरणीयानां कामानामीशाना दातुं समर्थाश्चर्षणीनां मानुषाणां क्षयन्तीर्निवासहेतुभूताः ।

[ अथ ] चतुर्दशीमाह—

अप्सु मे सोमो अब्रवीत् । अन्त-

र्विश्वानि भेषजा । अग्निं च विश्व-

शंभुवम् । आपश्च विश्वभेषजीः, इति ।

अप्स्वन्तर्जलेषु मध्ये विश्वानि भेषजा सर्वाण्यौषधानि सन्तीति मे मह्यं सोमोऽब्रवीत् । तथा विश्वशंभुवं सर्वस्य जगतः सुखस्य भावयितारमग्निं च मह्यं सोमोऽब्रवीत् । तथा विश्वभेषजीः सर्वस्यानिष्टस्यौषधरूपा आपश्च याः सन्ति ता अपि सोमोऽब्रवीत् । तदेतन्मन्त्रत्रयमब्देवताके कर्मणि द्रष्टव्यम् । तृतीयमन्त्रस्यावभृथेष्टौ द्वितीयाज्यभागेऽपि विनियोगमापस्तम्ब आह— "अप्सुमन्तावाज्यभागौ यजत्यप्स्वग्न इत्येषाऽप्सु मे सोमो अब्रवीत्" इति ।

[अथ] पञ्चदशीमाह—

यदप्सु ते सरस्वती । गोष्वश्वेषु यन्मधु । तेन

मे वाजिनीवति । मुखमङ्ग्धि सरस्वति, इति ।

हे सरस्वति नदीरूपे ते त्वदीयास्वप्सु यन्मधु माधुर्यं विद्यते तथा गोष्व-श्वेषु मधुरं क्षीरं समीचीनं वहनसामर्थ्यं च यद्विद्यते हे वाजिनीवत्यन्नसमृ-द्धियुक्ते सरस्वति तेन सर्वेण मे मुखमङ्ग्धि वक्त्रमलंकृतं कुरु ।

[अथ] षोडशीमाह—

या सरस्वती वैशम्भल्या (६) ।

तस्यां मे रास्व । तस्यास्ते भक्षीय ।

तस्यास्ते भूयिष्ठभाजो भूयास्म, इति ।

विशां प्रजानां भरणं पोषणं विशम्भलं तत्कर्तुं क्षमा वैशम्भल्या तादृशी या सरस्वती तस्यां सरस्वत्यां नदीरूपायां मे रास्व हे सरस्वति देवते मह्यं भोगं देहि । तस्याः सरस्वत्यास्ते तव भक्षीय रसमनुभवामि । तस्यास्ते भूयिष्ठभाजोऽतिप्रभूततररससेविनो भूयास्म । एतस्य मन्त्रद्वयस्य दार्शिके यजमाने विनियोगमापस्तम्ब आह—" यदप्सु त इत्युपक्रम्य भूयिष्ठभाजो भूयास्मेति मुखं विमृष्टे " इत्यन्तेन वाक्येन ।

[अथ] सप्तदशीमाह—

अहं त्वदस्मि मदसि त्वमेतत् । ममासि

योनिस्तव योनिरस्मि । ममैव सन्वह

हव्यान्यग्ने । पुत्रः पित्रे लोककृज्जातवेदः, इति ।

हेऽग्नेऽहं त्वदस्मि त्वत्तः सकाशाद्यजमानोऽस्मि त्वमप्येतद्रूपं मदसि मत्तः सकाशादेतदाहवनीयरूपं प्राप्तोऽसि । मया ह्याधीयमानस्य तवाऽऽहवनीय-त्वम् । अतः कारणात्त्वं मम योनिः कारणमसि । अहं च तव योनिः कारण-मस्मि । हेऽग्ने ममैव संस्त्वं मदीय एव भूत्वा हव्यानि वह । हे जातवेदः सर्वजगदभिज्ञ यथा लोके पुत्रः पित्रे लोककृत्स्थानसंपादको भवत्यतो यथा मया तव स्थानं संपादितं तथा त्वयाऽपि मम पुण्यलोकः संपादनीयः । एतस्य मन्त्रस्य फलचमसे विनियोगमापस्तम्ब आह—" अहं त्वदस्मि मदसीत्यङ्गारे हुत्वा तस्मै भक्षं प्रयच्छेत् " इति ।

अथाष्टादशीमाह—

इहैव संस्तत्र सन्तं त्वाऽग्ने । प्राणेन

वाचा मनसा बिभर्मि । तिरो मा
सन्तमायुर्मा प्रहासीत् (७) ।
ज्योतिषा त्वा वैश्वानरेणोपतिष्ठे, इति ।

हेऽग्नेऽहमिहैव दूरदेशे स्थितः संस्तत्राऽऽहवनीयायतने सन्तं वर्तमानं त्वां मदीयेन प्राणेन मनसा वाचा बिभर्मि धारयामि । तिरो व्यवहितो भूत्वा सन्तं वर्तमानं मा मां प्रत्यायुर्मा प्रहासीन्मा परित्यजतु । वैश्वानरेण सर्वपुरुषहितेन ज्योतिषा युक्तं त्वामुपतिष्ठे भजामि । अयं मन्त्रः क्वचिदग्न्युपस्थाने विनियोक्तव्यः ।

अथैकोनविंशीमाह—

अयं ते योनिर्ऋत्वियः । यतो जातो अरोचथाः । तं
जानन्नग्न आरोह । अथा नो वर्धया रयिम्, इति ।

हेऽग्नेऽयमरणिरूपः काष्ठविशेषस्ते तवर्त्वियो योनिर्ऋतुकालसंबन्ध्युत्पत्तिस्थानम् । यतो योनेर्जातस्त्वमरोचथा दीप्तोऽसि । हेऽग्ने जानन्स्वकीयत्वेनावगच्छंस्तं योनिमरणिरूपमारोह । अथानन्तरं नोऽस्माकं रयिं धनं वर्धय समृद्धं कुरु । एतस्य मन्त्रस्य विनियोगो ब्राह्मणेनाऽऽम्नातः—" अयं ते योनिर्ऋत्विय इत्यरण्योः समारोहयति " इति ।

[अथ] विंशीमाह—

या ते अग्ने यज्ञिया तनूस्तयेह्यारोहाऽऽत्मानम् ।
अच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि । यज्ञो
भूत्वा यज्ञमासीद स्वां योनिम् । जातवेदो भुव
आजायमानः सक्षय एहि, इति ।

हेऽग्ने ते तव यज्ञिया तनूर्यज्ञयोग्या या तनुस्तया तन्वा सहेहागच्छ ।

आगत्य चाऽऽत्मानमारोह। त्वं मदीय आत्मा सन्मच्छरीरमारोह। किं कुर्वन्। अस्मे अस्माकं नर्या नरस्य योग्यानि वसूनि धनानि पुरूणि बहून्यच्छाभिमुखानि कृण्वंस्त्वं यज्ञस्वरूपो भूत्वा यज्ञं यज्ञनिर्वाहकं मद्देहं स्वां योनिं स्वकीयं स्थानमासीद प्राप्नुहि। हे जातवेदो भुवः सकाशादाभिमुख्येन जायमानः सक्षयो निवासस्थानसहित एह्यागच्छ। एतस्यापि मन्त्रस्य विनियोगो ब्राह्मणे दर्शितः—"या ते अग्ने यज्ञिया तनूस्तयेह्यारोहेत्यात्मन्समारोहयते" इति।

[ अथ ] एकविंशीमाह—

उपावरोह जातवेदः पुनस्त्वम् (८)। देवेभ्यो हव्यं वह नः प्रजानन्। आयुः प्रजाꣳ रयिमस्मासु धेहि। अजस्रो दीदिहि नो दुरोणे, इति।

हे जातवेदः पुनरपि त्वमुपावरोहारण्योः सकाशाद्भूमाववतर। अवतीर्य च प्रजानन्नस्य देवस्येदं हविरिति प्रकर्षेण जानन्नोऽस्मदीयं हव्यं देवेभ्यो वह प्रापय। आयुरादिकमस्मासु संपादय। अजस्रो निरन्तरं वर्तमानस्त्वं नो दुरोणेऽस्मदीये गृहे दीदिहि दीप्यस्व। एतस्य विनियोगमापस्तम्ब आह—"उपावरोह जातवेद इति निवर्तमानमभिमन्त्रयते" इति।

[ अथ ] द्वाविंशीमाह—

तमिन्द्रं जोहवीमि मघवानमुग्रम्। सत्रादधानमप्रतिष्कुतꣳ शवाꣳसि। मꣳहिष्ठो गीर्भिरा च यज्ञियोऽववर्तत्। राये नो विश्वा सुपथा कृणोतु वज्री, इति।

तं प्रसिद्धमिन्द्रं जोहवीम्याह्वयामि। कीदृशमिन्द्रम्। मघवानं धनवन्तमुग्रं शत्रुषु तीव्रं शवांसि सर्वाणि बलानि सत्रादधानं सहधारयन्तमप्रतिष्कुतं कुतोऽपि प्रतिपक्षरहितम्। ईदृश इन्द्रो मंहिष्ठोऽतिशयेन पूज्यो यज्ञियो यज्ञयोग्यश्च नोगीर्भिरस्मदीयाभिः स्तुतिभिराववर्तत्पुनः पुनरावर्तमानः सन्वज्री वज्रयुक्तो विश्वा सुपथा सर्वान्सुमार्गान्नो रायेऽस्माकं धनलाभाय कृणोतु करोतु। अयं मन्त्र ऐन्द्रे कर्मणि द्रष्टव्यः।

[ अथ ] त्रयोविंशीमाह—

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत् । सोममपिबद्विष्णुना सुतं यथावशत् । स ईं ममाद महि कर्म कर्तवे महामुरुम् ( १ ) । सैनं सश्चद्देवं देवः सत्यमिन्दुं सत्य इन्द्रः, इति ।

ज्योतिर्गौरायुरिति त्रिकद्रुक इत्यापस्तम्बेनाभिधानाज्ज्योतिरादयस्त्रयः सोमयागास्त्रिकद्रुकशब्दवाच्याः । तेषु यागेष्विन्द्रो विष्णुना सहितः सोममपिबत् । कीदृश इन्द्रः । महिषो गुणैश्वर्यादिभिर्महांस्तुविशुष्मः प्रभूतबलस्तृपत्तृप्तिं गतः । कीदृशं सोमम् । यवाशिरं यवसक्तुमिश्रितं सुतमभिषुतम् । स चेन्द्रस्तं सोमं यथावशद्यथावदकामयत । सम्यक्कामितवानित्यर्थः । स च सोमो महि कर्म कर्तवे महत्कर्म कर्तुमीं ममादेममिन्द्रं हर्षयामास । स चेन्द्र एनं सोमं सश्चत्पीतवान् । कीदृशं सोमम् । महां स्वादुत्वेन महान्तमुरुं प्रभूतं देवं दीप्यमानं सत्यमवितथमवश्यफलप्रदमिन्दुमाह्लादहेतुम् । कीदृश इन्द्रः । देवो दीप्यमानः सत्योऽवितथस्वरूपः केनाप्यबाध्य इत्यर्थः ।

[ अथ ] चतुर्विंशीमाह—

विदद्यती सरमा रुग्णमद्रेः । महि पाथः पूर्व्यं सध्रियक्कः । अग्रं नयत्सुपद्यक्षराणाम् । अच्छा रवं प्रथमा जानती गात्, इति ।

सरमा काचिच्छुनी श्वमूर्तिधारिणी देवता भूमावन्नसंपादनार्थमायतीन्द्रेण प्रेषिताऽद्रेर्यती मेरोः सकाशाद्भूमिं गच्छन्ती रुग्णमन्नाभावेन क्षुधाग्रस्तं जनं विदद्लभत । ततो महि पाथो महज्जलं कः करोत् । कीदृशम् । पूर्व्यं पूर्वमुत्पन्नमन्नस्य कारणं सहाश्चतीति सध्रियक्सर्वक्षेत्रसंचारीत्यर्थः । सुष्ठु पद्यते गच्छतीति सुपदी । सा शुन्यग्रं नयत्तज्जलं पुरतो नीतवती । तत्र पुरोदेशेऽक्षराणां क्षरो विनाशो हिंसा तद्योग्यानां गवां रवं शब्दं जानत्यच्छ तदाभिमुख्येन प्रथमा मुख्या सती गाज्जगाम जलोत्पादनेनान्नं संपाद्य गोरसं संपादयितुं गतवतीत्यर्थः ।

---

१ क. गच्छन् । २ ग. °श्चत्प्रासवान् ।

[अथ] पञ्चविंशीमाह—

विदद्गव्यꣳ सरमा दृढमूर्वम् । येना नुकं मानुषी भोजते विट् । आ ये विश्वा स्वपत्यानि चक्रुः । कृण्वानासो अमृतत्वाय गातुम्, इति ।

सरमा शुनी गव्यं गोयूथं विददलभत । कीदृशम् । दृढं कदाचिदप्यनपायिनमूर्वमतिप्रभूतम् । मानुषी विड्विश्वमनुष्यरूपा प्रजा येन गोयूथेन भोजते क्षीरादिकं भुङ्क्ते । नुकमित्येतदव्ययं सर्वथेत्यस्मिन्नर्थे वर्तते । अमृतत्वाय स्वर्गरूपाय कर्मफलाय गातुं मार्गं कृण्वानासः कुर्वाणा ये यजमाना विश्वा सर्वाणि स्वपत्यानि कर्माण्याचक्रुः सर्वतः कृतवन्तः । तथाविधयजमानरूपा प्रजा येन गव्येन भुङ्क्ते तं गोयूथमालभतेति पूर्वत्रान्वयः ।

[अथ] षड्विंशीमाह—

त्वं नृभिर्नृपते देवहूतौ ( १० ) । भूरीणि वृत्रा हर्यश्व हꣳसि । त्वं निदस्युं चमुरिम् । धुनिं चास्वापयो दभीतये सुहन्तु, इति ।

हे हर्यश्व हरिनामकाभ्यामश्वाभ्यामुपेतेन्द्र हे नृपते मनुष्याणां पालक नृभिर्मनुष्यैर्यजमानर्त्विग्भिर्देवहूतौ देवार्थमाह्वाने कृते सति त्वं भूरीणि बहूनि वृत्वा वृत्राणि शत्रुजातानि हंसि मारयसि । किंच त्वं निदस्युप्रभृतीन्नीरक्षोविशेषान्सुहन्तु सुष्ठु हननसाधनेन वज्रेण दभीतये दम्भनाय हिंसार्थमस्वापयः सुप्तान्मूर्च्छितानकरोः ।

[अथ] सप्तविंशीमाह—

एवा पाहि प्रत्नथा मन्दतु त्वा । श्रुधि ब्रह्म वावृधस्वोत गीर्भिः । आविः सूर्यं कृणुहि पीपिहीषः । जहि शत्रूꣳरभि गा इन्द्र तृन्धि, इति ।

हे इन्द्र प्रत्नथा पुरातनः पूर्वकल्पावस्थित इन्द्रो यथा सोमं पिबत्येवा पाह्येवमेव त्वमपि सोमं पिब । स च सोमस्त्वां मन्दतु हर्षयतु । ब्रह्मास्माभिः

प्रयुज्यमानं मन्त्रं श्रुधि शृणु । उतापि च गीर्भिरस्मदीयाभिः स्तुतिभि-र्वावृधस्वातिशयेन वर्धस्व । सूर्यमाविष्कृणु आच्छादकस्य स्वर्भानुसंज्ञकस्या-सुरस्य विनाशेन प्रकटीं कुरु । इषोऽन्नानि पीपिहि पालय । शत्रूञ्जहि मारय । गा अभिलक्ष्य तृन्धि विरोधिनो व्याघ्रतस्करादीन्विनाशय । "तमिन्द्रं जोहवीमि" इत्यादिमन्त्रषट्कमैन्द्रे कर्मणि द्रष्टव्यम् । त्रिकद्रुके-ष्विति मन्त्रस्तु षोडशिशस्त्रेऽप्यन्तर्भावनीयः ।

अथाष्टाविंशीमाह—

अग्ने बाधस्व वि मृधो नुदस्व । अपामीवा अप रक्षांसि सेध । अस्मात्समुद्राद्बृहतो दिवो नः (११) । अपां भूमानमुप नः सृजेह, इति ।

हेऽग्ने मृधः शत्रून्विशेषेण बाधस्व । अमीवा रोगानपनुदस्व । रक्षांस्यपसे-धापगमय । अस्माद्दृश्यमानात्समुद्राद्बृहतो समुद्रवदतिप्रौढाद्दिवो द्युलोका-न्नोऽस्मदर्थमपां भूमानं वृष्टिजलस्य बाहुल्यं सृज उत्पादय । किंच नोऽस्मान-पीह कर्मण्युपसृज संयोजय ।

[अथ] एकोनत्रिंशीमाह—

यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आ त्वा । वसूनि पुरुधा विशन्तु । दीर्घमायुर्यजमानाय कृण्वन् । अधामृतेन जरितारमङ्ग्धि, इति ।

हे यज्ञ यागनिष्पादक वह्ने सुमतौ भक्तियुक्तायामस्मदीयायां बुद्धौ प्रति-तिष्ठ प्रतिष्ठितो भव । किं कुर्वन्, यजमानार्थं दीर्घमायुः कुर्वन्, तादृशं त्वा त्वां पुरुधा बहुविधानि वसूनि धनान्याविशन्तु सर्वतः प्रविशन्तु । अथान-न्तरं जरितारं जरां प्राप्स्यन्तं यजमानममृतेनाङ्ग्धि नाशरहितेन स्वर्गलोकेन संयोजय । एतयोर्मन्त्रयोरुत्तरवेद्यामग्निप्रतिष्ठापने विनियोगमापस्तम्ब आह—"अग्ने बाधस्व" इत्यारभ्य "संभारेषु प्रतिष्ठाप्य" इत्यन्तेन वाक्येन ।

अथ त्रिंशीमाह—

इन्द्रः शुनावद्वितनोति सीरम् । संवत्सरस्य

प्रतिमार्णमेतत् । अर्कस्य ज्योतिस्तदिदास

ज्येष्ठम् । संवत्सरꣳ शुनवत्सीरमेतत्, इति ।

अयमिन्द्रः शुनावत्सीरं वायुसहितमादित्यं वितनोति विस्तारयति । एतदादित्यस्य विस्ताररूपं संवत्सरस्य प्रतिमाणं प्रतिनिधिरूपम् । आदित्यगमनाद्धस्या हि संवत्सरो निष्पाद्यते । तदिच्चदानीमेवार्कस्याऽऽदित्यस्य ज्योतिर्ज्येष्ठमतिप्रशस्तं प्रवृद्धं चाऽऽस । एतज्ज्योतिः संवत्सरनिष्पादकत्वात्संवत्सरस्वरूपम् । शुनवद्वायुसंयुक्तं सीरमादित्यमण्डलरूपमित्येवं तस्य ज्येष्ठत्वम् ।

[ अथ ] एकत्रिंशीमाह—

इन्द्रस्य राधः प्रयतं पुरु त्मना ।

तदर्करूपं विमिमानमेति । द्वाद-

शारे प्रतितिष्ठतीद्वृषा, इति ।

इन्द्रस्य राधः सर्वकर्मसाधकं यत्सामर्थ्यं तत्पुरु प्रभूतमात्मना प्रयतं स्वेनैव संपादितं तत्सामर्थ्यमर्कस्वरूपं सूर्यस्वरूपं भूत्वा विमिमानमेति । सर्वैः प्राणिभिर्विशेषेण प्रमीयमाणं सदेति गच्छति संचरतीत्यर्थः । सोऽयमादित्यरूपो वृषा कामाभिवर्षक इन्द्रो द्वादशारे द्वादशमासरूपैररैर्युक्ते संवत्सरचक्रे प्रतितिष्ठतीत्यवस्थित एव वर्तते ।

अथ द्वात्रिंशीमाह—

अश्वायन्तो गव्यन्तो वाजयन्तः । हवामहे त्वोप-

गन्त वा उ । आभूषन्तस्त्वा सुमतौ नवायाम् ।

वयमिन्द्र त्वा शुनꣳ हुवेम ( १२ ), इति ।

अर्चत हविर्गीयत यश्चर्षणीनां वैश्रम्भस्याहासीत्व-

मुरुं देवहूतो नस्त्मना षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके पञ्चमाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

१ क. ख. "वैश्वार्थेषा" ।

हे इन्द्र वयमश्वायन्तोऽश्वमात्मन इच्छन्तो गव्यन्तो गामात्मन इच्छन्तो वाजयन्तो वाजमन्नमात्मन इच्छन्तस्त्वामुपगन्त वा, उ, उपगन्तुमेव हवामहे आह्वयामः। नवायां नूतनायां सुमतौ शोभनायां भक्तियुक्तायामस्मद्बुद्धौ त्वामाभूषन्तः सर्वतः प्रशंसन्तो वयं हे इन्द्र त्वा शुनं त्वद्रूपं वायुं तदुपलक्षितमादित्यं च हुवेमाऽऽह्वयामः। तदेतन्मन्त्रत्रयं शुनासीरगुणकेन्द्रदेवताके कर्मणि द्रष्टव्यम्।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

प्राण उदेहि पुनरा नो भर यज्ञो रायो वार्त्रहत्याय वसूना॑ स ईं पाह्यष्टौ प्राणो रक्षत्यगृभीता धारावरा मरुतो दीर्घायुत्वाय ज्योतिषा त्वा पञ्चचत्वारिंशच्च ॥

हरिः ॐ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके पञ्चमोऽध्यायः ॥ ५ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये पञ्चमप्रपाठकः समाप्तः ॥ ५ ॥

---

( मूलक्रमेण—अष्ट० २ अध्या० ५ ( १३ ) अनु० ८ ( १२७ )।

( भाष्यक्रमेण—कां० २ प्रपा० ५ ( १३ ) अनु० ८ ( १२७ )।

| ग्रन्थनाम । | रू० | मूल्यम् आ० |
|---|---|---|
| मिताक्षरा—श्रीनित्यानन्दमुनिवि… | | |
| ९१ गौतमप्रणीतन्य…यणभाष्यसमेतम् । भागद्वयात्मकम् ।… | ४ | ८ |
| ९२ श्रीमद्भगवद्गी…टु:—श्रीधन्वन्तरिविरचितः । वैद्यकग्रन्थः | ७ | ८ |
| ९३ दर्शपूर्णमा… | ६ | १२ |
| …ता—शांकरभाष्योपेता । … … | २ | |
| ९४ संस्कारपद्धति… | २ | ८ |
| …टीकशांकरभाष्योपेता । … … | ६ | |
| ९५ काश्यपशिल्प… | ३ | १ |
| …ङ्गदेवकृतः सटीको द्विभागः। ग… … | | |
| ९६ करणकौस्तु… … … | ० | ९ |
| ९७ मीमांस…कम्—सायणभाष्यसमेतं भाग…।० भागषट्कात्मकम् । | २५ | ९ |
| ९८ धर्मत…ब्राह्मणम्—सायणभाष्यसमेतं…वासुदेवशास्त्रिप्रणीतः । | ० | ९ |
| ९८ धर्मतत्त्व…कम्—…यणभाष्यसहि… | ० | १३ |
| …य… „ „ | | |
| ९९ भास्करीयबीजग…नाथभट्टटी…ङ्कुराटीकासहितम् ।… | २ | ० |
| १०० प्रायश्चित्तेन्दुशेखर…खण्डराज…भट्टविरचितः । कुण्डार्कयुतः । | १ | १० |
| १०१ शांकरपादभूषण…व्यासप्रणीत…त्युपाह्वरघुनाथशास्त्रिकृतं द्विभा० | ८ | ५ |
| १०२ ब्रह्मवैवर्तपुराण…सायणभा…द्वियात्मकम् । … … | ९ | ४ |
| १०३ श्रुतिसारसमुद्धरणम्—गिर्यपरनामकतोटकाचार्यप्रणीतम् । | ० | १३ |
| १०४ त्रिंशच्छ्लोकी—टिप्पणीविवृतिभ्यां समेता । धर्मशास्त्रग्रन्थः । | २ | १५ |
| १०५ आश्वलायनगृह्यसूत्रम्—आश्वलायनाचार्यप्रणीतम् । | २ | १२ |
| १०६ दशोपनिषदः—मूलमात्राः । … … … | २ | ० |
| १०७ लीलावती-श्रीमद्भास्कराचार्यप्रणीता । टीकाद्वयोपेता द्विभागा । | ३ | ० |
| १०८ व्या०महाभाष्यम्—(अङ्ग.)। पतञ्जलिवि.प.उ.यु.द्विभागम् । | ४ | ४ |
| १०९ श्रीमद्भगवद्गीताप्रथमाध्यायौ—म.अभ्यंकरटीकायुतौ । | २ | ३ |
| ११० ग्रहगणिताध्यायः—(पूर्वार्धः)भास्क०कृतः भाष्यटीकोपेतः । | २ | ८ |
| १११ कायपरिशुद्धिः—म. अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीता । | १ | ४ |
| ११२ श्रीमद्भगवद्गीता—राजानकरामकविकृतटीकायुता । | ३ | ० |
| ११३ मध्वतन्त्रमुखमर्दनम्—अपय्यदीक्षितकृतम् । … | १ | ८ |
| ११४ रुद्राध्यायः—विष्णुसूरिकृतभाष्ययुतः । अद्वैतपरः । … | ० | १२ |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गतं चतुर्भागात्मकम् । … | २० | ० |
| सिद्धान्तदर्शनम्—महर्षिवेदव्यासप्रणीतं निरञ्जनभाष्ययुतम् । | १ | ४ |
| आधानपद्धतिः—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | १ | १४ |
| पश्वालम्भमीमांसा—किंजवडेकरोपाह्ववामनशास्त्रिविरचिता । | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । … … | १ | ० |

अकारादिवर्णानुक्रमेण

श्रीमत्सायणाचार्यविरचितभाष्य... ...पत्रम्।

...यन्तोऽश्वमान इच्छन्तो गव्य...

ग्र... ...मन्नमात्मन इच्छन्तस्त्वामुपगन्त वा, ... मूल्यम्

...। नवायां नूतनायां सुमतौ शोभनायां भक्ति...

...न्तः सर्वतः प्रशंसन्तो वयं ह इन्द्र त्वा शुनं ...

...ग्रामः। तदेतन्मन्त्रत्रयं शु...

| | | रू० | आ० |
|---|---|---|---|
| ४१ | ... | ३ | १ |
| ८ | ... ...विस्तरः | ८ | |
| ८४ | ... | १ | |
| ५७ | ...रभूष... | ३ | १ |
| ५८ | ...रेन्दुः | ४ | |
| | आधानपद्धतिः | १ | १... |
| १० | आश्वलायनगृह्यसूत्रम् | २ | १... |
| ८१ | आश्वलायनश्रौतसूत्रम् | ४ | १... |
| ६२ | ईशकेन...ठाद्युप०(रामा०) | २ | ८ |
| ७६ | ईशकेनकठोपनिषदः | १ | ० |
| ५ | ईशावास्योपनिषत् | ० | १४ |
| २९ | उपनिषदां समुच्चयः | ६ | १२ |
| ३२ | ऐतरेयब्राह्मणम् | १० | १० |
| ३८ | ऐतरेयारण्यकम् | ३ | ० |
| ११ | ऐतरेयोपनिषत् | १ | ४ |
| ९६ | करणकौस्तुभः | ० | ९ |
| ७ | काठकोपनिषत् | १ | ४ |
| १११ | कायपरिशुद्धिः | १ | ४ |
| ६६ | काव्यप्रकाशः | ६ | ४ |
| ८९ | काव्यप्रकाशः | ३ | ४ |
| ९५ | काश्यपशिल्पम् | ३ | १ |
| ६ | केनोपनिषत् | १ | ० |
| ५२ | गणेशगीता | २ | ० |
| १ | गणेशाथर्वशीर्षम् | ० | ६ |
| ७३ | गायत्रीपुरश्चरणपद्धतिः | १ | ८ |
| ६१ | गौतमसूत्रम् | २ | ८ |
| ११० | ग्रहगणिताध्यायः | २ | ८ |
| १४ | छान्दोग्योपनिषत्(शां०) | ५ | ० |
| ६३ | छान्दोग्योपनि०(रामा०) | ३ | १२ |
| ७९ | छान्दोग्योप०(मिताक्षरा०) | २ | ० |

...वेदार्थप्रकाशे कृष्णयजुर्वेदा... १४

...प्रपाठकेऽष्टमोऽ...कः ॥ ४८ १

वाक्यहर... ...त्वाय...

| | | रू० | आ० |
|---|---|---|---|
| | ...यार... | ९ | |
| | ...रीयोपनिषत् | १ | १ |
| | ...योपनिषद्भाष्यवा० | २ | |
| ७८ | ...तुः | ३ | १ |
| १०४ | ...शच्छ्लोकी | २ | १ |
| ९३ | दर्शपूर्णमासप्रकाशः | ६ | १ |
| १०६ | दशोपनिषदः | २ | |
| ७४ | द्राह्यायणगृह्यसूत्रवृत्तिः | १ | |
| ३३ | धन्वन्तरीयानिघण्टू रा०स० | ६ | |
| ९८ | धर्मतत्त्वनिर्णयः | ० | |
| ९८ | धर्मतत्त्व०परिशिष्टम् | ० | १ |
| ५६ | नित्याषोडशिकार्णवः | ३ | |
| ८८ | निरुक्तम् | १६ | |
| ३० | नृसिंहपूर्वोत्तरतापनीयोप० | १ | १ |
| ९१ | न्यायसूत्राणि | ४ | |
| | पद्मपुराणम् | २० | |
| | पश्वालम्भमीमांसा | ० | |
| ७२ | परिभाषेन्दुशेखरः | २ | |
| ४७ | पातञ्जलयोगसूत्राणि | ३ | |
| ३ | पुरुषसूक्तम् | ० | |
| ५५ | पुरुषार्थचिन्तामणिः | ४ | |
| ८ | प्रश्नोपनिषत् | १ | |

| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| ३१ बृहदारण्यकोपनिषन्मिताक्षरा—श्रीनित्यानन्दमुनिविरचिता । | २ | १२ |
| ३२ ऐतरेयब्राह्मणम्—सायणभाष्यसमेतम् । भागद्वयात्मकम् ।... | १० | १० |
| ३३ धन्वन्तरीयनिघण्टुः—श्रीधन्वन्तरिविरचितः। वैद्यकग्रन्थः | ६ | ४ |
| ३४ श्रीमद्भगवद्गीता—शांकरभाष्योपेता । ... ... | २ | ० |
| ३४ श्रीमद्भगवद्गीता—सटीकशांकरभाष्योपेता । ... ... | ६ | ४ |
| ३५ संगीतरत्नाकरः-शार्ङ्गदेवकृतः सटीको द्विभागः। गानशास्त्रम् । | १० | ४ |
| ३६ तैत्तिरीयारण्यकम्—सायणभाष्यसमेतं भागद्वयात्मकम् । | ९ | १ |
| ३७ तैत्तिरीयब्राह्मणम्—सायणभाष्यसमेतं भागत्रयात्मकम् ।... | १४ | ८ |
| ३८ ऐतरेयारण्यकम्—सायणभाष्यसहितम् । ... ... | ३ | ० |
| ३९ संस्काररत्नमाला-गोपीनाथभट्टविरचिता । भागद्वयात्मिका। | १२ | ८ |
| ४० संध्याभाष्यसमुच्चयः—खण्डराजश्रीकृष्णपण्डितादिप्रणीतः। | २ | ० |
| ४१ अग्निपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् ... | ५ | ४ |
| ४२ तैत्तिरीयसंहिता—सायणभाष्यसमेता । भागनवकात्मिका । | ४८ | १० |
| ४३ वैयाकरणसिद्धान्तकारिकाः—भट्टोजीदीक्षितकृताः सटीकाः। | ० | १२ |
| ४४ श्रीमद्भगवद्गीता—पैशाचभाष्यसमेता । ... ... | १ | ८ |
| ४५ श्रीमद्भगवद्गीता—मधुसूदनश्रीधरकृतटीकोपेता। ... | ५ | ४ |
| ४६ याज्ञवल्क्यस्मृतिः-अपरार्ककृतटीकासहिता भागद्वयात्मिका। | १३ | ० |
| ४७ पातञ्जलयोगसूत्राणि—भाष्यवृत्तिभ्यां समेतानि । ... | ३ | ० |
| ४८ स्मृतीनां समुच्चयः—अङ्गिरःप्रभृतिसप्तविंशतिस्मृत्यात्मकः । | ५ | ० |
| ४९ वायुपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् । ... | ४ | १२ |
| ५० यतीन्द्रमतदीपिका—श्रीनिवासदासकृता । प्रकाशटीकोपेता । | १ | ४ |
| ५१ सर्वदर्शनसंग्रहः—माधवाचार्यप्रणीतः। ... ... ... | २ | ० |
| ५२ श्रीमद्गणेशगीता—नीलकण्ठकृतटीकोपेता । ... ... | २ | ० |
| ५३ सत्याषाढश्रौतसूत्रम्—सत्याषाढविरचितं भागदशकात्मकम् । | २८ | ५ |
| ५४ मत्स्यपुराणम्—श्रीमद्द्वैपायनमुनिप्रणीतम् । महापुराणम् । | ६ | ० |
| ५५ पुरुषार्थचिन्तामणिः—आठवलेइत्युपाह्वविष्णुभट्टकृतः । | ४ | ० |
| ५६ नित्याषोडशिकार्णवः—भास्कररायोन्नीतटीकासहितः । | ३ | ८ |
| ५७ आचारभूषणम्—हिरण्यकेश्याह्निकमोकोपाह्वत्र्यम्बककृतम् । | ४ | ६ |
| ५८ आचारेन्दुः—माटेइत्युपाह्वत्र्यम्बकविरचितः । ... | ४ | ० |
| ५९ श्राद्धमञ्जरी—केळकरोपाह्वबापूभट्टविरचिता। ... | २ | ० |
| ६० यतिधर्मसंग्रहः—विश्वेश्वरसरस्वतीकृतः । ... ... | १ | १२ |

| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| ६१ गौतमप्रणीतधर्मसूत्रम्—हरदत्तकृतटीकासमेतम् । ... | २ | ८ |
| ६२ ईशकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः-सटीकाः | २ | ८ |
| ६३ छान्दोग्योपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | १२ |
| ६४ बृहदारण्यकोपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | ४ |
| ६५ शाङ्खायनब्राह्मणम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | १ | ४ |
| ६६ काव्यप्रकाशः—उद्द्योतयुतप्रदीपसहितः । ... | ६ | ४ |
| ६७ ब्रह्मसूत्राणि—दीपिकासमेतानि । ... ... | ४ | ८ |
| ६८ बृहद्ब्रह्मसंहिता—नारदपञ्चरात्रान्तर्गता । ... ... | १ | १२ |
| ६९ ज्ञानार्णवतन्त्रम्—ईश्वरप्रोक्तम् । तन्त्रशास्त्रग्रन्थः । ... | १ | ४ |
| ७० स्मृत्यर्थसारः—श्रीधराचार्यविरचितः । ... ... | १ | १० |
| ७१ बृहद्योगतरङ्गिणी—त्रिमल्लभट्टविरचिता भागद्वयोपेता । | १० | १२ |
| ७२ परिभाषेन्दुशेखरः—वैद्यनाथकृतगदाख्यटीकायुतः । ... | २ | ६ |
| ७३ गायत्रीपुरश्चरणपद्धतिः—श्रीमच्छंकराचार्यविरचिता । ... | १ | ८ |
| ७४ द्राह्यायणगृह्यसूत्रवृत्तिः—रुद्रस्कन्दप्रणीता । ... | १ | ० |
| ७५ ब्रह्मसूत्रभाष्यार्थरत्नमाला—सुब्रह्मण्यविरचिता । ... | ४ | ४ |
| ७६ ईशकेनकठोपनिषदः—दिगम्बरानुचरकृतव्याख्यासमेताः । | १ | ० |
| ७७ वेदान्तसूत्रमुक्तावलिः—ब्रह्मानन्दसरस्वतीविरचिता । ... | २ | ६ |
| ७८ त्रिस्थलीसेतुः—नारायणभट्टविरचितः । ... ... | ३ | १२ |
| ७९ छान्दोग्योपनिषत्—मिताक्षराव्याख्यासमेता । ... | २ | ० |
| ८० वाक्यवृत्तिः—श्रीमच्छंकराचार्यकृता सटीका । ... | ० | ८ |
| ८१ आश्वलायनश्रौतसूत्रम्—नारायणकृतवृत्तिसमेतम् । ... | ४ | ११ |
| ८२ ब्रह्मसूत्रवृत्तिः—हरिदीक्षितविरचिता । ... ... | २ | ७ |
| ८३ संक्षेपशारीरकम्—व्याख्यासहितं भागद्वयोपेतम् । ... | ९ | १ |
| ८४ अद्वैतामोदः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । ... | २ | ० |
| ८५ ज्योतिर्निबन्धः—शूरमहाठश्रीशिवराजविरचितः । ... | ३ | १५ |
| ८६ विधानमाला—श्रीनृसिंहभट्टविरचिता । ... ... | ४ | ४ |
| ८७ अग्निहोत्रचन्द्रिका—किंजवडेकरोपाह्ववामनशास्त्रिकृता । | २ | १४ |
| ८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । भागद्वयात्मकम् । ... | १६ | ४ |
| ८९ काव्यप्रकाशः—संकेताख्यटीकासमेतः । ... ... | ३ | ४ |
| ९० शाङ्खायनारण्यकम्-ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | ० | ९ |